BIBLIOTHECA INDICA:
A COLLECTION OF ORIENTAL WORKS
PUBLISHED BY THE ASIATIC SOCIETY OF BENGAL.
NEW SERIES NO. 1302.




# न्यायवार्त्तिकतात्पर्यपरिशुद्धिः।

श्रीमदुदयनाचार्यविरचिता।

श्रीवर्द्धमानोपाध्यायविरचित-न्यायनिबन्धप्रकाशाभिध-व्याख्यासहिता।

# NYĀYA-VĀRTTIKA-TĀTPARYA-PARIŚUDDHI

BY UDAYANĀCHĀRYA

With a gloss called Nyāya-nibandha-prakāśa by Varddhamānopādhyāya

EDITED BY

Pandit Vindhyeśvarī Prasād Dvivedin
*Librarian Govt. Sanskrit College, Benares.*

AND

Pandit Lakshmana Śāstri Drāvida
*Professor, Govt. Sanskrit College Calcutta.*

FASCICULUS I.

CALCUTTA:
PRINTED BY UPENDRA NATHA CHAKRAVARTI, AT THE SANSKRIT PRESS,
No. 5 Nandakumar Chowdhury's 2nd Lane,
AND PUBLISHED BY THE
ASIATIC SOCIETY, 1, PARK STREET.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

## ASIATIC SOCIETY OF BENGAL.

No. 1, PARK STREET, CALCUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MR. BERNARD QUARITCH,
11, GRAFTON STREET, NEW BOND STREET, LONDON, W., AND MR. OTTO
HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied.—some of the Fasciculi being out of stock.*

### BIBLIOTHECA INDICA.

*Sanskrit Series*

| | | |
|---|---|---|
| *Advaita Brahma Siddhi, Fasc. 2, 4 @ /10/ each ... ... | Rs. | 1 |
| Advaitachintā Kaustubha, Fasc. 1-3 @ /10/ each ... ... .. | | 1 |
| *Agni Purāṇa, Fasc. 6-14 @ /10/ each .. ... ... ... | | 5 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-5; Vol. III. Fasc. 1-5, Vol. IV, Fasc. 1-8 @ /10/ each ... ... ... | | 14 |
| Aitereya Lochana. .. ... ... ... ... | | 2 |
| *Aṇu Bhāṣhya, Fasc. 2-5 @ /10/ each ... ... ... | | 2 |
| Aphorisms of Sāṇḍilya, (English) Fasc. 1 @ 1/- ... ... ... | | 1 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1-6 @ /10/ each ... ... | | 3 |
| *Atharvana Upanishad, Fasc 4-5 @ /10/ each ... ... ... | | 1 |
| Ātmatattaviveka, Fasc. I. @ /10/ each ... ... ... ... | | 0 |
| Açvavaidyaka, Fasc. 1-5 @ /10/ each ... .. ... ... | | 3 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 1-7; Vol. II. Fasc. 1-7 @ 1/ each .. ... ... | | 15 |
| Bālam Bhaṭṭi, Vol. I, Fasc 1-2, Vol 2, Fasc. 1 @ /10/ each ... ... | | 1 |
| Baudhāyana S'rauta Sūtra, Fasc 1-3 Vol. II, Fase 1-3 @ /10/ each ... | | 3 |
| *Bhāmatī, Fasc 4-8 @ /10/ each .. ... . ... | | 3 |
| Bhāṭṭa Dīpikā Vol. I, Fasc. 1-6; Vol. 2, Fasc. 1, @ /10 each ... | | 4 |
| Baudhyostatrasangraha ... .. ... ... ... | | 2 |
| Bṛhaddēvatā Fasc. 1-4 @ /10/ each ... ... .. ... | | 2 |
| Bṛhaddharma Purāṇa Fasc 1-6 @ /10/ each ... ... .. | | 3 |
| Bodhicaryāvatāra of Çāntideva, Fasc. 1-5 @ /10/ each ... ... | | 3 |
| Çri Cantinatha Charita, Fasc. 1-3 ... ... ... ... | | 1 |
| Çatadūṣaṇī, Fasc. 1-2 @ /10/ each ... ... ... | | 1 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1-4 @ 2/ each ... ... | | 8 |
| Çatapatha Brāhmaṇa, Vol I, Fasc. 1-7, Vol II, Fasc. 1-5, Vol. III, Fasc. 1-7 Vol. 5, Fasc. 1-4 @ /10/ each ... ... ... | | 14 |
| Ditto Vol. 6. Fasc. 1-3 @ 1/4/ each ... ... ... | | 3 |
| Ditto Vol. VII, Fasc. 1-5 @ /10/ ... ... ... | | 3 |
| Çatasāhasrikā Prajñāpāramitā Part, I. Fasc. 1-14 @ /10/ each .. . | | 8 |
| *Caturvarga Chintāmaṇi, Vol. II, Fasc. 1-25; Vol. III. Part I, Fasc. 1-18. Part II, Fasc. 1-10. Vol. IV. Fasc 1-6 @ /10/ each ... | | 36 |
| Ditto Vol. 4, Fasc. 7-8. @ 1/4/ each ... .. ... | | 2 |
| *Ditto Vol. IV, Fasc. 8-9 @ /10/ ... ... ... | | 1 |
| Çlokavartika, (English) Fasc. 1-7 @ 1/4/ each .. ... ... | | 8 |
| *Çrauta Sūtra of Āpastamba, Fasc. 12-17 @ /10/ each ... ... | | 3 |
| Ditto Çānkhāyana, Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-4, Vol. III, Fasc. 1-4; Vol 4, Fasc. 1 @ /10/ each ... ... | | 10 |
| Çri Bhāshyam, Fasc 1-3 @ /10/ each ... ... ... ... | | 1 |
| Dāna Kriyā kaumudī, Fasc 1-2 @ /10/ each .. ... ... | | 1 |
| Gadadhara Paddhati Kālasāra Vol. I, Fasc. 1-7 @ /10/ each ... ... | | 4 |
| Ditto, Āchārasārah Vol. II, Fasc. 1-4 @ /10/ each ... ... | | 3 |
| Gobhiliya Grihya Sutra, Vol. I @ /10/ each ... ... ... | | 3 |
| Ditto Vol II. Fasc. 1-2 @ 1/4/ each ... ... ... | | 2 |
| Ditto (Appendix) Gobhila Parisista ... ... | | 2 |
| Ditto Grihya Sangraha ... .. ... | | 0 |
| Haralata ... ... ... ... ... | | 1 |
| Karmapradipikā, Fasc. I ... ... ... ... | | 1 |
| Kāla Viveka, Fasc. 1-7 @ /10/ each ... ... ... ... | | 4 |
| Kātantra, Fasc 1-6 @ /12/ each ... ... ... | | |
| Kathā Sarit Sāgara, (English) Fasc. 1-14 @ 1/4/ each .. ... | | 17 |
| *Kūrma Purāṇa, Fasc. 3-9 @ /10/ each ... ... ... ... | | 4 |
| Lalita Vistara, (English) Fasc. 1-3 @ 1/- each ... ... ... | | 3 |
| *Madana Pārijāta, Fasc. 1-11 @ /1[illegible] ... ... | | [illegible] |
| Mahā-bhāṣya-pradīpodyota, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-12 Vol. III, Fasc. 1-10 @ /1[illegible] | | |

नमः परमात्मने ।

# सटीकन्यायवार्त्तिकतात्पर्यपरिशुद्धेः

# विज्ञप्तिः ।

विष्णुपुराणे—

"अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ॥
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः ।
अर्थशास्त्रं चतुर्थं च विद्या ह्यष्टादशैव ताः ॥"

याज्ञवल्क्यस्मृतौ—

"पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥"

"न्यायो मीमांसा धर्मशास्त्राणीति श्रुतिः (१) ।"

इत्यादि समालोच्य श्रीगङ्गेशोपाध्यायास्तत्त्वचिन्तामणौ "अथ जगदेव दुःखपङ्कमग्नमुद्दिधीर्षुरष्टादशविद्यास्थानेष्वभ्यर्हिततमामान्वीक्षिकीं परमकारुणिको मुनिः प्रणिनाये"त्याद्युक्तवन्तः ।

उक्तेषु वाक्येषु कापिलपातञ्जलादिदर्शनानामनुक्त्या न्यायविस्तरपदेन न्याये एव तेषामन्तर्भावान्न्यायस्यैव प्राधान्यं सिध्यति । तदिदं महर्षिगोतमप्रणीतं न्यायदर्शनं भाष्य-वार्त्तिक-तात्पर्यटीका-परिशुद्ध्यादिबहुव्याख्यानपरम्परया महतीं विस्तृतिं नीतं महर्षिभिरन्यैश्चापि ऋषिकल्पैराचार्यैः । किं तु गङ्गेशोपाध्यायप्रणीततत्त्वचिन्तामणिग्रन्थस्य व्याख्यानपरम्परासहितस्याध्ययनाध्यापन-

(१) श्रीविश्वनाथन्यायपञ्चाननकृतन्यायसूत्रवृत्तौ १ अ० १ आ० १ सूत्रव्याख्याने द्रष्टव्यम् ।

प्रचारप्राबल्याच्चिरादेव सूत्रभाष्यादिपठनपाठनविलोपे जाते तद्‌-ग्रन्थपरम्परैवाविदिता ऽऽसीद्बङ्गानां पण्डितानाम् ।

एवं स्थिते अनयैव वङ्गदेशीयया एशियाटिक्सोसाइटीसमाख्यया समित्या सततं पुरातनग्रन्थादिप्रकाशनपरया न्यायदर्शनं वात्स्यायनमहर्षिप्रणीतभाष्यसहितं मुद्रणद्वारा पूर्वं प्रकाशितं ततः परमोद्योतकरं न्यायवार्त्तिकमपि। ततश्च वाराणस्यां विजयनगरसंस्कृतसीरीजसञ्ज्ञिकायां पुस्तकावल्यां श्रीवाचस्पतिमिश्रकृता न्यायवार्त्तिकतात्पर्यटीका प्रकाशितेति नैव तिरोहितमस्ति विदुषाम् । अतः परं न्यायदर्शनानुरागिणां महाशयानां विनोदाय न्यायवार्त्तिकतात्पर्यटीकाया अपि व्याख्यानं न्यायवार्त्तिकतात्पर्यपरिशुद्ध्याख्यं श्रीमदुदयनाचार्यप्रणीतं श्रीवर्द्धमानोपाध्यायकृतन्यायनिबन्धप्रकाशाख्यटीकासहितमिदं मुद्रणद्वारा प्रकाशितं भवति । अस्य न्यायनिबन्धप्रकाशस्यापि व्याख्यानं श्रीपद्मनाभमिश्रकृतं वर्द्धमानेन्दुनामकमस्यापि व्याख्यानं श्रीशङ्करकृतं न्यायतात्पर्यमण्डनाख्यं प्रकाशनायावशिष्टं वर्त्तत इति समाप्ते सटीकतात्पर्यपरिशुद्धिमुद्रणे ऽवशिष्टे च मम जीवने निरुक्तावशिष्टव्याख्यानद्वयं विद्वांसो दृष्टिपूतं करिष्यन्तीति श्रीमन्तं परमेश्वरं भूयोभूय एवाभ्यर्थये । अवशिष्टाश्च विज्ञापनीयविषयाः निःशेषे चास्य निबन्धस्य मुद्रणे विज्ञापिता भविष्यन्तीति शिवम् ।

१० अगस्त १८११ ई०
गवर्नमेण्टसंस्कृतकालेज
पुस्तकालय, बनारस । — विन्ध्येश्वरीप्रसादद्विवेदी ।

गवर्नमेण्टसंस्कृतकालेज
कलकत्ता । — लक्ष्मणशास्त्री द्राविडः ।

ॐ नमः परमात्मने ।

# न्यायवार्त्तिकतात्पर्यपरिशुद्धिः ।

## श्रीमदुदयनाचार्यविरचिता ।

न्यायनिबन्धप्रकाशाख्यटीकासहिता ।

---

मातः सरस्वति पुनः पुनरेष नत्वा

बद्धाञ्जलिः किमपि विज्ञपयाम्यवेहि ।

---

ॐ नमो नारायणाय ।

यस्याशाः परिधानमिन्दुकलिका धत्ते शिखण्डश्रियं

ज्वालापल्लवितः शिखी दृशि शिरोरङ्गे सरिन्नृत्यति ।

यं पश्यन्ति निरन्तरायमनसः संसारमोहच्छिदं

तं वन्दे सुरवृन्दवन्दितपदद्वन्द्वारविन्दं शिवम् ॥ १ ॥

न्यायविद्याविदग्धाय मीमांसापारदृश्वने ।

गङ्गेश्वराय गुरवे पित्रेऽत्रभवते नमः ॥ २ ॥

विपक्षदर्शनोद्दामदुस्तर्कतिमिरावृताः ।

वर्द्धमानप्रकाशेन सन्तः पश्यन्तु पद्धतीः ॥ ३ ॥

वागर्थप्रतिपत्त्यधिष्ठातृदेवतानमस्कारपूर्वकं ग्रन्थस्याभिधेय-मत्र । मातरिति । प्रार्थनोचितं सम्बोधनपदं मातरिति । .माता

वाक्‌चेतसोर्मम तथा भव सावधाना
वाचस्पतेर्वचसि न स्खलतो यथैते ॥ १ ॥
विश्वाराध्य इत्यत्र विश्वपदेन संसारिचेतनवर्गो

---

हि पुत्रस्नेहात् करुणतो वा पुत्राय प्रार्थितमवश्यं ददाति। एषो-ऽहमित्यर्थः। नत्वा त्वामित्यर्थात्। अवेहीति वाक्यार्थः कर्म।

विज्ञाप्यमाह। वाक्‌चेतसोरिति। तथा वाङ्मनसयोः साव-हिता भव यथा वाचस्पतेर्वचसि विषये एते वाङ्मनसे न स्खलत-स्तात्पर्यानुपदर्शके न भवत इति। अनेन वाचस्पतिटीकायां तात्पर्यपरिशुद्धिर्मया करिष्यत इति बोधितम्।

ननु विश्वपदं कृत्स्नानेकवाचि, न चाचेतनैरीश्वरेण वा स आराध्यत इत्यत आह। विश्वाराध्य इत्यत्रेति। ईश्वरव्या-वर्तकसंसारिपदादेवाऽचेतनव्यावृत्तिसम्भवात् प्रकृतिः संसारिणी न तु चेतन इति साङ्ख्यमतनिराकरणसूचनाय चेतनपदमिति केचित्। तन्न। तन्मते ऽपि चेतनस्यैव संसारापवर्गौ न तु प्रकृतेरिति निराकार्याऽभावात्। तथा चेश्वरकृष्णः:—

"वत्सविवृद्धिनिमित्तं क्षीरस्य यथा (१) प्रवृत्तिरज्ञस्य।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्येति" ॥ (२)

तथात्वे ऽपि अप्रस्तुतत्वाच्च। संसारिषु ये चेतनाः प्रेक्षावन्तो न तु टीकादयस्तेषां (३) बन्धो विवक्षितः टीकादीनां तदनारा-धकत्वादित्यपव्याख्यानम्। तदात्मनामपि शरीरान्तरावच्छेदेन

---

(१) यथा क्षीरस्येति पाठः १ पु०। (२) साङ्ख्यकारिका ५७।

(३) अत्र वा टीकादय इति पाठकल्पनेऽर्थः सङ्गच्छत इति भाति।

विवक्षितः, तस्यैव तदाराधकत्वात् । विश्वेशानं इत्यत्र

ईश्वराराधकत्वात् । संसरति शरीराच्छरीरान्तरं यातीति व्युत्पत्त्या मनोपि संसारीति तन्निवृत्यर्थं चेतनपदमित्यप्ययुक्तम् । अपूर्वाभिः शरीरेन्द्रियवेदनाभिरभिसम्बन्धः संसार इति वार्त्तिकोक्तेदनावत्त्वं मनसो नेति तस्य संसाराभावात् । अथेश्वरोपि तदाराध्यो तत्कर्तृकाराधनाविषयः स एव हि तदाराध्य इत्यस्मदादिकर्तृकाराधनाया अपि ईश्वरकर्तृकत्वादिति संसारिचेतनवर्गोऽविवक्षित इत्यकारप्रश्लेषः । तथा च विशिष्टाऽविवक्षा विशेष्यविवक्षापर्य्यवसायिनीति (१) चेतनमात्रमेव विवक्षितमितीश्वरो न व्यावर्त्यत इति व्याख्यायते । तन्न । यत्समवेताराधनाविषयो यः स हि तदाराध्यः कर्तृत्वनिवेशापेक्षया(२) लघुत्वात् । न चास्मदादिकर्तृकमाराधनमीश्वरे समवैति । अत एव संसारिणी संसारहेतुश्चेतना यस्येति संसारिचेतनपदेनैव चेतनमात्रमुक्तमित्यपि निरस्तम् । तस्मादेवं वाच्यम् । भोगहेतुशरीरेन्द्रियवेदनासम्बन्धात्मकसंसारस्याचेतनेषु शरीरादिष्वपि सत्त्वात् तद्व्यावृत्तये चेतनपदमिति । वस्तुत आराधना प्रीतिहेतुः क्रिया, न चेश्वरे प्रीतिरस्तीति स नाराध्यः । तदाराधकत्वादिति तु प्रीत्यनुत्पादे ऽपि प्रीतिकारणतावच्छेदकरूपयोग्यताभिप्रायकं न तु फलोपधानाभिप्रायकम् । तस्यैवेति । अतः सामान्यशब्दस्य विशेषपरत्वे सङ्कोच इत्यर्थः ।

ननु नित्यस्य तदनधीनत्वात् स न विश्वेशानोऽथ विश्वपदं

(१) विशेषणमात्राविवक्षापर्यवसायिनीति—पा० १ पु० ।

(२) कर्तृत्त्वप्रवेशाऽपेक्षयेति कल्पने पाठः साधुर्भाति ।

समीहितफलसन्दोहः, तस्य भगवदेकाऽधीनत्वात्। विश्वकृदित्यत्रोपादानसमूहः, तस्यैव तत्कृतिव्याप्यत्वात्। विश्वसंहारकारीत्यत्र यावदनित्यनिवहः, तस्यैव तद्विनाश्यत्वात्। विश्वशक्तिरित्यत्र यावत्कार्यस्तोमः, तस्यैव तच्छक्तिविषयत्वात्। विश्वज्ञातेत्यत्र यावत्-

---

कार्यमात्रपरं तथापि विश्वकृदित्यनेन पौनरुक्त्यमित्यत आह। विश्वेशान इत्यत्रेति। अत्र विश्वशब्देन विवक्षित इति सर्वत्रानुषञ्जनीयम्। तथा चेष्टप्रापकत्वात् स आराध्यः। फलं सुखदुःखहानादि। तथापि पौनरुक्त्यं तदवस्थमेवेत्यत आह। विश्वकृदित्यत्रेति। तथापि न नित्योपादानकारणं स इत्यत आह। तस्यैवेति। तस्यैव तत्कृतिजन्यव्यापाराश्रयत्वादित्यर्थः। अचेतनोपादानाधिष्ठातृत्वेनैव तत्सिद्धेरिति भावः। यद्यपि विश्वो यः संहारस्तत्कारीति इत्यमप्युपपत्तिस्तथापि संहारप्रतियोग्यनित्यनिवह एव वाच्य इति तत्परत्वमेवाह। विश्वसंहारकारीत्यत्रेति। तथा चानिष्टनिवर्तकत्वादप्याराध्य उक्तः। तच्छक्तीति। शक्तिः कारणत्वं, नित्येषु तस्याकारणत्वादित्यर्थः। नन्वीश्वरः स्वज्ञानमजानन् न सर्वज्ञः स्यादिति तज्ज्ञत्वे तस्य ज्ञानं स्वप्रकाशं स्यादित्यत आह। विश्वज्ञातेत्यत्रेति। योगजधर्म्माऽजन्य-सामान्यप्रत्यासत्त्यजन्य-जन्यस्वविषयकसविकल्पकाजन्य-जन्यज्ञानस्यैव स्वप्रकाशत्वनिषेधात् स्वज्ञानविषयकास्मदादिज्ञानं जानत ईश्वरस्य स्वज्ञानज्ञातृत्वाच्च नोक्तदोष इत्यर्थः। अत्रैवकारस्य व्यावर्त्या-

ज्ञेयप्रपञ्चः, तस्यैव तज्ज्ञानविषयत्वात् । विश्वव्यापीत्यत्र यावन्मूर्तद्रव्यराशिः, तस्यैव विशेषतस्तद्व्याप्यत्वात् । इतरस्य तु तद्द्वारा । विश्वमूर्तिरित्यत्र यावत्कारकग्रामः, तस्यैव साक्षात् तत्प्रयत्नाधिष्ठेयतयाऽस्मदादिशरीरसमानत्वात् । अत एव न तत्र शरीरान्तरापेक्षा, साक्षात्प्रयत्नानधिष्ठेयेषु हि सा स्यात् दण्डादिवत्, न तु साक्षात्प्रयत्नाधिष्ठेयेषु शरीरवत् । पिनाकीति तु विशिष्टशस्त्रधारणनिमित्तकनामसङ्कीर्तनेन प्रारब्धविघ्नस्य प्रोत्सारणमेव समीहितमिति सूचयति ।

---

भावात् तद्विषयत्वादेवेति भिन्नक्रमेण योजना, न त्वयोगव्यवच्छेदोऽर्थो विशेष्यसङ्गतत्वात् । ननु व्यापित्वं संयोगः स न विश्वैः; गुणादौ तदभावात्, अथ विश्वं द्रव्यं तथापि स न विभुभिरजसंयोगाभावादित्यत आह । विश्वव्यापीत्यत्रेति । तेन द्रव्यत्वेन गुणादीनां, मूर्तत्वेन विभूनां, निराकरणम् । मूर्तिमत्पदेनैव गुणादिनिरासे लब्धे द्रव्यपदमीश्वरस्य मूर्त्यभावोपपादनार्थम् । विशेषतः साक्षादित्यर्थः । आत्मादिभिः साक्षात् सम्बन्धसम्भवे ऽपि न संयोग इति भावः । इतरस्य त्विति । अमूर्तं मूर्तसंयोगद्वारा सम्बन्ध इति मुख्यत्वेन स एवोक्त इत्यर्थः । ननु विश्वमेव न मूर्तिस्तस्याऽशरीरत्वादित्यत आह । विश्वमूर्तिरित्यत्रेति । तस्यैवेति । शरीरस्य साक्षात्प्रयत्नाधिष्ठेयत्वात् कारकग्रामस्या-

हेतुहेतुमद्भावेन शङ्कोत्तराभ्यां योजना ज्यायसी। यथावस्थितयोजनायां तु अर्थपौनरुक्त्यप्रसक्तौ स्तुतित्वमेव समाधानमध्यवसेयमिति ॥ १ ॥

---

पीश्वरसाक्षात्प्रयत्नविषयत्वात् तद्गुणयोगेन तत्रापि मूर्तिपदं प्रयुक्तमित्यर्थः। तदुपपादयति। अत एवेति। ननु यथावस्थितयोजनयैव कुतो न व्याख्यातमित्यत आह। हेतुहेतुमद्भावेनेति।

नन्वत्र व्युत्क्रमव्याख्यानेऽपि कथं हेतुहेतुमद्भावः? कार्यकारणभावाभावे ऽपि व्याप्यव्यापकभावो हि स वाच्यः। स चैकेश्वरनिष्ठत्वेन यथावस्थितयोजनायामपि सुलभः, न वा सोपि, परस्परं व्यभिचारात्। न हि यो यत्समीहितफलप्रदः स तदाऽऽराध्योऽवलिप्ते व्यभिचारात्, योग्यतायाश्चाऽनिर्वचनात्। नापि यो यदाराध्यः सोऽवश्यं तत्समीहितफलप्रदः, दरिद्रे तद्व्यभिचारात्। नापि यो यस्य कर्ता स तस्येशः, ऋत्विक्सूपकारादिषु व्यभिचारात्। नापि यो यत्संहरति स तत्करोति, अङ्कुरादिविनाशके ऽस्मदादौ व्यभिचारात्। नापि यस्य यत्र शक्तिः स तद्विनाशयति ध्वंसकर्तरि व्यभिचारात्। नापि यो यज्जानाति तस्य तत्र शक्तिः, गोत्वादौ व्यभिचारात्। अत्राहुः सामान्यतो व्याख्येयं यो ह्यीशिता स केन चिदाराध्यते। यः कर्ता स कस्यापीश्वरः। यः संहर्ता सोऽवश्यं किञ्चिद्विनाशयति। यश्च ज्ञाता

नमामीत्यादि । धर्मो निवर्तकः । विज्ञानं शरीरादिविविक्तात्मसाक्षात्कारः । वैराग्यं रागाभावः । ऐश्वर्यं भूतेन्द्रियजयस्तच्छालिने । अत एव निधये वाग्विशुद्धीनाम् । अधर्महेतुको ह्यविवेकः । अविवेकहेतुकमवैराग्यम् । अवैराग्यमूलमनैश्वर्यम् । तन्मूलाश्च वचसामविशुद्धयः । तिस्रः खल्वेताः । तत्र प्रथमा निरभिधेयता । द्वितीया विपरीताभिधेयता । तृतीया निष्प्रयोजनाभिधेयता । ता एताः कथं भूतेन्द्रियजयिनो

---

तस्यावश्यं क्वापि शक्तिः । यत्रात्मा संयुज्यते सोऽवश्यं ज्ञाता । योऽधितिष्ठति सोऽवश्यं केन चित्संयुज्यत एवेति व्याप्तेः । यद्वा सामान्यार्थत्वे विश्वशब्दस्य तत्तदनुपपत्तेर्हेतोर्हेतुमत्ता तद्विशेषपरत्वेन या व्याख्या तयोत्तरेणोत्क्रमेण योजना ज्यायसी । व्यतिक्रमव्याख्यानं तु कुत इति शङ्कायां च नेदमुत्तरं तस्य स्वेच्छयैव कृतत्वात् । यथावस्थितयोजनायामपि यथाकृतव्याख्यायामपि यत्किञ्चिदर्थपौनरुक्त्यं प्रसज्यते यावत्कार्यकारित्वादिना यावत्समीहितफलदातृत्वादेरपि लाभात् तत्र स्तुतित्वमेव समाधानमिति । अन्ये तु व्यभिचारादेव हेतुहेतुमद्भावेन योजनाऽज्यायसीत्यकारप्रश्लेषः अत्र यथावस्थितयोजनायां त्वीश्वरत्वेन सकलधर्मप्राप्तौ यत्पौनरुक्त्यं तत्र स्तुतित्वमेव समाधानमिति व्याचक्षते ॥ १ ॥

भूतेति । भूतविजय इन्द्रियविजयश्चेत्यर्थः ।

महामुनेर्भविष्यन्ति। अजितभूतस्य हि विवक्षोस्तथाभूत(१)प्रयत्नानिष्पत्तेर्निरभिधेया वाक् भवति। अजितेन्द्रियस्य विपर्यासविप्रलिप्साहेतुको विपरीतार्थो वचनसन्दर्भः। अजितमनसश्च प्रमादोन्मादवतो निष्प्रयोजनः। एताश्च वचसामविशुद्धीः छलजातिनिग्रहस्थानेषु सूत्रकार एव प्रपञ्चयिष्यति। सोऽयं न तथेति भवति वाग्विशुद्धीनां निधिः। अत एव तायी(२)तत्त्वाध्यवसायसंरक्षणाक्षमसम्प्रदायप्रवर्तकः ॥ २ ॥

ग्रन्थेति। ननु तात्पर्यटीकेति वदता प्रवृत्तिपाटवार्थं ग्रन्थसङ्क्षेपो दर्शितः। न च शिष्याणां कथन्तासम्बोधविधुराणां राद्धान्तमात्रपरिग्रहः सङ्क्षेपतो विवक्षितः। तथात्वे चोपनिषद एव सन्तु, सन्तु वा

तथाविधो(१)-ऽभिधायकवचननिष्पादकः ॥ २ ॥

ग्रन्थसंक्षेप इति। अन्यथा तात्पर्यपदवैयर्थ्यादिति भावः। कथन्तेति। कथन्ता जिज्ञासा तस्यां सत्यां सम्बोधः सम्यग्बोध इत्यर्थः। न चैवं प्रतिज्ञायां तत्र तत्र सूत्रभाष्ययोष्टीकाकृता व्याख्यानविरोधः। यद्व्याख्यानं विना यद्विषयकवार्त्तिकं व्याख्यातुं

(१) परिशुद्ध्यनुसारेणात्रापि तथाभूत इत्येव पाठो युक्तस्तथाऽपि आदर्शपुस्तकाऽनुरोधात्र परिवर्तितः।

(२) तापाति पु० पा०।

शवमुष्टिन्यायेनाचार्योपदेशाः किमनेनेत्यत आह । निरस्ताखिलदूषणेति ।

नन्वेवं ग्रन्थतात्पर्यं व्याख्येयं दूषणानि च निरस्यानीति पुनरपि ग्रन्थगौरवमित्यत आह । ग्रन्थव्याख्याच्छलेनैवेति ॥ ३ ॥

ननु चिरन्तने ऽस्मिन्निबन्धे महाजनपरिगृहीते बहवो निबन्धाः सन्तीति कृतमनेनेत्यत आह । इच्छाम इति ।

ननु यदि ग्रन्थकारसम्प्रदायाविच्छेदेन ते निबन्धाः कथं कुनिबन्धाः, अथ सम्प्रदायो विच्छिन्नः कथं तवापीयं विच्छिन्नसम्प्रदाया तात्पर्यटीका सुनिबन्ध इत्यत आह । अतिजरतीनामिति । उद्योतकरसम्प्रदायो ह्यमूषां यौवनं तच्च कालपरिपाकवशाद्गलितमिव किन्नामात्र त्रिलोचनगुरोः सकाशादुपदेशरसायनमासादितममूषां पुनर्नवीभावाय दीयत इति

---

न शक्यते तत्र वार्त्तिकतात्पर्यविवरणार्थं तद्विषयसूत्रभाष्यव्याख्यानात् ॥ ३ ॥

सम्प्रदीयत इति सम्प्रदायो रहस्योपदेशः । त्रिलोचनष्टीकाकृतो विद्यागुरुः । जराव्याधिनाशकमौषधं रसायनम् । खनि-

युज्यते। न च कुनिबन्धपङ्कमग्नानां तद्दातुमुचितमिति तस्मादुत्कृष्य स्वनिबन्धस्थले सन्निवेशनरूपसमुद्धरणमेव साम्प्रतमित्यर्थः ॥ ४ ॥

तत्र भगवतोऽक्षपादस्य मुनिषु मध्ये प्रवरत्वं श्रुत्यादिभ्य एव प्रसिद्धं किमनेन सङ्कीर्तनेन। न चैतदतिशयेन साम्प्रतमुपयुज्यते। जगदुपशमनिदानशास्त्रप्रणेतृत्वं च तस्य तत्प्रणयनमेव प्रकटयदस्ति, तेनापि किं प्रकटितेन। स्वनिबन्धस्य तद्विषयतापि तद्व्याख्यानादेव लभ्यत इति किं तयाऽपि कथितया।

---

बन्ध एव स्थलमिति रूपकम्। तेन गौरपि दुस्तरपङ्कादुद्धृत्य स्थले निवेश्यत इत्यर्थः ॥ ४ ॥

ननु मुनिप्रवरत्वादिबोधनपरत्वे सम्भवति वार्त्तिकं प्रयोजनप्रदर्शनपरतया कुतो व्याख्यायत इत्यत आह।

तत्रेति। तत्र तस्मिन् वार्त्तिके व्याख्येये। श्रुत्यादिभ्य एवेति। श्रवणं विना मननस्यैतच्छास्त्रसाध्यस्यानाकाङ्क्षितत्वादिति भावः। ननूपयोगितयाऽऽगममात्रश्रवणे ऽपि न मुनिप्रवरत्वं श्रुतमित्यत आह। न चेति। अस्य युक्तिशास्त्रतया आप्तोक्तत्वेन प्रमाणत्वादिति भावः। प्रणयनमेवेति। तावता प्रणेतृमात्रसिद्धावपि लोकत एव तद्विशेषप्राप्तेः। वस्तुतः कर्तृविशेषाज्ञाने ऽपि समीचीनयुक्तिपरतयैव प्रमाणत्वं स्यादिति भावः। तद्व्याख्यानादिति। अनन्यपर-

न चास्य न्यायमहोदधेरुत्तानताप्रतिभास एवाऽऽग्रहः कर्त्तुमुचितः तस्माद्भवितव्यमत्र तात्पर्येण तदाह। अर्थेति।

तदपनीयत इति। तदिति दिङ्नागादिसमुत्थापितं शास्त्राच्छादकं कुहेतुसन्तमसमपनेयत्वेन परामृशता शास्त्रस्यैवायं निबन्ध इति दर्शितम्। भाष्यस्य च तद्विवरणरूपस्य शास्त्रशरीररूपतया न शास्त्राधिक्यं मन्यते मीमांसाया इव वेदात्। अत एव नात्रत्यटीकायाः वार्त्तिकान्तेन विरोधः। एतेन

---

तयेति शेषः। अतो न टीकायाः सूत्रभाष्यव्याख्यानेन व्यभिचारः। उत्तानतेति। स्वरूपव्याख्यानमात्र एवेत्यर्थः।

टीका(१)यामथ शब्दो मङ्गलार्थो व्युत्पादित इत्यस्यानन्तरं भिन्नक्रमो वा। अत्रभवता मान्येन। पक्षिलस्वामिना वात्स्यायनेन।

भाष्यस्य चेति। अतो न वार्त्तिककृता क्वचिद्भाष्यव्याख्यानविरोधस्तेनापि रूपेण शास्त्रस्यैव व्याख्यानात्। वार्त्तिकान्तेनेति।

"अकारि (२) महतस्तस्य भारद्वाजेन वार्त्तिक"

मित्यनेनेत्यर्थः। नन्वाद्यन्तवार्त्तिकदर्शनादुभयार्थत्वमस्तु,' अपि च शास्त्रनिबन्धत्वे वार्त्तिकत्वविरोधः उक्तानुक्तदुरुक्तचिन्तनग्रन्थस्य

---

(१) तात्पर्यटीकायामित्यर्थः। (२) अ ५ आ. २ सू. २५।

शास्त्रस्य' यो निबन्धो भाष्यग्रन्थः स कुतार्किकाज्ञान-निवृत्तिहेतुः करिष्यत इति व्याख्यानं टीकाविरोधिनो-पेक्षणीयम् ।

ननु सूत्रोक्तप्रयोजनानुवादः पुनः किमर्थमित्यत आह । सूत्रेति ।

अथ स्वनिबन्धस्य प्रयोजनवत्ताप्रदर्शनेन किं सिद्ध्य-तीत्यत आह । प्रेक्षावदिति । ननु व्युत्पित्सवो व्युत्प-त्तिमधिकृत्य प्रवर्त्तन्ते, अतो व्युत्पादनप्रवृत्तौ व्युत्पत्ति-

---

वार्त्तिकतया शास्त्रे दुरुक्तत्वाभावात्। अत्राहुः नोभयत्रापि स्वारस्यं ऽशस्य तात्पर्यं गौरवात् । उक्तन्यायेनान्यथा सिद्धेश्च । तत्रैकत्र विशेषापेक्षायां शास्त्राङ्गतैवोचिता तदङ्गाङ्गत्वकल्पनापेक्षया तदङ्गत्वकल्पनायां लाघवात् । कथमन्यथा किञ्चित् सूत्रं व्याख्याय शेषं भाष्य इति वार्त्तिककृतोऽतिदेशो भाष्यकृद्व्याख्यानदूषणं च सङ्गच्छते । भाष्यव्याख्यानत्वे त्वस्य टीकावदेतन्न स्यात्, दुरुक्तं च शास्त्राङ्गतया भाष्यस्यैव चिन्त्यत इति न वार्त्तिकत्वविरोधोऽपि । शास्त्रस्यैवेत्येवकारोऽनास्थायामित्यवधारणाभावादुभयाङ्गत्वमितस्य । भाष्यस्य चेत्यनेन तदेव प्रकटितम् । एतेनेत्यनेनापि भाष्यमात्रा-ङ्गता निराकृतेत्यप्याहुः ।

ननु वार्त्तिकारम्भस्यैवाक्षेपणात् सूत्रकारोक्तप्रयोजनानुवाद-स्यानाक्षेपे किं तत्समाधानेनेत्यत आह । नन्विति । प्रेक्षावत्प्रवृत्त्यङ्ग-मिति विशेषणतात्पर्यमाह । अथ स्वनिबन्धस्येति । मात्रपद-

रेवामीषां प्रयोजनमिति किमपरेण प्रयोजनेनेत्यत आह । "व्युत्पादनमात्रस्येति ।

द्विविधं हि प्रयोजनं मुख्यं गौणं च तत्र मुख्यं पुरुषार्थ एव, इतरत्तु तदङ्गमिति । तत्र मुख्यार्थिनस्तत्साधनमर्थयमानास्तत्र प्रवर्तन्त इति तदपि प्रयोजनमेवेति । अतो मुख्ये प्रयोजने सति गौणं प्रयोजनं तस्मिंस्त्वसति तदपि न स्यादिति निष्प्रयोजनतैवावतिष्ठते । न च स्वातन्त्र्येणैवास्य मुख्यं प्रयोजनमस्तीत्यतो यस्येदमङ्गं तत् (१) मुख्यं प्रयोजनमस्तीति दर्शिते प्रेक्षावान् प्रवर्तितो भवतीत्यभिसन्धिर्वार्त्तिककृत इत्यर्थः । इतोऽपि टीकाखण्डलकादन्तर्भावितफलवत्सन्निधावफलं तदङ्गमिति न्यायाच्छास्त्राङ्गमेवेदं न भाष्याङ्गमिति मन्तव्यं, न हि भाष्यस्य स्वातन्त्र्येण मुख्यं प्रयोजनमस्ति येन वार्त्तिकं तदङ्गतामियात् ।

---

व्यवच्छेद्यमाह । नन्विति । अस्य—वार्त्तिकस्य । अत इति । मुख्यप्रयोजनसाधनस्य गौणप्रयोजनत्वादित्यर्थः । यस्य—शास्त्रस्य । इदं वार्त्तिकमित्यर्थः । (२) न च भाष्यस्येति । यद्यपि शास्त्रस्यापि

---

(१) तस्येति पु० पा० ।

(२) परिग्रहानुसारेण नहीति प्रतीकधारणस्य युक्तत्वेऽपि आदर्शानुरोधान्न पाठः परिवर्तितः ।

ननु कर्मेन्द्रियनियमः शम इति सुप्रसिद्धं "शान्तो दान्त" इत्याद्युपनिषत्सु, न चासौ पुरुषार्थः, अतो न मुख्यं प्रयोजनमित्यत आह। अत चेति।

ननु जगतः शमायेति दुर्घटम् असम्भावितत्वादशक्यत्वाच्च। न तावत्कश्चिदेव जगदुपचिकीर्षुः क्वचित् प्रवर्तते यतो मुनेरपि तथा त्वं सम्भावयामः। पठन्ति च मुनेरपि (१) वनस्थस्येत्यादि। न च शक्यमेतत्।

---

न साक्षात् फलं श्रूयते, फलवन्मननव्युत्पादकतया च फलवत्त्वं भाष्यस्याप्यस्ति, सन्निधिरपि प्रतीतिकृतस्तुल्यः, तथाप्याद्यसूत्रे तत्त्वज्ञानपदे करणव्युत्पत्त्या शास्त्रस्य निःश्रेयसफलकत्वं यथा श्रूयते न तथा भाष्यस्य, फलान्तरकल्पने गौरवात् शास्त्रफलेनैवास्य फलवत्त्वम्। न च शास्त्रेऽपि न साक्षान्निःश्रेयससम्बन्धः किं तु मनने, परम्परासम्बन्धस्तु तेन भाष्यस्याप्यस्तीति वाच्यम्। फलवन्मननेन लिङ्गोपदर्शकशास्त्रस्यैव परम्परया निःश्रेयससम्बन्धकल्पनात्। भाष्यमन्तर्भाव्यापि परम्परया फलसम्बन्धकल्पने गौरवादिति भावः॥

ननु शमशब्दार्थः प्रसिद्धोऽत्र कुतो वर्ण्यते तात्पर्यटीकायामित्यत आह। नन्विति।

दुर्घटं असम्बद्धम्। न तावदिति। यद्यपि जगदुप-

---

(१) मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः।
उत्पद्यन्ते त्रयः पक्षा मित्रोदासीनशत्रवः॥

बुभुक्षूणां प्रवर्तयितुमशक्यत्वात्। न च जगदेव मुमुक्षति। तस्मादनुष्ठातैव व्युत्पाद्यः शास्त्रान्तरलब्धब्राह्मणत्वादिरूपः शिष्यः। तस्य च रूपाणि शमदमादिसम्पत्तिः नित्यानित्यविवेकः, ऐहिकामुष्मिकभोगवै-

---

चिकीर्षोरन्यस्यासम्भवे ऽपि मुनेस्तथात्वं नासम्भाव्यं वक्ष्यमाणयोगप्रभावादिना तस्येतरविलक्षणत्वात्। पठन्ति चेत्यनेनापि मुनेर्द्वेषकादिदर्शनेऽपि मुनेर्द्वेष्यादिरस्तीत्यस्यादर्शनाद्विपरीतार्थत्वं, तथापि केषां चिदयं पक्षो न सिद्धान्त इति नोक्तदोषः। उदाहरणमपि यदि कस्यापि जगदुपचिकीर्षा दृष्टा स्यात् तदा मुनेरपि सा सम्भाव्येत न त्वविमिति अभिप्रायकम्। बुभुक्षूणामिति। सुखे रागिणामित्यर्थः। तेषां सुखस्यापि हानेस्तुल्यायव्ययत्वात्। अयमप्यन्येषां पक्षः अस्मत्पक्षे तेषामपि वक्ष्यमाणपुरुषार्थचतुष्टयान्तर्भूतत्वेन करुणया मुमुक्षोत्पादनस्य वक्ष्यमाणत्वात्। तस्मादिति। करुणया सर्वेषामुद्देश्यत्वेऽप्यनुष्ठाता—ऽनुष्ठानयोग्योऽधिकारिशरीरावच्छिन्नो न शूद्रादिरित्यर्थः।

यत्तु तच्छरीरावच्छेदेन तेषामनधिकारेऽप्यन्यशरीरावच्छिन्नानां तेषामप्यधिकारः आत्मनामधिकारिशरीरनियमादिति मतम्। तन्न। न हि किं सर्व एवात्मानोऽत्र उद्देश्याः किं वा केचिदेवेति प्रश्नार्थः। किं तु किं त्रैवर्णिका एवाधिकारिण उत शूद्रादयोऽपीति? प्रवृत्तिहेतुफलकत्वात् तत्र चात्ममात्रमुद्देश्यमित्युत्तरमसमञ्जसं प्रवृत्त्यनियामकत्वात्। अनुष्ठानस्याधिकारिविशेषणजात्यादि-

राग्यं मुमुक्षुता चेति। यस्त्वनधिकार्येव प्रवर्तते कर्मकाण्ड इव ब्रह्मकाण्डे स न फलभाग्भवति।

तत्रैतत् स्यात्। न तावदुपेयविषयेयमधिकारचिन्ता तस्य पुरुषप्रयत्नाविषयत्वात्। इष्यमाणतामात्रस्य चानिषेधात्। किन्नाम ?, उपायविषया, तस्यैव शास्त्रविषयत्वात् पुरुषप्रवृत्तिविषयत्वात्। इह चापवर्ग इव तदर्थतया तत्त्वज्ञानमप्युपेयमेव असिद्धत्वात्। उपायस्तु प्रमाणम्। न च वेदाध्ययनवदनुमानस्य

---

निषयं विना प्रवृत्त्यनुपपत्तेः। शास्त्रान्तरेति। शास्त्रान्तरादिदाम्नयानि-शास्त्राऽनुष्ठीयमानानि ब्राह्मणत्वादौ सति रूपाणि येन स तथा। अत एव रूपाण्याह। तस्य चेति। न तु ब्राह्मणत्वादीन्येव रूपाणि। अर्थेतनयन्यविरोधात्। ब्रह्मकाण्डं मोक्षशास्त्रम्। कर्मकाण्डं यागादि।

उपेयं—साध्यमपवर्गः। तस्येति। तस्यासिद्धतया कृतिजन्यव्यापारानाश्रयत्वादित्यर्थः। इष्यमाणतामात्रेति। अतो न तस्य पुरुषार्थत्वाभाव इति भावः। "अनधीत्य द्विजो वेदा"नित्यादिना मोक्षेच्छाया अपि निषेधस्तु द्विजविषयत्वेन, न शूद्रादिविषयः। तथा (१) "यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वेदिति" श्रुतिविरोधात् स्मृतिरियमप्रमाणमेवेति भावः। तस्ये-

(१) यद्देति पु० पा०।

प्रत्यक्षस्य वोपादानं शूद्रादिकं प्रति निषिद्धं, येन तत्राप्येतस्याऽनधिकारः स्यात्। तथा सति धूमादपि वह्निमधिगच्छन् प्रत्यक्षाद्वा प्रत्यवायी स्यात्, अधीयान इव वेदम्। प्रत्युत प्रायश्चित्तानुपदेशात्—

"स्त्रियो वैश्यास्तथा शूद्रा ये चान्ये पापयोनयः"

इत्यादिस्मृतेरधिकार एवावसीयते। तस्माद्यथा स एव विशिष्टः स्वर्गो वैदिकयागाद्यनधिकृतेनापि उपायान्तरेण त्रैवर्णिकशुश्रूषादिना साध्यते तथोपायान्तरेणानुमानादिना यद्यात्माऽधिगतः क्रियते शूद्रेणापि, तदा कीदृशो दोषः॥

---

वेति। शास्त्रस्य प्रवृत्तिहेतुतया तद्विषयोपायविषयकत्वादित्यर्थः। अत उपायविषयैवाधिकारिचिन्तेति भावः। तर्ह्यपवर्गोपाये तत्त्वज्ञाने ऽधिकारचिन्ता स्यादित्यत आह। इह चेति। प्रायश्चित्तानुपदेशादिति। अयमभ्युपगमवादः। वस्तुतो निषेधे ऽपि पुरुषः प्रत्यवेयाच्छ्रायव्युत्पत्तिरूपक्रियाफलमात्मानुमितिः शूद्रस्य स्यादेवेति भावः। उपायान्तरेणेति। वेदापेक्षयेत्यर्थः। द्वितीयसूत्रोक्तपरीक्षाक्रमेणापवर्गोत्पत्तेः सर्वसाधारणत्वाच्छूद्रादिरपि तद्योग्यो मननभावित्वात् त्रैवर्णिकवदित्यनुमानाच्छूद्रस्यापि मोक्षे ऽधिकार इति भावः॥

सत्यं(१) किन्त्वनुमानमप्यागमाविरोधिनानुसन्धीय-मानमर्थनिश्चायकं न तु विरुद्धमपि। यदाह "यत्तु प्रत्यक्षागमविरुद्धं न्यायाभासः स"(२) इति। स चागमा-विरोधादविरोधनिश्चयस्तदर्थनिश्चयाधीनः, तत्र चानधि-

किन्त्विति। ननु बाधितविषयत्वज्ञानाभावो ऽनुमितिहेतुर्न त्वबाधितत्वज्ञानमपि, हेतुत्वे ऽपि न प्रतिप्रमाणं तज्ज्ञानमुपयुज्यते सामान्यतो ऽपि तदभावस्य निश्चेतुं शक्यत्वात्। उपयोगे ऽप्याप्तो-पदेशादिना ऽपि तन्निश्चयसम्भवात्। अन्यथा स्त्रीशूद्रादेः धर्मान-नुष्ठानप्रसङ्गे तद्धर्मानुष्ठानप्रतिपादकागमाप्रामाण्यापत्तिः। मैवम्। बाधसत्प्रतिपक्षयोर्हेत्वाभासत्वेनानुमितिप्रतिबन्धकत्वात् यज्ज्ञाने च यन्न भवति तत्तदभावज्ञानसाध्यं यथोपाध्यभावज्ञानसाध्या-ऽनुमितिरिति व्याप्तेश्च बाधाद्यभावस्यापि बोध्यत्वात्। अत एव निगमनमर्थवत्। यद्वा शूद्राद्यधिकारबोधकमप्यनुमानमनुसन्धीय-मानमागमाविरोधेन स्वरूपसताऽर्थनिश्चायकं न तु तद्विरुद्ध-मपीति योजना। अयमर्थः। तत्त्वज्ञानरूपफलेन नाधिकारो निरूप्यते अपि तु यत्फलोपनयनद्वारा शास्त्रं प्रवर्त्तयति तेन, तत्र चानधिकृत एव शूद्रः। तथाहि। "आत्मा वा अरे श्रोतव्यो मन्तव्य" इति श्रुत्या (३) श्रवणसहकृतस्य मननस्य मोक्ष-हेतुत्वं बोध्यते। श्रवणं च "श्रोतव्यः श्रुतिवाक्येभ्य" इति स्मृतेः

(१) किन्त्विति २ पु० पा०।
(२) अ. १ आ. १ सू. १ वा. भाष्यम्।
(३) बृ० उ० अ० ४ ब्रा ५।

कृत एवायम्। तन्निरपेक्षस्त्वनुमानमात्रशरणो नैरशिर:-पावित्र्यादिवदनर्थमेव समासादयेत्। तस्मादागमैक-वाक्यतया प्रवृत्ते शास्त्रे तदधिकार्येवाऽधिकारीति शूद्रादयोऽनधिकृता एव, अतो यावदधिकारिपरोऽयं जगच्छब्द इति केचित् तत्राह। परमकारुणिको हीत्यादि॥

---

शूद्रादौ नास्तीति तदमहत्कृतं मननमपि न मोक्षसम्पादकमिति न तत्र तस्याधिकार:। भवतु वा तत्त्वज्ञानेन फलेनाधिकारनिरूपणं तथापि नाऽऽत्मानुमितिमात्रं फलमपि त्वपवर्गसाधनं,मनने प्रकारा-काङ्क्षायां श्रोतव्यो मन्तव्य इति सामानाधिकरण्याच्छ्रवणसमान-प्रकारकमननस्यापवर्गसाधनत्वात्, श्रुत्येकवाक्यतापन्नशास्त्रसाध्य-मननजन्यतानिश्चयाच्च। श्रवणसमानप्रकारकत्वज्ञानं श्रुत्येकवाक्यता-पन्नत्वज्ञानं च श्रुत्यध्ययनजन्यम्। तत्र चानधिकृत एव शूद्रादि:। एवं च शूद्रादेरागमैकवाक्यतया प्रवृत्ते शास्त्रे मननजन्यमोक्षरूप-फलाभावान्न शूद्रादेरधिकार:। यदि च शूद्रादि: प्रत्यवायमवधार्य रागौत्कट्याद्वेदमधीत्य शरीरादिविविक्तात्मज्ञानवान् स्यात् तदाऽपि "ब्राह्मणा विविदिषन्ति यज्ञेन दानेने"त्यादिश्रुत्या (१) ब्राह्मण-कर्तृकश्रवणस्यैव मोक्षहेतुत्वमिति न तस्यामोक्ष इति। तन्निर-पेक्ष: श्रुतिनिरपेक्ष:॥

---

(१) बृ० उ० अ० ४ ब्रा० ४।

सन्त्येव केचित् करुणार्द्रमनसो येषां जगदेव मित्रं, अन्यथा "भूतेभ्यो ऽभयं दत्त्वेति" विधिवैयर्थ्य-प्रसङ्गः, निष्कारणमेव हि परदुःखप्रहाणेच्छा कारुण्यं, सा च यथैकं दुःखितं पश्यतो भवति तथा जगदपि दुःखितं पश्यतः किं न स्यात्। भवति चेत् तत्प्र-हाणोपायप्रवृत्तौ का नामाऽनुपपत्तिः। ननु करुणार्द्र-हृदयोऽप्ययं व्युत्पित्सुमेव व्युत्पादयेन्न तु विपरीतं, न हि बधिरेषु गायनो गायतीत्यत आह। तत्र यदि कश्चिदिति। न हि रोगी मन्दभाग्यतया चरकाद्युप-देशे न प्रवर्तत इति तदर्थता तस्य निवर्तत इत्यर्थः॥

---

पूर्वपक्षं निराकुर्वन्नेव कारुणिकस्य परमत्वमप्याह। सन्त्येव हीति। सर्वदुःखापनिनीषुत्वमेव परमत्वमित्यर्थः। अन्यथेति। सर्वभूतानिष्टहेतुनिराचिकीर्षोरेकस्यासम्भवादित्यर्थः। तथाविधो-पदेशवाक्यप्रणयनाच्च न तदशक्यमिति भावः। तथेति। यदि स्वोपाध्युपरागेण सा स्यात् तदा तदनुपस्थिते सा न सम्भाव्येत, न चैवं, करुणात्वव्याघातादिति यथाऽधिकृतशरीरावच्छेदेन सा तथाऽनधिकृतशरीरावच्छेदेनापि कथं न स्यादित्यर्थः।

ननु यदि कश्चिन्न प्रवर्तेतेत्यनेन प्रकृते दूषणाभावात् किं तत्समाधिनेत्यत आह। नन्विति। तद्विपरीतमिति। ततश्च न जगतः प्रमायेति भावः। शङ्कां निरस्यति। न हीति।

नन्वनधिकृतव्युत्पादनेन प्रत्यवायमपश्यन् कथमवधेयवचनः स्यात् पश्यन् वा न प्रवर्तेत । कारुणिकतया पश्यन्नपि प्रवर्तते चेत् प्रमादी स्यात् । तथा च परलोकादबिभ्यतोऽस्य वचनं कः श्रद्दास्यतीत्यत आह । न चेति ।

यद्यपि प्रक्षीणमोहत्वादेवाऽस्य पापपुण्ययोरुत्पत्ति-

---

तदर्थता—तदुद्देश्यकता । न ह्युपदेश्याप्रवृत्तावुपदेशस्य तदर्थता निवर्तेत इत्यर्थः ॥

ननु मुनेर्दोषसम्भवे ऽपि व्युत्पादनसिद्धेः किं दोषविनाशकीर्तनेनेत्यत आह । नन्वनधिकृतेति ।

नन्वात्मनामधिकारिशरीरावच्छेदनियमादनुष्ठानयोग्यशरीरावच्छेदेन व्युत्पादनात् सर्वेषामुद्देश्यत्वे ऽपि न दोषः सकलशरीरावच्छेदेन व्युत्पादने मानाभावात् । न च यत्र फलभागित्वाभाव-निश्चयस्तदव्युत्पादने ऽपि कारुणिकत्वक्षतिरपि । अत्राहुः । सकलशरीरावच्छेदेन प्राणिनः पश्यन् अयमनधिकारिणोऽपि मन्त्रपःप्रभावादेव फलमवश्यमाप्नोति निश्चयेन फलभागित्वाभावनिश्चयाभावात् कारुणिकः कथं सर्वशरीरावच्छेदेन प्राणिनो नोद्दिशेत् न हि तत्र तस्याशक्तिरकारुणिकत्वं वेत्युक्तं वक्ष्यति हि सत्यसङ्कल्पतया ऽनधिकारिणोऽपीति । यद्यपीति । न च नास्य कश्चिद्दोष इति टीका प्रत्यवायानुत्पत्तावपि सङ्गच्छत इति वाच्यम् । पाप्मानो विलीयन्त इति अग्रे विधानात् तट्टीकाया ध्वंसपरत्वादिति भावः ।

रेव नास्ति, वक्ष्यति हि "न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्ये"ति, (१) तथापि क्लेशहानेर्दुरूहत्वात् प्रत्यवायमभ्युपगम्य तदभावाय तपःप्रभाव उक्तः ॥

नन्वेवं "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वर" मित्यत आह ।

तथा चेति । नहि गाः पङ्कमग्नाः पङ्कलेपभयादनुकम्पापरवशाः समर्था नोद्धरन्ति । अपि तूद्धृत्य पङ्कं क्षालयन्तीत्यर्थः ॥

ननु यद्यनधिकृतः, कथं फलभागी, तथा चेत्

---

दुरूहत्वादिति । अस्मदादिभिरिति शेषः । न च तपःप्रभावनिश्चयात्तन्निश्चयस्तदभावे तदुपपत्तेः ।

ननु दृष्टान्ते व्युत्पादनानन्तर्भावात् तद्वैषम्यमित्यत आह । नन्वेवमिति । स्वपापमुत्पाद्य तन्निवर्तनात् तदनुत्पादनमेव श्रेय इत्यर्थः । न हीति । स्वदोषमपरिगणय्य परहिताय प्रवृत्ताः स्वदोषमुत्पाद्यापि तद्विनाशयन्तीत्यत्रैव दृष्टान्तो न तु व्युत्पादनमपि अन्तर्भाव्येति वैषम्यमित्यर्थः ॥

ननु तपोनिधेरित्यनेनैव तपःप्रभावात् दोषाभावप्राप्तेः पुनस्तपःप्रभावाभिधानं व्यर्थमित्यत आह । ननु यदीति । दृष्टा-

---

(१) गौ० सू० अ ४ आ० १ सू० ६२ ।

कथमनधिकृत इत्यभिसन्धायोक्तं प्रपञ्चयति । तपःप्रभाव एव हीति । यथा हि तेषां तपःप्रभावादेवंविधाः पाप्मानो विलीयन्ते तथा तपःप्रभावादेव सत्यसङ्कल्पतयाऽनधिकारिणोपि फलभागिन इति न कश्चिद्विरोधः । न च फलापेक्षया च तेषामनधिकारः । किं तर्हि ? कर्मापेक्षया । अनधिकृतेन कृतं कर्म विगुणं सन्न फलाय पर्याप्तमित्यपि न । विशिष्टयाजकसम्बन्धादेव तस्य परिपूर्णत्वात् । याजक एव त्वयाज्यं याजयन् प्रत्यवायमासादयेत् । राज्ञः प्रतिगृह्णन्निव विद्वान् । स च तीव्रतरेण तपसैव विलीयत इत्यर्थः । तर्हि

---

त्वार्थं पुनस्तदभिधानमिति दर्शयन्नेवाऽनधिकृतस्य फलभागित्वं न समाहितमिति तत्समाधत्ते । यथा हीति । यथोक्तजनकमाहात्म्यात् प्रतिबद्धोपि वह्निर्दहति तथाऽत्र चाण्डालशरीरजनककर्मणि फलप्रतिबन्धकेऽपि याजकतपोमाहात्म्यादनधिकृतस्यापि फलसिद्धिः । न च चाण्डालादौ कारणतावच्छेदकद्विजशरीरत्वाभावान्न कारणतेति न तस्य प्रतिबन्धकत्वमिति वाच्यम् । लाघवाच्छरीरत्वस्यैव तदवच्छेदकत्वादिति भावः । याजकेति व्युत्पादकस्याप्युपलक्षणं प्रकृतत्वात् । न चास्मदादीनामयं प्रसङ्ग इति प्रसङ्गस्वरूपं न दर्शितमिति तदाह । तर्हीति । शिष्टाचारविषयत्वादस्मदादिकर्तव्यमपि तद्व्युत्पादनं स्यादित्यर्थः ।

"महाजनो येन गतः स पन्था" इति न्यायेन वयमप्यनधिकृतान् व्युत्पादयाम इत्यत आह। न चेति।

ननु तार्किकाणामज्ञानं निवर्तयता किमनेन शास्त्रस्योपकृतं स्यादित्यत आह। कुतार्किकैरिति।

अज्ञानमसम्यग्ज्ञानम्॥

इह कर्मारम्भे प्रारब्धस्यान्तरायविरहेण परिसमाप्तिं कामयमाना अभीष्टदेवतानमस्कारपूर्वकं प्रेक्षावन्तः प्रवर्तन्ते। दृश्यते च तत्र तत्र बहुशो व्यभिचारः कृत-

---

न चेतीति। अनधिकृतव्युत्पादनस्य धर्मशास्त्रनिषिद्धत्वादविगीतलिङ्गविशेषाभावान्न कर्तव्यतानुमितिरिति भावः॥

कुतार्किकाज्ञानमित्यत्र षष्ठीसमासमनादृत्य मध्यपदलोपिसमासाश्रयणबीजमनुपपत्तिमाह। नन्विति। यद्यपि कुतार्किकाणामज्ञानं निवर्तयता ऽनेन निबन्धेन शास्त्रे दूषणार्थं तेषामप्रवृत्तौ शास्त्रमुपकृतं स्यादेव, तथापि शास्त्रसम्बन्धितयैवाऽऽरम्भे दूषणकरणात् शास्त्रसम्बन्धमाश्रित्यैव परिहृतमिति भावः। ननु ज्ञानाभावान्तराणामजन्यत्वादज्ञानमत्र ज्ञानध्वंसो वाच्यः स च अनिवर्त्य इत्यत आह। असम्यग्ज्ञानमिति। तदेतच्छास्त्रदूषणोद्भावनेन तैराहितमित्यर्थः॥

ननु नमस्कारः कृतो निबध्यत एवेति नियमाभावात् तदकरणसम्भावनाशङ्का निर्बीजेत्यतस्तद्बीजमाह। इहेति।

नमस्कारस्याऽपि समीहितासिद्धेर्विपरीतस्याऽपि समीहितसिद्धेः। न चात्र "वृष्टिकाम कारीरीं निर्वपे"दितिवत् प्रारब्धपरिसमाप्तिकामो देवतां नमस्कुर्यादिति श्रुतिरस्ति, येन व्यभिचारेऽपि कर्मकर्तृसाधनवैगुण्यं कल्पयामस्तस्मादप्रामाणिकप्रसिद्धिविजृम्भितमेतदित्यभिसन्धाय किमु न कृतो वार्त्तिककृतेष्टदेवतानमस्कार इत्यत आह। अविगीतेति॥

प्रत्यक्षमिवाविगीतशिष्टाचारोऽपि श्रुतिसद्भावे

---

येनेत्युपलक्षणम्। जन्मान्तरकृतनमस्कारात् फलसिद्धिं कल्पयाम इत्यपि द्रष्टव्यम्। न च समीहितसिद्ध्या लिङ्गेन जन्मान्तरीयनमस्कारानुमानं स्यादिति वाच्यम्। अन्योन्याश्रयात्। व्यभिचाराग्रहे हि कारणताग्रहः तस्मिन् सति जन्मान्तरीयतदनुमाने व्यभिचाराग्रह इति भावः॥

प्रत्यक्षमिवेति। अभ्युपेतवेदप्रमाणभावः शिष्टः, तदाचारे चाऽविगीतत्वं श्रुत्याद्यनिषिद्धत्वम्, अलौकिकत्वमपि लिङ्गविशेषणमत्र, तेन भोजनाद्याचारेण न व्यभिचारः। न च व्यभिचारे सति नियतप्राक्सत्त्वस्य ग्राह्यस्याभावादयोग्यतया श्रुतिरपि न तद्बोधिका स्यादिति वाच्यम्। व्यभिचारासिद्धेः। योग्यानुपलम्भेनैहिकस्य तस्याभावनिश्चयेऽपि जन्मान्तरीयतदभावस्याग्रहात्। सामान्याभावग्रहस्य च यावद्विशेषाभावग्रहव्याप्यत्वात्। न च व्यभिचार-

प्रमाणमेव, निर्मूलस्य च (१) शिष्टाचारस्याऽसम्भवात्। अप्रमाणमूलकस्य च प्रामाणिकविगानविरहानुपपत्तेः। तथा (२) सत्यभावः कर्मकर्तृसाधनवैगुण्यमवलम्बते। असति च भावो जन्मान्तरीयधर्मसम्पत्तिम्। अन्वयव्यतिरेकाऽभावदर्शनं त्वागमेतरप्रमाणगोचरं कार्यकारणभावमपाकरोतीत्यर्थः। ( न त्वेवम्भूतं शिष्टाचारं कार्यकारणभावमपाकरोतीत्यर्थः ) (३)।

---

संशयः कारणत्वग्रहप्रतिबन्धकः, ग्राह्यसंशयस्य प्रमाणप्रवृत्तिप्रतिबन्धकत्वे प्रमाणमात्रोच्छेदापत्तेः, तत्प्रवृत्तेः पूर्वं ग्राह्यसंशयस्याऽऽवश्यकत्वादिति भावः। अप्रयोजकत्वं निवर्तयितुमाह। निर्मूलस्य चेति। अन्वयव्यभिचारं समाधत्ते। तथा चेति। व्यतिरेकव्यभिचारं समाधत्ते। असति चेति।

ननूभयमप्ययुक्तं कर्त्रादिसाद्गुण्येऽपि फलासिद्धेः। न च प्रतिबन्धकदुरितभूयस्त्वात् तथेति वाच्यम्। दुरितस्याऽतीन्द्रियस्याऽल्पत्वभूयस्त्वयोरस्मदादिना ज्ञातुमशक्यतयाऽनवध्यसायेन प्रवृत्त्यभावापत्तेः। जन्मान्तरीयसमाप्तिं चोद्दिश्य शिष्टैस्तदकरणात्। प्रत्यक्षवेदस्याभावेन यथाचारं श्रुतेरनुमानात्।

---

(१) निर्मूलेति क्वचित्।

(२) प्रकाशानुसारेण तथा चेति युक्तम्।

(३) कस्मिंश्चित्पुस्तके ( ) एतदन्तर्गतो ग्रन्थः कुण्डलितः।

यद्येवं, किमनेन न कृत इत्यत आह। परमेति।
यदि कृतस्तत्किमिन्द्रलुप्तेन(१) गतो येन न दृश्यत
इत्यत आह। न निवेशितः। अत्रैव दृष्टान्तो न

---

आचारस्यैहिकप्रारिप्सितमात्रविषय इति धर्मिग्राहकमानेन तस्यैहिकमात्रफलकत्वात्।

अत्रास्मत्पितृचरणाः-समाप्तौ मङ्गलं न साधनमुभयतो व्यभिचारात्। किन्तु प्रायश्चित्तवत्तस्य विघ्नध्वंसः फलम्। यद्यपि निर्विघ्नं परिसमाप्यतामिति कामनया तदाचरणं, तथापि "सविशेषणे हीति" न्यायेनाऽहं स्वर्गी स्यामित्यत्र स्वर्ग इव विघ्नाभावः फलं, न समाप्तिरन्यतादोषात्। समाप्तिस्तु दुरितध्वंसाभावात्, (२) प्रतिबन्धकाभावस्य तथैव हेतुत्वावधारणात्। तथा च यत्र मङ्गले सत्यपि न समाप्तिः तत्र तत्फलं प्रत्येकं विघ्नध्वंसो भवत्येव, साङ्गाद्वैदिककर्मणः फलावश्यम्भावात्। न चानध्यवसायः यावद्विघ्नमङ्गं तदाचारात्। यत्र च मङ्गलं विनाऽपि समाप्तिस्तत्र जन्मान्तरादनुवर्तमानदुरितात्यन्ताभाव एव हेतुः। स एव सुकृतसम्पत्त्योपलक्षित इहेति सङ्क्षेपः।

परमेतीति। वार्त्तिककारस्य शिष्टत्वे सति ग्रन्थकर्तृत्वेन कृतनमस्कारत्वं सामान्यतोऽनुमाय एतद्वार्त्तिकं वार्त्तिककारीयदेवतानमस्कारपूर्वकारब्धं तद्ग्रन्थत्वादिति व्यतिरेकीति भावः।

---

(१) किमिह लुप्तेन इति २ पु० पा०।

(२) दुरितसंसर्गाभावात् पा० २ पु०।

खल्विति। न खल्विष्टदेवतानमस्कारवत्तन्निबन्धनमपि क्वचिदुपयुज्यत इत्यर्थः। नन्वेवम्भूतं शिष्टाचारं शिष्या अपि ग्राहयितव्याः, न च तन्निवेशनव्यतिरेकेण ते ग्राहिताः स्युरित्यत आह। मङ्गलान्तरवदिति॥

इति प्रथमश्लोकव्याख्याव्याख्यानम्।

---

तत्रेति। शास्त्रे व्याख्यातव्ये। ननु दण्डक-सूत्रस्यानुवादो नास्तीत्यत उक्तं सङ्क्षेपत इति॥

---

इन्द्रलुप्तनामा जातकेशविलोपको रोगभेदः। ननु निवेशनमपि शिष्टैराचर्यमाणत्वात् सफलमेवेत्यत आह। न खल्विति। शिष्यशिक्षार्थं कैश्चिदेव तन्निबध्यत इत्यर्थः। अशङ्कितोत्तरत्व-माशङ्क्याह। नन्विति। टीकायां मङ्गल्यान्तरं दधिदूर्वादि।

इति प्रथमश्लोकव्याख्याव्याख्याव्याख्यानम्।

---

तत्रेत्याधारसप्तम्यामन्यविषयताभ्रमं वारयति। शास्त्र इति। ननु दिङ्नागादिकृतदूषणोद्धारं प्रतिज्ञाय सूत्रतात्पर्याभिधानम-प्रस्तुतमित्यत आह। व्याख्यातव्य इति। शास्त्रमेव तथा व्याख्येयं यथा तन्निरासोऽपि भवतीत्यर्थः। ननु सूत्रैकदेशाभिधानं सङ्क्षेपः, स चेत्र सूत्रानुवादस्तस्मिंस्तु सति न सङ्क्षेप इत्यत आह। ननु, दण्डकेति। दण्ड इव दण्डकं दीर्घं तावत्पदानभिधाने-

नन्वादिसूत्त्वमस्य सुप्रसिद्धमेवाभिसम्बन्धवाक्यत्वात् तत्किमनेनोदीरितेनेत्यत आह । आदिग्रहणेनेति ॥

ननु शास्त्रनिःश्रेयसयोरनेन सम्बन्धवाक्यमिति युक्तमभिस्तु किमर्थमित्यत आह । अभिमत इति । अस्ति हि शास्त्रनिःश्रेयसयोर्वाच्यवाचकभावोऽपि सम्बन्धः, न चासाविहाभिमतः प्रेक्षावत्प्रवृत्त्यनङ्गत्वात् । नहि वाचकाद्वाच्यप्रतीतेर्वाच्यस्य निष्पत्तिर्यतो मुमुक्षुर्वाचके प्रवर्तताम्, उपाये तूपेयार्थी प्रवर्तते तेन हेतुहेतुमद्भाव एव विवक्षितः ॥

ऽप्यादिपदेनैव तदभिधानादर्थानुवादाद्वा सङ्कुपानुवादौ न विरुद्धावित्यर्थः ॥

ननु प्रथमसूत्रत्वज्ञापकमेवादिपदं किन्न स्यादित्यत आह । नन्विति ॥

अभिपदस्याभिमतार्थत्वव्याख्याननिराकार्यां शङ्कामाह । ननु शास्त्रेति । अभिमतेत्यस्य व्यावर्त्यमनभिमतं सम्बन्धमाह । अस्ति हीति । ननु वाच्यवाचकभावो यदि पदतदर्थयोरिव, स नास्त्येव शास्त्रनिःश्रेयसयोः, शास्त्रस्य वाक्यरूपत्वेनाऽवाचकत्वात्, प्रतिपाद्यप्रतिपादकभावस्तु अभिमत एवेति न व्यवच्छेदः । मैवम् । शास्त्रैकदेशनिःश्रेयसपदवाच्यत्वरूपस्यैव सम्बन्धस्य शास्त्रनिःश्रेय-

ननु नात्र शास्त्रं तस्य निःश्रेयसहेतुत्वं वा श्रूयते इत्यत आह। प्रमाणादीति। रूढपदातिक्रमे किं तात्पर्यमित्यत आह। न हीति। यद्यपि शिष्यते अनुशिष्यते प्रमाणादिकमनेनेति शास्त्रमिति व्युत्पत्त्याऽत्रापि कारणता गम्यते, तथापि शासकसम्बन्धव्यापारवत्तया न तु शिष्यसम्बन्धव्यापारवत्तया, सा चेह विवक्षिता, अन्यथा प्रमाणादीनि तत्त्वतो ज्ञात्वा

---

सयोः वाच्यवाचकभावत्वेन विवक्षितत्वात्। निःश्रेयसहेतुत्वरहित-प्रतिपाद्यप्रतिपादकभावो ऽत्र व्यवच्छेद्य इति वा तात्पर्यात्॥

ननु करणत्वेऽपि भावार्थस्य धर्मेरुपजीव्यत्वेन लाघवाद्भाव-व्युत्पत्तिरेव तत्त्वज्ञानपदे कुतो नाश्रितेत्यत आह। नन्विति। अत्र भाष्यसूत्रे। ननु न हीत्याद्यप्रसक्तप्रतिषेधः- करणव्युत्पत्ति-लभ्य एवार्थः पदार्थतत्त्वज्ञानकारणतयेत्यनेनोच्यत इति पौनरुक्त्यं वेत्यत आह। रूढेति। रूढं पदं शास्त्रपदम्: न हीत्यादिटीका— तत्र यथा विषघ्नमन्त्रोऽज्ञातार्थः श्रवणमात्रादेव विषापहारी, न तथेदं शास्त्रमज्ञातार्थं फलाय, किन्त्वर्थज्ञानद्वारेत्यर्थः।

अत्रापीति। शास्त्रपदेपीत्यर्थः। तथापीति। शासेर्द्विकर्मक-तया शब्दकरणकाज्ञातार्थविषयकपरबोधोत्पादनं शासनमित्युपदेश एव शासकसम्बन्धो व्यापारः शास्त्रपदात् प्रतीयत इत्यर्थः। न त्विति। स्वरूपेण स्वीयेन रूपेणेत्यर्थः।

तावन्न मुच्येत यावन्नानुशिष्यादिति, तदिदमुक्तं पदार्थ-तत्त्वावगमकरणतयेति न तु स्वरूपेणेति च ।

ननु हेतुत्वकरणत्वे न विषयभेदेन भवितुमर्हत इत्यत आह । तेनेति । उभयोरपि हेतुः शास्त्रं करणं च, किन्तु पदार्थतत्त्वे ज्ञापकतया, निःश्रेयसे तद्व्यापारवतः करणतयेत्यर्थः । तदिदमुक्तं तथा चेति । एवं च सति शास्त्रस्य निःश्रेयसे कर्तव्ये पदार्थतत्त्वज्ञानस्य निरुक्तिबलेन व्यापारत्वे दर्शिते व्यापारव्यापारिणोः कार्यकारणभावः, तथा व्यापार-वता शास्त्रेण व्यापारविषयस्य प्रमाणादेः प्रतिपाद्य-प्रतिपादकभावः, तथा व्यापारविषयेण प्रमाणादिना

---

ननु करणव्युत्पत्त्यैव शास्त्रस्य तत्त्वावगमव्यापारत्वे दर्शिते तस्य पुनरभिधानं व्यर्थमित्यत आह । नन्विति । तत्त्वज्ञप्तिं प्रति करणत्वं, निःश्रेयसं प्रति हेतुत्वं शास्त्रस्येति विषयभेदात् न पञ्चम्या शास्त्रस्य निःश्रेयसे कर्तव्ये तत्त्वावगमव्यापारत्वं लभ्यत इत्यर्थः । यथाश्रुतस्यागमकत्वादाह । उभयोरिति । अत्र हेतुपञ्चमी हेतु-विशेषकरणपरा, करणं च सव्यापारमेवेति व्यापारस्यान्यस्योप-स्थापने गौरवात् करणव्युत्पत्तिलभ्यस्तत्त्वावगम एव तद्व्यापारः कल्प्यत इत्यर्थः । टीकोक्तसम्बन्धमुपलक्षणीकृत्याऽन्यानपि सम्बन्धा-नाह । एवं चेति । पदार्थतत्त्वज्ञानस्येत्यत्र ज्ञानपदं ज्ञप्तिपरम् ।

व्यापारस्य तत्त्वज्ञानस्य विषयविषयिभावः, तथा व्यापारेण तत्त्वज्ञानेन व्यापारफलस्य निःश्रेयसस्य कार्यकारणभावः, तथा व्यापारविषयफलयोर्हेतुहेतुमद्भावः सम्बन्धः सूचितः नान्तरीयकत्वात्। न ह्यतद्धेतुकस्तद्व्यापारो नाम, नाप्यतत्कर्म तद्व्यापारविषयो, नापि तत्फलाननुगुणस्तद्व्यापारस्तद्व्यापारविषयो वेति पञ्चसु वक्तव्येषु उपलक्षणार्थं द्वयमाह। शास्त्रप्रमाणादीति। एवमेव व्युत्पत्तिलभ्यं व्यापार-

---

व्यापारविषयफलयोरिति। यद्यपि व्यापारविषयफलयोः कार्यकारणभावे न मानं न वा तदभिधानं शास्त्रे प्रवृत्तिप्रयोजकं तथापि व्यापारमात्रस्याहेतुत्वाद्विषयविशेषसहित एव व्यापारो हेतुरिति विशिष्टहेतुत्वे विशेषणस्यापि विषयस्य प्रमाणादेर्हेतुत्वमुक्तम्, अत एव व्यापारफलयोरपि हेतुहेतुमद्भावो न व्यापारविषयाविषयकज्ञानेन गृह्यत इति तत्सम्बन्धोऽपि शास्त्रे प्रयोजक इति भावः। न ह्यतदिति। तज्जन्यस्तज्जन्यफलको व्यापारः तदजन्यत्वे तु व्यापार एव न भवतीत्यर्थः। नाप्येतत्कर्मत्यत्र तद्व्यापाराविषयस्तत्कर्मेत्यपि हेतुर्द्रष्टव्यः। पञ्चस्वित्युपलक्षणं तत्त्वज्ञानवतां निःश्रेयसमित्यपि सम्बन्धः प्रवृत्तिहेतुर्द्रष्टव्यः॥

ननु चात्र तत्त्वज्ञानपदे करणव्युत्पत्तिव्याख्यानं "तत्त्वस्य ज्ञानमिति कर्मणि षष्ठी"त्यागामिभाष्यविरुद्धमित्यत आह। एवमेवेति।

मभिप्रेत्य तत्त्वस्य ज्ञानमिति षष्ठी भाष्यकारेण दर्शितेति न कारणव्युत्पत्तिर्विरुद्धा ।

ननु शिष्याचार्यशास्त्रतद्व्याख्यानानामपि सम्बन्धाः कैश्चित्तान्त्रिकैः प्रदर्शिताः ते कस्मान्न प्रदर्श्यन्त इत्यत आह । तदिदमभिधेयेति । । [ ३ । २० ] *न ह्यस्तीत्येताव-न्मात्रेणैव प्रदर्शनीयम् । किं नाम ? यावत्प्रतिपादिते प्रेक्षावत्प्रवृत्तिर्न स्यात् तावत्प्रदर्श्यते । न च शिष्या-चार्यादिसम्बन्धास्तत्प्रवृत्त्यङ्गं, तेषां प्रवृत्तिफलत्वात् ।

---

तदिदमित्यादेर्व्याख्येयं सम्बन्धमाह । नन्विति । तस्मादिति । प्रयोजनं निःश्रेयसमभिधेयं प्रमाणादि, तयोः प्रयोजनाभिधेययोः सम्बन्धः कार्यकारणभावनिर्वाहक इत्यर्थः ।

ननु शास्त्रनिःश्रेयसयोर्न कार्यकारणभावः, तथाहि मनन-रूपानुमिताविव न शास्त्रस्य शब्दरूपस्य प्रमाणोत्थापनादिव्यव-हितव्यापारस्य कारणत्वं, नतरां च निदिध्यासनादिप्रणालिकयोत्प-द्यमाने ऽपवर्गे, अन्वयव्यतिरेकयोश्च कारणान्तरसम्पादने ऽन्यथा-सिद्धत्वात्, शास्त्रकारणत्कारणपरम्परावत् यागस्य स्वर्गसाधनत्वे शाब्दे ऽस्त्ववान्तरव्यापारो ऽपूर्वमन्यथा कारणकरणव्यापारव्यापा-रिव्यवस्थानुपपत्तेः, निरूढकारणिकागमानुमितौ व्यभिचाराच्च न शास्त्रं कारणं, अन्यथाऽनुमितेः शास्त्रजन्यत्वे शाब्दानुमित्यो-

*प्रतीकस्य समीपे वर्तमाना अङ्का मूलटीकासंवादाय विजयनगरसंस्कृत श्रीरीजच्छ्रितताप्तर्यटीकायाः पृष्ठाङ्काः पङ्क्त्यङ्काश्च ज्ञेयाः ।

न च शास्त्रादीनां स्वरूपप्रतिपादनमप्युपयुज्यते, प्रमाणान्तरसिद्धत्वात्। तस्मात् प्रयोजनमभिधेयं तयोः

---

जातिसङ्करापत्तिः। अथ शब्दजन्यत्वमात्रेण न शाब्दत्वं मनःकरणकतामात्रेण साक्षात्त्वमिव, किं नाम? ज्ञाप्यान्वयप्रतियोगिगोचराकाङ्क्षादिसहायशब्दजन्यत्वेन, तच्चानुमितौ बाधितमेवेति चेत्। न। शब्दतुल्यान्वयव्यतिरेकवत्तया शाब्दज्ञानकारणान्तरस्यापि शब्दवेदष्टव्यत्वात्, अन्यथा शब्दस्यापि न स्याद्विशेषात् तथा च शाब्दसामग्रीजन्यत्वेन जातिसङ्करो दुर्वारः। प्रागभावभेदेन तद्घटितसामग्रीभेदात् न सङ्कर इति चेत्। न। तदितराशेषकारणतौल्ये तदभावस्याप्यापाद्यत्वात् तस्य तदेकोपेयत्वात्।

यत्तु समाहितं प्रमाणादिपदार्थतत्त्वज्ञानान्निःश्रेयसाधिगम इति महर्षिवाक्यादेव विनिश्चितासभावैः स्वर्गादिकं प्रति यागादेरिव, निःश्रेयसे तदनुकूलायामनुमितौ च शास्त्रहेतुता ज्ञायते, लिङ्गपरामर्शाद्यजन्यत्वादेः शाब्दत्वप्रयोजकत्वान्न जातिसङ्करः कार्यवैजात्यकल्पनाच्च न व्यभिचार इति।

तन्न। परस्पराश्रयत्वात्। शास्त्रस्य निःश्रेयहेतुत्वे सिद्धे करणव्युत्पत्त्या तत्त्वज्ञानपदं शास्त्रपरं सिध्येत्, सिद्धे च शास्त्रपरत्वे शास्त्रस्य निःश्रेयसहेतुत्वसिद्धेः, लाघवात् शब्दघटितसामग्रीजन्यत्वस्य शाब्दत्वे प्रयोजकत्वात् कारणताग्राहकमानाभावाच्च न कार्यवैजात्यमपीति।

**सम्बन्धो ऽभिधेयस्तद्द्वारा शास्त्रस्य प्रयोजनेन सम्बन्ध इत्येतदर्थत्वमेव प्रथमसूत्रस्य न्याय्यमित्यर्थः ।**

---

अत्रोच्यते । शास्त्रात् तत्प्रतिपाद्यज्ञानं, ततो लिङ्गकण्ठोक्तिद्वारन्यायविषयकं वाक्यार्थज्ञानं, ततो लिङ्गपरामर्शः, ततोऽनुमितिर्मननरूपा, ततो निदिध्यासनादिक्रमेणात्मसाक्षात्कारादपवर्ग, इति यदपवर्गकारणकारणत्वं शास्त्रस्य तत्रैव हेतुपञ्चम्यास्तात्पर्यं, प्रवृत्तेस्तावतैवोपपत्तेः । न हि फलसाधनताज्ञानमेव प्रवर्त्तकं, साधनसाधनगोचरप्रवृत्तिविलयापत्त्या ऽनुभवापलापात् । तथा च फलतद्व्याप्येतरसमवधानेऽपि फलान्वयव्यतिरेकाभ्यामनुविहितान्वयव्यतिरेकशालित्वज्ञानमेव साधनसाधनयोरनुगतं यत् फलार्थिप्रवृत्तिकारणं तदेव शास्त्रस्य हेतुपञ्चम्याऽभिधीयते, न तु साधनत्वं, सामान्यपरतायां बाधके सत्येव विशेषपरत्वौचित्यात्, आकरे(१) ऽप्ययमेवार्थः कार्यकारणपदेन विवक्षितः ।

एतेन निःश्रेयसानुकूलो ऽधिगमो निःश्रेयसाधिगम इति मध्यमपदलोपी समासो ऽन्यथाधिगमपदवैयर्थ्यमिति मतमपास्तम् । उक्तरीत्यैवोपपत्तावध्याहारे मानाभावात् । तत्रापि प्रयोजनपरम्परासम्बन्धस्याश्रयणीयत्वाच्च । अन्यथाऽनुकूलत्वानिर्वचनात् । न चाधिगमपदवैयर्थ्यं, निःश्रेयसप्राप्त्यर्थोपायान्तरवारणपरत्वात् । अत एव तत्त्वज्ञानां-तत्त्वज्ञानिशालिनां निःश्रेयसाधिगम इति व्याख्यानमपहस्तितम् । फलस्य तत्त्वज्ञानसाध्यतालाभे ऽपि करणव्युत्पत्त्यनादरे शास्त्रफलसम्बन्धाबोधकत्वप्रसङ्गादिति ॥

---

(१) तात्पर्यटीकायाम् ।

ननु यन्मिथ्याज्ञानं संसारं प्रतनोति तस्यैव तत्त्वज्ञानं निःश्रेयसहेतुः, आत्मा च तथा, तदन्येषां शास्त्राऽभिधेयानामपि न निःश्रेयसहेतुत्वं, तथा च न फलसम्बन्ध इत्यत आह (१)। यत्पदार्थेति। [२।२१]

ननु प्रमाणादिपदार्थतत्त्वज्ञानस्य यदि निःश्रेयसहेतुता शास्त्रप्रवृत्तेः पूर्वमेव प्रमाणसिद्धा, निष्प्रयोजनं शास्त्रे प्रयोजनाभिधानं, मानान्तरसिद्धे उपदेशानपेक्षणात्। अतेत एव निश्चयो, दुरुत्तरमितरेतराश्रयत्वं, प्रवृत्तो हि प्रयोजनं निश्चिनुयात्। निश्चितप्रयोजनश्च प्रवर्त्तेत। न च प्रवृत्तेः प्रागेव मुनिवचनान्निश्चिनोति, प्रथमसूत्र एव प्रयोजनानिश्चयेन प्रवृत्त्यनुपपत्तेः। तत्राऽपि च प्रवृत्त्यर्थं प्रयोजनान्तराभिधाने ऽनवस्था। तदनिश्चयेऽप्याद्या प्रवृत्तिश्चेत् उत्तरोत्तरप्रवृत्तावपि तथात्वप्रसङ्गात्। तस्मात् प्रयोजनाभिधानमनुपपन्नमिति केचित्।

ननूपयोगमात्रेणैवाभिधाने समर्थिते किं यत्पदार्थेत्यादिनेत्यत आह। नन्विति।

प्रथमसूत्र एवेति। न च द्वितीयसूत्राद्येव शास्त्रं, प्रथमसूत्रस्यापि पदार्थोद्देशकतया त्रिविधशास्त्रप्रवृत्त्यन्तर्गतत्वात्। न च योगविभागे सत्युद्देशपरभागस्य शास्त्रान्तर्भाव इति वाच्यम्।

(१) इतीत्यत आह इति २ पु० पा०।

तदनुपपन्नम्। त्रिविधा हि पुंसां चित्तवृत्तयः। अनुभव इच्छा प्रयत्नश्चेति। तत्रानुभवो नेच्छामनुविधत्ते। अनिष्टस्याप्युपलब्धेः। इच्छा तु पुरुषार्थे स्वरसोत्थिता, तत्साधने तथा, ऽनुमानोत्थाप्या च। प्रयत्नस्तु साधनविषय एव। तत्र साधनगोचरा इच्छा, प्रयत्नो वा आद्या प्रवृत्तिरित्युच्यते। न त्वनुभवः फलगोचरा वेच्छा प्रवृत्तिर्येन तयोरपि प्रयोजननिश्चयापेक्षा स्यात्। न ह्युपेक्षणीयं निष्प्रयोजनमिति नानुभूयते। नापि सुखं प्रयोजनान्तरशून्यमिति नेष्यते। नापि मुमुक्षुणा ऽनपेक्षितस्वर्गं यागादिकं तत्साधनतया नानुभूयते। पुरुषार्थसाधने त्विच्छालक्षणा प्रयत्नलक्षणा वा प्रवृत्तिर्न स्वरससिद्धा। नहि कश्चित् क्षुधी दुःखप्रहाणं तृप्तिसौहित्यसुखं वाऽननुसन्धायान्नमत्तुमिच्छति यतते वा। तस्मात्तत्र यः प्रवर्त्तयितव्यः स तस्याश्चमर्थं दर्श-

अभ्यपरादप्युद्देश लब्धे योगविभागे मानाभावात्। न च शास्त्रे प्रवृत्तिरेव न किं तु तदेकदेश एवेति युक्तम्। शास्त्रस्य प्रेक्षावदनुपादेयतापत्तेः। एकदेशस्यैव प्रवृत्तिगोचरत्वेन शास्त्रगोचरोपादानाभावादिति भावः। न ह्युपेक्षणीयमिति। यद्यपि क्वचिदनुभवार्थमपि प्रयत्नप्रयोजनापेक्षा भवत्येव तथापि न सर्वत्र तथेति भावः। नन्वत्तरत्राप्यनुभवस्य शास्त्रफलत्वेन प्रयोजनान

यित्वा, यतश्च यो निवर्त्तयितव्यः स तत्साध्यमनर्थं दर्शयित्वेति उक्तं प्रयोजनं श्रोता कथं श्रद्धास्यति अश्रद्दधानो वा कथं प्रवर्त्स्यतीत्यवशिष्यते तत्राह । विनिश्चितेति । [२ । २२ ]

यद्यपि मुनेराप्तत्वावधारणे प्रयोजनानभिधाने ऽपि प्रयोजनसामान्यनिश्चयो भवत्येव प्रयोजनवदिदं शास्त्रमाप्तोक्तत्वादिति, तथापि नासौ प्रवृत्त्यङ्गं, न

पेक्षापत्तिः, तस्मात् द्वितीयसूत्रोक्तप्रयोजनपरीक्षाऽऽश्रयणेन प्रयोजनाभिधानमिति केचित् । अत्राहुः । द्विविधं ज्ञानमेकं प्रयत्नसाध्यमन्यच्च प्रयत्नानधीनं, तत्र प्रथमसूत्रार्थानुभवे न यत्नापेक्षा, तं विनापि विदितपदपदार्थसङ्गतेः श्रुतादिसूत्रस्य तदर्थज्ञानोदयात् । शास्त्रार्थाकलनं तु प्रयत्नाधीनं, पूर्वापरपरामर्शतत्तद्विरोधावगमश्च(१) सुतरां प्रयत्नापेक्षा । न चाऽऽद्यसूत्रार्थावधारणे ऽपि विरोधाशङ्का नियता, येन तन्निराकरणाय यत्नो ऽपेक्ष्येत । सम्भावनामात्रस्य चाऽप्रयोजकत्वात् । यत्त्वन्वीक्षार्थावधारणमपि लोकोत्तरमतेः कस्यापि प्रयत्नानपेक्षं सम्भाव्यत इति ।, तन्न । कस्यचित् प्रयत्नानपेक्षायामपि सर्वस्यातथात्वेन तदर्थमेव प्रयोजनाभिधानादिति ॥

तथापीति । युक्तं चादः । बलवदनिष्टाननुबन्धीष्टसाधनताज्ञानस्य प्रवर्त्तकत्वात् अनिष्टापेक्षया चेष्टस्य बलवत्त्वप्रतिसन्धानं

(१) यगमे च इति पाठो युक्तः प्रतिभाति ।

हि प्रयोजनवदित्येव प्रवर्त्तते । किं तर्हि ? अस्मदपेक्षितप्रयोजनवदिदमिति कृत्वा, स च प्रयोजनविशेषो वचनादेवावसीयत इति सार्थकमेतदभिधानं तदिदमुक्तं प्रयोजनादि विनिश्चित्य । विशेषत इति शेषः । निश्चयश्च शास्त्रोपायकमेवेदं निःश्रेयसमित्याकारो, न त्ववश्यम्भाविप्रयोजनाकारः कृष्यादाववग्रहादिवदत्राप्यन्तरायसम्भवात् । तदिदं प्रयोजनस्य प्रवर्त्तकत्वमुद्देश्यतया न प्रवृत्तिविषयतया तेन नेष्टाभ्युपायताविधिविरोधः ॥

---

चेष्टतावच्छेदकरूपेणोपस्थितौ सत्यां भवतीति प्रयोजनविशेषज्ञानस्यैव प्रवर्त्तकत्वमिति भावः । यद्यपि विशब्दस्य विशेषार्थत्वादेव विशेषत इति लभ्यते तथापि शास्त्रोपायकमेव निःश्रेयसमित्युपायविशेषनिश्चयार्थमपि तदुपपत्तौ प्रयोजने यो विशेषो निःश्रेयसत्वं तत्प्राप्तये शेषमाह । विशेषत इतीति । अत एव विशब्दशेषाभ्यां लभ्यमुभयविशेषमाह । विनिश्चयश्चेति(१) । नन्वाद्यं सूत्रं प्रवर्त्तकज्ञानजननद्वारा प्रवर्त्तकं वाच्यं, तच्चेष्टसाधनताज्ञानात्मकं न सूत्रेण जन्यते, किं तु शास्त्रसाध्यमिष्टमिति ज्ञानं, तच्च न प्रवर्त्तकमित्यत आह । तदिदमिति । प्रवर्त्तकत्वं-प्रवर्त्तकज्ञानविषयत्वमित्यर्थः ॥

---

(१) प्रकाशानुसारेण परिशुद्धावपि विनिश्चय इति युक्तम् ।

ननु मुनेराप्तत्वानिश्चये किं तद्वचने प्रवृत्तिर्नास्त्येव? तथा सति तस्याऽऽप्तत्वनिश्चयोऽपि कथमित्यत आह। आप्तत्वाविनिश्चये त्वर्थसंशयात्। [२।२३] शास्त्रसाध्यतयेति शेषः॥

ननु संशयात् कथं प्रेक्षावत्प्रवृत्तिरित्यत आह। न खल्विति। [२।२४] यद्यपि च सस्याधिगमस्य कृष्यादिसाध्यतया संशयो नास्ति, तथापि भविष्यत्तयाऽस्त्येव, तथापि तमुद्दिश्य प्रेक्षावन्तः प्रवर्त्तन्ते, यथाच तत्र

---

नन्वाप्तत्वानिश्चये प्रवृत्तिरेव न भवतीत्येव कुतोनोच्यत इत्यत आह। नन्विति। तथा सतीति। आप्तत्वानिश्चयादप्रवृत्तौ फलसंवादं विनाऽऽप्तत्वं क्वापि न निश्चीयेतेत्यर्थः। यद्यपि चैतत् शास्त्रफलं नैतद्देहोपभोग्यमिति न तत्र संवादो ग्रहीतुं शक्यते तथापि योगजधर्मोत्पत्त्या सर्वज्ञत्वे सति संवादो ग्रहीष्यत इति भावः। नन्वर्थसन्देहो न तावत्साधनतासंशयस्तस्याप्रवर्तकत्वात्, नापि फलावश्यम्भावसंशयः तस्याप्तत्वनिश्चये ऽप्यनुच्छेदादित्यत आह। शास्त्रसाध्यतयेतीति॥

ननु दृष्टान्तो विषमः तत्र साधनतानिश्चये फलसन्देहात् प्रकृते तु साधनतायामेव सन्देहादित्यत आह। नन्विति। संशयात् प्रवृत्तिरित्यत्रैव दृष्टान्तो न तु तद्विषयसन्देहे ऽपीत्यर्थः। साधनतासंशये ऽपि प्रवृत्तिमुपपादयति। तथाऽपीति। फलार्थि-

शतैकांशिकः फलभावः फलकोटिस्तूत्कटा तथत्वाऽपि, न हीन्द्रियापातजो ऽयं संशयः, किं नाम ? आप्तत्वाविनिश्चयहेतुकाप्रामाण्यशङ्कया समाहृतः, वस्तुतस्तु सूत्रात् प्रयोजनादिविनिश्चयाकारमेव विज्ञानमित्यर्थः ।

ननु संशयः प्रयोजनादिवाक्याऽभावे ऽपि(१) सुलभः विशेषस्मृतिस्त्वर्थित्वविशेषात् भविष्यतीत्याह । न चेति ।[२।२५] यद्वचने हि यः प्रवर्त्तते स तद्वचनादेव विशेषस्मृतिमपेक्षते न स्वातन्त्र्येण । न हि रोगार्त्तो ममेदं रोगनिवृत्तिसाधनं भवेन्नवेति यत्र तत्रोच्छृङ्खलः स्वयमुत्प्रेक्ष्यैव प्रवर्त्तते । किं नाम ? अनवधृताप्तत्वस्यापि

---

ताया उत्कटत्वात् फलसंशय इव साधनतासंशये ऽपि प्रवृत्तिः क्वचिदिति भावः ॥

ननु साधकबाधकाभावमात्रे सत्यपि कोटिस्मारकतया प्रयोजनवाक्यमर्थवत्स्यात् इत्यत आह । नन्विति । इदं शास्त्रं निःश्रेयससाधनं न वेति संशयः । यद्वचने हीति । यद्यपि सामान्यतमौषधमात्रोपदेशे ऽप्यात्मानं प्रत्युपदेशपर्यालोचनयैव रोगार्तस्य विशेषस्मृत्युत्पत्तौ संशयेन प्रवृत्तिदर्शनादन्यवचनादपि विशेषस्मृत्या सन्देहाच्च बहुशः प्रवृत्तिदर्शनान्नैतद्युक्तं, तथापि यो यद्वाक्यात् प्रवर्त्तते तस्य ततो विशेषस्मृतिः संशयविशेषस्यानुभवसिद्धस्य प्रवृत्ति-

(१) वाक्ये भावेऽपि इति २ पु० पा० ।

वैद्यस्यैव वचनात् । अन्यथा स्वयं प्रयोजनाभिधानमनवगच्छन् अनर्थमप्याशङ्केत, किं—निष्प्रयोजनमिदं ? काकदन्तपरीक्षाग्रन्थवत्, उताऽशक्यसाधनप्रयोजनवत्? मृत्युहरहिममहीधरोत्तरसानुसिद्धसञ्जीवनीकथनवत्, अथानभिमतप्रयोजन ? मार्यावर्त्तवासिनं प्रति दाक्षिणात्यस्य मातुलकन्यापरिणयनोपदेशवत्, अथाभिमतस्यापि शक्यस्यापि प्रयोजनस्य लघीयस्युपायान्तरे गुरुरयमुपायः ? पिपासुं प्रति गीर्वाणतरङ्गिणीतीरकूपखननोपदेशवत् । एतासु चानर्थसम्भावनासु न प्रवर्त्तते, न प्रयोजनाभिधाने ऽप्येतासामवकाशः लोकव्यवहारोच्छेदप्रसङ्गात् । न हि कश्चिद्वैद्यवचनादेवमाशङ्क्य निवर्त्तते यथा स्वयमुत्प्रेक्ष्येति भावः ।

( इति प्रथमसूत्रतात्पर्यव्याख्याव्याख्यानम् । )

---

विशेषहेतुत्वेनानुभवसिद्धत्वात् तत एव विशेषस्मृतिर्युक्ता । यद्वोपायान्तरसद्भावो नोपेये दूषणमित्येवं परो ऽयं ग्रन्थ इति भावः ॥

लोकव्यवहारेति । यद्यपि सर्वस्य सर्वदा सर्वत्रानर्थशङ्काविरहो नैवं, तथापि क्वचित्ता स्यादेवेति भावः ।

( इति प्रथमसूत्रतात्पर्यव्याख्याव्याख्याव्याख्यानम् । )

तदनर्थकं—निष्प्रयोजनमित्यर्थः । इह द्विविधः प्रमाणशब्दस्यार्थः प्रमीयतेऽनेनेति प्रमाणं, प्रमितिः प्रमाणं, तत्र प्रथममधिकृत्योक्तं प्रमेयादीनां तत्त्वज्ञानं प्रमाणतत्त्वज्ञानाधीनमिति ॥ [१।७]

नन्विन्द्रियादीनामज्ञायमानानामेव स्वविषयपरिच्छेदजनकत्वं पश्यन्नपि कथमेवं ब्रूयादित्यत आह । न हीति ।[१।७] प्रमाणत्वेनाज्ञायमानं प्रमाणं स्वविषयं परिच्छिनत्ति, न त्ववधारयति, तच्चेह विवक्षितमित्यर्थः । किमिति नावधारयति, न हीन्द्रियमज्ञाय-

---

अनर्थशब्दस्यानभिधेयवचनत्वमनुभवविरुद्धमित्यन्यमर्थमाह । निष्प्रयोजनमिति । यद्यप्यशक्यानुष्ठानोपायप्रतिपादकमपि वाक्यं विप्रलम्भादिप्रयोजनं भवत्येव, तथापि तदुपायसाध्यप्रयोजनशून्यं भवत्येवेति भावः । ननु प्रमितितत्त्वज्ञानाधीनं प्रमेयादितत्त्वज्ञानमित्ययुक्तं तत्त्वज्ञानस्यैव प्रमितित्वादित्यत आह । इहेति । सूत्रे प्रमाकरणस्यैव प्रमाणपदेनाभिधानादित्यर्थः ।

ननु न हीत्यादि पुनरुक्तं तदधीनमित्यनेनैव तदभावे कार्याभावस्य बोधितत्वादित्यत आह । नन्विति । तत्त्वेनेत्यत्र विशेषापेक्षायामाह । प्रमाणत्वेनेति । ज्ञानप्रमात्वसंशयजन्यमर्थसन्देहं निवर्त्यनिष्कम्पप्रवृत्त्यङ्गं न भवतीत्यर्थः ॥

मानमनिश्चयाकारमेव ज्ञानं जनयतीत्यत आह । ताव-न्मात्रस्येति ।[ २।८ ] यद्यपि निश्चयाकारमेव ज्ञानमाधत्ते, तथापि तथाभूतस्यैव भूयो भूयः प्रमेयविरहोपलब्धेः विशेषानुपलब्धेश्च सन्देहस्तदवस्कन्दतीत्यर्थः । तत् किं क्वचिदप्यवधारणं नास्त्येव ? तथा सति तोयमेवेद-मित्यादिर्लौकिकः प्रत्ययः तथा पूर्वपक्षिणः क्वचिदपि विनिश्चयो नास्त्येवेत्यादिकश्चाभिमानो विरुद्ध्येतेत्यत आह। अपि त्विति। [ २।६ ] यदि क्वचित् प्रमेयतत्त्वाव-धारणं परमार्थतस्तदा प्रमाणतत्त्वावधारणद्वारेणैव,

---

ननु प्रमाकरणत्वेनावधारितमपीन्द्रियादिकमाभाससाधारण-मेव कदाचित्तेनैव भ्रमजननात्, न तु तद्ज्ञानं तत्प्रत्यनाभास-मेव तज्ज्ञानस्यैकरूपत्वादित्यत आह । किमितीति । उक्त-दोषं निरस्यति । यद्यपीति । यद्यपि तज्ज्ञानमेकरूपमेवोत्पन्नं तथाप्यनाभासव्यावृत्तं तन्न गृह्यत इति यथार्थत्वसन्देहान्निष्कम्पा प्रवृत्तिः ततो न स्यादित्यर्थः । ननु प्रामाण्यस्य सर्वथैवाप्रसिद्धा तदवधारणाधीनं प्रमेयतत्त्वावधारणमित्येवावधारणं कुत इत्यत आह । तत् किमिति । यथाश्रुतस्यागमकत्वादाह । यदीति । व्याघातदण्डभिया सामान्यतः प्रामाण्यनिश्चये ऽपि तदुपायः परं चिन्त्यत इत्यर्थः ।

प्रकारान्तरेण तु भवन्न पारमार्थिकमित्यर्थः । बोधकत्वं-बोधजनकत्वं-बोधजननावच्छिन्नसत्तेति यावत् । अव्यभिचारित्त्व-मविपरीतानुभवजनकत्वम्-अविपरीतानुभवजननावच्छिन्नसत्तेति यावत् । एवञ्चोपाधिद्वयावच्छिन्नायाः सत्ताया उपाधिभेदाद्भिन्नाया इवैकस्मिन्नर्थे समवायः कृतकत्वानित्यत्वयोरिव न विरुद्धः । तेनाव्यभिचारित्वेन ज्ञायमानेनेति शेषः । प्रामाण्यावधारणं तर्हि क्वोपयुज्यत इत्यत आह । तदेव हीति ॥ [ १ । १० ]

---

प्रकारान्तरेणेति । प्रतिभादिनेत्यर्थः । ननु बोधजनकत्वमुपाधित्वान्न समवेतो धर्म इत्यत आह । बोधजननेति । न चैव प्रभावसमवाययोरबोधकत्वापत्तिस्तयोरसमवेतत्वादिति वाच्यम् । एकार्थसमवायेनाश्रयैक्यमात्रोपलक्षणात् बोधजनकत्वेन कारणत्वस्य विवक्षितत्वाद्वा । यत्र चाभावादि लिङ्गं तत्रापि तद्ज्ञानं कारणं तत्र च सत्तानैयत्यादिति भावः । ननु व्यभिचारिज्ञानाभावरूपमव्यभिचारित्वं न समवेतमित्यत आह । अविपरीतेति । तर्हि सत्ताया एकत्वेन सहार्थानुपपत्तिरित्यत आह । एवं चेति । तेनेति । बोधकत्वैकार्थसमवेतेनेत्यर्थः । तद्यदि सत्ताव्यवस्थितमेव प्रमेयावधारकं स्यात् तदा तन्निश्चायकचिन्ता विफलेत्यध्याहृत्य व्याचष्टे । ज्ञायमानेनेति । नन्वाक्षेपे प्रामाण्याभेदकथनमव्यभि-

प्रमाणं हि प्रमाकरणं न च प्रमाकरणत्वादयः सामान्यविशेषाः सन्ति, जातिसामान्यसङ्करप्रसङ्गात्। किं नाम? साधकतमत्वलक्षणमव्यभिचारित्वमेव करणत्वं, तद्विशेषकस्तु क्रियाविशेष एव, स चात्र प्रमालक्षणः, प्रमा चाविपरीतोपलब्धिः, ततोऽविपरीतानुभवजनकत्वलक्षणमव्यभिचारित्वमेव प्रामाण्यमित्यर्थः। यद्येवं तदवधारणपूर्वकमेव प्रमेयावधारणमस्त्वित्यत आह। तच्चेति॥ [१।१०]

प्रमाकरणत्वं हि नानवधारितायां प्रमायामवधारयितुं शक्यमित्यर्थः। तर्हि प्रमात्वमेवावधार्यतां न हि तदप्यौपाधिकं येनोपाध्यनवधारणे नैवावधार्येतेत्यत

---

चारित्वस्याप्रयोजकं किमर्थमुच्यत इत्यत आह। प्रामाण्येति। जातिसङ्करेति। ज्ञानत्वादिनेत्यर्थः। अविपरीतोपलब्धित्वं स्मृतावप्यस्तीत्यनुभवपरतया व्याचष्टे। तत इति। ननु प्रमाकरणत्वस्याशक्यावधारणत्वे साध्ये विज्ञानस्य प्रामाण्यं स्वतः परतो वा न शक्यनिश्चयमिति हेतुर्व्यधिकरण इत्यत आह। यद्यीति॥

शङ्कां निरस्यति। प्रमाकरणत्वमिति। तथा चोपधायकप्रमात्वस्यानिश्चयात्तदुपहितं प्रमाकरणत्वमप्यशक्यावधारणमिति न प्रकृतासङ्गतिरित्यर्थः। औपाधिकमिति। करणवत् क्रियाया न

आह । तथाहीति । [२।११] विज्ञानस्य-प्रमायाः । प्रामाण्यं-प्रमात्वम् । स्वतो वेत्यस्य--स्वात्मना वा--स्वग्राहकेण वेत्यर्थः । तत्र प्रथमं दूषयति । न खल्विति । (२।१२) धर्मधर्मिणोरभेदपक्षे ऽनात्मसंवेदनमित्येव दूषणम् । अनात्मसंवेदनता चोपपादयिष्यते इति हृदयम् । भेदपक्षे प्रागेवेति । यो हि यद्गृह्णाति स तद्धर्ममपि गृह्णीयादिति सम्भाव्येताऽपि, यस्तु धर्मिणमेव नाक-

---

सोपाधिकत्वमित्यर्थः । ज्ञानमप्रमापि न च तस्याः प्रामाण्यमित्यतो विशिनष्टि । प्रमाया इति । विशब्दो विशेषार्थः स च प्रमात्वमेवेत्यर्थः । उपक्रान्तत्वात् करणव्युत्पत्तिभ्रमं निवारयति । प्रमात्वमिति । नन्वग्रे "नापि ज्ञानान्तरमिति" न तावत् स्वतस्त्वनिरासः, परतस्त्वं तु "नापि परत" इत्यनेनैव दूष्यत इति द्वयं विकल्प्य त्रयं दूष्यत इत्ययुक्तमित्यत आह । स्वात्मना वेति । यद्यपि ज्ञानग्राहकसामग्रीग्राह्यत्वं स्वतस्त्वं प्रामाण्यस्यानुमेयत्वपक्षेऽपि, अनुमितेः पक्षविषयत्वनियमात्, तथापि ज्ञानाप्रामाण्याग्राहकयावत्ज्ञानग्राहकसामग्रीग्राह्यं प्रामाण्यं न वा, तज्ज्ञानविषयकज्ञानाजन्यज्ञानग्राह्यं न वेति वा संशयः । परतः पक्षे मनसा गृहीत एव ज्ञाने प्रामाण्यानुमानात्, स्वतस्त्वे च प्रामाण्यवत एव ज्ञानस्य ग्रहादिति भावः । ननु "नात्मसंवेदनमिति" विशेषणमनु-

लयति तस्य धर्मग्रहणवार्त्तापि क्व । यद्यपि शब्दगन्धादयो व्योमभूम्याद्यग्रहेऽपि गृह्यन्ते, तथापि न तद्धर्मतयेत्यर्थः । स्वग्राहकेण वेति दूषयति। नापीति। (२।१२) तद्धि मानसं वा लैङ्गिकं वा उभयमपि मनसो ज्ञाततालक्षणाल्लिङ्गाद्वा अविशिष्टाज्जायमानं कथमिव तदाभासविशिष्टं गृह्णीयात् । विषयविशेषात् तु तथात्वेऽप्रामाण्यस्यापि स्वत एव ग्रहणप्रसङ्गात् तत्रापि

---

पयुक्तमित्यत आह । धर्मधर्मिणोरिति । तथापीति । न हि धर्म्यज्ञाने तद्धर्मत्वेन ग्रहणसम्भवः विशेषणज्ञानं विना विशिष्टज्ञानानुदयात् । वस्तुतो ज्ञानग्रहे योग्यत्वाद्धर्मप्रामाण्यग्रहेऽपि ज्ञानं प्रमेति ज्ञानविशेष्या प्रमितिर्न स्यात्, स्याच्च ज्ञाने प्रमात्वमिति, ज्ञानान्तरोपनीतस्य विशेषणत्वेनैव भानादिति भावः । ननु चानुव्यवसायग्राह्यं प्रमात्वमिति कुतो न विकल्पितमिति न्यूनत्वं परिहरति । तद्धीति । अविशिष्टादिति मनसोपि विशेषणम् । कथमिवेति । आभासाद्विशिष्टत्वेन कथं गृह्णीयादित्यर्थः । ननु यत्र यदस्ति तत्र तज्ज्ञाने प्रमात्वं च तत्रास्त्येवेत्यत आह । विषयेति । अप्रामाण्यस्यापीति । न च प्रमात्वरूपो विषयविशेषस्तद्ग्रहे सहकारी न त्वप्रमात्वमपीति वाच्यम् । तथा सति प्रमायामप्रमात्वसंशयाभावापत्तेरिति भावः । ननु चाप्रमाया अपि धर्म्यंशे प्रमात्वेन व्यापकत्वं प्रायिकमिति तद्दोषपरिहारोक्त्या-

विषयवैशिष्ट्यस्य सत्त्वात् । प्रमायाः प्रायिकतया तद्वासनायाः समुत्कटत्वात् अप्रमा ऽपि प्रमेत्येव गृह्यते, ततो बाधकाधीनमेवाप्रामाण्यमासञ्जित-रजततायामिव शुक्तिकायां शुक्तिकात्वमिति यदि, तथा ऽप्यासञ्जकस्यापि यथासञ्जकत्वमधिगतं कथं न स्वतो ऽप्रामाण्यग्रहप्रसङ्गः । तत्रापि प्रामाण्यारोपे तु कथं नानवस्था । न च कृत्रिमं रूपमपरिभूय ग्रहणं ग्रहणमित्युच्यते संशयेनाभिभूतत्वात् मायालिङ्गिनि झटिति परिव्राजकबुद्धिवत् । तस्माज्ज्ञानं गृह्यत

---

दारोपे ऽपि प्रमात्वमारोप्यत इति मनसा ज्ञाततालिङ्गेन वा ज्ञानं परिच्छिद्यमानं प्रमात्वेनैव गृह्यते, बाधकात्तु तत्तिरस्कृत्या-प्रामाण्यं गृह्यत इति वैषम्यमिति शङ्कते । प्रमाया इति । आरोपकस्य यदारोपकत्वमप्रामाण्यं तेनैव तस्य ग्रहे स्वत एवाप्रामाण्यस्यापि ग्रहप्रसङ्गः तत्रापि प्रामाण्यारोपे ऽनवस्था स्यादिति परिहरति । तथापीति । ननु ज्ञानग्राहकेणैवा-ऽप्रामाण्यं गृह्यते, न च ज्ञानमवश्यं ज्ञेयं तत्कृतो ऽनवस्थेत्यत आह । न चेति । कृत्रिमं रूप-मप्रामाण्यं तदपरिभूया-ऽगृहीत्वा ग्रहण-मनुभवो ग्रहणं-प्रमेति नोच्यते अप्रमात्वसंशयेनाभिभूत-त्वादित्यर्थः । अयमभिसन्धिः प्रमात्वस्य ज्ञानग्राहकसामग्री-ग्राह्यत्वे ऽनभ्यासदशायामुत्पन्नज्ञाने तत्संशयो न स्यात् ज्ञानाग्रहे

एवेत्येव न, यदि तु दैवाद्गृह्यते तदा ज्ञानमित्येव, न तु प्रमाणमप्रमाणं वेत्यर्थः ।

ननु यदि स्वीयात् स्वत इति न निर्वहति वक्ष्यमाणन्यायेन, नापि परतः, अस्ति चायं प्रमाणाप्रमाणव्यवहारो निःशङ्कस्ततः स्वसंवेदननय एवास्तु तेन ह्ययं निर्वहेत् । नहि तत्र किञ्चिदनवस्थादिकं पश्याम इत्यत आह । एतेनेति । [१।१५]

स्वसंवेदननयो हि न तावत्प्रमाणसिद्धः, कदाचित् प्रमाणव्यवहारसौष्ठवात् स्वीक्रियेतापि, यद्ययं तेन निर्वहेत् । न त्वेतदस्ति । यथा हि प्रमाणं स्वात्मानं गृह्णत् प्रामाण्यं गृह्णाति तथा तदाऽऽभासमपि तदाऽऽभासत्वमपि गृह्णीयात् । तथा च सर्वमिथ्याज्ञानादप्रवृत्तिप्रसङ्गस्तदवस्थः । न च तत्रापि

धर्मिज्ञानाभावात्तस्य च संशयहेतुत्वात् । तद्ग्रहे च प्रमात्वस्यापि निश्चयापत्तेः । यद्यपि कोटिस्मरणादिना ज्ञानं विनष्टमेव तथाप्यनुव्यवसायोपनीते तद्धर्मिकः संशयः स्यादेव । तस्मादनभ्यासदशापन्नज्ञानप्रामाण्यं न स्वाश्रयग्राहकग्राह्यं स्वाश्रयग्राहके सत्यपि तदुत्तरतृतीयक्षणवर्त्तिसंशयविषयत्वादप्रामाण्यसंशयाजन्यसंशयविषयत्वाद्वा ऽप्रामाण्यवत् अर्थे निश्चिते ऽपि न निश्चयानन्तरतृतीयक्षणे ऽर्थसंशयो न वा प्रामाण्यसंशयं विनेति नार्थेन व्यभिचारः ॥

प्रामाण्यारोपात् प्रवृत्तिः, स्वात्मभूतस्याप्रामाण्यस्य स्वसंवेदनतया ग्रहणे समारोपासम्भवात्। अग्रहणे वा स्वसंवेदननयानुपपत्तेः। धर्मधर्मिणो-(१) र्भेदात् स्वरूपग्रहणेऽपि नाप्रामाण्यरूपधर्मग्रहणमिति यदि, तदा प्रामाण्यस्याप्यग्रहणं स्यात्। तस्मात् स्वसंवेदननयेऽपि स्वरूपमात्रवेदनं स्यात् नतु प्रामाण्यवेदनमित्यर्थः।

परतो वेति दूषयति। नापीति। [३।१६] तद्गोचरं तद्गोचरगोचरं, मध्यपदलोपात्। प्रात्यक्षिके च वह्निविज्ञाने प्रात्यक्षिकमेव वह्निविज्ञानमिति यावत्। तच्च द्विविधं समानेन्द्रियजमिन्द्रियान्तरजं च। एव

स्वोधादिति। स्वग्राहकादित्यर्थः। स्वत इति पक्षो यदि न सिद्धतीत्यर्थः। वक्ष्यमाणो-ऽनवस्थादिः। प्राभाकरमते ऽगृहीतभेदं ज्ञानद्वयमेवाप्रामाण्यमत आह। आत्मभूतस्येति॥

इदं धर्मधर्मिणोरभेदपक्षे। नापि ज्ञानान्तरमित्यनेन पौनरुक्त्यं निवारयति। परतो वेतीति। अनुव्यवसायोत्तरमनुमितिग्राह्यमिति यत्परतो वेति विकल्पितं तत् दूषयतीत्यर्थः। ननु तद्गोचरं ग्राह्यप्रामाण्यज्ञानगोचरमित्यर्थो नापि ज्ञानान्तरमित्यनेनैव दूषित इत्यत आह। तद्गोचरेति। तस्य प्रवर्तकज्ञानस्य यो गोचरो

(१) धर्मिधर्मधर्मिणोरिति पु० पा०।

मनुमाने ऽप्यनुमानज्ञानान्तरं तल्लिङ्गजं लिङ्गान्तरजं वा। एवं शाब्दे शाब्दज्ञानानन्तरं तदाप्तशब्दजमाप्तान्तरशब्दजं वेति समानजातीयसंवादो दर्शितः। अर्थक्रियेत्यादिना कार्यलिङ्गकं तद्गोचरेत्यादिना चाकार्यकारणलिङ्गकमनुमानत्रयं विजातीयसंवादरूपं दर्शितम्। उपलक्षणं चैतत्। आप्तोपदेशजमपि संवादज्ञानं भवत्येव। सो ऽयं प्रामाण्ये निश्चेतव्ये संवादो यद्यपि व्यधिकरणं, तथा ऽप्यर्थतथात्वमवधारयन् अर्थवत्त्वं प्रवर्त्तकस्यावधारयतीत्येतावता तथैवोपवर्णितः।

---

विषयस्तद्गोचरमित्यर्थः। अर्थक्रियानिर्भासमित्यादेरतिरिक्तार्थतामप्याह। प्रात्यक्षिक इति। एतावन्मात्रं धारावाहिकभ्रमे ऽप्यस्तीति प्रमात्वेन संवादो विशेष्यः। गोवृषन्यायेन नान्तरीयकपदमर्थक्रियातिरिक्तपरम्। अनुमानत्रयमिति। पूर्वं कार्य्यलिङ्गकमेकमकार्यलिङ्गकमकारणलिङ्गकं [illegible] द्वयमेवं त्रयमित्यर्थः। व्यधिकरण इति। सजातीयविजातीयज्ञानान्तररूपस्य संवादस्यार्थविषयत्वात् प्रामाण्यानुमितेश्च प्रवर्तकज्ञानविषयकत्वादित्यर्थः। तथापीति। अर्थतथात्वावच्छिन्नविषयकानुभवत्वमेव प्रमात्वमित्यर्थः। टीकायां आकुलं-सन्दिग्धप्रमाणभावं अनाकुलयेत्-प्रमाणतया निश्चाययेत्। अस्य प्रामाण्य-ग्राहकज्ञानस्य, तस्मिन्-प्रवर्त्तकज्ञाने ऽपि, तत् स्वतः प्रामाण्यं न स्यादित्यर्थः॥

दूषयति। तच्च सर्वमिति। [२।१७] एवं च प्रमात्वस्य *दुरधिगमत्वमापाद्य तदायत्तावधारणे प्रमाणत्वे योजयति।* यदा चेति ॥ [२।२०]

ननु यदा प्रामाण्यावधारणेनैव प्रवृत्तिस्तदा सैव सार्वलौकिकी स्वत इत्यादिविकल्पान् फल्गूकरिष्यति। अथ तदवधारणव्यतिरेकेणापि प्रवृत्तिरप्रत्यूहा, तदा मा ऽवधारि प्रामाण्यं, किं नश्छिन्नमित्यत आह। तदेवमिति। [२।११] वैदिकव्यवहारमधिकृत्य चेदं शास्त्रं प्रवृत्तं न लौकिकमित्यभिसन्धिः॥

ननु नित्ययोगे मतुबिति दुर्घटं प्रमाणार्थयोरेवानित्यत्वात् परस्परसमवायाभावाच्चेत्यत आह। नित्यता चेति ॥ [२।२६]

---

ननु सन्देहादपि प्रवृत्तिरित्युपक्रान्तविरुद्धं प्रामाण्यज्ञानाधीना प्रवृत्तिरित्युपक्रम्य तदुपायचिन्ताया उपक्रान्तत्वादित्यत आह। नन्विति। दोषं निरस्यति। वैदिकेति। लक्षणाबीजमनुपपत्तिमाह।

नन्विति। नित्ययोर्योगो नित्यो वा योगः, आद्य प्रमाणार्थयोरिति। कयोश्चिन्नित्यत्वे ऽपि न सर्वत्र तथेति भावः।

अन्त्ये परस्परेति। अत्रापि न सर्वत्र तथात्वमिति भावः। ननु चाविसंवादित्वं विसंवादाभावो भूतार्थपरिच्छेदकत्वं वा-

नन्वव्यभिचारो ऽपि व्याप्यव्यापकभावलक्षणः प्रमाणप्रमेययोर्नास्तीत्यत आह । इयमेव चेति । [३।२७] सो ऽयमविसंवादो विसंवादाभावोऽव्यभिचारलक्षणमव्यभिचारस्वरूपं तु लक्ष्यभूतं भूतार्थपरिच्छेदकत्वं लक्ष्यलक्षणयोरभिन्नाश्रयत्वात् सामानाधिकरण्यमिति मन्तव्यम् । यद्यपि देशावस्थाभेदे कालभेदो ऽर्थसिद्धस्तथापि तदभेदे ऽपि क्वचित् कालान्तरे विसंवादात् तदुपग्रहः । तदनेनेन्द्रियादीनां कालक्रमभाविनः सहकारिभेदाः स्फुटतरप्रतीतिहेतवः सर्व एव सङ्गृहीताः । यद्यपि च प्रकारविषयावेव विसंवादाविसंवादौ सम्भवव्यभिचारिणौ,(१) तथाप्यविसंवादस्य ध्रुवविषयत्वप्रतिपादनार्थं स्वरूपग्रहणं सर्वज्ञानस्य धर्मिण्यविसंवादादिति ॥

व्यभिचार इत्यनयोर्भेद इत्यत आह । सो ऽयमिति । सामानाधिकरण्यमात्रे तात्पर्यमत्र न त्वभेद इति भावः । अव्यापकत्वमपाकरोति । तदनेनेति । सहकारिभेदाः–विशेषदर्शनादयः । यद्यपीति । यद्यपि यथा धर्माणामभावेपि धर्मिस्वरूपस्य सत्त्वेन तत्र यथार्थता तथा धर्माणां सत्त्वेऽपि तन्निष्ठत्वेनासत्त्वात् सर्वज्ञानानां धर्म एव यथार्थत्वमिति न विशेषस्तथापि निर्विकल्पके प्रकाराभावे ऽपि धर्मिस्वरूपे प्रमात्वं दृष्टं धर्मिविरहे तु प्रकार-

(१) संप्लवव्यभिचारिणौ इति पु० पा० ।

प्रवृत्तिसामर्थ्यादिति व्यधिकरणो हेतुरतस्तदर्थमाह। समर्थेति। [४।१] यद्यपि समर्थप्रवृत्तित्वादित्युक्ते ऽसमञ्जसं तथापि समर्था प्रवृत्तिर्यस्येति सम्बन्धे षष्ठी स च प्रमाणप्रवृत्त्योर्जन्यजनकभाव एवेति स एव दर्शितः॥

ननु न तावत्प्रामाण्यसमर्थप्रवृत्तिजनकत्वयोरविनाभावः प्रत्यक्षेण शक्यग्रहः तयोरेवाप्रत्यक्षत्वात्। प्रामाण्यं हि समर्थप्रवृत्तिजनकत्वानुमेयं,तच्चान्वयव्यतिरेकानुमेयमिति। नाऽप्यनुमानेनान्वयग्रहः प्रामाण्यस्य

---

मात्रे क्वापि यथार्थत्वं न दृष्टं धर्मविषयकस्य ज्ञानस्याभावादिति भावः॥

अन्वयिनमुपेक्ष्य व्यतिरेक्युपन्यासबीजमनुपपत्तिमाह। नन्विति। यदि पुनरितीति।

ननु प्रामाण्यं क्वचित् प्रसिद्धं न वा? आद्ये तत्र हेतोर्वृत्तान्वयित्वमवृत्तावसाधारण्यम्। अन्त्ये व्यतिरेकानिरूपणे साध्यसन्देहसिषाधयिषाघटितपक्षत्वानुपपत्तिः। ज्ञानं प्रमेति साध्यविशेषणकानुमित्यनुपपत्तिश्च विशेषणज्ञानं विना तत्कार्यविशिष्टज्ञानानुदयात्। अथ यथार्थत्वस्य स्मरणे प्रसिद्धत्वा अनुभवत्वं यथार्थत्वसमानाधिकरणं ज्ञानसाधारणजातित्वात् स्मृतित्ववदिति तत्प्रसिद्धिः। तन्न। निष्कम्पप्रवृत्त्यङ्गस्य स्मृत्यनुभवसाधारणस्य

क्वचिदप्यसिद्धेः, सिद्धौ वा किमनुमानेन, अनुमानान्तरसिद्धत्वे ऽनवस्थैवेत्यत आह । यदि पुनरिति । [४।१]

यथार्थत्वस्यैवानुमेयत्वेन तदभावात् । अथ यथार्थानुभवत्वं साध्यं तदा हेतोः स्मृतावनैकान्तिकतापत्तेः । अथ व्याघातापत्त्या प्रमातद्विषयसिद्धौ तद्दृष्टान्तेन ज्ञेयत्वादिना वक्ष्यः प्रमाविषयत्वमनुमेयं तथा च सामान्यतस्तत्सिद्धेर्न साध्याप्रसिद्धिः विशेष्याज्ञानाबान्वयित्वाऽसाधारणत्वे । तदसत् । प्रथमं प्रामाण्यानुमित्यभावापत्तेः परकीयव्याघातस्य प्रामाण्यनिषेधरूपस्य तदानीमनुपस्थितेः । स्वयं च प्रामाण्यनिषेधस्य तद्धीपूर्वकत्वात् । प्रामाण्यज्ञानं विना तन्निषेधरूपपरव्याघातस्याप्यज्ञानानाच्च ।

अत्र साम्प्रदायिकाः प्राग्भवीयसंस्कारात् विशेष्यावृत्त्यप्रकारकत्वादिरूपं प्रामाण्यमात्रं स्मृतं वह्निज्ञानादौ साध्यमानं सर्वनाममहिम्ना पक्षधर्मताबलेन च वह्निज्ञानस्य, विशेष्यवृत्तिप्रकारकत्वादौ पर्यवस्यति । स्वतःप्रामाण्यग्रहनिषेधे प्रथमं प्रामाण्यानुमितेरन्यथाऽनुपपत्तेः ।

अस्मत्पितृचरणास्तु प्रथममप्रामाण्याभाव एव प्रामाण्यव्यतिरेकिणा साध्यं तत एव प्रवृत्त्युपपत्तेः । तदेव वा सिद्ध्यत्पक्षधर्मताबलेन तद्वति तत्प्रकारकज्ञानत्वादिकमादाय सिद्ध्यति । तथाहि अयं वह्नित्वेनानुभवो न विशेष्यावृत्तिप्रकारकः दाहसामर्थ्यविषयकप्रयत्नजनकत्वे सति वह्नित्वप्रकारकनिश्चयत्वात् न यदेवं न तदेवं यथा वक्त्रप्रमा । तथा च वक्त्रप्रमायां

अत्र चोपेक्षाज्ञानानां पक्षत्वेनानुपादानान्न भागा-

---

वह्नित्वाभाववद्विशेष्यकवह्निप्रकारकत्वसमर्थप्रवृत्तिजनकत्वाभावयो-र्व्याप्तिग्रहे साध्याभावव्यापकहेत्वभावाभावरूपाद्धेतोः साध्याभावा-भावरूपं साध्यं सिद्ध्यति। यद्व्यापकतया हेत्वभावो गृहीतस्तद-भावस्यैव हेतुतः सिद्धेः यत्र त्वभावव्यापकता हेत्वभावस्य ज्ञायते तत्र साध्यप्रमितिरनुमानाङ्गं तदभावे तदज्ञानात्, यत्र च भावव्याप-कता हेत्वभावस्य तत्र तेन विनापि व्यतिरेकव्याप्तिग्रहात्र तदङ्गं, प्रामाण्यविशिष्टानुमितिरपि न प्रथमं, ज्ञाने प्रामाण्यमित्यनु-मित्यनन्तरं तेनैव हेतुना तत्र प्रामाण्यविशिष्टानुमितिः। अभाव-विशेष्यकबुद्ध्यनन्तरमभाववद्भूतलमिति ज्ञानवत्। तदभाववति च तत्प्रकारकत्वव्यतिरेकः सिद्ध्यन् तद्वति तत्प्रकारकत्वमादाय सिध्य-तीति तत्त्वचिन्तामणावाहुः।

ननूपेक्षाज्ञानस्यापि प्रमात्वात्तत्र हेतोरवृत्तौ भागासिद्धिः। न च करणस्यात्र पक्षत्वं तत्र चक्षुरादौ हेतुरप्यस्तीति वाच्यम्। यदा ज्ञानं पक्षीक्रियते तदोक्तदोषापरीहारादित्यत आह। अत्र चेति। अत्र हि प्रमात्वेन पक्षता नास्ति तस्यैवानुमेयत्वेन प्रथम-मप्रतीतेः। नापि समर्थप्रवृत्तिजनकत्वेन, लिङ्गतावच्छेदकस्यैव पक्षत्वे व्याप्तिग्रहदशायामेव साध्यसामानाधिकरण्यबुद्धावनुमिति-वैफल्यापत्तेः। तस्मात्र तत्, प्रवृत्तिहेतुज्ञानत्वेनैव पक्षत्वेनोपेक्षा-ज्ञाने हेतोरवृत्तावपि न भागासिद्धिः तस्यापक्षत्वात्। न चान्यत्र सन्दिग्धानैकान्तिकत्वं, निश्चितव्याप्तिकहेतुमति साध्याभावसन्देह-

सिद्धिः। व्यतिरेकी च सर्वत्र सपक्षाभावमभ्युपेत्य प्रवर्तत इति नासाधारणानैकान्तिकता। न च वाच्यमेतस्यानुमानस्याऽर्थवत्त्वानवधारणे कथं प्रमाणानामर्थवत्त्वसिद्धिः, तदवधारणे वा कथं केवलव्यतिरेकित्वसिद्धिः। द्विविधं ह्यनुमानस्यार्थवत्त्वम्। अविनाभावलक्षणं प्रमाजननलक्षणं च। तत्र स्वविषयपरिच्छेदे कर्तव्ये ऽविनाभावावधारणमेवापेक्षते न प्रमाकरण-

---

स्यादोषत्वेन चतुर्थे वक्ष्यमाणत्वादित्यर्थः। तथाप्युपेक्षाज्ञानस्यापक्षत्वेन प्रमारूपे तत्र हेतोरवृत्तावसाधारण्यापत्तिरित्यत आह। व्यतिरेकी चेति। निश्चितसाध्यो हि सपक्षो, न चोपेक्षाज्ञानस्य साध्यवत्त्वे ऽपि प्रवर्त्तकज्ञानप्रमात्वानुमितिकाले तथात्वं निश्चितमिति सपक्षत्वाभावात् तत्र हेतोरवृत्तावपि नासाधारण्यमित्यर्थः। एतेन निर्विकल्पके ऽपि हेतोरवृत्तावसाधारण्यमपास्तम्। वस्तुतो ऽसाधारण्यस्य सत्प्रतिपक्षोत्थापकतया विशेषादर्शनदशायामेव दोषत्वेनानित्यदोषत्वान्न प्रकृते तदिति भावः। अत्र च ज्ञानत्वेन हेतुविशेषणे ऽन्यथा समर्थप्रवृत्तिजनकत्वमात्मादेरप्यस्ति न च तत्र प्रमात्वमिति विरुद्धो हेतुः स्यात्। निश्चयत्वेन हेतोर्विशेषणाच्च न संशयेनानैकान्तः समर्थप्रवृत्तिजनकांशे तस्यापि प्रमात्वाच्च। न च मणिज्ञानस्य प्रमात्वानुमितौ मणिप्रभायां मणिभ्रमेण प्रवृत्तस्य मणिप्राप्तौ सत्यां मणिगोचरप्रयत्नजनकत्वमनैकान्तिकं, प्रभाविषयज्ञानेन भिन्नविषयतया मणिगोचर-

स्यावधारणमित्यनवधृतप्रामाण्येनैवानेन प्रमाणानां प्रमाणतत्त्वलक्षणं प्रामाण्यं साध्यत इति सर्वं सुन्दरम्।

एतेनैतदपि निरस्तम् । यत्प्रामाण्यानवधारणे ऽप्रामाण्यावधारणमपि कथम् ? प्रामाण्यनिश्चयेन हि तन्निश्चीयते, तदनवधारणे तु व्यतिरेकनिश्चयो ऽपि (१) कथम् ? विपक्षस्य तथात्वानिश्चयादिति। स्वरूपतो धर्मतश्चानवधारितेनैव सता प्रमाणेन स्वविषयनिश्चयसिद्धेरिति ॥

---

प्रयत्नानुत्पादनात् मणिप्राप्तेश्च नान्तरीयकत्वात् । यद्यपि समर्थप्रवृत्तिजनकत्वमिच्छायामेव दुर्ग्रहं, ज्ञाने तु सुतरां, योग्यात्मविशेषगुणत्रयस्यैकदा ऽनङ्गीकारात्, तथाऽप्यनुभवस्मरणयोरिव मनसा कार्यकारणभावग्रह इति नासिद्धिः । न च प्रमात्वस्यैव कारणतावच्छेदकत्वात् तदग्रहे जनकत्वग्रहो ऽशक्यस्तृणारणिमणिन्यायेनानुगतरूपाग्रहे ऽपि कारणत्वस्य सुग्रहत्वात् । अनवधृतप्रामाण्येनैवेति । अनुमानाप्रामाण्यशङ्काविरहस्य दर्शयिष्यमाणत्वादिति भावः ॥

प्रामाण्यनिश्चयेन हीति । अप्रामाण्यग्राहकानुमानस्य प्रामाण्यनिश्चयेन तद्विषयस्याप्रामाण्यस्य निश्चयादित्यर्थः । व्यतिरेकनिश्चयः—व्यतिरेकस्याप्यवधारणम् । तथात्वं-विपक्षत्वमप्रामाण्यमिति यावत् । स्वरूपत-इन्द्रियत्वादिना । धर्मतः-विषयादिना ।

(१) व्यतिरेकाऽवधारणमिति क्वचित् पाठः।

ननु नास्त्येवासौ वादी यः प्रामाण्यनिश्चये ऽपि विप्रतिपद्यते, न हि प्रामाण्यं स्वीकृत्य तन्निश्चये विप्रतिपत्तिः स्वीकारस्य निश्चयफलत्वात्। न चास्वीकृत्य, प्रमाणशून्यविप्रतिपत्तेः सर्वत्र सुलभतया सर्ववादिविधिनिषेधव्यवहारविलोपप्रसङ्गात्। अनिश्चिते च प्रामाण्ये तदतद्रूपसन्देहो ऽपि क्वचित् दुर्लभः, विशेषस्मृतेरभावात् तत्पूर्वकत्वाच्च सर्वसंशयानाम्। नापि सर्वत्राप्रामाण्यासञ्जनं, प्रामाण्यग्रहणोपायनिराकरणस्याप्रामाण्ये ऽपि तुल्यत्वात्। विकल्पनिर्मितमविचारमनोहरं प्रामाण्यादिकमादायापि नास्य दुर्विचारस्यारम्भः (१), प्रामाण्यानभ्युपगमे विकल्पनिर्माणस्याप्यसिद्धेः तस्मादस्ति प्रामाण्यादिकं तन्निश्चयश्च तदुपायस्तु चिन्तामर्हति। एवं चान्वयो ऽस्त्येव तत्कथं केवलव्यतिरेक्यनुमानमित्याशङ्क्य 'सम्प्रतिपत्तिरुत्तरम्। अन्वयव्यतिरेकी वेति। (४।२) केवलव्यतिरेकवादस्त्वन्वयानभ्युपगमेन कृत इत्यभिसन्धिः। अनुमानस्येत्युप-

ननु केवलव्यतिरेक्यन्वयव्यतिरेकिणोरेकत्रासम्भवाद्विकल्पो ऽसङ्गत इत्यत आह। नन्विति। विकल्पेति। अर्थशून्यवासना-

(१) निर्वाह इति पु० पा०।

लक्षणम् । स्वत इति च तदितरस्यापि, स्वतः परतश्च प्रामाण्यसिद्धेः ॥

ननु समर्थप्रवृत्तिजनकत्वादित्येतावतैव साध्यसिद्धेः प्रमाणतो ऽर्थप्रतिपत्तावित्यसमर्थविशेषणं व्यधिकरणं चेत्यत आह । प्रवृत्तिजनकत्वं त्विति । [४।२]

प्रामाण्याद्यभिधानद्वारा हि शास्त्रस्य निःश्रेयसेन सङ्गतिः, न तु स्वरूपेण, ततो यथा प्रमाणादितत्त्वज्ञानं साध्यतया प्रयोजनं प्रतिज्ञायते तथा प्रमाणाद्यभिधेयतया ऽपि प्रतिज्ञेयं भवति । न च तदभिधेयताप्रतिज्ञानमत्र, तस्मादभिधेयत्वाप्रतिज्ञानान्न प्रमाणादयः शास्त्रेणाभिधीयन्त इति श्रोतृबुद्ध्यनुरोधेनाशङ्क्य सूत्रकारहृदयानुरोधेन वार्त्तिकमुत्तरयति । स्यादेतदिति । [४।७]

---

मात्रप्रभवविकल्पव्यवहर्तामित्यर्थः । स्वत इति परमताभिप्रायम् ॥

ननु प्रमाणादीनां शास्त्रेण ऽनभिधानशङ्का ऽनुभवबाधितेति शङ्काबीजमाह । प्रामाण्यादीति । यथा प्रमाणादितत्त्वज्ञानान्निःश्रेयसाधिगम इति लपितं न तथा प्रमाणादयो ऽत्राभिधेया इति भणितमिति न ते शास्त्रेणाभिधीयन्त इति प्रथमसूत्रश्रोतुः शिष्यस्याभिमानाच्छङ्क्यमित्यर्थः । श्रोता-प्रथमसूत्रश्रोता शिष्यः । सूत्रकारहृदयम्—प्रमाणाद्यभिधीयत एवेति रूपम् ।

शिष्याकाङ्क्षाक्रमेण हि शास्त्रं प्रवृत्तम्। अनपेक्षिताभिधानेऽनवधेयत्वप्रसङ्गात्। न च शिष्याकाङ्क्षा किं वक्ष्यति भवानिति, किन्तु निःश्रेयसं कुतोऽधिगम्यत इति, तत्रोत्तरं "प्रमाणादितत्त्वज्ञानान्निःश्रेयसाधिगम" इति। ततः कथमिति। तत्रापि द्वितीयसूत्रमिति। ततः के? कति? किंलक्षणाः प्रमाणादयः?, तत्रोद्देशविभागलक्षणानीति। ततः कथमिति। तत्र द्वितीयाध्यायादि। एतच्च सर्वमनुभवसिद्धं, नात्रापि वचनापेक्षा। उक्ताबोद्धारं प्रति तु व्याख्यातारो भवन्ति, यत एवमयमाहेति। तदनुभवसिद्धमपि प्रमाणाद्यभिधायकत्वं यः कुतश्चिद्व्यामोहान्न प्रतिपद्यते तं प्रति व्याख्याता शास्त्रस्य पुरुषश्रेयोऽभिधायकत्वादित्याहेत्यर्थः॥

ननु श्रेयोऽभिधानमात्रेणापि न प्रमाणाद्यभिधानं सिद्ध्यति, न हि प्रमाणादिपदार्था एव श्रेयः, अथ स्वयमेव विवरिष्यति "तत्पदार्थाः प्रमाणादय" इति,

शङ्कां निरस्यति। शिष्येति। व्याख्याता-वार्त्तिकारः॥

सांपायेवेत्यस्य निवर्त्यांशङ्कामाह। नन्विति। अथेति।

तथाच "शास्त्रं श्रेयो ऽभिधत्त" इत्यनेन किम् ? अथ श्रेयःशब्दस्य प्रमाणादय एवार्थस्तर्हि (१) "श्रेयः पुनः सुखमहितनिवृत्ति"रिति किमर्थमित्यत आह। यद्यपीति। [४८]

यद्यपि "शास्त्रं पुनः" "पुरुषः पुनः" "श्रेयः पुन"रिति प्रतिपदं गृहीत्वा विवरणं "प्रत्ययेणे"त्यन्तेन स्फुटावभासं, न च "पुरुषा रागादिमन्त" इत्यादावपि विवरणत्वशङ्का, प्रकृतेनासम्बन्धात्। न हि रागादिमन्तं प्रति शास्त्रं न ससाधनं श्रेयो ऽभिधत्ते, न च तं प्रति न तच्छ्रेयो येन वीतरागो विविच्य गृह्यतां, तथापि "तस्मात् तच्छास्त्रं पुरुषश्रेयो ऽभिधत्त" इति मध्यपतितोपसंहार एव विवरण-विच्छेदभ्रमो माभूदित्येतदर्थमवच्छिनत्ति। उपभोगात् प्रत्ययेणेत्यन्तेनेति। [४।१३]

---

तत्पदार्थास्तस्य शास्त्रस्य पदानामर्थाः प्रमाणादय इति विवरिष्यति स्वयमेव वार्त्तिककार इत्यर्थः ॥

तथाचेति। तेनैव शास्त्रस्य प्रमाणाद्यभिधायकत्वे दर्शिते किमनेनेत्यर्थः। तथापीति। न च "श्रेयः पुनः" "पुरुषः पुन"-रिति ग्रहणकवाक्यस्थपदद्वयविवरणस्यापि दर्शनादन्तरोपसंहार-

(१) एवार्थास्तर्हि इति पु० पा०।

ननु समूहो व्यूहविशिष्ट इत्यसङ्गतं पर्यायत्वादित्यत आह। व्यूह इति। [४।१६] ते खल्वमी समूहाः प्रणेतृपुरुषेच्छानुरोधिनः स्वार्थानुरोधिनो वेत्यत आह। एकस्मृतीति। [४।१७] यद्यप्येकार्थप्रतिपादनावच्छिन्ना वर्णाः पदमित्येतावदेव पदलक्षणं तथापि एतदेव

---

भ्रमा न सम्भवत्येवेति वाच्यम्। ग्रहणकवाक्यनैरपेक्ष्येणाग्रे श्रेयःपुरुषयोर्निर्धारणाभिधानमिति भ्रमसम्भवादिति भावः। प्रमाणादिवाचकपदग्रहणेनेत्यादिटीकायां पदशब्देन वर्णसमूहमात्रं, वाचकशब्देन तच्छक्तत्वमुक्तमित्यपौनरुक्त्यम्॥

प्रसिद्धार्थानादरे हेतुमाह। नन्विति। एकार्थेत्यादिव्यावर्त्तकमवच्छेदकमाह। ते खल्विति। एकार्थप्रतिपादनेच्छया वर्णानां प्रयोक्ता प्रणयनं वा एकार्थप्रतिपादकत्वं वा समूहेत्यर्थः। यद्यपीति।

यद्यप्येतद्वाक्येति प्राप्तम्। न च प्रतिपादकत्वं स्मारकत्वं वाक्यं तु न स्मारकमिति युक्तम्। वाक्यस्यापि स्वसादृश्यतः किञ्चिदर्थस्मारकत्वात्। सुप्तिङन्तत्वं च प्रत्येकसमुदायाभ्यामव्यापकं, नापि विभक्त्यन्तत्वं, सुप्तिङन्तमित्यादीनां पृथगेव विभक्तिसंज्ञाविधानादननुगमात्। न च पूर्ववर्णानुभवजसंस्काराभिव्यङ्ग्यान्त्यवर्णवृत्तिजातिः पदत्वं, देवदत्तीयत्वाद्यनुमापकवर्णवृत्तिजातिभिः सङ्करापत्तेः। तथापि सङ्केतवद्वर्णत्वं पदत्वं प्रकृतिप्रत्यययोः पृथगेव पदत्वमिष्टम्। शाब्दानुभवाजन्यशाब्दानुभवकारणपदार्थोपस्थितिजनकतावच्छेदकवद्वर्णत्वं पदत्वमित्यप्याहुः।

लक्षणं क्षणभङ्गुराणां कथमित्यत उक्तम्, एकस्मृति-समारूढा इति । समूहः पदमिति वार्त्तिके शेषः । पदसमूहः सूत्रमिति वार्त्तिकम् । तच्चानुपपन्नम् । वाक्यविशेषो हि सूत्रं, न च वाक्यसामान्यमपि पद-समूहमात्रं, गौरश्वः पुरुषो हस्तीत्यादेरपि वाक्य-त्वप्रसङ्गादित्यत आह । एवं स्वार्थेति । [४।१८]

समूहो वेदितव्यः—सूत्रत्वेनेति शेषः । सूत्र समूहः प्रकरणमिति वार्त्तिकम् । तत्र चावान्तर-समूहभेदे कारणाभावात् शास्त्रमेव सूत्रसमूहरूपं प्रकरणमिति प्राप्तमित्यत आह । एवं क्वचिदिति । [४।२०] तद्यथा प्रयोजनाभिधेयसम्बन्धप्रतिपादनमेक-मर्थमधिकृत्य प्रथमद्वितीयसूत्रयोः समूहः प्रकरणम् ।

---

टीकायां समूह इत्यत्रोद्देश्ये विधेयाकाङ्क्षायामाह । समूह इति । समूह इति टीकाया: पदमिति शेषो वार्त्तिके ऽस्तीत्यर्थः । एकाक्षरस्यापि पदस्य सत्त्वात् पदमिति वार्त्तिके समूहः शेषो-ऽनुपयुक्तस्त्याज्य इत्यर्थ इत्यन्ये ।

एवं "तत्र तत्र वेदितव्य" इत्यस्य लक्ष्यस्य सूत्रस्य प्राधान्यात्तु-जिज्ञासकृतिरित्यत आह । सूत्रत्वेनेति । न चात्रापि वार्त्तिके शेष इति वक्तुमर्हतीति वाच्यम् । वेदनं प्रकारविशेषाकाङ्क्षायां सूत्रत्वेनेति प्रकारवाचितृतीयान्तस्यैव शेषत्वेनोचितत्वात् । एताव-

एवं प्रमाणप्रकरणं, प्रमेयप्रकरणं, न्यायपूर्वाङ्गप्रकरणं, न्यायाश्रयप्रकरणं, न्यायस्वरूपप्रकरणं, न्यायोत्तराङ्ग-प्रकरणमित्याद्युक्तमूह्यम् ॥

प्रकरणसमूह आह्निकमितिवार्त्तिकम्। तदिदं प्रकरणानामवान्तरैकवाक्यतायामसत्यां न सिद्ध्यतीत्यत आह। प्रकरणानामिति। [४।२१] अस्ति ह्यमीषां प्रकरणानां सपरिकरन्यायलक्षकत्वमेकमिति तत्समूह आह्निकम्। उत्तरस्मिंश्चाह्निके न्यायन्यायाभासविवेकोपायलक्षणमेकं, तत्राऽपि कथाप्रकरणं, हेत्वाभास-प्रकरणं, छलप्रकरणं, पुरुषाशक्तिलिङ्गप्रकरण-मित्येवं प्रथमे लक्षणमध्यायार्थः। द्वितीये प्रमाण-परीक्षा। तृतीये कारणरूपप्रमेयषट्कपरीक्षा। चतुर्थे कार्यरूपप्रमेयषट्कपरीक्षा। पञ्चमे पुरुषाशक्तिलिङ्ग-विशेषप्रकरणमिति। एवं द्वितीयाध्यायाद्यावाह्निक-

---

मात्रं यद्यपि व्यापकं तथा ऽपि स्वल्पाक्षरत्वादिविशेषितं सूत्रमिति भावः। एवमिति। सूत्रजन्यप्रतीत्यजन्यसूत्रजन्यप्रतीतिजनक-सूत्रसमूहः प्रकरणम्। इत्थमेव चाह्निकाद्यपि वक्तव्यम्। प्रकरणा-ह्निकाध्यायार्थांश्च तत्र तत्र दर्शयिष्यामः।

प्रथम इति। छलपरीक्षाभिन्नजातिनिग्रहस्थान-विशेषलक्ष-

प्रकरणादिसङ्गतीस्तत्रैव दर्शयिष्यामः। तदिदमुक्तमेवं तत्र तत्र वेदितव्यमिति ॥ [४।२२]

ननु शास्त्रस्य ससाधनपुरुषश्रेयोऽभिधायकत्वं प्रतिज्ञाय शास्त्रस्वरूपप्रदर्शनं क्वोपयुज्यते ऽत आह। तदेवमिति। [४।२४] शास्त्रस्वरूपव्याख्यानपूर्वकतदर्थ-कथनं (१) सुगमं भवतीत्यभिप्रायः।

ननु प्रतीतिसिद्धं प्रमाणादीनां षोडशत्वं किमि-त्यनूद्यत इत्यतस्तन्निराकरणीयामाशङ्कामाह। नन्विति। [४।२५] सामान्यविशेषः-साधर्म्यविशेषः। यतोऽस्येति। पदसमूहस्य शास्त्रस्य। पदार्थाः पदानां समूहिता-नामर्थाः (२) प्रमाणादयः। तस्माच्छास्त्रं-वाक्यरूपं, पुरुषश्रेयो-वाक्यार्थमभिधत्ते ससाधनमिति शेषः।

---

णान्यप्रथमसूत्रोद्दिष्ट-यावत्पदार्थलक्षणमित्यर्थः। उद्देशविभागौ तु लक्षणतात्पर्यकावेवेति न तयोर्मुख्यार्थत्वमिति भावः।

शास्त्रस्वरूपप्रदर्शकत्वस्य स्फुटस्यापि कीर्त्तननिराकार्यां शङ्कामाह। नन्विति। शङ्कां निरस्यति। शास्त्रस्वरूपेति।

साधर्म्यविशेष इति। सर्वत्र जातेरभावादिति भावः।

शास्त्रस्य तावत्पदात्मकत्वादस्येति षष्ठ्यनुपपत्तेति समुदा-येकदेशविवक्षया तामुपपादयति। पदसमूहस्येति। ननु यद्यपि

---

(१) शास्त्रस्वरूपाख्यानेनेति पु० पा०।     (२) समूहितानामिति पु० पा०।

कथं* निःश्रेयसाय कल्पन्त इत्यापाततः, परमार्थतस्तु तेषां काल्पनिकत्वे निःश्रेयसमपि काल्पनिकं तत-स्तदर्थं प्रयासो विफलः तस्याऽयत्नसिद्धत्वादित्याशयः। कल्पनाकोषस्यानन्तत्वादनन्तात्मान (१) इत्यापाततः, परमार्थतो निरात्मान इत्याशयः। नोपमानविषया इति। [५।८] यद्यप्युपमानस्य संज्ञासंज्ञिसम्बन्ध-परिच्छेदफलस्य शब्दे प्रमाणेऽस्त्येवोपयोगः अगृहीत-समयस्य (२) शब्दस्याऽप्रमापकत्वात्। समयस्य च प्रायश उपमानेनाकलनात्। तथापि न तेन ते साक्षा-द्विषयीक्रियन्ते प्रमाणादय इत्यर्थः। तर्हि शब्दो-ऽभिधीयतां स हि साक्षादुपयोगीत्यत आह। यद्य-पीति। [५।९] तत्रापीत्यागमविषयपरामर्शः। आगमो

---

शास्त्रेण प्रमाणादयो नाभिधीयन्ते तथापि शास्त्रं पुरुषश्रेयो ऽभि-धत्त एवेत्यत आह। ससाधनमितीति। तथापीति। समयपरि-च्छेद एवोपमानस्योपक्षीणत्वान्न वाक्यार्थज्ञाने ऽपि तदुपयोग इत्यर्थः। ननु तत्रापि तच्छब्देन आगमपरामर्शे आगमस्वरूपस्येव अनुमानस्वरूपस्यापि मानान्तरमूलकतया नाभिधानं प्रसक्त-मित्यत आह। तत्रापीति। आगमविषय आत्मादिः। ते त्विति।

---

(१) मुद्रिततात्पर्यटीकायां ५ पृ० ४ पङ्क्तौ कल्पनाः कोषस्य इति विसर्गसहित पाठः चिन्त्यः। (२) अगृहीतशक्तेरित्यर्थः।

हि यत्र प्रवर्तते तद्विषयमेव प्रत्यक्षमनुमानं वा ऽपेक्षते । ते तु समूले अपि न स्वविषयप्रवृत्तं प्रमाणमपेक्षेते (१) ततो मूलासंप्लुतविषयत्वात्ते एव दर्शिते इत्यर्थः ।

वैनयिकेति । [५।११] विशिष्टो नयः शास्त्रं न्यायशास्त्रं तज्जन्यबुद्धिविरहिणा इत्यर्थः । नैतान्विविञ्चते-समारोपितादूपादिति शेषः । शुश्रूषादिरित्यादिग्रहणेन श्रवणादौ पाटवम् । सन्दिग्धस्यापि जिज्ञासा न भवत्येवानभिमतापवर्गस्येत्यत उक्तं शिष्यस्येति । शिष्यतया मुमुक्षुतादिसम्पत्तिमुपलक्षयति । विप्रतिपन्नोऽपि कथामारभमाणो ऽप्यमुमुक्षुर्गलिते ऽहङ्कारेण सापेक्षो भवतीत्यतो निष्फलो जल्पवितण्डारम्भ इत्यत आह । शिष्यमाणस्येति । [५।१७] मोहादपि मोक्षमिच्छत इत्यर्थः ।

---

सविकल्पकं निर्विकल्पकमूलमपि न विशिष्टविषयं मानान्तरमपेक्षते अनुमानं च व्याप्तिपक्षधर्मताप्रत्यक्षमूलकमपि न पक्षधर्मताबललभ्यविशेषविषयकं मूलमपेक्षत इत्यर्थः ॥

टीकायां वैनयिकबुद्धोति । शास्त्रपरिशीलनजबुद्ध्यतिशयहीना इत्यर्थः । विवेकः पृथग्बोध इति तत्रावध्यपेक्षायामाह । समारोपितादिति । यद्यपि घटपटादीन् विविञ्चत एव तथापि यद्विष-

(१) अपेक्ष्येते इति पु० पा० ।

जल्पवितण्डाभ्यां गलिते ऽहङ्कार इति योजना। सापेक्षस्य सतः-प्रतिपाद्यतेति वाक्यशेषो ऽग्रे पाठः। केनचित्प्रकारेणेति। [५।१८] प्रथमसूत्रपाठप्रकारेणेत्यर्थः।

नन्वसन्दिग्धस्यापि सन्दिग्धीकरणे किमस्य प्रयोजनमित्यत आह। असन्दिग्धो ऽपीति। [५।२०] तथा च प्रमातॄणां सापेक्षाणामिति शेषः। ते ऽमी दुर्ललिताः शिष्या यदि मोक्षादावपीन्द्रियाद्यपेक्षन्ते तदा कथं प्रतिपाद्या इत्यतो वार्त्तिकं पूरयति कश्चिदिति। (१) [५।२२] दृष्टप्रयोजनोपयोगिनं प्रत्यक्षोपलभ्यमानमित्यर्थः।

दृष्टप्रयोजनोपयोगिनमेवानुमेयं जिज्ञासव इत्युक्तवतापि पूरणीयमित्याह। एवमुत्तरमपीति। [५।२३]

नन्वेतावतापि सापेक्षा अनेनैव शास्त्रेण प्रतिपाद्याः प्रत्यक्षानुमानाभ्यां चेति व्याहतमित्यत आह।

---

यकं मिथ्याज्ञानं संसारहेतुर्न तत् विविच्यत इत्यर्थः। वाक्यशेष इति। वाक्यशेषो-भागो यदन्वयेन वाक्यार्थसमाप्तिः सोऽत्र टीकायामस्तीत्यर्थः॥

सापेक्षाणामिति। निरपेक्षाणामन्यत्र प्रवृत्तावविरोधादित्यर्थः। कश्चिदित्यत्र विशेषापेक्षायामाह। दृष्टेति। अदृष्टप्रयोजनापेक्षायां शास्त्रेणैव व्युत्पादनादित्यर्थः।

(१) कश्चिदिति इति पु० पा०।

अयमभिसन्धिरिति । [५।२७] परमपुरुषार्थसाधनं जिज्ञासव इति शेषे न्यायेनेति शेषः । इह यद्यपि सुखं दृष्टमेव विधायकप्रमाणगोचरमेवेत्यहितनिवृत्तिरदृष्टैव निषेधप्रमाणगोचर एवेति यथासंख्यमपि सम्भवति । तथापि श्रेयः पुनः सुखमहितनिवृत्तिश्चेत्यतो न किञ्चिदधिकमुक्तं भवति प्रमाणविशेषसम्बन्धकथनमेव परम् । न चाभिमतश्रेयोविशेषनिर्द्धारणे कर्तव्ये विधिनिषेधगोचरत्वोपवर्णनमुपयुज्यत इत्यभिसन्धायान्यथा व्याचष्टे । तत्रापीति । [५।२८] तच्छ्रेयः सुखमहितनिवृत्तिश्चेति तच्छब्देन द्वयमपि श्रेयस्त्वेन परामृश्यत इत्यर्थः ।

---

प्रत्यक्षोपलभ्यस्यैवानुमेयातिदेश इति भ्रमं निवारयति । अनुमेयमिति ।

ननु तादृशाः श्रुतियोगशास्त्राभ्यामपि व्युत्पाद्यन्त इत्यत आह । न्यायेनेति । न्यायस्यैतच्छास्त्रमात्रव्युत्पाद्यत्वात् तेऽनेनैव व्युत्पाद्या इत्यर्थः । उपदेशमपेक्षन्त इति वार्त्तिके उपदेशशब्देनाम्नायेवाभिमता । अपदेशमपेक्षन्त इति पाठः* । तत्रापदेशो हेतुवचनमिति सम्प्रदायविदः ।

ननु तच्छब्देन श्रेयोऽवान्तरभेद एव किं न परामृश्यते इत्यत

दृष्टं सुखमित्यत्र दृष्टादृष्टशब्दयोरर्थमुदाहरणमुखेन स्फुटयति। स्रक्‌चन्दनेति। [६।२] ऐहिकमित्यर्थः। स्वर्गादीत्यामुष्मिकमर्थः। एवमिति। अहितनिवृत्तिरप्यैहिक्यामुष्मिकी चेत्यर्थः।

नैवं वार्त्तिके श्रूयत इत्यत आह। चकारलोपादिति। [६।२] चकारयोर्लोपादित्यर्थः। तेन दृष्टसुखमदृष्टं च, तथा अहितनिवृत्तिश्चेति वार्त्तिकार्थः। तदयं संक्षेपः दृष्टं श्रेयस्तच्च सुखमहितनिवृत्तिश्च, सुखमप्यैहिकमामुष्मिकं च दुःखनिवृत्तिरप्यैहिक्यामुष्मिकी च तत्र सुखलक्षणं श्रेयो दृष्टमदृष्टं वा नैतच्छास्त्रसाध्यं तस्य स्वर्गादियागादिसाध्यत्वात् आत्यन्तिकस्य च तस्याभावात्। अहितनिवृत्तिरप्यनात्यन्तिकी दृष्टा-

---

आह। तच्छब्देनेति। अहितनिवृत्तेरपि दृष्टादृष्टभेदात्तस्यास्तच्छब्देन परामर्शे लिङ्गानुपपत्तिः स्यादिति सामान्यमेव श्रेयस्त्वं परामृश्यत इत्यर्थः।

ननु दृष्टादृष्टत्वं न प्रत्यक्षाप्रत्यक्षत्वं स्वर्गादिसुखस्यापि प्रत्यक्षत्वेनैव वैरूप्याभावात्। नापि विधायकनिषेधकमानगोचरत्वं स्वर्गसुखस्याप्यभावरूपत्वाभावादित्यत आह। दृष्टं सुखमित्यत्रेति। तथापि किं दृष्टादृष्टत्वं सुखस्येत्यभिप्रेत्य दृष्टं तावदाह। ऐहिकमिति। धर्माधर्मोभयजन्यशरीरोपभोग्यमित्यर्थः।

दृष्टभिन्ना नैतच्छास्त्रसाध्या तस्याः प्रसक्तकण्टक-हिंसादिनिवृत्तिसाध्यत्वात् तदप्रसक्तौ त्वसाध्यत्वात् अत आत्यन्तिकीमहितनिवृत्तिं निर्द्धारयितुं पुनर्भिनत्तीत्याह। अहितनिवृत्तेरिति। [६।४]

ननु यदि निवृत्तिः प्रागभावो दुःखस्य, स कथमात्यन्तिक उत्तरान्तानवच्छेदो हि आत्यन्तिकत्वं, प्रागभावस्य तथात्वे प्रागित्येव न स्यात्। अथ निवृत्तिः प्रध्वंसः, स च सर्व एवात्यन्तिक इति कुतो निवृत्तेरात्यन्तिकत्वव्युत्पादनमित्यत आह। आत्यन्तिकत्वमिति। [६।६] निवृत्तस्य-निवृत्तजातीयस्य। पुनरनुत्पादः-तत्रैवात्मनीति शेषः।

नन्वेकविंशतिप्रभेदभिन्नदुःखनिवृत्तिरेवात्यन्तिकी

---

अदृष्टं सुखमाह। आमुष्मिकमिति। धर्ममात्रजन्यशरीरोपभोग्यमित्यर्थः।

निवृत्तस्य पुनरनुत्पादः संसारितादशायामप्यस्तीति व्याचष्टे। निवृत्तजातीयस्येति। एकात्मनि निवृत्तजातीयस्यापि दुःखस्यापरात्मन्युत्पत्तिरपवर्गेऽप्यस्तीति मध्याहरति। तत्रैवेति। निवृत्तस्य दुःखजातीयस्य तत्रैवात्मनि पुनरनुत्पादो निःश्रेयसं तल्लक्षणमग्रे वक्ष्यामः।

द्वैत्यर्थंतृतीयात्यागे बीजमाह। नन्विति। ननु तदेव तत्र-

दुःखनिवृत्तिस्तत्कथं शान्येति वार्त्तिकमित्यत आह। स चेति। [६।७] निवृत्त्या-निवृत्तिस्वरूपेण लच्यते। अत्र च कार्यशब्देन दुःखमुक्तं-कारणशब्देन शरीरेन्द्रियविषयबुद्धयः। अनुषङ्गि सुखं दुःखैनैककारणत्वात्।

अथ शरीरादिषु निवृत्तेष्वपि दुःखं किं न भवेत्, मा भवतु दुःखं, सुखं किं न भवेत्, न ह्यन्यस्मिन्नत्यन्तनिवृत्ते ऽन्यन्न भवति तथा चानुषङ्गिसुखनिवृत्तिः किमुपवर्ण्यत इत्यत आह। न हीति। [६।७] कारणं विना भवत् कार्यं कार्यतामेव जह्यात् अतः शरीरादिष्वसत्सु दुःखवत् सुखमपि न भवति तस्यापि तत्कार्यत्वात्, भवद्वा शरीरादिषु सत्स्वेव भवेत् तथा च दुःखमपि भवेत् कारणसद्भावादित्यर्थः। अत्रैवार्थे वार्त्तिकं योजयति। तदिदमुक्तमिति। [६।८]

अनेनैव कारणमविद्यातृष्णे, कार्यां प्रवृत्ति,रनु-

---

क्षणकमपि न भवतीत्यत आह। निवृत्तिस्वरूपेणेति। स्वरूपं लक्षणं विशिष्टं तु लक्ष्यमित्यर्थः। ननु शरीरादीनां कारणत्वात्तन्निवृत्तौ तत्कार्यं दुःखं न जायत इत्यस्तु, सुखदुःखे अपि न दुःखकारणे इति "न हीत्यादिना" न तत्साधारणो हेतुरुक्तः स्यादित्यत आह। अथेति। अनेनैवेति। तदिदमुक्तमिति टीकया

षड्गिणौ धर्माधर्माविति टीकाव्याख्यानमपहस्तितम् ।

शरीरादीनां दुःखत्वमनुभवबाधितमित्यत आह । गौणेति । [६।८]

ननु घ्राणादिसूत्रे(१) पञ्चेन्द्रियाणि प्रसिद्धानि न च प्रदेशान्तरे ऽपि षड़ित्यत आह । षष्ठमिति । [६।९] तन्त्रयुक्त्येति भावः ॥

ननु विषया अप्यनितरेतरसाधनसाध्याः पञ्चैव विभागे परीक्षायां च सिद्धा न तु षडित्यत आह । तस्येति । [६।९] यद्यपि बुद्धिसुखदुःखान्यपि मनसो विषयास्तथापि तस्यैव विषयत्वेन दुःखत्वोपचारो यद्विषयीक्रियमाणं दुःखमुपजनयति । वक्ष्यति हि "विषया बोध्यत्वा"दिति । न च बुद्धिर्बुध्यमाना दुःख-

एकविंशतिदुःखान्तर्गतस्यैव कार्यकारणतदनुषङ्गिपदेनाभिधानेनैव अविद्यादीनामेकविंशतिदुःखेष्वनन्तर्भावादित्यर्थः ।

दुःखत्वप्रकारानाहेति टीकायां दुःखत्वोपचारप्रकारानाहे-त्यर्थः । मध्यपदलोपिसमासात् ।

तन्त्रयुक्त्येति । परमतमप्रतिषिद्धमनुमतमिति न्यायेनेत्यर्थः ।

संख्यादीनामपि विषयाणां सत्त्वादाह । अनितरेति । एकैके-न्द्रियग्राह्या इत्यर्थः । पञ्चैवेति । गन्धादयः शब्दान्ता इत्यर्थः । न

(१) गोतमसूत्रम् अ. १ आ. १ सू. १२ ।

हेतुः। वक्ष्यति हि "बुद्धयस्तु साक्षा"दिति। सुखदुःखयोस्तु दुःखहेतुत्वमेव नास्ति सुखस्य विजातीयारम्भकत्वे ऽपि रागमात्रारम्भकत्वात्, दुःखस्य विजातीयारम्भकत्वादेव, इच्छाद्वेषप्रयत्नास्तु प्रतीयमाना एव साक्षाद्दुःखं जनयन्ति। तथाहि—मुमुक्षुस्तावदिच्छामि द्वेष्मि योगाभ्यासादन्यत्र प्रयत इति प्रतीत्यैव दुःखी भवति। अहितसाधनत्वेनेच्छाद्वेषप्रयत्नानां तेनावधारितत्वात्। अन्यो ऽपीप्समाणालाभेन बुभुक्षितो ऽस्मि पिपासितो ऽस्मीति प्रतीत्य दुःखी भवति हितमेवाहितमुपलभ्य द्विषतो निवृत्तभ्रमस्य हितमेव द्वेष्मि धिङ्मामिति दुःखम्, एवमनिष्ट एवार्थे इष्टबुद्ध्या यतमानस्य निवृत्ते भ्रमे, तथा ऽलसस्य प्रयत्नमुपलभ्यैव दुःखमित्येत एव मनसो विषयत्वेन निर्दिष्टाः॥

---

च बुद्धिरिति। यद्यपि अत्रौ मित्रबुद्धिर्जातेति ज्ञात्वा दुःखायत इति बुद्धिरपि बुध्यमाना दुःखहेतुः। न च सर्वत्र न तथेति वाच्यम्। इच्छाया अपि पिपासादेः क्वचित्स्वरूपसत्या एव दुःखहेतुतया सर्वत्रातथात्वात्। तथापि अत्रौ मित्रबुद्धिर्जातेत्यत्र बुद्धिज्ञाने ऽपि अत्रुज्ञानस्यावश्यकत्वात् तदेव दुःखहेतुर्न तु बुद्धिज्ञानमिति भावः। सुखस्येति। सुखमिच्छां दुःखं द्वेषं विजातीयमारभत इत्यर्थः।

ननु जराकुष्ठाद्युपहतदेहस्योपलभ्यमानमेव शरीरं दुःखहेतुस्ततस्तत्रापि विषयत्वेनैव दुःखत्वोपचारः स्यादित्यत आह । यद्यपीति । [६।१०] अन्यथाऽस्य दुःखहेतुभावो ऽसाधारण इति शेषः । विषयत्वेन पुनरिदं न षड्भ्यो भिद्यते । असाधारणेन्द्रियसम्बन्धाद्भिद्यते न तु स्वरूपेण विषयाणामनन्तत्वादित्यर्थः ॥

इह यद्य"प्यनुषङ्गोऽविनाभाव" इति वक्ष्यति वार्त्तिककारः, तदुपपत्तये च समाननिमित्ततासमानाधारतासमानोपलभ्यतास्तथापि न तावन्मात्रेणाऽविनाभावो निर्वहति साधारणनिमित्तायामप्यन्यतरासाधारणनिमित्तनिर्वृत्तावेकतरनिवृत्तावितरानुवृत्तिसम्भवात् अत एवाऽऽधारस्योपलब्धिसाधनस्य च साम्ये ऽप्येकतरस्य कारणाभावेनाभावे ऽप्यन्यतरसद्भावेनाविनाभाव इत्याशङ्का सुखस्य दुःखानुषङ्गोपपत्तये दुःखहेत्वनु-

---

अन्यथेत्यन्याकाङ्क्षायामाह । असाधारण इतीति । स्वरूपसतो ऽपि दुःखहेतुत्वमित्यर्थः । ननु शरीरे ऽपि विषयत्वसत्त्वाद्विभागव्याघात इत्यत आह । विषयत्वेनेति । उपाधिविभागो ऽयमित्युपहितसाङ्कर्ये ऽपि न विभागव्याघात इत्यर्थः ॥

समानेति । समानं निमित्तं सुखदुःखयोः शरीरादि । समान-

षङ्गमेवाह। साधनेति। [६।१५] अतो न द्वितीयसूत्र-वार्त्तिकटीकाभ्यां विरोधः। साधनपारतन्त्र्यं कार्य-त्वात्। अकार्यस्य च सुखस्याभावात्। पारतन्त्र्यं च दुःखहेतुः। यदाह "सर्वं परवशं दुःख"मिति। क्षयित्वं च सुखस्य समवायिकारणवत्त्वात्। तदपि दुःखहेतुः। इष्टवियोगो हि दुःखं जनयतीति। क्षयित्वं कामे सतीति तु व्याख्यानं दुःखहेतव इति बहुवचनविरुद्ध-मतः स्वतन्त्रमेव हेतुत्रयम्।

काम इच्छा, सा च सुखतत्साधनयोर्व्यापिका, न हि सुखं तत्साधनं वाऽनिच्छतः सुखं नाम सुखसाधनं च। तदपि सुलभं दुर्लभं च। तत्र दुर्लभेच्छा दुःखैकफलैव। सुलभेच्छा त्वनिषिद्धसाधन-गोचरा निषिद्धसाधनगोचरा च। तत्र निषिद्धसाध-

---

आधारस्तयोरात्मा। समानोपलभ्यता मनोवेद्यतेत्यर्थः। अतो न द्वितीयेति। इह सुखस्य दुःखहेत्वनुषङ्गो दुःखत्वोपचारबीजमुक्तं द्वितीयसूत्रवार्त्तिकटीकयोश्च दुःखानुषङ्गो दुःखत्वोपचारबीजमुक्त-मिति विरोधो नास्ति दुःखानुषङ्गकथनार्थमेवेह दुःखहेत्वनुषङ्ग-स्योक्तत्वादित्यर्थः॥

नह्येति। योगिनामपि संसारितादशायां सुखमिच्छतामेव सुखमिति न व्यभिचार इति भावः। स्वरूपतः कार्यतश्चेति।

नगोचरा ऽपि स्वरूपतः कार्यतश्चाधर्मजननद्वारेणावश्यं दुःखफलेति अनिषिद्धसुलभसाधनगोचराऽपि शरीर-पाटवे सत्यसति वा । तत्र चरमा दुःखहेतुरेव शरीरा-दिपाटवे सविघ्ना निर्विघ्ना च । तत्र सविघ्ना दुःखमेव प्रसूते । निर्विघ्ना ऽप्यनिष्टसंभिन्नविषया तद्विपरीता च । तत्र प्रथमा ऽवश्यं दुःखहेतुः । द्वितीया तु विफला सफला च । तत्र प्रथमा दुःखहेतुरेव । द्वितीया तु सवि-लम्बफला अविलम्बफला च । तत्र प्रथमा ऽवश्यमेव दुःखहेतुः । द्वितीया ऽप्यनायतिविशुद्धा तद्विपरीता च । तत्र प्रथमाऽवश्यं दुःखहेतुरेव, द्वितीया तु विषयस्य परिणतिविरसत्वाद्दुःखमेव प्रसूते अतिव्यामोहाद्विषये-ष्वेव मग्नस्येच्छान्तरमेव वा उभयथा ऽप्यनर्थमूलमिति । एवं सुखानुषक्तः कामो ऽपि दुःखहेतुरिति ।

---

निषिद्धसाधनगोचरेच्छा' निषिद्धमिच्छामि ततो ऽवश्यमनिष्टं भविष्यतीति स्वयमपि न दुःखं जनयति स्वजन्याधर्मद्वारा चेत्यर्थः ॥

अनिष्टसंभिन्नेति । मधुविषसम्पृक्तान्नेच्छेत्यर्थः । अनायतीति । दुरुदर्कवस्त्विच्छपातनः (१) सुखं जनयित्वाऽपि दृष्टद्वारेव दुःखहेतु-रित्यर्थः । परिणतीति । सुखान्ते दुःखावश्यम्भावादित्यर्थः । इच्छा-न्तरमिति । दुःखसम्भिन्नविषयकमित्यर्थः ॥

---

(१) दुरुदर्कवस्त्विच्छाऽऽपातनः इति पाठकल्पनेऽर्थः साधुरुत्तच्छत इति भाति ।

इह यद्यपि रागद्वेषमोहप्रवृत्तयो दुःखतदनुषङ्गि-साधनभावादिन्द्रियादिवत् दुःखत्वेन परिसङ्ख्यातुमु-चितास्तथापि न शरीरादिव्यतिरेकेणामूषामात्मलाभो दुःखं प्रति व्यापारो वा। इन्द्रियादीनां पुनर्दोषप्रवृत्त्य-भावे ऽपि दुःखं प्रति व्यापारो जीवन्मुक्तस्यास्त्येव। प्रवृत्तिफलं तु (१) धर्माधर्मौ यद्यपि सुखदुःखहेतू, तथाप्येकविंशतिविधदुःखमयसंसारनृत्यशालामूलस्तम्भ-त्वादनयोर्नात्र परिसंख्यानं, न हि भाविनि जन्मान्तरे शरीरेन्द्रियविषयबुद्धिसुखदुःखान्याहृत्य व्याप्रीयन्ते यथा धर्माधर्मौ॥

एतदेवाभिसन्धाय कारणरूपधर्माधर्मोच्छेदक्र-मेण कार्यरूपैकविंशतिविधदुःखस्योच्छेदो वार्त्तिककृता दर्शित इति तथैव वार्त्तिकमवतारयति। उक्तप्रका-रेति। [६।१६]

---

प्रवृत्तिफलं त्विति। धर्माधर्मयोरपि रागादेरिव शरीरादिषु सत्स्वेवात्मनापि दुःखत्वेनापरिसंख्यानप्रयोजकं रूपान्तरमप्यस्तीति तदेवोक्तम्। धर्मस्य यद्यपि न दुःखहेतुत्वं तथापि दुःखानुषक्तसुख-

---

(१) प्रवृत्तिफले च धर्माधर्मौ—पा० २ पु०।

इह चागामिधर्मादिनिवृत्तावुपायस्तत्साधनप्रवृत्ति-परित्यागः उत्पन्ननिवृत्तौ तूपभोग इति दर्शितम्। तदुभयमप्यनुपपन्नं वाग्बुद्धिशरीरारम्भं परित्यज्य जीवितुमशक्यत्वात्। मृतेऽपि शरीरान्तरवज्रलेपस्य दुरपनेयत्वात्। उपभोगश्चाशक्यः अनियतविपाकसमय-त्वात्। अनन्तत्वादनन्तफलत्वाच्च। भोगावस्थायामप्य-नन्तकर्मान्तरोत्पादनताया अविरामात्। अथ कथञ्चि-दुपभोगानुत्पादाभ्यामुत्पन्नानुत्पन्नयोः शक्यः प्रचयः तर्हि शास्त्रवैयर्थ्यप्रसङ्गः, तत एव तत्सिद्धेरित्याशङ्क्य वार्त्तिकस्योपस्कुरुते। संशयादीति। [६।१७]

संशयादीत्यादिपदेन चतुर्दशापि न्यायपरिकरत्वेन सङ्गृहीताः। परमन्यायेत्यनेन मूलमूलीभावव्यवस्थि-तानि चत्वार्य्यपि प्रमाणानि। न्यायो मार्ग इव न्याय-मार्गः निःश्रेयसभूमेः प्राप्तिहेतुत्वात्। द्वादशविधे-त्यात्मादिप्रमेयम्। तदनेन शास्त्रस्यावसरोपयोगी

---

जननद्वारा ऽस्त्येवेति भावः। संशयादीत्यादेरनुपयोगमाशङ्क्याह। इहेति॥

वार्त्तिकस्येति कृञः प्रतियत्न इति द्वितीयार्थे षष्ठी। चतुर्दश-संशयप्रयोजनादयः॥

दर्शितौ। तत्त्वपरिभावनेत्यनेनाभ्यासस्य। तदेवं पूर्वोक्तेन न्यायेन(१) मोक्षमार्गस्य शास्त्रे प्रवृत्तिस्ततः परिकरज्ञानं, ततो न्यायमार्गपरिशोधनं, ततस्तेन द्वादशविधप्रमेयासादनं, ततोऽभ्यासः, ततः प्रसङ्ख्यानं, ततः समूलदोषानुषङ्गनिर्मोक्षः, ततोऽप्रवृत्तिः, तत आगामिनोर्धर्माधर्मयोरसञ्चयः, इत्येवमनागतः प्रवाहो निवारितः॥

यद्यपि च यावच्छरीरादिभाविनी प्रवृत्तिस्तथाऽपि दोषानुषङ्गसहकारिविरहान्नासौ प्रवृत्तिः तत्कार्यासमर्थत्वादिति।

---

अवसरेति। श्रवणानन्तरमवसर आत्मादिप्रमेयतत्त्वज्ञाने चोपयोग इत्यर्थः। अभ्यासस्येति। शरीरादिभिन्नात्मचिन्तनस्येत्यर्थः। पूर्वोक्तेनेति। मोक्षोपायजिज्ञासारूपेणेत्यर्थः। तत इति। संशयादिचतुर्दशज्ञानमित्यर्थः। अभ्यासो निदिध्यासनम्। प्रसंख्यानं शरीरादिभिन्नात्मसाक्षात्कारः। प्रसंख्यायते साक्षात्क्रियतेऽनेनेति व्युत्पत्त्या प्रसंख्यानं निदिध्यासनसहकार्यात्ममनोयोगः समाधिरूपोऽत एवाचिन्त्यसामर्थ्यातिशयो हौल्यादिना ऽग्रमेवाग्रे दर्शित इत्यन्ये। समूलेति। मूलं मिथ्याज्ञानं तदभावात् तत्कार्यरागादिनिवृत्तिरित्यर्थः।

(१) पूर्वोक्तन्यायेनेति - पा० २ पु०।

उत्पन्नभोगमुपपादयति। अनादीति। [६।२०]

यद्यपि यथाऽनादौ भवपरम्परायां कर्माणि प्रचीयन्ते तथा क्षीयन्तेऽपि, न ह्यारम्भे परं भवस्यानादिता। ननूपभोगे कर्मारम्भो ह्यधिकारिशरीरे, तच्च शरीरकोटिमध्यपतितमेकं शरीरं कदाचित् किञ्चित् क्वचिदेव, भोगस्तु नास्त्येव तच्छरीरं यत्र नास्ति, भोगस्य तदायतनत्वात्। तस्मादायव्ययपर्यालोचनया परिमितमेव कर्म। अत एव नियतविपाकसमयमपि। तस्य च क्रमभाविभिरपि कियद्भिः कैश्चिदेव शरीरैरुपभोगात् प्रक्षयोऽपि न दुरुपपादः, तथाऽप्यागमप्रामाण्यात् काययौगपद्यस्यापि प्रसङ्ख्यानफलतया सिद्धत्वादनन्तामनियतविपाकसमयतां चाभ्युपगम्यैव परिहृतम्। विभूतिमताऽनेककालोपभोग्यमप्येकदा भुज्यत इत्यत्र समुद्रयानमुदाहरणम्। योगर्द्धिप्रभावसम्पन्नो विविधफलभागिनो विचित्रस्वभावानेकदैव बहून् कायानिच्छामात्रेणैव निर्मिमीत इत्यत्र दण्डकारण्यसृष्टिरुदाहरणमिति।

---

तथापीति। धर्माधर्मजनकप्रयत्नस्य प्रवृत्तित्वादित्यर्थः। एतदेवाह। तत्कार्येति। कार्यौ धर्माधर्मावित्यर्थः।

कर्मारम्भो हीति। यद्यपि क्वचिदेकस्मिन्नेव कर्मणि यावदा-

इह केचिदाहुः। दुःखनिवृत्तिः पुरुषार्थ एव स्वरूपतो न भवति सोपाधित्वात्। सुखं दुःखाभावे सत्येव भवतीति सुखसाधनान्तरवत् दुःखाभावो ऽपि मृग्यते न तु स एव पुरुषस्य समीहित इति। तदुक्तम् "वरं वृन्दावन"(१) इत्यादि।

तदनुपपन्नं विपर्ययस्यापि सम्भवात्। भोजनादिसुखे सत्येव हि बुभुक्षादुःखं निवर्त्तत इति दुःखनिवृत्त्यर्थमेव भोजनादिसुखं मृग्यते, न पुनस्तदेव तस्य समीहितमिति किं न कल्प्यते। क्वचिद्दुःखाभावाभावे ऽपि सुखस्येष्यमाणत्वादिति चेत्। न। दुःखनिवृत्तेरपि क्वचित् सुखाभावे ऽपीष्यमाणत्वादेव। दुःख-

भूतसंप्लवनरकफलश्रवणाच्छरीरकोऽप्युपभोग्यं फलमित्याय एव व्ययापेक्षया गरीयान् तथा ऽप्यनादित्वेनायव्यययोर्भूयस्त्वलघीयस्त्वे नियन्तुमशक्ये इत्येवम्परो ऽयं ग्रन्थः॥

पुरुषार्थः—इच्छाविषयः। स्वरूपतो—मुख्यतः। सोपाधित्वादिति। अन्येच्छानधीनेच्छाविषयस्यैव स्वतःप्रयोजनत्वादित्यर्थः। तदेव दर्शयति। सुखमिति॥

क्वचिदिति। शिरो मदीयं यदि याति यास्यतीत्यभिसन्धाय

(१) वरं वृन्दावने शून्ये शृगालत्वं स इच्छति।
न तु निर्विषयं मोक्षं गन्तुमर्हति गौतम॥

निवृत्तौ सत्यां सुखमेव भविष्यतीत्यभिसन्धिस्तावद-स्तीति चेत्। न। सुखावस्थायां नियमतो दुःखविरहो भविष्यतीत्यभिसन्धेस्तत्रापि सम्भवात्। तस्माद्यद्यपि दुःखहानौ सुखं सुखे च दुःखहानिर्नियता, तथापि परस्परनिरपेक्षमेव पुरुषार्थत्वमनयोः, इच्छाया अप्य-सङ्कीर्णविषयत्वात्॥

अन्यस्त्वाह-भवत्येव दुःखहानिः पुरुषार्थः, किं त्वनुभूयमानतया, न हि विषादिजन्यमोहावस्थायां दुःखनिवृत्तिरिति तदर्थं प्रेक्षावन्तः प्रवर्त्तन्ते। तस्मा-न्मोक्षे दुःखहानेरननुभूयमानत्वान्न पुरुषार्थत्वमिति।

तदुक्तम्—

"दुःखाभावो ऽपि नावेद्यः पुरुषार्थतयेष्यते।
न हि मूर्छाद्यवस्थार्थं प्रवृत्तो दृश्यते सुधीः"। इति।

तदेतदप्यनुपपन्नं पुत्रादिवियोगजन्मदुःखहानिमि-च्छतां केषाञ्चिद्विषशस्त्रोद्बन्धनादावपि प्रवृत्तिदर्शनात्।

---

उत्कटरागान्धानां परदारेष्वपि प्रवृत्तिदर्शनादित्यर्थः। सुखाभावे ऽपीति। सुखाननुसन्धाने ऽपि दुःखहानार्थं शोकान्धानां शरीर-हाने प्रवृत्तिदर्शनादित्यर्थः। असङ्कीर्णेति॥ परस्पराविषयकान्ये-च्छानधीनेच्छाविषयत्वादित्यर्थः।

प्रेक्षावन्तो नैवं कुर्वन्तीति चेत्। न। पुरुषार्थत्वाविरोधात्। न हि परदारेषु शास्त्राङ्कुशनिवारिताः प्रेक्षावन्तो न प्रवर्त्तन्त इति न तत्र कामः पुरुषार्थः। अपि त्वल्पीयः सुखं महाननर्थ इति निवृत्तिः। तथा विषादावपि प्रवृत्तस्य शास्त्रगर्हितत्वादल्पीयाननर्थो निवर्त्तते महीयान् प्रवर्तत इति न ते प्रवर्त्तन्ते। इयमेव हि प्रेक्षा यत्पुरुषार्थे(१) लोकशास्त्रविरोधपरामर्शः, न त्वपुरुषार्थत्वादेव, स्वरूपेणेष्यमाणतामात्रनिबन्धनत्वात् पुरुषार्थतायाः। अत एव न यत्र लोकशास्त्रविरोधस्तत्र व्याध्यादिपरिपीडिताः प्रयागवटप्रपातानशनादिना देहं त्यजन्तः प्रेक्षावन्तो दृश्यन्ते। न हि कश्चिद्दुःखनिवृत्तिमनुभविष्यामीति तत्साधने प्रवर्त्तते, अपि तु दुःखं हास्यामीति।

अपि च दुःखनिवृत्तेरनुभूयमानतामात्रं विवक्षितं दुःखनिवृत्तिसत्तावधिर्वा। आद्यश्चेत्तुष्यतु दुर्जनः, चरमे जन्मन्यनुभूयत एव समाधिप्रभावात् आत्यन्तिकी

अनुभवविरोधमाह। न हीति॥

किञ्च वेदनं प्रतीतिमात्रमनुभवो वा साक्षात्कारो वा। आद्य-

(१) अयमेव हि प्रेक्षावत्पुरुषार्थे इति—पा० २ पु०।

दुःखनिवृत्तिरनागता, वर्तमानाऽप्यचिरमनुभूयत एव। द्वितीये तु प्रसक्तकण्टकादिदुःखनिवृत्तेरपुरुषार्थत्वप्रसङ्गः सर्वदा ऽननुभूयमानत्वात्। तथात्वे वा विषयान्तरसञ्चारागाभावप्रसङ्गात् निवृत्तेः सर्वदा तादवस्थ्यात्। तदिदं निवृत्तेरपुरुषार्थत्वमनुभूयमानतयैव वा पुरुषार्थत्वमिति पक्षद्वयमतिनिर्बलमित्येतदुपेत्य तृतीयं शङ्कते। स्यादेतदिति। [६।२६]

तदुक्तं—

"असत्यानि दुरन्तानि समव्ययफलानि च।
अशक्यानि च वस्तूनि नारभेत विचक्षणः"॥

सिद्धान्तवार्तिकमुद्दीपयति। यद्यपीति। [६।२८] तदनेन मधुविषसम्पृक्तान्नभोजनदृष्टान्तेन(१) समव्ययफलत्वमपवर्गस्य निराकृतम्। यथा ह्यत्रानर्थभूयस्त्वमर्थस्य तु क्षुद्रत्वं न तथा ऽपवर्गे ऽपीति।

योरसम्भव एव। आगमानुमानाभ्यां मुक्तेस्तदुभयसत्त्वात्। अन्त्यत्वाह। चरम इति। योगप्रभावात् सर्वविषयकज्ञानवद्भिर्योगिभिरनागताया मुक्तेः साक्षात्कारादित्यर्थः।

ततो दुर्जनतरो यदि वर्त्तमानदुःखाभावविषयसाक्षात्कारविषयतयैव दुःखाभावस्य पुरुषार्थत्वं मन्यते तत्राह। वर्त्तमानापीति॥

(१) भोजनेति क्वचित् नास्ति।

एतेनैतदपि निरस्तम्। यथा दुःखशबलं संसार-सुखमनादेयं, तथा सुखशबलतया दुःखमप्युपादेयं किं न स्यात्, दृश्यन्ते हि सुखार्थिनो यागादिदुःखमनुभवन्त इति।

"यस्य दुःखमुपादेयं हेयं तस्य किमुच्यताम्।
हेयहीनस्य का मुक्तिः केन वाप्युपदिश्यत" इति।

यस्तु बलवद्दुःखतिमिरनिरन्तरात् संसारकान्तारात् सुखखद्योतिकासु द्योतमानास्वपि बिभेति तं *प्रत्ययं निस्तमस्कतया सुगमो मार्ग उपदिश्यत इति।*
तदिदमुक्तं तेन माभूदेतदित्यादि। [७।४]

---

योगिनः सार्वज्ञाज्ञाविमुक्तिविषयकेन चरमदुःखसाक्षात्कारेण दुःखे नाशिते वर्तमानदुःखाभावविषयकः साक्षात्कारो भोगनाश्यादृष्टनाशान्नश्यतीत्यचिरमनुभवस्तस्यापीत्यर्थः। न तर्थेति। दुःखभीरवो ऽल्पतरदुःखानुषङ्गेणापि सुखं परित्यजन्ति बहुतरदुःखानुषङ्गमल्पीयः संसारसुखं तु नितरां हेयमिति तेषां सुखस्यानुपादेयतया तद्धानि व्यय एव नास्तीत्यर्थः।

यस्य दुःखमिति। यद्यपि यस्य सुखं हेयं तस्य किमुपादेयमिति तुल्यम्। न च दुःखनिवृत्तिरेवोपादेया, तर्हि केवलं दुःखं हेयं सुखशबलं उपादेयमित्यपि तुल्यं तथापि सुखे सत्युत्तरकालं सुखासम्भिन्नस्य दुःखस्यावश्यकतया केवलदुःखस्य हातुं शक्यतया

नन्वेवं सति नास्य सर्वार्थता, तथा च जगतः शमायेत्यनेन विरोध इत्यत आह । अविवेकिनामपीति । [७५] यद्यपि कस्य चिदप्रवृत्तावपि न सर्वार्थतास्य हीयत इति प्रपञ्चितमधस्तात्, तथापि हेयं हेयत्वेनाग्रह्णन्तो मन्दाः कारुणिकेन ग्राहयितव्या इत्यर्थः ।

ननु शास्त्रेण तत्त्वज्ञानाद्वैराग्यं, वैराग्याच्छास्त्रे प्रवृत्तिरिति दुरुत्तरमितरेतराश्रयत्वमित्यत आह । शास्त्रे प्रवृत्तीति । [७६] *दुःखादुद्विजतो भोगवैमुख्यमात्रमिह वैराग्यं विवक्षितं न तु रागाभाव एवेत्यर्थः ।*

इष्टानिष्टप्राप्तिपरिहारफलतया द्वैविध्यशङ्कामपनयति । ऐकरूप्यं चेति । [७७]

---

केवलदुःखहानार्थं प्रवृत्तः शरीरादिदुःखहेतुनिवृत्त्या ऽर्थतः सुखनिवृत्तिमप्यासादयतीति भावः ।

अविवेकिनां विवेकाधानोपायकीर्तननिवर्त्तनीयां शङ्कामाह । नन्वेवमिति । पुरुषविशेषं प्रत्युपदेशे सतीत्यर्थः ।

ननु रागाभाव एव वैराग्यं कुतो न व्याख्यातमित्यत आह । नन्विति । भोगवैमुख्यमिति । परिणतिविरसतया ऽलं सुखसाधनैरिति निर्वेद इत्यर्थः ।

ननु प्रवृत्तेरेव द्वैरूप्यसम्भवे तद्धर्मस्य द्वैरूप्यं कुतो व्याख्यातमित्यत आह । इष्टानिष्टेति ।

ननु पुरुषभेदेनापि प्रवृत्तौ द्वैविध्यमेव, न हि कश्चित् दुःखमप्याप्तुं प्रवर्तते, नापि सुखहानायापीत्यत आह । पुरुषभेदो रागवैराग्याभ्यामिति । [७।८]

ननु सुखस्य हेयत्वमेव कुत इत्यत आह । प्राप्तव्यस्येति । [७।८] अविवेकिनां तु प्रवृत्तिर्द्विरूपेत्युक्तम् । वार्तिककृतेति शेषः ।

( इति प्रमाणत इत्यादिवाक्यतात्पर्यव्याख्याव्याख्यानम् । )

---

प्रकृतमुपसंहरन्नेवाप्रकृतोपनिपातशङ्कामप्यपनेतुं वृत्तवर्तिष्यमाणमनुकीर्तयति । तदनेनेति । [७।१०]

प्रवृत्तेर्द्वैरूप्यमिष्टानिष्टप्राप्तिहानिफलकतया यद्युच्यते तदा रागिप्रवृत्तितो वीतरागप्रवृत्तौ न कश्चिद्विशेष उक्तः स्यादित्यर्थः । रागवैराग्याभ्यां पुरुषभेदकथनोपयोगार्थमाह । नन्विति । वीतरागप्रवृत्तिरनिष्टहानार्थतया एकरूपैव रागिप्रवृत्तिस्त्विष्टानिष्टप्राप्तिहानिफलकतया द्विरूपेत्युपदर्शनार्थमेतदुक्तमिति परिहारार्थः ॥

हेयत्वमेवेति । तदसिद्धावनिष्टहानार्थैव प्रवृत्तिरित्येव न स्यादित्यर्थः ।

ननु टीकाकृता नोक्तमत आह । वार्त्तिकेति ।

(इति प्रमाणत इत्यादिवाक्यतात्पर्यव्याख्याव्याख्याव्याख्यानम् ।)

---

तदवयवं विवरीतुमुक्ततात्पर्यस्फोरणार्थमिति शेषः। अलौकिकत्वा-ल्लोकस्यास्मदादेर्नित्यपरोक्षत्वात्। अयुक्त-मप्रामाणिकम्। विप्रतिषिद्धं-मिथो व्यापकविरुद्धम्। प्रवृत्त्यै-निष्कम्पप्रवृत्त्यै। किं तर्हि प्रमाणमिति [७।१७] गृहीतमित्यनुवर्तते। रजतज्ञान-मिदं शुक्लभास्वररूप-वद्द्रव्यं रजतमित्येवं ज्ञानमित्यर्थः। परिच्छिनत्ति-उक्त-मर्थमालम्ब्य परिच्छेदरूपं जायत इत्यर्थः।

---

अप्रकृतेति। प्रवृत्तेर्द्वैविध्यमपुरुषार्थत्वनिरासेना ऽऽत्यन्तिकदुःख-निवृत्तावुपयुज्यते समर्थासमर्थभेदकथनमनुपयोगीति शङ्कामित्यर्थः।

ननु तात्पर्यव्याख्यानानन्तरमवयवव्याख्यानमुचितम्, अत्र तु तात्पर्यव्याख्यानापर्यवसाना"दवयवं विवरीतु"मित्ययुक्तम् इत्यत आह। उक्ततात्पर्येति। तथा चास्यापि तात्पर्यव्याख्यानपरतैवेति भावः।

अलौकिकमप्रामाणिकमिति भ्रमं निवारयति। लोकस्येति। अयुक्तत्वे साध्ये विप्रतिषिद्धत्वहेतोः साध्यावैशिष्ट्यं निवारयति। अयुक्तमिति। अगृहीतप्रामाण्यादपि प्रमाणात् प्रवृत्तिदर्शनादाह। निष्कम्पेति। ननु चाप्रमाणादपि प्रवृत्तिर्भवत्येवेत्यत आह। गृहीत-मितीति। रजतज्ञाने पुरोवर्तिविषयत्वं टीकायां नोक्तमिति तदाह। इदमिति। एवं शुक्तिज्ञाने ऽपि व्याख्येयम्। ननु ज्ञानं परिच्छेदो न परिच्छेदकमित्यत आह। उक्तमर्थमिति॥

शुक्तिकाज्ञानमपीति। [७।२०] इदं शुक्लभास्वररूपं शुक्तिकाद्रव्यं न रजतमिति ज्ञानमित्यर्थः।

*यद्येवं कथमनयोर्बाध्यबाधकभाव इत्यत आह।* *केवलमिति। रजतसमारोपापवादाभ्यामिति।* [७।२०] समारोपापवादस्वभावतयेत्यर्थः।

तदेवं परिच्छेदद्वारेण परिच्छेदकमुन्नीयत इति परिच्छेदस्यैव सामान्यविशेषयोः परिच्छेदत्वापरिच्छेदत्वे दर्शिते। न चैकस्यैव ज्ञानस्य विरुद्धधर्मसंसर्गः। जात्या हि बुद्धिरनुभवः स्मृतिश्च। तत्र स्मृतिरप्रमैव। अनुभवस्तु स्वरूपानुभवो ऽस्वरूपानुभवश्च। सो ऽयं विषयकृतो

---

समारोपापवादयोर्बुद्धिरूपतया ताभ्यामिति करणार्थो ऽसङ्गत इत्यत आह। समारोपेति।

ननु वार्त्तिककारेणाप्रमाणस्य प्रमाकरणसाधर्म्यमुक्तं तत्र प्रमाप्रमयोः साधर्म्यव्याख्यानमयुक्तमित्यत आह। तदेवमिति। सामान्यविशेषयोरिति। शुक्लभास्वरवद्द्रव्यत्वरजतत्वयोरित्यर्थः। यद्यपि बुद्धिज्ञानपदयोः करणव्युत्पत्त्या प्रमाणमर्थः सम्भवत्येव तथापि कारणस्य सामान्यविशेषविषयत्वं परिच्छेदद्वारेवोन्नीयत इति तस्यापूर्व्वं वाच्यतया भावव्युत्पत्तिमाश्रित्यैव परिहृतं, करणं तु फलद्वारेवान्नेयमिति भावः। नन्वेकस्यैव प्रमात्वाप्रमात्वे विरुद्धे इत्यत आह। न चैकस्येति। जात्येति। ज्ञानत्वसाक्षाद्व्याप्य

विशेषः। नानाविषया चैका बुद्धिर्भवत्येव। ततश्च सैव बुद्धिः स्वरूपावस्थितेनार्थेन निरूप्यमाणा प्रमा। अस्वरूपावस्थितेन तु निरूप्यमाणा ऽप्रमा। अतो भवत्येवाप्रमाणस्यापि सामान्यपरिच्छेदकत्वमिति। अस्ति तावदसमर्थायाः प्रवृत्तेरसाधारणं कारणं तथैवोन्नीयमानं तस्य च व्यापारो विपरीतार्थपरिच्छेद एवासाधारणः। तच्चैवम्भूतव्यापारोपकरणमप्रमाणमिति व्यवह्रियते। एवं च प्रवृत्तिसामर्थ्यासामर्थ्यसन्देहे ऽपि यदि तज्जनकमप्रमाणमसमर्थैव सा। अथ न तदप्रमाणं तज्जन्या प्रवृत्तिरपि नासमर्थेत्यप्रमाणान्नियतः समर्थ-

---

जात्येत्यर्थः। तत्रेति। यथार्थानुभवस्य प्रमात्वान्न तावत्प्रमात्वजातिसङ्कर इत्यर्थः। सो ऽयमिति। जातिकृतत्वे हि विरोधः स्यादित्यर्थः। विषयकृतत्वे ऽपि कुतो न विरोध इत्यत आह। नानेति॥

उक्तन्यायं प्रमात्वाप्रमात्वयोर्योजयति। ततश्चेति। प्रमात्वाप्रमात्वयोर्जातिरूपतायामेकत्र विरुद्धजातिद्वयसमावेशविरोधः स्यादुपाधित्वे तु विषयरूपांशभेदादुभयोपाधिसमावेशे ऽपि नानुपपत्तिरित्यर्थः। सामान्यपरिच्छेदकत्वं सामान्ये विषये प्रमात्वमित्यर्थः। समर्था तु प्रवृत्तिः प्रमाणादेवेति टीकाकृदुक्तमुपपादयन्नाह। अस्तीति। कारणवैचित्र्यं विना कार्यवैचित्र्यानुपपत्ते-

प्रवृत्तिव्यतिरेकः। प्रमाणं चात्रोभयव्यतिरेकग्राहकं विरुद्धकार्यत्वं लिङ्गं प्रकृतकार्यस्य तद्व्यतिरेकग्राहि च प्रत्यक्षमध्यवसेयमिति। नाप्रमाणादर्थव्यभिचारिणोऽर्थव्यभिचारिज्ञानव्यापारादित्यर्थः (१)। सिद्धो व्यतिरेकः किं चात इत्यत आह। तथा चेति। [७।२१]

रित्यर्थः। ननु व्यतिरेकिणि साध्यव्यतिरेकप्रयुक्तसाधनव्यतिरेकज्ञानं गमकमत चादृष्टार्थविषयप्रवृत्तेः सामर्थ्यासामर्थ्यसन्देहे तत्कारणस्यापि प्रामाण्याप्रामाण्यसन्देहात् कथमप्रमाणात् समर्थप्रवृत्तिव्यतिरेकनिश्चय इत्यत आह। एवं चेति। तथापि तज्जनकं यद्यप्रमाणं तदा सा प्रवृत्तिरसमर्थैव। अथ प्रमाणं तदा समर्थैवेत्यत्रैव किं मानमित्यत आह। प्रमाणं चेति। उभयेति। उभयतः-प्रमाणादसमर्थाया अप्रमाणात् समर्थायाः प्रवृत्तेर्व्यतिरेकग्राहकं-विरुद्धकार्यत्वं प्रमाणस्याप्रमाणविरुद्धं कार्यं समर्था प्रवृत्तिरप्रमाणस्य तु प्रमाणविरुद्धं कार्यमसमर्था प्रवृत्तिरित्येवं रूपं तदेव लिङ्गमित्यर्थः। प्रकृतेति। प्रकृतकार्यस्य प्रामाण्यलिङ्गसमर्थप्रवृत्तिरूपस्याप्रमाणादपि व्यतिरेकग्राहकं प्रत्यक्षमेव क्रमेण प्रवृत्तः समर्थप्रवृत्तिव्यतिरेकमसमर्थां प्रवृत्तिं प्रत्यक्षेण जानातीत्यर्थः। ननु ज्ञानस्य व्यभिचारित्वमयथार्थत्वं धर्मो न करणस्येत्यत आह। व्यभिचारीति।

स्फुटावभासित्वे ऽपीति चेदित्यनेनाक्षेपः स्फुटावभासः।

---

(१) नाप्रमाणादर्थव्यभिचारिज्ञानव्यापारादित्यर्थः-इति—२पु० पा०।

अर्थवत्त्वमर्थाव्यभिचारित्वमर्थाव्यभिचार्यनुभवजनकत्वमित्यर्थः।

ननु तस्या इत्यत्र कथमनन्तरत्वेन प्रकृतामसमर्थां विहाय व्यवहितत्वेनाप्रकृतापि समर्थैव प्रवृत्तिः परामृश्यत इत्यत आह। असमर्था त्विति। [७।२६] पूर्वप्रक्रान्तं योग्यमेव प्रकृतमुच्यते न त्वनन्तरोक्तामित्यर्थः। न त्वनूदितस्यानुवादः क्वोपयुज्यत इत्य आह। सम्प्रतीति। [७।२६] पूर्वं व्याख्यातुमिदानीमाक्षेप्तुमित्यर्थः।

आक्षेपसमाधानयोः स्फुटावभासित्वे ऽपि सङ्ग्रहविवरणयोः पौनरुक्त्यं परिहरन्नाह। आक्षिपतीति। [७।२७]

सन्देहादपि तत्र तत्र प्रवृत्तिदर्शनान्निरुक्तासमाक्षेपमुज्जीवयति। न तावदिति। [७।२८]

अमुमेवार्थं भाष्येण संवदति। सेयमिति। [८।३]

उक्ता भाष्यकृतेति शेषः।

किमतो यद्येवमित्यत। आह। न चेति। [८।४]

नेत्यनेन समाधानम्। यद्यपि विभजत इत्यनेनैव सङ्ग्रहविवरणयोः पौनरुक्त्यं परिहृतं, तथाप्याक्षिपतीत्यस्याक्षेपं सङ्गृह्णातीत्यर्थः। तेनानेनापि पौनरुक्त्यं परिह्रियत इत्यर्थः॥

अर्थविनिश्चय-उक्तरूपः श्रेयोहेतुतानुमानसहित इति यावत्। प्रामाण्यावधारणं श्रेयोहेतुतालिङ्ग (१) परामर्शप्रसवोचितमन्तरेणेत्यर्थः।

एवंरूपता च प्रामाण्यावधारणस्य व्याप्तिस्मरणसाहित्यमेवेति तस्यापि बीजं समुच्चिनोति। श्रेयोहेतुतानुमाननिमित्तव्याप्तिग्रहणाच्चेति ।[८।१] ताभ्यां विनेति [८।६] स्वरूपनिश्चयश्रेयोहेतुतानुमानाभ्यां विनेत्यर्थः। व्याप्तिग्रहणानन्तर्येऽपि तत्फलस्यैवानुमानस्य योग्यतया प्रक्रान्तत्वात्। इममेव वार्त्तिकार्थं परिशोधयन् स्फुट-

ननु प्रवृत्तिप्रामाण्यनिश्चययोरेव परस्पराक्षेपतया परस्पराश्रयत्वं किं न व्याख्यायत अत आह। सन्देहादपीति।

ननु प्रामाण्यावधारणं विनाऽपि चक्षुरादिनाऽर्थनिश्चयो भवत्येवेत्यत आह। उक्तरूप इति। तदेव विवृणोति। श्रेयोहेतुतेति।

नन्वनुमित्युत्पत्त्यनन्तरं तत्प्रामाण्यावधारणं न तु ततः प्रागेवेत्यत आह। श्रेयोहेतुतेति। अनुमितिहेतुलिङ्गपरामर्शप्रामाण्यावधारणमनुमितेः प्रागेव, तदभावे लिङ्गानिश्चयेनानुमित्यनुत्पत्तेरित्यर्थः।

ननु समर्थप्रवृत्तिप्रामाण्यावधारणयोरेव परस्परापेक्षितयाऽन्योन्याश्रयोपपत्तौ किं व्याप्तिग्रहणान्तर्भावेणेत्यत आह। एवं

(१) श्रेयोहेतुतालिङ्गपरामर्शेति २ पु० पा०।

| Title | Rs. | As. |
|---|---|---|
| *Markandeya Purana, Fasc. 5-7 @ /10/ each ... ... ... | Rs. 1 | 14 |
| *Mimāṁsā Darçana, Fasc. 10-19 @ /10/ each ... ... ... | 6 | 4 |
| *Nyāyavārtika, Fasc. 1--6 @ /10/ each ... ... ... ... | 3 | 12 |
| *Nirukta, Vol. IV. fasc. 1-8 @ /10/ each ... ... ... | 5 | 0 |
| *Nitisara, Fasc. 3-5 @ /10/ each ... ... ... ... | 1 | 14 |
| Nityācārapaddhatiḥ, Fasc. 1--7 @ /10/ each ... .. ... | 4 | 6 |
| Nityācārapradīpaḥ Vol. I. Fasc. 1--8 ; Vol. II, Fasc. 1-3. @ /10/ each ... | 6 | 14 |
| Nyayabindutikā, Fasc. 1 @ /10/ each .. ... ... | 0 | 10 |
| *Nyāya Kusumāñjali Prakaraṇa Vol. I, Fasc. 2--6 ; Vol. II, Fasc. 1--3 @ /10/ each ... ... ... ... ... | 5 | 0 |
| Nyayasarah ... ... ... ... ... ... | 2 | 0 |
| Padumawati, Fasc. 1--5 @ 2/ ... ... ... ... | 10 | 0 |
| *Pariçista Parvan, Fasc. 3--5 @ /10/ each ... ... ... | 1 | 14 |
| Prākrita-Paingalam, Fasc. 1--7 @ /10/ each ... ... ... | 4 | 6 |
| Prithivirāj Rāsa. Part II, Fasc. 1--5 @ /10/ each ... ... ... | 3 | 2 |
| Ditto (English) Part II, Fasc. 1 @ 1/- ... ... ... | 1 | 0 |
| Prākrta Lakṣaṇam Fasc. 1 @ 1/8/ each .. .. ... ... | 1 | 8 |
| Parāçara Smṛti, Vol. I, Fasc. 1--8 ; Vol. II, Fasc. 1--6 ; Vol III, Fasc. 1--6 @ /10/ each ... ... ... ... | 12 | 8 |
| Parāçara, Institutes of (English) @ 1/- each ... ... ... | 1 | 0 |
| Pariksamukha Sutram ... .. ... ... ... | 1 | 0 |
| Prabandhacintāmaṇi (English) Fasc. 1--3 @ 1/4/ each ... ... | 3 | 12 |
| Rasarnavam, Fasc. 1-3 ... ... ... ... | 3 | 12 |
| Saddarsana-Samuccaya, Fasc. 1-2 @ /10/ each ... ... ... | 1 | 4 |
| Samaraiecca Kaha Fasc. 1-3, @ /10/ ... ... ... ... | 1 | 14 |
| Sāṅkhya Sūtra Vṛtti, Fasc. 1--4 @ /10/ each ... ... ... | 2 | 8 |
| Ditto (English) Fasc. 1--3 @ 1/- each ... ... | 3 | 0 |
| *Sankara Vijaya, Fasc. 2-3 @ /10/ each ... ... ... | 1 | 4 |
| Six Buddhist Nyaya Tracts. ... ... ... ... | 0 | 10 |
| Srāddha Kriyā Kaumudī, Fasc. 1-6 @ /10/ each ... ... ... | 3 | 12 |
| Sragdharā Stotra ( Sanskrit and Tibetan ) ... ... ... | 2 | 0 |
| Suçruta Saṁhita, (Eng.) Fasc. 1 @ 1/- each ... ... ... | 1 | 0 |
| Suddhikaumudī, Fasc 1-4 @ /10/ each .... .... ... ... | 2 | 8 |
| Sundaranandam Kavyam ... ... ... ... ... | 1 | 0 |
| Suryya Siddhanta fasc. 1 ... ... ... ... ... | 1 | 4 |
| Syainika Sastra ... ... ... ... ... ... | 1 | 0 |
| *Taittreya Brahmana, Fasc 11-25 @ /10/ each ... ... ... | 9 | 6 |
| ,, Pratisakhya, Fasc 1-3 @ /10/ each ... ... ... | 1 | 4 |
| *Taitterīya Saṁhitā, Fasc 27--45 @ /10/ each ... ... ... | 11 | 14 |
| Tāṇḍya Brāhmaṇa, Fasc 10--19 @ /10/ each ... ... ... | 6 | 14 |
| Tantra Vārteka (English) Fasc. 1-8 @ 1/4/ each .. ... ... | 10 | 0 |
| Tattva Cintāmaṇi, Vol. I, Fasc. 1--9, Vol II, Fasc. 1-10, Vol. III, Fasc. 1-2, Vol. IV. Fasc. 1, Vol. V, Fasc. 1--5, Part IV. Vol II, Fasc. 1-12 @ /10/ each | 24 | 6 |
| Tattva Cintamani Didhiti Vivriti, Fasc, 1, @ /10/ each ... ... | 0 | 0 |
| Ditto Prakas, fasc. 1-2, @ /10/ each ... ... | 1 | 4 |
| Tattvārthadhigama Sutram, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| Tithacintamoni, fasc, 1, @ /10/ each ... ... ... | 0 | 10 |
| Trikāṇḍa-Maṇḍanam, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| Tulsi Satsai, Fasc, 1--5 @ /10/ each ... ... ... | 3 | 2 |
| Upamita-bhava-prapañca-kathā, Fasc. 1-2, 5-13 @ /10/ each ... ... | 6 | 14 |
| Uvāsagadasāo, (Text and English) Fasc. 1--6 @ 1/- each ... ... | 6 | 0 |
| Vallāla Carita, Fasc 1 @ /10/ ... ... ... | 0 | 10 |
| Varṣa Kriyā Kaumudī, Fasc 1--6 @ /10/ each ... ... ... | 3 | 12 |
| *Vāyu Purāṇa, Vol. I, Fasc. 3--6 ; Vol. II, Fasc 1--7, @ /10/ each ... | 6 | 14 |
| Vidhāna Pārijata, Fasc. 1-8 Vol- II Fasc. 1 @ /10/ each ... ... | 5 | 10 |
| Ditto Vol. II, Fasc. 2-4 @ 1/4/ ... ... ... | 3 | 12 |
| Vivādaratnākara, Fasc. 1--7 @ /10/ each ... ... ... | 4 | 6 |
| Vṛhat Svayambhū Purāṇa, Fasc. 1--6 @ /10/ each .. ... ... | 3 | 12 |
| *Yoga Aphorisms of Patanjali, Fasc. 3-5 @ /10/ each ... ... | 1 | 14 |
| Yogasāstra of Hemchandra Vol. I, Fasc. 1-3 ... ... | 3 | 12 |
| ***Tibetan Series.*** | | |
| Baudhyastotrasangraha, Vol. I ( Tib. & Sans. ) ... ... ... | 2 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1--4 @ 1/- each ... ... | 4 | 0 |
| Nyayabindu of Dharmakirti, Fasc. 1 ... ... ... ... | 1 | 0 |
| Pag-Sam S'hi Ṭiñ, Fasc. 1--4 @ 1/- each ... ... ... | 4 | 0 |
| Rtogs brjod dpag hkhri S'iñ ( Tib. & Sans. Avadāna Kalpalā Vol. I, Fasc. 1--8 ; Vol. II. Fasc. 1--7 @ 1/- each ... ... | 15 | 0 |
| Sher-Phyin, Vol. I, Fasc 1-5 ; Vol. II, Fasc. 1-3 ; Vol. III, Fasc 1-6, @ 1/ each | 14 | 0 |
| ***Arabic and Persian Series.*** | | |
| *Ālamgirnāmah, with Index, (Text) Fasc. 1--13 @ /10/ each ... ... | 8 | 2 |
| Al-Muqaddasi (English) Vol I, Fasc 1--4 @ 1/- each ... ... | 4 | 0 |
| Akbarnāmah, with Index, Fasc. 1--37 @ 1/8/ each... ... | 55 | 8 |

Ain-i-Akbari, Fasc. 1-22 @ 1/8/ each ... ... ... ... 33 0
Ditto (English) Vol. I, Fasc. 1-7, Vol. II, Fasc. 1-5, Vol. III, ... 36 0
Ditto (English) Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-7 Vol 3 @ 1/4/ each 20 0
Arabic Bibliography, by Dr. A. Sprenger, @ /10/ ... ... 0 10
*Bâdshâhnâmah, with Index. Fasc. 1-19 @ /10/ each ... ... 11 14
Conquest of Syria, Fasc. 1-9 @ /10/ each ... ... Rs. 5 10
Catalogue of Arabic Books and Manuscripts, 1-2 @ 1/- each ... ... 2 0
Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1-3 @ 1/ each .. ... ... 3 0
Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1-21 @ 1/8/ each 31 8
Farhang-i-Rashidi, Fasc. 1-14 @ 1/8/ each ... ... ... 21 0
Fihrist-i-Tûsi, or, Tûsy's list of Shy'ah Books, Fasc. 1-4 @ 1/- each ... 4 0
Futûh-ush-Shâm of Wâqidi, Fasc. 1-9 @ /10/ each ... ... 5 10
Ditto of Azâdi, Fasc. 1-4 @ /10/ each ... ... ... 2 8
History of Gujarat ... ... ... ... ... 1 0
Haft Asmân, History of the Persian Masnawi, Fasc. 1 @ /12/ each ... 0 12
History of the Caliphs, (English) Fasc. 1-6 @ 1/4/ each ... ... 7 8
Iqbâlnamah-i-Jahângiri, Fasc. 1-3 @ /10/ each ... ... ... 1 14
Iṣâbah, with Supplement, 51 Fasc. @ 1/- each ... ... ... 51 0
Ma'âsir-i-Âlamgiri, Fasc 1-6 @ /10/ each ... ... 3 12
Maa'âsir-ul-Umarâ, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-9; Vol. III, 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. II, Fasc. 10-12; Index to Vol. III, Fasc. 11-12 @ /1/ each ... ... ... 35 0
Maghâzi of Wâqidi, Fasc. 1-5 @ /10/ each ... ... ... 3 2
Marhamu 'L-Ilali 'L-Mu'Dila ... ... ... 1 0
Muntakhabu-t-Tawarikh, Fasc. 1-15 @ /10/ each ... ... ... 9 6
Ditto (English) Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5 and 3 Indexes; Vol. III, Fasc 1 @ 1/ each ... ... ... 16 0
Muntakhabu-l-Lubâb, Fasc. 1-19 @ /10/ each ... ... ... 11 14
Ditto Part 3, Fasc. 1 ... ... ... ... 1 0
Nukhbatu-l-Fikr, Fasc. 1 @ /10/ ... ... ... 0 10
Nigâmi's Khiradnâmah-i-Iskandari, Fasc 1-2 @ /12/ each ... ... 1 8
Qawaninu 's-Sayyad of Khuda Yar Khan 'Abbasi, edited in the original Persian with English notes by Lieut. Col. D. C. Phillott ... ... 5 0
Riyâzu-s-Salâtin, Fasc 1-5 @ /10/ each ... ... ... ... 3 2
Ditto (English) Fasc. 1-5 @ 1/ ... ... ... 5 0
Tadhkira-i-khushnavisân ... ... ... ... 1 0
Tabaqât-i-Nâsiri, (English), Fasc. 1-14 @ 1/- each ... ... 14 0
Ditto Index ... ... ... ... 1 0
Târikh-i-Firûz Shâhi of Ziyâu-d-din Barni Fasc. 1-7 @ /10/ each .. 4 6
Târikh-i-Firûzshâhi, of Shams-i-Sirâj Aif. Fasc. 1-6 @ /10/ each ... 3 12
Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ... ... ... 3 0
Tuzuk-i-Jahângiri, (Eng) Fasc. 1 @ 1/ ... ... ... ... 1 0
Wis-o-Râmin, Fasc. 1-5 @ /10/ each ... ... ... ... 3 2
Zafarnâmah, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-8 @ /10/ each ... ... 10 10

---

## ASIATIC SOCIETY'S PUBLICATIONS.

1. Asiatic Researches. Vols. XIX and XX @ 10/ each ... ... 20
2. Proceedings of the Asiatic Society from 1870 to 1904 @ /6/ per No
3. Journal of the Asiatic Society for 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7), 1901 (7), 1902 (9), 1903 (8), 1904 (16), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members

*N. B.—The figures enclosed in brakets give the number of Nos in each Volume.*

4. Journal and Proceedings, N. S., 1905, to date, (Nos. 1-4 of 1905 are out of stock), @ 1-8 per No. to Members and Rs. 2 per No. to Non-Members.
5. Memoirs, 1905, to date. Price varies from number to number, Discount of 25% to Members
6. Centenary Review of the Researches of the Society from 1784-1883 ... 3 0
7. Catalogue of the Library of the Asiatic Society, Bengal, 1910, ... 3 0
8. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts 1-III, with 8 coloured Plates, 4to. @ 6/ each ... ... 18 0
9. Kaçmiraçabdâmrta, Parts I & II @ 1/8/ ... ... ... 3 0
10. Persian Translation of Haji Baba of Ispahan, by Haji Shaikh Ahmad-i-Kirmani, and edited with notes by Major D. C. Phillott. ... 10 0

---

Notices of Sanskrit Manuscripts, Fasc. 1-34 @ 1/ each ... ... 34 0
Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... 5 0

*N.B.*—All Cheques, Money Orders, &c. must be made payable to the "Treasurer Asiatic Society," only.

**BIBLIOTHECA INDICA:**

# A COLLECTION OF ORIENTAL WORKS

**PUBLISHED BY THE ASIATIC SOCIETY OF BENGAL.**

NEW SERIES No. 1313.




# न्यायवार्त्तिकतात्पर्यपरिशुद्धिः ।

श्रीमदुदयनाचार्यविरचिता ।

श्रीवर्द्धमानोपाध्यायविरचित-न्यायनिबन्धप्रकाशाभिध-व्याख्यायुता ।

# NYĀYA-VĀRTTIKA-TĀTPARYA-PARIŚUDDHI

BY UDAYANĀCHĀRYA

With a gloss called Nyāya-nibandha-prakāśa by Varddhamānopādhyāya

EDITED BY

Pandit Vindhyeśvarī Prasād Dvivedin

*Librarian Govt. Sanskrit College, Benares.*

AND

Pandit Lakshamana Śāstri Drāvida

*Professor, Govt. Sanskrit College Calcutta.*

**FASCICULUS II.**

**CALCUTTA:**

PRINTED BY UPENDRA NATHA CHAKRAVARTI, AT THE SANSKRIT PRESS,

No. 5, Nandakumar Chaudhury's 2nd Lane,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 1, PARK STREET.

1911.

यति। तदिदमुक्तमिति ।[८।७] निश्चयानुमाने न प्रामाण्यावधारणानुमानबीजभूतव्याप्तिग्रहणाभ्यां विना, ते च न प्रवृत्त्या विना, प्रवृत्तिश्च न निश्चयानुमानाभ्यां विनेत्याक्षेपसङ्क्षेपः (१)।

इह च द्विविधा प्रवृत्तिः ऐहिकफला ऽऽमुष्मिकफला च। तत्रामुष्मिकफला प्रामाण्यावधारणपूर्विकैव। ऐहिकफला त्वपेक्षितोपायताज्ञानमात्राधीना अर्थनिश्चयमपि नापेक्षते, प्रागेव प्रामाण्यस्वरूपज्ञानं, कुतस्तरां तद्विनिश्चयम्। यत्रापि प्रवृत्तेः प्रागेव प्रमाणतत्त्वविनिश्चयः तत्राऽप्यसौ स्वहेतुबलादायातो न प्रवृत्तिं प्रति प्रयोजको ऽन्यथैकान्तिकविजयानिश्चये

---

रूपता चेति। प्रक्रान्तत्वादिति। समर्थप्रवृत्तिजनकत्वस्य प्रस्तुतत्वादित्यर्थः। निश्चयश्चानुमानञ्च निश्चयानुमाने। ते चेति। ते हे प्रामाण्यावधारणानुमानबीजभूतव्याप्तिग्रहणे इत्यर्थः। "समाधानं विभजत" इति टीकायां समाधीयते ऽनेनेति समाधानं-सिद्धान्तवाक्यं तस्यैव व्याख्येयत्वात्। अत एव पूर्वमाक्षेपवाक्यं विभजत इत्युक्तम्। विभजते-व्यक्तीकरोतीत्यर्थः।

ऐहिकफला त्विति। सन्देहाद्विषयादप्यगृहीतप्रामाण्यात् प्रवृत्तिदर्शनादित्यर्थः। अन्यथेति। यत्रापि युक्तिसमीचीनत्व-

---

(१) आक्षेपसंक्षेपः – पा० २ पु०।

प्रामाण्याक्षेपक एव विजिगीषुः कथायां न प्रवर्त्तेत। तस्मादर्थानिश्चये ऽपि प्रवृत्तिरित्युभयवादिसिद्धं हृदि निधाय सिद्धान्तमुपक्रमते। तत्र ब्रूम इति ॥ [८।११]

दृष्टार्थेष्विति अदृष्टार्थागमादिव्युदासः तत्र प्रवृत्तेः फलाभिसम्बन्धानिश्चयात्। अनभ्यासदशापन्नेष्वित्यभ्यासदशापन्नपितृवचनादिव्युदासः। ते हि प्रमाणतया प्रवृत्तेः प्रागेव निश्चीयन्ते। अभ्यासश्चाऽविपरीतो विवक्षितः। तेन स्वात्मन्यभ्यासे ऽपि प्रवृत्तिसामर्थ्यादेव तन्निश्चयो ऽविपरीताभ्यासविरहात्। स च विषय-

---

निश्चयाद्विजयनिश्चयस्तत्रापि स स्वहेतुबलायातो न प्रवृत्तिप्रयोजकस्तं विनापि विजयसन्देहात् प्रवृत्तिदर्शनादित्यर्थः। "सत्यं न स्वतः प्रामाण्यावधारण"मिति टीकायां परतः प्रामाण्यावधारणे ऽन्योन्याश्रयात् स्वत एव प्रामाण्यावधारणमितीत्थमङ्गीक्रियेतापि, किं तु तदयुक्तयुक्त्या निरस्तमित्यभिप्रेत्य तदप्यनूदितम्। "प्रवृत्तिसामर्थ्यादेवे"ति टीकायामेवकारेण तज्जातीयत्वमात्रव्युदासः। अनभ्यासदशापन्ने ऽपि क्वचिदाप्तवाक्यात् प्रामाण्यावधारणात् ॥

तेनेति। आत्मनः शरीरतया ऽभ्यासे ऽपि न तस्य शरीरत्वनिश्चय एवमन्यत्रापि भ्रमाभ्यास इत्यर्थः। एतच्च तज्जातीयत्वग्राह्यप्रामाण्यव्यतिरेकपरम्। वस्तुतो भ्रमाभ्यासे प्रवृत्तिसामर्थ्यस्याप्यभाव एव। स चेति। स चाभ्यासः क्वचिद्विषयगोचरो

गोचरस्तन्नान्तरीयकार्थगोचरो वा तज्जातीयत्वावधारणोपायो यत्र स्वरूपतो ऽपि नास्ति तत्र प्रवृत्तिसामर्थ्यादेव तद्गोचरस्य प्रामाण्यावधारणं, यथा वैद्यवचनादनर्थनिवृत्तिं सम्भावयतो ऽसंस्तुतप्रदेशस्थितेषु (१) मूलेषु, यत्र तु स्वरूपाभ्यासो ऽस्त्येव तद्गतं तु श्रेयःसाधनत्वमनभ्यस्तं तत्र प्रवृत्तिसामर्थ्येन तत्साधनत्वग्राहिणः प्रामाण्यं, यथा ऽग्निः पाकादिसमर्थ इति सम्भाविताप्तत्वस्य वचनादुपलभ्य स्वयं पचतः। यत्रापि श्रेयःसाधनत्वाभ्यासः स्वरूपे त्वनभ्यासस्तत्रापि स्वरूपगोचरस्यैव प्रामाण्यं प्रवृत्तिसामर्थ्यादवसीयते, यथा

यथा कुड्याद्येकव्यक्तिगोचरः, क्वचिद्विषयनान्तरीयकधर्मगोचरो यथा पृथिवीत्वनान्तरीयकगन्धगोचरः प्रामाण्यानुमितिजनकपरामर्शगोचरतज्जातीयत्वावधारणोपाय इत्यर्थः। स्वरूपतो ऽपीति। अपिः श्रेयःसाधनत्वाभ्याससमुच्चये। असंस्तुतेति। परिचितप्रदेशस्थस्य पूर्वं प्रत्यक्षादिना ऽनुभूतत्वेनाभ्यस्तत्वात्। ततश्चासंस्तुतप्रदेशस्थेनानेन मूलेन ज्वरो नश्यतीति श्रुतवैद्यवचनः प्राप्य मूलं ज्वरनाशं चासाद्य वैद्यवाक्यजबुद्धेः प्रामाण्यं निश्चिनोतीत्यर्थः। यत्र त्विति। यत्र वह्निगोचरो ऽभ्यासो ऽस्त्येव पाकसाधनत्वगोचरो नास्ति तत्राप्तवचनात् प्रवृत्तः पाकमासाद्या ऽऽप्त-

(१) असंस्कृतप्रदेशस्थितेषु इति २ पु० पा०।

ऽग्निः पाकादिसमर्थ एवेति निश्चितवतो ऽपरिचितवनवह्नौ। सर्वत्रैवार्थभूयस्त्वं विपर्यये त्वनर्थमान्द्यं सम्भावयतः प्रवृत्तिः स्वरूपश्रेयःसाधनत्वनिश्चये ऽपि फलसन्देह इवेत्याह। नो खल्विति ॥ [८।११]

तदमी संशयाना अपि प्रवर्त्तमानाः फल इव स्वरूपश्रेयःसाधनत्वयोरिति शेषः। प्रमाणस्य-स्वरूप-

वाक्यस्य प्रामाण्यं निश्चिनोतीत्यर्थः। अपरिशीलितेति (१)। वह्निः पाकसमर्थ इत्यभ्यासेनापरिचितवनवह्नौ प्रवृत्तः फलमासाद्य तज्ज्ञानप्रामाण्यं निश्चिनोति न तु प्रागेवेत्यर्थः। ननु प्रकृते प्रवर्त्तकज्ञानप्रामाण्यसन्देहादुपायत्व एव सन्देहः यत्र च फलसन्देहात् प्रवृत्तिस्तत्रोपायतायां निश्चय एवेति वैषम्यमित्यत आह। सर्वत्रैवेति। अर्थभूयस्त्व-मनिष्टापेक्षया इष्टस्य बलवत्त्वं, विपर्यये फलाभावे अनिष्टस्य लघुत्वमित्येतावन्मात्रं दृष्टान्तदार्ष्टान्तिकयोः साधर्म्यं पुरस्कृत्यैतदुक्तमित्यर्थः ॥

अत एवानुरूपं विशेषमाह। फल इवेति। यद्यपि "प्रामाण्यं विनिश्चित्ये"त्यग्रिमटीकादर्शनात् प्रामाण्य इति शेषो दातुमुचितस्तथापि प्रामाण्यसंशयाहित एव स्वरूप एव श्रेयःसाधनत्वसंशये तात्पर्यम्। तस्य प्रमाणविषयत्वमिति वक्ष्यते तथा च

(१) कचित्पुस्तके ऽपरिशीलितवनवह्नौ इति पाठस्तदनुसारेण अपरिशीलितेति पाठो युक्तः।

ग्राहिणः श्रेयःसाधनत्वग्राहिणश्चेत्यर्थः । तत्त्वं-प्रमाणत्वम् अर्थाव्यभिचारिप्रमासाधनत्वमिति यावत् । विनिश्चित्यार्थाव्यभिचारिप्रमाविनिश्चयद्वारेणेति शेषः । तज्जातीयस्यान्यस्यैतावतैव समर्थत्वे ऽभ्यासदशापन्नस्येति दृष्टार्थप्रमाणसंग्रहार्थम् । तेनायमर्थः यद्यपि दृष्टार्थेष्वभ्यासदशापन्नेष्वपि प्रवृत्तिसामर्थ्यमस्ति तेनापि प्रामाण्यमवधारयितुं तत्र शक्यते, तथापि तज्जातीयत्वलक्षणेनैव लिङ्गेन प्रवृत्तेः प्रागेवावधारिते प्रामाण्ये तत्प्रमातुरुत्तरकालं प्रमित्सैव नास्ति, तन्निबन्धनत्वाच्चानुमानप्रवृत्तेः । यदि पुनः प्रमित्सानपेक्षं समर्थप्रवृत्तिजन-

---

प्रमाणतत्त्वं भ्रमे द्रव्यत्वादिकमस्तीत्यत आह । प्रमाणत्वमिति । प्रमाणपूर्वकत्वात् तत्परामर्शं इत्यर्थः । प्रमाणत्वं प्रमात्वं मा बोधीत्यत आह । अर्थेति । अर्थाव्यभिचारिप्रमासाधनत्वमित्यत्र प्रमापदमनुभवमात्रपरमतो न पौनरुक्त्यम् । न च प्रमाणपदस्यात्र कारणपरत्वे "संवेदनस्यार्थाव्यभिचारिताकथनेन तत्कारणानामव्यभिचारित्वमुक्तं वेदितव्य"मित्यग्रिमटीकाविरोधः, अत्र विशेषणमात्रे प्रमायां तात्पर्यात् अन्योन्यस्यैवार्थस्याग्रे उपसंहारादिति भावः । तथाप्यौपयिकं प्रामाण्यं कथं निश्चेयमित्यत आह । अर्थेति ॥

कत्वं परामृश्यते तदा का क्षतिः तेनाप्यनुमीयतां प्रामाण्यं, प्रमाणसंप्लवस्यापि व्यवस्थापितत्वात् ॥

ननु किमिदं तज्जातीयत्वं ? न तावत्प्रमाणजातीयत्वं साध्याविशिष्टत्वप्रसङ्गात् । नापि समर्थप्रवृत्तिजनकजातीयत्वं, तद्धि समर्थप्रवृत्तिसम्बन्धो वा स्यात् तदुपहितो वा नियतप्राग्भावः । न तावदाद्यः प्रवृत्तेः प्रागेवेति वचनात् । नाप्युत्तरः तस्याप्यतीन्द्रियस्य लिङ्गं विना प्रत्येतुमशक्यत्वात् । लिङ्गं च तस्य प्रामाण्यैकनियतस्य यद्यस्ति तदा प्रामाण्यमेवानुमीयतां किं तज्जातीयत्वानुमानेन । प्रमाणानियतस्य तु(१) तस्यानुमानेन किम् ।

---

तेनापीति । यदा पुरुषान्तरेण जिज्ञास्यते तदा स्वयं प्रमित्साविरहे ऽपि परप्रबोधनार्थमित्यर्थः ॥

तदुपहितः तन्निरूपितः । प्राग्भावः-पूर्ववर्त्तिजातीयत्वम् । तस्याऽप्यतीन्द्रियस्येति । न चान्वयव्यतिरेकावेवोक्तौ तौ च प्रत्यक्षावेवेति वाच्यम् । प्रमात्वेनैवावच्छेदकेन तयोर्ग्रहात् तदग्रहे तयोरप्यग्रहात् । अवच्छेदकान्तरात् तु तद्ग्रहे तेनैव प्रामाण्यानुमानापत्तेरिति भावः । प्रामाण्यमेवेति । व्याप्यव्याप्यस्य तेनापि नियमादित्यर्थः । प्रामाण्यानियतस्य त्विति । प्रामाण्यानुमित्यर्थं

---

(१) प्रामाण्यानियतस्य त्विति —पा० २पु० ।

नापि प्रत्यक्षसिद्ध एव कश्चिद्धर्मस्तज्जातीयत्वं, प्रत्यक्षत्वे तस्यानभ्यासदशापन्नगोचरे ऽपि प्रमाणे प्रतीतिप्रसङ्गात्। तथा च प्रवृत्तेः प्रागेव तत्रापि प्रामाण्यावधारणं स्यात्, व्याप्तेरपि प्रागेव प्रतीतत्वात्। न ह्ययं क्वचिदपि तज्जातीयत्वेन प्रामाण्यं नानुमितवान्। तत्र नास्त्येव तज्जातीयत्वं कुतः प्रत्यक्षेण प्रतीयमानता तस्येति चेत्। न। अभ्यासदशापन्नेषु तज्जातीयत्वेन प्रामाण्ये ऽनुमीयमाने प्रवृत्तिसामर्थ्यानुमितप्रामाण्यस्य साधनविकलतया दृष्टान्ताभासत्वप्रसङ्गात्। तस्मात्तज्जातीयत्वमनतिप्रसक्तं (१) न पश्याम इति।

सत्यं तथापि ज्ञानस्य विषयनिबन्धनत्वात् तत्तद्विषयोपाधय एव ते ते ज्ञानोपाधयस्तैरुपधीयमानं ज्ञानमेव तज्जातीयं तस्य भावस्तत्त्वं भवति, ते चोपाधयः प्रतिभेदं स्वसंज्ञाभिरभिधातुमशक्या इति तज्जातीयत्वमित्यनया वाचोभङ्ग्या दर्शिताः। अत एवात्र वीप्सा

---

तज्जातीयत्वानुमानात् प्रामाण्यनियमेन च प्रामाण्यानुमानात् व्यर्थं तदनुमानमित्यर्थः। तत्र नास्त्येवेति। अनभ्यासदशापन्नगोचरे प्रमाण इत्यर्थः।

---

(१) तज्जातीयत्वमतिरिक्तम् इति पु० २ पा०।

द्रष्टव्या तत्तज्जातीयत्वमिति। तथाहि-अनुभवस्तावत् स्वरूपप्रकारावालम्बते। तत्र धर्मिस्वरूपेणोपधीयमानो ऽनुभवः प्रमैवेति तेन रूपेणानुभूते तस्मिन् प्रमात्वमेवानुभूतं भवतीत्यग्रे स्फुटीभविष्यति। प्रकारविषयस्त्वनुभव उभयथा, कश्चित् स्वरूपप्रकारेणोपधीयते कश्चिदस्वरूपप्रकारेणापीत्यतः क्वचित् संशयः। तत्र स्वरूपप्रकारेणोपहितमनुभवं विवेक्तुं विशिष्टाः प्रकारोपाधयो भवन्ति। ते च नियमेन विभ्रमविषयविरोधितया निर्धारितस्वभावभेदा गुणादय एव। तदिदं सामान्यतस्तावल्लक्षणसहचरितलक्ष्यविषयज्ञानत्वमेव ज्ञानगतं तज्जातीयत्वमिति प्रत्यक्षे गतिः। यदा त्वप्रत्यक्षे लक्ष्ये लक्षणेन ज्ञानं जन्यते तदा ऽनुमानं तदिति तस्यान्यथैव गतिर्भविष्यतीति। तत्र द्रव्ये गन्धवति पृथिवीज्ञानमित्यादि सामान्यतः,

---

विषयोपाधय एवेति। उपलक्षणमिदं शाब्दज्ञानविषयस्याऽऽप्तोक्तत्वादेस्तज्जातीयत्वेनाग्रे ऽभिधानात्॥ ननु न केऽपि गुणादयो विभ्रमविरोधितया निर्धारितस्वभावा अस्मतः स्वप्ने ऽपि तदाऽऽकलनादित्यत आह। तदिदमिति। यत्र च लक्षणवदेव लक्ष्यमन्यत्रारोप्यते तत्र यथा न व्यभिचारस्तथा ऽग्रे वक्ष्यामः। तत्रेति।

करचरणादिमति शरीरज्ञानमिति विशेषतः, गुणेषु केतक्यादौ सौरभज्ञानं, शङ्खादौ श्वेतज्ञानमित्यादि, कर्मणि च वातुलेन तिष्ठता तीव्रवेगासंस्कृतेन चलज्जलादिस्वच्छविलोकनविरहिणा यद्द्रव्यं चलतीत्युपलभ्यते तत्तथेति ॥

एवं तेषु विशेषेषु ते ते विशेषा व्यभिचारविरोधिनो न प्रतिपदमनुक्रमितुं शक्यन्ते। तदेवं तत्त-

---

तत्र तेषु तज्जातीयेषु मध्ये द्रव्ये तावत्तज्जातीयत्वमित्यर्थः। न च गन्धान्तरवति गन्धान्तरवत्त्वज्ञानेषु व्यभिचारः पृथिव्यंशे तेषामपि प्रमात्वात्। ननु करचरणवति शरीरज्ञानत्वादित्यत्र करचरणवत्त्वं नोपलक्षणं व्यावृत्तोपलक्ष्याभावात्। न विषयतया ज्ञानविशेषणं, करचरणवत्त्वप्रकारकज्ञानत्वस्य भ्रमेऽपि सत्त्वात्। इदं शरीरमिति ज्ञाने शरीरत्वप्रकारकतया तदसिद्धेश्च। नापि विषयविशेषणं करचरणवद्विषयकशरीरज्ञानत्वस्य व्यभिचारात् शरीरभ्रमस्यापि वस्तुतः करादिमद्विषयकत्वात्। नापि करादिशून्ये यच्छरीरत्वेन ज्ञानं तदन्यत्वे सतीति विवक्षितं शून्य इत्यत्र विषयत्वं सप्तम्यर्थ इति करादिशून्यविषयकशरीरज्ञानान्यशरीरज्ञानत्वादित्यर्थः, तथा चासिद्धिः शरीरज्ञानस्य तच्छून्यशरीरत्वादिविषयत्वनियमात्। मैवम्। करचरणवद्विशेष्यकशरीरत्वप्रकारकज्ञानत्वस्य लिङ्गत्वात् शरीरभ्रमे करचरणवतः शरीरस्य विशेषणत्वात्। यत्र चक्रवत्

दुपाधिविशिष्टतत्तदनुभवत्वमेव तत्तज्जातीयत्वमिति मन्तव्यम् ॥

तदेवम्भूतस्य ज्ञानस्य विषयनान्तरीयकत्वेनोपाध्यभ्यास एवाभ्यासदशापन्नत्वम् । यत्र तु स एवार्थो भूयोभूयो ऽभ्यस्तस्तत्र संवादवत्त्वमेव तज्जातीयत्वम् । संवादश्च समानासमानजातीयप्रमाणप्रसर इत्यादि प्रागेव दर्शितमिति ।

एवं तावत् बाह्यप्रत्यक्षं समर्थितम् । प्रत्यक्षसमानन्यायतया आगमस्य प्रामाण्यं समर्थयति । एवं चेति ॥ [८।१७]

अत्रापि तज्जातीयत्वमाप्तप्रणेतृकत्वम् । अभ्यासदशापन्नत्वं पुनरेतस्य भूयोदर्शनेन मन्त्रायुर्वेदे तज्जातीयत्वस्य प्रामाण्याविनाभावसिद्धिः मन्त्रायुर्वेदस्याऽन-

---

भ्रमिं कृत्वा पूर्ववेगप्रभवाग्रिमवेगरूपसंस्कारवता निश्चलमपि चलमुपलभ्यते तत्र व्यभिचारवारणायोक्तं तीव्रवेगासंस्कृतेनेति ॥

स एवार्थ इति । सैव व्यक्तिरित्यर्थः ॥

ननु प्रत्यक्षप्रामाण्यसमर्थनानन्तरं क्रमानुरोधेनानुमानप्रामाण्यसमर्थनमुचितं तत्किमागमप्रामाण्यं समर्थ्यत इत्यत आह । एवं तावदिति ॥

भ्यासदशापन्नत्वं तदसिद्धिः । यथा च प्रामाण्यं प्रवृत्ति-सामर्थ्येनावधार्यते ऽनभ्यासदशापन्नेषु तथा ऽप्रामाण्य-मपि प्रवृत्तिविपर्य्ययेण । यथा च प्रवृत्तेः प्रागेवाभ्यास-दशापन्नेषु तज्जातीयतया प्रामाण्यमवधार्य्यते तथा ऽप्रामाण्यमपीति मन्तव्यम् । उपाधिविरोधश्च तज्जाती-यत्वं, तदभ्यास एवाभ्यासदशापन्नत्वं, यथा चन्द्रमसि चन्द्रद्वयज्ञानं, शङ्खे पीतज्ञानं, गुडे तिक्तज्ञान,-मित्यादि । तस्मात् सन्दिग्धे प्रवृत्तिसामर्थ्यमव-तारणीयमिति (१) ॥

आप्तप्रणेतृकत्वमिति । यद्यप्याप्तत्वं नाविप्रलम्भकत्वं तदुक्ते ऽपि व्यभिचारात्, नाप्यभ्रान्तत्वं सर्वविषयाभ्रान्तेरसम्भवात् भ्रान्तेः पुरुषधर्मत्वात्, यत्र क्वचिदभ्रान्तत्वमनाप्तस्यापि । प्रकृत-विषयाभ्रान्तत्वं चासिद्धम्, नापि गुणवत्त्वं गुणस्यैवानिर्वच-नात् । तथापि वेदे मन्वायुर्वेदैककर्तृकत्वं वेदत्वमेव वाऽऽप्तोक्तत्वं अन्यत्र मन्वाद्युक्तस्मृतित्वमेवेति मन्तव्यम् । अनेन मन्त्रेणेदं भव-तीति प्रतिपादको वेदो मन्त्रवेदः चरकादिमूलभूतश्चाऽऽयुर्वेदः । प्रवृत्तिविपर्ययः-प्रवृत्तिविसंवादः । प्रयोगस्त्वेवम् । अयं पृथिवी-त्वेनानुभवः पृथिवीत्वाभाववति पृथिवीत्वप्रकारको गन्धवदविशे-ष्यकपृथिवीत्वप्रकारकनिश्चयत्वादिति व्यतिरेकी ॥

(१) मवधारणीयमिति २ पु० पा० ।

स्यादेतत्। सामर्थ्यं पुनरस्याः फलेनाभिसम्बन्धः अथ फलज्ञानस्यैव कथं प्रामाण्यमवधारणीयमित्यत्र केषाञ्चिन्मतमाह। न चेति। [८।१८] न पुनरुदन्योपशममपि परीक्षत इति-उदन्योपशमज्ञानमपीत्यर्थः॥

तदेतदनुपपन्नं-फलज्ञानं हि फलस्य सिद्धावस्थस्य साधनानर्हतया निष्प्रयोजनीभूतत्वाद्वा न परीक्ष्यते,—तत्तज्जातीयज्ञानस्य सर्वास्ववस्थास्वर्थाव्यभिचारितया निःशङ्कत्वाद्वेति। न तावदाद्यः फलस्य सिद्धावस्थत्वेन तत्साधनस्यापि निष्प्रयोजनीभूततया ऽपरीक्षितत्वप्रसङ्गात्। उत्तरोत्तरफलाभिसन्धाने(१) तत्साधनं परीक्ष्यत इति चेत् फले ऽप्येवमस्तु। सिद्ध एव हि फले परीक्षिते तत्साधनस्य तथात्वसिद्धावुत्तरफलाभिसन्धिः स्यात्॥

ननु फलज्ञानस्य परीक्षायां प्रकृते किं दूषणं स्यादित्यत आह। स्यादेतदिति।

निष्प्रयोजनीभूतत्वादिति। परीक्षायाः प्रवृत्तिफलकतया प्रवृत्तेश्चासिद्धविषयत्वेन सिद्धाविषयकत्वादित्यर्थः।

निःशङ्कत्वाद्वेति। संशयस्य परीक्षाङ्गत्वादित्यर्थः॥

उत्तरोत्तरेति। फलार्थिनस्तत्साधनगोचरप्रवृत्तौ साधनपरी-

(१) उत्तरोत्तरफलमभिसन्धाय-इति २ पु॰ पा॰।

नापि द्वितीयः फलज्ञानस्यापि भूयोभूयः स्वप्ना-द्यवस्थासु व्यभिचारदर्शनात्। स्वस्थावस्थस्य फल-ज्ञानं न व्यभिचरतीति चेत्। एवं तर्हि परीक्षितमेव फलज्ञानं स्यात्। तथाहि यत् स्वस्थावस्थस्य फलज्ञानं तदव्यभिचारीति व्याप्तिसिद्धौ यत्रैव तथाभूतज्ञानत्वं पश्यति तत्रैवाव्यभिचारित्वमवधारयत्यनेनाभिप्राये-णाह।

वयन्त्विति। [८।२४] अस्याप्यभ्यासदशापन्नत्वं-प्रामाण्याविनाभूतलिङ्गोपलम्भस्तथा तज्जातीयत्वं पुनः स्वस्थावस्थस्य फलज्ञानत्वमेव॥

ननु यद्विज्ञानं दृष्टान्तयितव्यं तस्यापि प्रामाण्यं कथमवधारणीयम्, एवं तत्तत्साधनस्यापि दृष्टान्तपरम्प-रायाः कथमित्याह। न चेति॥ [८।२५]

---

छाया हेतुत्वादित्यर्थः। फले ऽपीति। न ह्यपरीक्षिते फले तत्साधननिश्चयाधीना प्रवृत्तिर्भवतीति फलमपि परीक्षणीयं स्यादित्यर्थः॥

फलज्ञानस्यापीति। स्वप्ने पिपासोपशमनज्ञानस्य भ्रमत्वा-दित्यर्थः॥

नन्विदानीन्तनफलज्ञानप्रामाण्यानुमितेः पूर्वफलज्ञानप्रामा-

फलज्ञानस्येत्युपलक्षणम् । तज्जातीयत्वेन लिङ्गेन *प्रामाण्ये साधयितव्ये यद्यद्दृष्टान्तीक्रियते तस्य तस्येति* मन्तव्यम् ॥

नन्वेवं प्रवृत्तिसामर्थ्यमनवकाशमेव, न ह्यस्ति तद्विज्ञानं यत्सर्वथैवापूर्वविषयं, तथा च प्रमाणतो ऽर्थ-प्रतिपत्तिप्रवृत्तिसामर्थ्ययोः कथमनादित्वमाह वार्त्तिक-कार इत्यत आह । एतेषु च मध्य इत्यादि । [६।१] शङ्कितव्यभिचार-तज्जातीयत्वापरामर्शादिति शेषः ॥

यद्यपि फलं न प्रवृत्तिविषयस्तथापि तत्साधन-गोचरायास्तत्सन्तानगोचराया एव वा प्रवृत्तेस्तज्जातीय-

---

ज्ञानपेक्षत्वात् कथमनवस्थेत्यत आह । नन्विति । अनुमित्यङ्ग-व्याप्तिग्रहविषयत्वेन तदपेक्षा ऽऽवश्यकीत्यर्थः । न चेतीति । अप्रा-माण्यशङ्काकलङ्काभावेन लिङ्गादिज्ञानस्यैवार्थनिश्चायकत्वं तत्कलङ्के त्वनादितैव परीहार इति भावः ॥

अनादित्वसमर्थनं तत्रानुपपत्तिं विना न घटत इति तामाह । नन्वेवमिति ।

ननु प्रमात्वव्याप्यविशेषदर्शने सति कथं शङ्क्यत आह । तज्जातीयत्वेति ॥

यद्यपीति । प्रवृत्तिजन्यव्यापारविषयस्यैव प्रवृत्तिविषयत्वं न च फलस्य तथात्वमित्यर्थः । तत्साधनगोचराया इति । शङ्कितव्यभि-

फलान्तरसम्बन्धस्तन्नान्तरीयकविजातीयफलसम्बन्धो वा स्वस्य नरान्तरस्य वा प्रवृत्तिसामर्थ्यं फलज्ञानस्य द्रष्टव्यम् ॥

तदेवं समानन्यायतया रूपादिबाह्यप्रत्यक्षप्रामाण्यसमर्थनानन्तरं शब्दप्रामाण्यं समर्थ्य तदुभयोपपत्तये समानन्यायतयैवा ऽऽन्तरप्रत्यक्षज्ञानेषु मध्ये फलज्ञानप्रामाण्यं समर्थितम् । समानन्यायतयैवेच्छाद्वेषप्रयत्नगोचरस्यापि ज्ञानस्य प्रामाण्यसमर्थनं सूचितमित्यनुव्यवसायो ऽवशिष्यते । तस्य चानुमानसमानन्यायतयाऽनुमानप्रामाण्यसमर्थनानन्तरमेव समर्थनं करिष्यत इत्यभिप्रायवानाह । अनुमानस्येति ॥ [६।४]

द्विधा हि व्यभिचारशङ्का कारणतः स्वरूपतश्च । सा

---

चारफलसाधनगोचराया इत्यर्थः । तत्सन्तानगोचराया इति । शङ्कितव्यभिचारफलसाधनजातीयसाधनगोचराया इत्यर्थः । तज्जातीयेति । शङ्कितव्यभिचारफलजातीयफलान्तरसम्बन्धः तद्व्याप्यतद्विजातीयफलसम्बन्धो वेत्यर्थः ॥

कारणत इति । अनुमितिहेतुव्याप्तिपक्षधर्मताज्ञानाप्रामाण्यशङ्कया कारणतो ऽनुमितावप्रामाण्यशङ्का स्यात् ज्ञानत्वेन वा स्वरूपत इत्यर्थः । तत्राद्यायामाह । सा चेति । अनुमितिहेतुव्या-

च व्याप्तिपक्षधर्मत्वग्राहकैरेव प्रमाणैरुपनीयत इति भवति निरस्तसमस्तव्यभिचारशङ्कमनुमितिज्ञानं तस्यैवम्भूतस्य स्वत एव प्रामाण्यं निश्चीयत इति शेषः ॥

---

प्तिपक्षधर्मताज्ञानप्रामाण्यनिश्चये क्व शङ्केत्यर्थः । स्वत एवेति । स्वग्राहकानुव्यवसायादेवेत्यर्थः । प्रामाण्यमित्यत्रोत्पत्तिज्ञप्तिविशेषजिज्ञासायामाह । निश्चीयत इतीति । निःसन्दिग्धीक्रियत इत्यर्थः ॥

अनुव्यवसायेनानुमितित्वे ऽनुव्यवसीयमाने तद्व्यञ्जकं लिङ्गजत्वमपि ज्ञायते व्यञ्जकाग्रहे जातेरग्रहादिति विशेषदर्शने सत्यप्रामाण्यशङ्का निरस्यते । न हि सल्लिङ्गपरामर्शजानुमितिराभासीभवतीत्यर्थः । यद्वा स्वत एव-सुष्ठु सुतरां वा प्रामाण्यं निश्चीयते कुतः स्वत एव-परत एव । विशेषदर्शनादप्रामाण्यशङ्कानिराकृतविरोधिनिराकृतौ प्रामाण्यानुमितेः सुकरत्वादित्यर्थः । तथा च प्रामाण्यनिश्चयादिवाप्रामाण्यशङ्काविरहादर्थं निश्चित्य निष्कम्पः प्रवर्त्स्यत इति भावः । यद्वा लिङ्गजन्यं प्रामाण्यविषयकमनुमिति रूपं यज्ज्ञानं जायते तस्मिन् प्रमाभूते ऽनुव्यवसीयमाने तद्गतं प्रमात्वमप्यनुव्यवसीयते विशेषणस्य पूर्वं ज्ञातत्वादित्यनुमानस्यानुमितेः फलस्य निरस्ता समस्ता व्याप्त्याद्यभावविषया शङ्का यस्य तस्य स्वत एव स्वग्राहकानुव्यवसायादेव प्रामाण्यं निश्चीयते न त्वनुमितिमात्रस्येत्यर्थः ॥

ननु प्रमाणत्वाविशेषेऽपि कथमनुमितेरेव स्वतो, न प्रत्यक्षादेरित्यत आह। अनुमेयेति॥ [८।५]

अनुमितिज्ञानं ह्यर्थस्य तथात्वं व्यवच्छिन्ददेवोत्पद्यते वह्निमानेवायमिति, तथा चाऽनुव्यवसायेनानुव्यवसीयमानमिदं स्वस्वार्थावधारणात्मकमेवावसीयते। न चाविपरीतार्थत्वमनुभवस्याऽनभ्यवस्यताऽवधारणात्मकत्वमस्यावसितं भवति। तथा च तदवश्यमवसेयं, तदेव

"अनुमेयाव्यभिचारी"त्यस्य "व्याप्तिपक्षधर्मताग्राहके"रित्यनेन पौनरुक्त्यमत आह। ननु प्रमाणत्वेति॥

द्वितीयायां शङ्कायामाह। अनुमितिज्ञानं हीति। अनुमितिरर्थस्याऽतथात्वं व्यवच्छिन्दत्येवोत्पद्यत इत्यत्र मानमाहुः। धूमस्य वह्निव्याप्यत्वं वह्न्यभाववदवृत्तित्वम्। तथा च व्याप्तौ वह्न्यभावाभावस्य भातत्वात् सामग्रीसत्त्वे कथं नानुमितौ तदवभासः। यद्वा प्रत्यक्षं किञ्चिदवधारणात्मकं भवतीत्यत्र तर्कजन्यत्वं प्रयोजकमनुमितावपि तदस्तीति साऽप्यवधारणात्मिका। अथवा केवलान्वयिसाधारणी व्याप्तिः साध्यायोगव्यवच्छेद एव तथा च वह्न्यभाववति धूमाभावज्ञाने तद्वृत्तिवेद्यतया साध्यायोगव्यवच्छेदस्यापि भानमेव यत्रायोगव्यवच्छेदेन व्याप्तिस्तत्रानुमितावपि स भासत इति तामनुमितिमधिकृत्येदमुक्तमिति लक्ष्मीपादचरणाः॥

च प्रामाण्यम्। कदाचिदेवम्भूतानुव्यवसाये ऽपि विपर्ययत्वशङ्का तदवस्कन्दतीत्यवशिष्यते सा च लिङ्गसमुत्थत्वादेव नास्ति, न हि विशेषदर्शनग्रस्तोत्पत्तौ शङ्काऽवकाशः, तदेतदाह। न होति ॥ [८।६]

लिङ्गाकारं विज्ञानं-निश्चिताव्यभिचारमिति शेषः।

प्रत्यक्षशाब्दज्ञाने तु नायोगव्यवच्छेदात्मके, अपि त्वारोपानारोपसाधारणविषयावभासिनी, तथा चानुव्यवसायेनापि तथैवानुभूयेते, न त्ववधारणात्मकतयेति नोभयोः स्वतः प्रामाण्यग्रहः। अथ दैवादयोगव्यवच्छेदात्मके एवोत्पद्येते अनुव्यवसीयेते च, तदा च नियामकमन्तर्भाव्यैव, तदभावे त्वविशेषादवधारणात्मत्वं परिभूय

तदवश्यमिति। तत्-अविपरीतार्थकत्वम्। ननु अविपरीतार्थत्वमनग्निव्यावृत्तविषयत्वं तच्च न प्रामाण्यमनुमित्याभाससाधारण्यात् निर्विकल्पकस्याप्रमात्वप्रसङ्गाच्च तस्याऽतद्व्यावृत्ताविषयत्वादित्यत आह। कदाचिदिति। यद्यप्यनुमित्याभासे ऽप्यनुव्यवसायेन तदुल्लिख्यते तथापि तच्छङ्का सल्लिङ्गसमुत्थत्वविशेषदर्शनान्नास्तीत्यर्थः। अनुमितौ लिङ्गसमुत्थत्वभाने हेतुरुक्त एवेति भावः॥

नन्वेवं लिङ्गाभासोच्छेदप्रसङ्गो ऽत उक्तं निश्चितेति। नियामकं-व्याप्यमित्यर्थः। अविशेषात्—विशेषादर्शनात् इत्यर्थः।

तदतद्रूपसाधारणमेवावतिष्ठेत इत्याशयवान्नियामकाभावमेवाह । प्रत्यक्षज्ञानं त्विति । [६।८]

धूमादियुक्तधूमध्वजादिज्ञाने हि यद्यप्यर्थस्याप्यर्थेनाव्यभिचारो ऽस्ति, यद्यपि चार्थादपि तथाभूतादेव तज्ज्ञानं जायते, तथा ऽप्यव्यभिचारो वा तद्ग्रहो वा प्राक्तनस्तत्राकिञ्चित्कर एव, इन्द्रियापातमात्रादेव युगपदुभयोरप्येकज्ञानावभासितया परामर्शकालानपेक्षणात् । अपरामृष्टस्य चानियामकत्वात् । तदिद-

ननु यत्र नियामकान्तर्भावेनावधारणात्मकमेव प्रत्यक्षज्ञानं तत्र विशेषदर्शनप्रभवतया संशयानाक्रान्तत्वात् स्वतः प्रामाण्यग्रहो ऽस्त्वित्यत आह । धूमादियुक्तेति । इन्द्रियापातेति । उभयेन्द्रियसन्निकर्षघटितसामग्रीसमाजादुभयविषयकं तत्र प्रत्यक्षमुत्पद्यते न तु व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यत्वं तत्राग्निज्ञाने ऽस्तीत्यर्थः । अपरामृष्टस्य चेति । व्याप्यत्वेन चाऽभातस्यानियामकत्वात्—संशयानास्कन्दकत्वादित्यर्थः । यत्र च स्थाणुपुरुषसन्देहानन्तरं करचरणादिविशेषदर्शनात् पुरुष एवायमित्यवधारणात्मिका धीः, तत्रापि न स्वतः प्रामाण्यग्रहः करचरणादेर्व्याप्यत्वेनाभाने संशयानादवधारणात्मकत्वानुपपत्तेः, व्याप्यत्वेन तु भाने परामर्शसद्भावादनुमितिरेव तत्र जायते, प्रत्यक्षसामग्रीतो अनुमितिसामग्र्या बलवत्त्वात्, अन्यथा परामर्शानन्तरं धारावाहिकं

मुक्तम्—अपि तु सत्तामात्रेणावस्थितादिति । [६।६]
अव्यभिचारिणो ऽपीति शेषः ॥

एतेन शङ्कामात्रमपनीयते ज्ञानान्तरैरिति यदुक्तं कैश्चित्तन्निरस्तम् । शङ्का हि संशय एवाभिधीयते, स च तत्त्वनिर्णयव्यतिरेकेणा ऽपनेतुमशक्य एवेति तत्त्व-निर्णयोपायो ऽनुसर्तव्यः । तथा च ज्ञानस्वरूपग्राहिणः कौणठ्ये प्रत्यक्षाद्यन्तराभावे चानुमान(१)एवोपाय इति तदाह । प्रवृत्तिसामर्थ्यमिति ॥ [६।१२]

स्यादेतत् । यदि प्रत्यक्षशाब्दज्ञानयोः परतः प्रामाण्यं तत्किमनुव्यवसायस्यापि परत एव, तथा च लिङ्गं निश्चितमेव निश्चायकमित्यनेन न्यायेन लिङ्गा-

परामर्शान्तरमेव स्यादिति मतमाश्रित्येदमुक्तम् । व्यभिचारिणि प्रत्यक्षे सत्ताव्यवस्थितस्यापि नाव्यभिचारित्वमतः शेषमाह । अव्यभिचारिणो ऽपीति । शेष इति ।

शङ्कामात्रमिति । न तु प्रामाण्यमपि गृह्यत इति भावार्थः । स्वरूपग्राहिण इति । अनुव्यवसायस्य प्रामाण्यग्रहणसामर्थ्ये इत्यर्थः । प्रत्यक्षादीत्यादिशब्दाच्छब्दपरिग्रहः ।

ननु चागृहीतप्रामाण्य एवानुव्यवसायो लिङ्गं निश्चाययतु कुतो ऽनवस्थेत्यत आह । स्यादेतदिति । यद्यपि लिङ्गनिश्चयः

(१) अनुमानमितियुक्तं भाति ।

न्तरपरम्पराज्ञानमनवस्थामवतारयतीत्यत आह। ज्ञान-
गतेति । [६।१३]

अत्रापि सैव युक्तिरतद्रूपव्युदासेनैव स्वविषय-
मालम्ब्यैवोत्पत्तेस्तथैवानुभवः, उत्पत्तेरेवाऽऽरभ्य विशेष-
ग्रहणग्रस्तत्वाच्च न शङ्कावकाशः। विशेषश्चानु-
व्यवसायत्वमेव, न ह्यजानन्नपि कश्चिज्जानामीत्यनु-
व्यवस्यति, न च शुक्तिकाकारे ज्ञाने रजतं जानामीति
स्यादिति तदिदमुक्तम् । तादृशस्येति ॥ [६।१५]

---

चक्षुरादित एव, तथापि तज्जनितलिङ्गज्ञानप्रामाण्यसंशयाहित-
लिङ्गसंशयान्नानुमितिः स्यात् । यद्यगृहीतप्रामाण्यमेव ज्ञानं
निश्चायकं तदा व्यवसायो ऽप्यगृहीतप्रामाण्य एव स्वविषयं
निश्चाययतु तत्किं प्रामाण्यग्रहणेनेति तस्यापि प्रामाण्यानुसरणे
कारणतो ऽनवस्थेत्यर्थः ॥

युक्तिमेवाह । अतद्रूपेति । येनानुव्यवसायेन प्रामाण्यं विषयीकृतं
तस्मिन्न तु व्यवसाये ऽनुव्यवसीयमाने प्रामाण्यमपि तन्निष्ठं पूर्ववदेव
गृह्यते । यद्वा ज्ञानानुव्यवसाये व्यवसायविषयस्य प्रतियोगिनो-
ऽवश्यं भानात्तद्व्यावृत्तिरवश्यं भासत इति सो ऽप्यनुव्यवसायो येना-
नुव्यवसीयते तेनातद्व्यावृत्तविषयक एवानुव्यवसीयत इति पूर्वोक्त-
रीतिरित्यर्थः । न ह्येति । न च सुखादौ ज्ञानत्वेनानुव्यवसायो
भ्रमरूपो ऽस्तीति वाच्यम् । सुखत्वादेराश्रयमात्रव्यङ्गतया सुखादौ

उपलक्षणं चैतत्। सबाह्याभ्यन्तरं धर्मिमात्र-गोचरमपि प्रत्यक्षं स्वत एव प्रमाणं, विभ्रमस्यापि निरालम्बनस्य क्वचिदनुपपत्तेरिति। उक्तयुक्तिं हृदि निधायातिदिशति। एतेनेति।[१।१६] उपमान मुपमिति-रित्यर्थः। व्याख्यातं-स्वतोऽवधार्यं प्रामाण्यतयेत्यर्थः। न

साक्षात्क्रियमाणे सुखत्वस्यापि ग्रहापत्त्या विशेषदर्शनेन साक्षात्कारिभ्रमानुपपत्तेः। यैस्तु सुखं ज्ञानमित्यभ्युपगम्यते तेषामौपपत्तिकभ्रमो न साक्षात्कारीत्यर्थः। न चेति। भ्रमेऽप्यनुव्यवसायेन रजतत्वादिकं व्यवसायप्रकारकत्वेनोल्लिख्यते तच्च तथैवेति भावः॥

सबाह्याभ्यन्तरमिति। ज्ञानस्य धर्म्मिविषयत्वे ऽनुव्यवसीयमाने प्रामाण्यग्रह इवाप्रामाण्यशङ्का नास्तीत्येव स्वतः प्रामाण्य-ग्रहार्थः। धर्म्मिणि भासमाने व्यावृत्त एव भासत इति नियमाभावादिति भावः।

अत्रेदं तत्त्वम्। अगृहीतप्रामाण्यमेव ज्ञानं परप्रामाण्यं निश्चाययति अप्रामाण्यशङ्काविरहात्। यत्र तु प्रामाण्यबुद्धाव-प्रामाण्यशङ्कया प्रामाण्ये संशयस्तत्र प्रामाण्यज्ञानप्रामाण्य-निश्चयादेव प्रामाण्यनिश्चयः एवं यावदप्रामाण्यशङ्का ऽनुवर्तते तावत् ज्ञानप्रामाण्यनिश्चयादेव प्रामाण्यनिश्चयः। न चैव-मनवस्था चरमप्रामाण्यज्ञानस्य ज्ञानाभावात्। कोटिस्मरणा-भावेन विषयान्तरसञ्चारेण वा प्रामाण्यसंशयानवस्थाभावात्।

त्यतिदेशवाक्यार्थज्ञानसादृश्यज्ञानयोः प्रामाण्ये निश्चिते उपमितिराभासीभवति। यद्यपि चानुमानोपमानानुव्यवसायधर्मिज्ञानानामपि प्रामाण्यं परतोऽपि शक्यग्रहमेव, सन्ति हि तत्र यथायोगं लिङ्गसादृश्यज्ञानसमुत्थत्वादीनि तज्जातीयत्वलिङ्गानि, तथापि कोष्ठगत्या स्वत एव प्रामाण्यग्रहोऽत्र सुकर इति स एव दर्शितः। विप्रतिपन्नं प्रति तु परत एव साधनीयं

---

अन्यथा ज्ञानानुमितिग्राह्यत्वेऽपि प्रामाण्यस्यानवस्था स्यात्। लिङ्गज्ञानप्रामाण्यानुसरणावश्यम्भावात्। स्वप्रकाशत्वेऽपि ज्ञानस्य प्रामाण्यस्य स्वग्राह्यत्व न स्वग्राह्यं स्वरूपप्रामाण्याभ्यामन्यत्वात्। किं तु प्रामाण्यस्य परतो वेद्यतायामनवस्थानात् परिशेषानुमानेनान्येन मानेन वा ग्राह्यम्। तथा च तत्प्रामाण्यस्यापि स्वग्राह्यत्वमन्येनेत्यनवस्थापत्तिरिति॥

उक्तयुक्तिमेव दर्शयति। न ह्यतिदेशेति। अतिदेशवाक्यप्रयोक्तुराप्तत्व निश्चित एवोपमानावतारात् प्रमाणभूतवाक्यार्थज्ञानसादृश्यज्ञानजन्यत्वे निश्चितेऽप्रामाण्यशङ्कानवतारात्। यद्वा गौरवेणेतरेषामप्रवृत्तिनिमित्तत्वेऽवधारिते प्रतियोगिग्रहात् तद्व्यतिरेकग्रह इत्युपमितेरप्यवधारणात्मकत्वादित्यर्थः। कोष्ठगत्या वस्तुगत्येत्यर्थः। स्वत एवेति। अनुव्यवसायेनेत्यर्थः। विप्रतिपन्नं प्रतीति; अनुमितिप्रामाण्यविप्रतिपन्नं प्रति पञ्चावयवप्रयोगे-

तदिति परमार्थः । अतः स्वत एवेत्यवधारणं नायोगव्यवच्छेदे, नाप्यन्ययोगव्यवच्छेदे, किं तर्हि ? अत्यन्तायोगव्यवच्छेद इति ॥

नन्वेतावताऽपि विज्ञानकरणानामिन्द्रियादीनां प्रामाण्यस्य कुतः सिद्धिरित्यत आह। संवेदनस्य चेति ॥ [६।१६]

नन्विन्द्रियादयो यद्यर्थव्यभिचारिणः कथमर्थधियमव्यभिचारिणीं जनयेयुः, तथात्वे वा रासभो ऽपि वह्निधियमव्यभिचारिणीं जनयेत् अविशेषादित्यत आह। न चेति। [६।१८] यथाऽऽर्द्रेन्धनं दहनव्यभिचार्यपि दहनसम्बन्धाद्दहनाव्यभिचारिणं धूमं जनयन्न नियोगपर्यनुयोगावर्हति कारणस्वाभाव्यात्, तथेन्द्रियाद्यप्यर्थ-

---

नैव मध्यस्थावगमविषयस्य अनेनानुमितिसामग्री सम्पादितेत्येतस्य निर्वाहात् स्वप्रकाशताभिधाने ऽर्थान्तरत्वप्रसङ्गादित्यर्थः । एवं सति स्वत एवेत्यनेन विरोधं परिहरति । स्वत इति । विप्रतिपन्नं प्रति स्वतस्त्वासिद्धेर्नायोगव्यवच्छेदः, परतो ऽपि सिद्धेर्नान्ययोगव्यवच्छेदे ऽवधारणमित्यर्थः । अत्यन्ता ऽयोगेति । कुत्रापि स्वतो गृह्यत इत्यर्थः ॥

नन्वर्थव्यभिचारिणो ऽप्यर्थाव्यभिचारिज्ञानजनने को विरोध इति शङ्काबीजमाह । नन्विति ।

व्यभिचार्य्यपि तथाविधसहकार्यपेक्षं तेनार्थेन सम्बन्धात् तदर्थाव्यभिचारि ज्ञानं जनयेदित्यर्थः॥

तदेतत्प्रामाण्यं नावश्यं सर्वत्रावधार्यते तदाश्रयस्यैव संवेदनस्य सर्वत्रानवधारणात्, तथा सति चानवस्थायां विषयसञ्चारो न स्यात्। तस्मात्तीव्रसंवेगितया यत्संवेदनमवश्यं वेदनीयं यत्र यत्र चापरो विप्रतिपद्यते जिज्ञासते च, तत्र तत्र प्रामाण्यमुक्तेनोपायेनावधारणीयमित्यतो नानवस्थेत्याशयवानुपसंहारव्याजेनोक्तमर्थं सङ्कलय्याह। तस्मादर्थसन्देहादिति॥ [६।२०]

नन्वर्थानिश्चयेनापि प्रवर्त्तमानो न हि तत्साधनतामननुमाय प्रवर्त्तितुमर्हति अर्थित्वाभावात्, न चाहितसाधनत्वानुमानं(१) व्याप्तिग्रहणं विना, न च सो-

नन्वन्योन्याश्रये परिहृते ऽप्यनवस्था तदवस्थैवेत्यत आह। तदेतदिति। धर्मिज्ञाने सति तत्प्रामाण्यानुसरणे अनवस्था तदज्ञाने तु तदभावात् क्वानवस्थेत्यर्थः। तीव्रसंवेगितयेति। ज्ञानसामग्रीनियतोत्पत्तिकत्वं ज्ञानस्य तीव्रसंवेगित्वं तच्च न सर्वत्र ज्ञाने ऽस्तीत्यर्थः॥

ननु चार्थसन्देहादपि प्रवृत्तेः क्व परस्पराश्रयत्वमित्यत आह।

(१) न च तत्साधनत्वानुमानम् - इति साधुः।

ऽपि 'प्रवृत्तिं विनेति तदवस्थमेवेतरेतराश्रयत्वमित्यत आह । अर्थस्येति ॥ [६।२४]

यद्यपि प्रामाण्यानिश्चयवदपेक्षितोपायताऽनिश्चयेऽपि तत्र तत्र ते प्रवर्त्तन्ते तथाऽप्यपेक्षितोपायतां पाक्षिकीमप्युररीकृत्य प्रवृत्तिः । न च तत्संशयस्तस्यामनुपलब्धायामन्यत्रापि स्यादतः पुनरुपलब्धिरायातेत्यतो ऽनादितामादायैव परिहृतम् । "अर्थप्रतिपत्ति"रिति वार्त्तिके, यद्यप्यर्थशब्दो ऽपेक्षितोपायमेवाह तस्यैव प्रवृत्तिविषयत्वादर्थ्यमानत्वाच्च, तथाऽपि धर्मिमात्रप्रतिपत्त्यनुमेयप्रतिपत्त्योर्भिन्नकालत्वादपेक्षितत्वात् च तथैव व्याचष्टे । अर्थप्रतिपत्तिरिति ॥ [१०।१]

( इति प्रमाणत इत्यादिवाक्यस्थप्रवृत्तिसामर्थ्यादिति हेतुविवरणतात्पर्यव्याख्याव्याख्यानम् ।

नन्विति । तथापि धर्मीति । धर्मिस्वरूपमप्रतीत्य तत्रापेक्षितोपायताऽननुमानादपेक्षितोपायताबुद्धेः प्राक्तनी धर्मिस्वरूपप्रतिपत्तिरित्यर्थः । अर्थ्यत इति व्युत्पत्त्या ऽर्थशब्देनापेक्षितोपाय एवोच्यते न तु पूरणं गौरवादिति भावः ॥

( इति प्रमाणत इति भाष्यगतप्रवृत्तिसामर्थ्यादिति हेतुविवरणतात्पर्यव्याख्या-व्याख्या-व्याख्यानम् । )

ननु प्रमाणस्य प्रयोजनवत्त्वमाक्षिप्तं समाधीयेत जिज्ञासितं वा ज्ञाप्येत । न तावदाद्यः । न ह्यस्ति पुरुषो यः प्रमाणं निष्प्रयोजनमिति ब्रूयात् तन्मूलत्वात् सर्वपुरुषार्थसिद्धेः यस्य तु पुरुषार्थो नास्ति स निरुच्छ्वास एव जीर्येत । नापि द्वितीयः तस्य संशयादिवत् सूत्रपाठानन्तरमेव ज्ञापयितुमुचितत्वादित्यत आह । तत्रेदमिति ॥ (१) [१०।५]

नेयं प्रमाणप्रयोजनजिज्ञासा, किन्नाम ? शास्त्रार्थीभूतस्य परमन्यायस्य निःश्रेयसं प्रति गुरूपायत्वं मन्य-

ननु प्रमाणमर्थवत् प्रयोजनवदिति सिद्धान्तस्वरसात् प्रमाणस्य प्रयोजनाक्षेप एव युक्तस्तत्किं प्रवृत्तिव्युत्पादनाक्षेपेणेत्यत आह । नन्विति । निरुच्छ्वासो-निरीहः इष्टसाधनताज्ञानं विना प्रवृत्त्यभावादिति भावः । तस्य संशयादिवदिति । यथा संशयादेः सूत्रपाठानन्तरं प्रयोजनमुक्तं तथा प्रमाणस्यापि तदनन्तरमेव तद्बोधयितुं युक्तं प्रथमं तज्जिज्ञासाया एवाभावादित्यर्थः ॥

किन्नामेति । लघूपायसम्भवे गुरूपाये प्रवृत्त्यभावात् तदुपदेशस्याननुष्ठानलक्षणाप्रामाण्यादत एव श्रुतस्वर्गफलत्वे ऽपि ज्योतिष्टोमादौ फलभूयस्त्वं कल्प्यत इत्यर्थः । यद्यप्येतावता ऽप्यनुसन्धानवाक्यत्वमेव षादिवाक्यस्य स्यात् तथापि पूर्वमशक्यानुष्ठानोपायत्वशङ्कानिरासेनानुसन्धानमुक्तमिदानीं तु गुरूपायत्वशङ्कानिरा-

(१) सुप्रिमतात्पर्यटीकायाम् अत्रेदमाशङ्क्यते इति पाठः ।

मानेन लघीयसि प्रवृत्त्युपाये विद्यमाने शास्त्रारम्भ एवाक्षिप्यते स च समाधातुमारब्ध इत्यर्थः। आत्मनो याथात्म्यं-सकलोपाधिविनिर्मुक्तत्वं तस्य भावनं-ध्यानम्। आदिग्रहणेन तु तदुपायभूताः प्रवृत्तयो यमनियमासनप्राणायामधारणालक्षणा गृह्यन्ते। आत्मतत्त्वसाक्षात्कार इति समाधिः। वैराग्यं परमो वशीकारः। परिपाकः-सकलक्लेशवासनानिर्मोषः (१)। एतेन साङ्गोपाङ्गो योगो दर्शितः।

येनेति प्रकारभेदात् तात्पर्यान्तरमाहेत्युक्तमिति भावः। टीकायां दुःखसंज्ञाभावनमित्यत्र शरीरादिषु दुःखसंज्ञा दुःखसम्बन्धित्वेन भावनं सम्यक्ज्ञानं न दुःखत्वेन ज्ञानं तस्य भ्रमत्वादित्यर्थः। याथात्म्यं यदि स्वरूपं तदा ऽहं सुखीति ज्ञाने ऽप्यनिदिध्यासनदशायामस्तीति व्याचष्टे। सकलेति। उपाधिरागन्तुको धर्मः तेनात्मत्वस्य भाने ऽप्यविरोधः। ननु भावनं चिन्तनं न प्रवृत्तिस्तथा च प्रवृत्तिभ्य इति सामानाधिकरण्यमयुक्तमित्यत आह। ध्यानमिति। ध्यायते ऽनेनेति व्युत्पत्त्या निदिध्यासनरूपा प्रवृत्तिरुक्तेति नोक्तदोष इत्यर्थः। ननु साक्षात्कारो ऽपि न प्रवृत्तिरित्यत आह। समाधिरिति। अत्रापि करणव्युत्पत्त्या निरुपाध्यात्मसाक्षात्कारकारणात्ममनःसंयोगरूपः समाधिरुक्तः स च प्रवृत्ति-

(१) सवासनक्लेशनिर्मोक्षः - पा० २ पु०।

तथापि न्यायस्य गुरूपायत्वं न परिहृतं न्याय-निर्णीतस्यापि प्रवृत्त्यपेक्षणात् प्रवृत्तस्य तु न्यायान-पेक्षणादित्यत आह। एतदुक्तं भवतीति॥ [१०।१५]

ननूभयोरपि तुल्यत्वे कुतो विशेषात् प्रमाणमेव व्युत्पाद्यते न प्रवृत्तिरित्यत आह। तथापीति। [१०।१८] श्रवणमनननिदिध्यासनसाक्षात्कारलक्षणायाः प्रवृत्तेः स्व-रूपतः फलतश्च प्रमाणान्तर्भूतत्वात् तद्व्युत्पादनमेव प्रवृ-त्तिव्युत्पादनम्। न च प्रवृत्तिव्युत्पादने प्रमाणं व्युत्पादितं भवति। न हि प्रवृत्तिः फलं प्रमाणं तत्स्वरूपं वेत्यर्थः॥

रेवेत्यर्थः। एतेनेति। ध्यानमारभ्य सवासनक्लेशनिर्मोषिणेत्यर्थः। अङ्गं ध्यानमुपाङ्गं यमनियमादि, आत्मतत्त्वसाक्षात्कारपदेन समाधि-रूपो योग उक्तः॥

गुरूपायत्वमेवाह। न्यायेति। प्रवृत्त्यनन्तरं न्यायानपेक्षाया-मपि प्रवृत्त्यर्थं तदपेक्षा ऽस्त्येवेति मूलकारणतया न्यायो ऽपि बलीयानिति सो ऽप्यवश्यं व्युत्पाद्यत इति परिहारार्थः॥

ननु प्रमाणव्युत्पादने समर्थिते किं तथापीत्यादिनेत्यत आह। ननूभयोरिति। स्वरूपतः फलतश्चेति। श्रवणादिप्रवृत्तीनां प्रमा-करणत्वेन क्वचित्प्रमाणत्वं प्रमाजन्यत्वेन च प्रमात्वमिति प्रमाण-व्युत्पादनेन तासामपि व्युत्पादनं, प्रमाणस्य फलनिरूप्यतया प्रमाण-व्युत्पादनेन फलमपि प्रवृत्तिर्निरूपिता, प्रवृत्तिनिरूपणेन तु न

ननु शास्त्रार्थस्य प्रयोजनव्युत्पादनावसरे प्रमाण-मर्थवदिति कुतः, न हि प्रमाणं शास्त्रार्थोऽपि तु न्याय इत्यत आह। सामान्याभिधानं चेति।

( इति द्वितीयमादिवाक्यस्य तात्पर्यव्याख्या-व्याख्यानम्। )

---

तदनेन प्रबन्धेन निष्प्रयोजनत्वाऽशक्यप्रयोजनत्वाऽनभिमतप्रयोजनत्वोपायगौरवशङ्काः परिहृताः तत्कि-मपरमवशिष्यते यदर्थं लोकवृत्तमनूद्यत इत्यतः प्रथमं तात्पर्यमनुस्मारयन्नेव वार्त्तिकमवतारयति। प्रामा-ण्येति ॥ [१०।२०]

---

प्रमाणं निरूप्यते अप्रवृत्तेरपि प्रमाणत्वात् प्रवृत्त्यफलस्यापि प्रमाण-त्वात्। स्वरूपतः फलतश्च प्रवृत्तावनन्तर्भूतत्वात् प्रमाणस्येत्यर्थः। न हीति। प्रत्यक्षादीनामपि न्यायव्युत्पादनपरतयैव शास्त्रव्युत्पा-दनादिति भावः॥

( इति द्वितीयमादिवाक्यस्य तात्पर्यव्याख्या-व्याख्या-व्याख्यानम्।)

---

ननु लोकवृत्तानुवादपरत्वे सति कुतोऽनुसन्धानपरत्वमुच्यते पूर्वोक्तानुवादस्य किमर्थं इत्यत आह। तदनेनेति। किमपर-मिति। का शङ्का निवर्त्तनीया, किं चानवगतं बोधनीयमित्यर्थः। न च प्रमाणादर्थमवधार्य प्रवृत्तः फलं लभत इति लोकवृत्ते ऽनूदिते

अप्रमाणेनेत्यत्रापि यद्यपि वाङ्मनसविसंवादः निषेधविध्युपाय (१) एव हि प्रमाणं तस्मान्निषेधोपायतां जानतो ऽप्यप्रमाणेन निषेधामीति वचनं मनोविसंवाद्येव, तथापि व्यामोहादप्युपपत्तेरेवम्भूताभिप्रायस्थैर्ये ऽपि नास्माकं काचित् क्षतिरित्यनुक्त्वैवोत्तरं दत्तं वाङ्मनसयोर्विसंवाद इति। प्रामाण्याग्रहे प्रमाणेनेत्येव वक्तुं न शक्यते ततः प्रमाणेनेत्येवं वदतो ऽवश्यं प्रामाण्यं मनसि विपरिवर्त्तते तथा चागृहीतप्रामाण्येनेति वचनं मनोविसंवादीत्यर्थः। लोकवृत्तमबाधितो व्यवहार इत्यर्थः॥

ननु "प्रमाणेन खल्वयं ज्ञाते"त्यादि भाष्यं लोक-

---

मुमुक्षुर्मोक्षोपाये प्रमाणे प्रवर्त्तत इत्येव फलमिति वाच्यम्। प्रथमसूत्रादेव तत्प्राप्तेरिति भावः। वार्त्तिके च वाशब्दो नाऽनुसन्धानापेक्षया ऽपि तु तत्प्रकारापेक्षयेति द्रष्टव्यम्॥

व्यामोहादपीति। अप्रमाणमेव निषेधोपाय इति विद्वांस्तेनैव निषेधामीति भ्रमादित्यर्थः। प्रमाणमेव निषेधोपाय इति ज्ञात्वा यद्यप्रमाणेन निषेधति तदा तु वाङ्मनसविसंवाद इति भावः। बाधितो लोकव्यवहारो नानुसरणीय इति विशेषयति। अबाधित इति॥

---

(१) निषेधविध्यन्यतरोपाय इति पा० २ पु०।

वृत्तानुवादो ऽस्तु, "प्रमाणत" इत्यादि पुनः कथमित्यत आह। कारणप्रदर्शनद्वारेणेति। [१।१।३] न हि लोकवृत्तं स्वरूपेणोपयुज्यते। किं तु? तस्यावश्याभ्युपेयतया तदुपायोऽप्यवश्याभ्युपेय इत्यनेनाभिसन्धिना सोपायमेव तदनूद्यत इत्यर्थः॥

(इति आदिवाक्यस्यैव तृतीयं तात्पर्यव्याख्याव्याख्यानम्।)

---

आगामिभाष्ये हेयादीनां स्फुटत्वात् तस्येदानीमक्षरार्थो व्याक्रियत इति मा शङ्किष्ठा इत्याह। अस्यैवेति। [१।१।४] वार्त्तिकसम्बद्धो ग्रन्थो ऽर्थपदानीत्याकारो वार्त्तिकग्रन्थस्तस्य तादृश एव। भाष्यगतो भाष्यसम्बद्धो ग्रन्थः तस्येत्यर्थः॥

---

ननु लोकवृत्तकारणमादिवाक्येनानूद्यत इति लोकवृत्तानुवादो वेति वार्त्तिकविरुद्धमित्यत आह। नन्विति॥

कारणप्रदर्शनोपयोगार्थमाह। न हीति। शङ्काहेतुमाह। स्फुटत्वादिति। तत्पदार्थसंवादाद्व्याख्यानशङ्का स्यादित्यर्थः। मा शङ्किष्ठा इति। आदिवाक्यव्याख्यानस्यासमाप्तत्वादग्रिमभाष्यव्याख्यानानुपपत्तेरिति भावः। वार्त्तिकग्रन्थेति विशेषणवैयर्थ्यमपाकरोति। वार्त्तिकेति। ननु भाष्यगतस्य वार्त्तिकग्रन्थस्येति अन्वयो न युक्तः वार्त्तिकग्रन्थस्य भाष्यगतत्वाभावादित्यत आह। तादृश एवेति।

अभिधेयानां पौर्वापर्यनियमाय गुणप्रधानभावे जिज्ञास्यमाने अभिधानरूपस्य शास्त्रस्य कः प्रस्ताव इत्यत आह। शास्त्रशब्द इति॥ [११।७]

एवं तर्हि हेयादीनां शास्त्रार्थरूपतया न पृथक्कोटित्वं तथा चैककोटिकतया किमपेक्ष्य गुणप्रधानभावचिन्तेत्यत आह। अत्र चेति।[११।८] "कथं पुनरनेन प्रमाणादिचतुर्वर्गोऽत्र लभ्यत" इति वार्त्तिकमनुक्तोपालम्भो माभूदित्यत आह। तेनेति। [११।६]

तन्मूलत्वादितरसिद्धेरिति। [११।१४] सिद्धिः प्रतीतिर्निष्पत्तिश्च। तत्र हेयोपाययोः प्रतीतिरेवाधिगन्तव्यस्य तु

---

अर्थपदानीत्याकार एव, भाष्यसम्बद्धो ग्रन्थो भाष्यग्रन्थः तदेकदेशः तद्गतस्य तु चत्वारि पुरुषार्थस्थानानीत्यर्थः॥

शास्त्रपरत्वे ऽनुपपत्तिमाह। अभिधेयानामिति। "ग्रहणकवाक्यं विवृणोती"त्यतः प्रागेव "उपायः शास्त्र"मिति व्याख्यानं टीकायां शास्त्राभिधेयानां चतुष्टोपपत्तय इति साम्प्रदायिकाः॥

"चेनेति" टीकायां चकारेण सूचयति वार्त्तिककार इत्यर्थः। "कथं पुनरनेनेति" वार्त्तिके अनेन-आदिवाक्येनेत्यर्थः। 'अर्थपद-सूचित" इति टीकाया आदिवाक्यस्यार्थपदसूचित इत्यर्थः। हेयादीनां वार्यमाणतया ऽर्थपदवाच्यत्वे ऽपि न हेयादित्वेन वाच्यतेति सूचित इत्युक्तम्।

प्रतीतिर्निष्पत्तिश्च । यद्यपि ज्ञानस्य प्रमाणरूपस्य प्रतीतिरस्त्येव तथापि प्रमाणादेवेतीतरेत्युक्तम् । निष्पत्तिस्तु ज्ञानस्याज्ञातादेव (१) यस्मात् किं तज्ज्ञानेन, ज्ञानात् तु यस्मात् तस्य प्रमाणायत्तत्वमेवेति भावः । प्रमात्रादिचतुर्वर्गे तु प्रमातृप्रमेययोः सिद्धिः प्रतीतिरेव, प्रमायाश्च निष्पत्तिरपीति तदिदमुक्तं प्रमायाश्च तत्कार्यत्वादिति ॥ [११।१७]

ननु प्रमात्रादीनामपि प्रयोजनवत्त्वादर्थवदित्यनेन किं प्रमाणस्याधिक्यमाहितमित्यत आह । अतिशायने मतुबिति ॥ [११।१५]

नन्वस्य चतुर्वर्गद्वयस्य निःश्रेयसाधिगमं प्रति विकल्पः समुच्चयो वा, उभयमप्यनुपपन्नमभिन्नत्वात्,

यद्यपीति । एवं च यतः प्रवृत्तिस्तदेव प्रधानतया वाच्यं न तु सा प्रमाणादेवेति भावः । तथापीति । तथा च प्रमाणस्यैव प्रथममुद्देशो युक्त इत्यर्थः । न च "तदितरप्रतिलम्भा"दित्यागामिटीकया विरोधः तत्र—प्रमाणं इतरच्चेति तदितरे, तयोः प्रतिलम्भादिति तद्व्याख्यानादिति भावः । प्रतीतिरेवेति । प्रमातृप्रमेययोः प्रमाणजन्यत्वादित्यर्थः । निष्पत्तिरपीति । अपिशब्दात् प्रतीतिरपि ॥

विवक्षाभेदेनेत्यस्य तात्पर्यमाह । नन्वस्येति । ननु विवक्षा-

(१) ज्ञानस्याज्ञानादेव इति २ पा० पु० ।

वचनभङ्गिभेदमात्रेण (१) तदनुपपत्तिरित्यत आह। विवक्षाभेदेनेति। [११।१८] अनेन निमित्तभेदमभिप्रैति तेनायमर्थः—

यद्यप्युभयत्रापि षोडशैव पदार्थाः सङ्गृहीतास्तथापि यथा प्रमाणत्वेन प्रमाणं ज्ञेयं तथा ज्ञानत्वेनाऽपि, अन्यथा ज्ञानान्तरमनुश्रियेत, निरर्थकं च प्रमाणं स्यात्, प्रमाणत्वे चाज्ञाते ज्ञानता न निर्वहेत्। यथा च स्वरूपेण संशयादयो ज्ञेयाः प्रमाणपरिकरत्वात्, तथा ज्ञानोपायतयाऽपि, अन्यथोपायान्तरमनुश्रियेत, निरर्थकाश्चैते स्युः, परिकरत्वे चाज्ञाते उपायता न निर्वहेत्। यथा

यामेव किं कारणमित्यत आह। अनेनेति। विवक्षाभेदप्रयोजकमिति शेषः। उभयत्रापि-चतुर्वर्गद्वये ऽपीत्यर्थः। किमर्थं ज्ञानान्तरानुसरणमित्यपेक्षायामाह। निरर्थकं चेति। न्यायजन्यं तत्त्वज्ञानं ज्ञानं तदन्यस्य प्रमाणप्रयोजनस्याभावादित्यर्थः। प्रमाणत्वे चेति। ज्ञायते ऽनेनेति व्युत्पत्त्या प्रमासाधनं ज्ञानमुच्यते तथा च प्रमासाधनत्वेनाज्ञाते तत्र ज्ञानतैव न निर्वहेदित्यर्थः। स्वरूपेणेति। न्यायपरिकरत्वेनेत्यर्थः। अत एवाग्रे परिकरत्वे चाऽज्ञात इति वक्ष्यति। अन्यथेति। ज्ञानस्योपायसाध्यत्वादित्यर्थः। एवं चैतत्साध्यज्ञानस्योपायान्तरादेव सिद्धेरेते व्यर्थाः

(१) प्रमाणत इति अधिकं - २पु० ।

शरीरादयो दश प्रमेयतया ज्ञेयाः, तथा हेयतयापि, अन्यथा अहेयाः स्युः हेयान्तरं चानुश्रियेत, प्रमेयत्वे चाज्ञाते हेयता न निर्वहेत्। यथा चापवर्गः प्रमेयतया ज्ञेयस्तथा ऽधिगन्तव्यतयापि, अन्यथा ऽधिगन्तव्यान्तरमनुश्रियेत, अनुपादेयश्च स्यात्, प्रमेयतया चाज्ञाते हानता न निर्वहेत्। यथा चा ऽऽत्मा प्रमेयतया ऽधिगन्तव्यस्तथा प्रमातृतयाऽपि, अन्यथा प्रमात्रन्तरमनुश्रियेत, अनवस्था च स्यात्,प्रमेयत्वे चाज्ञाते सोपाधिनिरुपाधितया हेयोपादेयते न निर्वहेयातां, यथा बुद्धिर्बुद्धित्वेन तथा तद्भेदः प्रमितितयाऽपि, अन्यथा प्रमित्यन्तरमनुश्रियेत निष्फलं वा प्रमाणं स्यात्। प्रमेयत्वे चाज्ञाते हेयता न निर्वहेदिति। तस्मात् त एव प्रमाणादय उभयथा ज्ञायन्तामिति विवक्षित्वोभयथा चतुर्वर्गोपादानं कृतमित्यर्थः।

यदप्युक्तं कैश्चिद्धेयहानोपायाधिगन्तव्येष्विव चतुर्षु पुरुषार्थः समाप्यते, यथा लोके हेयः कण्टको, हान-

---

स्युरित्यत आह। निरर्थकाश्चेति। प्रमेयत्वे चेति। संसारकारणमिथ्याज्ञानविषयत्व इत्यर्थः। यथा चात्मेतिस्वात्मा। अन्यथेति। स्वप्रमां प्रति समवायित्वेनाज्ञाते स्वप्रमां प्रति प्रमात्रन्तरमनुसरणीयं प्रमातारं विना प्रमाऽनुत्पत्तेः। तथा च यथा स्वप्रमां प्रति प्रमात्रन्तरं तथा तत्प्रमायामपीत्येवं तत्र तत्रेत्यनवस्थेत्यर्थः॥

मुपानत्, तदुपायस्तु पादकृदादिः, अधिगन्तव्यो दुःखाभावः, शास्त्रे च हेयो रोगः, चिकित्सा हानं, तदुपायो निदानज्ञानम्, अधिगन्तव्यमारोग्यमित्यतश्चतुर्षु वक्तव्येषु षोडशपदार्थोपवर्णनं क्वोपयुज्यत इति, तदपि निरस्तम्। चतुर्वर्गस्यैव विवक्षाभेदात् षोडशभेदेनाभिधानात्। विवक्षाभेदस्योपपत्तिं प्रतिपदं भाष्यकार एव दर्शयिष्यति। एतदधिगम्यैव येनाधिकं चोदितं तन्मतमपाकरोति। एतेनेति। [१।१।१६]

( इति आदिवाक्यस्यैव चतुर्थं तात्पर्यव्याख्याव्याख्यानम्। )

---

"व्याख्यायते ऽवयवश" इति विशेषणे तात्पर्यंक्रियायाः (१) न तु विशेष्ये इत्यर्थः।

---

पादकृत्-चर्मकारः। चिकित्सा भेषजप्रयोगः। निदानं-रोगमूलकारणम्॥

( इति आदिवाक्यस्यैव चतुर्थं तात्पर्यव्याख्याव्याख्याव्याख्याव्याख्यानम्। )

---

ननु पूर्वमपीदमेव वाक्यं व्याख्यातमित्यत आह। विशेषण

---

(१) व्याक्रियाया इति पाठोयुक्तः।

एतदेवोत्तरत्र स्फुटयति । तत्रावयवेष्विति ।(१)[११।२६]

कस्मात् प्रमाणादिति—नाभिहितमेवं ह्यसंन्दिग्धैव पञ्चमी स्यादित्यर्थः ।

अस्येति (२) प्रकृतपञ्चमीपरामर्षे लिङ्गासङ्गति-रित्यत आह । अस्येति । [११।२८]

पञ्चम्यां तसिः प्रयोगं दर्शयित्वा पञ्चमीव्यतिरेकेण

---

इति । पदसमुदायात्मकवाक्यस्य विशेषण-मेकदेशः पदं तथा च पूर्वं वाक्यार्थो व्याख्यात, इदानीं पदार्थो व्याख्यायत इत्यर्थः ॥

"प्राथम्यादिति" टीकायाः प्रमाणत इति प्रथमं पदमेकदेशत-सिप्रत्ययार्थद्वारा व्याख्यायत इत्यर्थः । "निमित्तपञ्चमी चेदिति" टीकायां पञ्चम्यर्थे तसेर्विधानात् तसिरेव पञ्चम्युपचरितः ।

ननु प्रमाणात् प्रमाणत इत्यनयोर्न विशेषः कश्चिदित्यत आह । एवं हीति । तसेर्विभक्त्यन्तरे ऽपि प्रयोगात् पञ्चम्यां सन्देहः स्यादित्यसन्देहार्थं प्रमाणादित्येव कर्तुमुचितमित्यर्थः ॥

नन्वस्येत्यनेन प्रमाणत इत्येवंरूपस्य परामर्शो न युक्तस्तसि-प्रयोगमात्रस्य परेणाक्षेपे तन्मात्रस्य परामृष्टव्यत्वादित्यत आह । अस्येति प्रकृतेति । यद्यपि तसेः परामर्षे लिङ्गासङ्गतिः, न चेकारलोपकत्वादिविधाने तसेरश्रवणादवशिष्टस्य प्रमाणत इत्यस्य परामर्षः कृत इति वाच्यम । "तसिर्वचनविभक्त्याद्यर्थ" इत्यत्र

---

(१) तत्राऽस्यावयवेष्विति--२ पा० पु० ।

(२) अस्यैवेति—२ पा० पु० ।

तसेराक्षेपसमाधाने असङ्गते इत्याक्षेपं व्याख्यायाव-तारयति । वचनव्याप्त्यर्थमिति । [१२।१]

ननु प्रमाणाभ्यां प्रमाणैरिति भवतु संप्लवः, प्रमाणे-नेति तु कथमित्यत आह । यत्र द्वयोरिति । [१२।५] वि-षयैकतामात्रं संप्लवो न तु कारणानां समुच्चयः, तथा सति फलभेदो न स्यात् । नापि समुच्चितानां करणत्वं तथा सति व्यापारभेदो न स्यादिति ज्ञापनार्थमित्यर्थः ।

---

वार्त्तिके तसेः श्रवणात्, तथापि तसेः केवलस्याप्रत्यायकत्वात् प्रकृत्यन्तर्भावेनैव परामर्शः कृत इति भावः ॥

ननु संप्लवे प्रमाणस्य प्रत्येकं प्रमाहेतुत्वकीर्त्तनं किमर्थ-मित्यत आह । नन्विति । न ह्येकप्रमाणप्रवृत्तिस्थले संप्लवार्थ इत्यर्थः । यद्यपि जात्यभिप्रायेणैकवचनप्रयोगात् सजातीय-प्रमाणसंप्लवार्थं प्रमाणेनेति स्यात्, विजातीयसप्लवस्य द्विवचनबहु-वचनाभ्यां स्यात्, व्यवस्थायां चैवकारो विजातीयप्रमाणसंप्लव-निषेधार्थः स्यात्, तथापि प्रमाणाभ्यां प्रमाणैरित्यत्र प्रमाण-सामान्यपरत्वे बाधकाभावात् तत एवोभयलाभो युक्त इति भावः । नन्वेकैकस्य प्रमायामकरणत्वे संप्लवार्थ एव न स्यादिति तत एव तल्लाभे पुनरपि वैयर्थ्यमेव इत्यत आह । विषयैकत्वेति । न त्विति । अन्योन्यसहकृतानां फलजनकत्वमित्यर्थः । तथा सतीति । एककार्यजननं विना ऽन्योन्यसहकारित्वाभावात् प्रमारूपफलभेदो न स्यादित्यर्थः । मिलितानां फलजनकत्वं न तु प्रत्येकमित्यत्र

अत एवेति। [१२।६] एवकारः साधकतमान्तरं व्यवच्छिन्दन् तस्य व्यापारं फलं च व्यवच्छिनत्ति, न त्वस्य स्वव्यापारफलयोरितरेतरनैरपेक्ष्यं दर्शयति तस्य संप्लवेऽपि सम्भवादित्यर्थः।

"कस्मात् पुनः करणार्थो गम्यते"—प्रकृतिप्रत्यययोः कतरस्मादित्यर्थः। अयमाशयः। यदि तृतीयया करणत्वमभिधीयते किं प्रकृतिस्थेन ल्युट्प्रत्ययेन, अथ तेनैव,

---

फलभेदो न स्यादिति दूषणे सत्येव दूषणान्तरमाह। तथा सतीति। विजातीययोः प्रत्यक्षानुमानयोः सन्निकर्षपरामर्षव्यापारकत्वं न स्यादित्यर्थः॥

नन्वेवकारेण यद्येकप्रमाणस्य व्यापारफलयोरन्यप्रमाणापेक्षत्वं व्यवच्छिद्यते तदा संप्लवेऽपि तत्सम्भवात् कथं संप्लवव्यवस्थयोर्भेद इत्यत आह। एवकार इति। संप्लवे एकप्रमाणविषयेण मानान्तरस्य व्यापारफलव्यवच्छेदः व्यवस्थायां च रूपादाविन्द्रियान्तरव्यवच्छेद इत्येवकारेण द्योत्यत इत्यर्थः।

ननु विभक्तिव्याख्यर्थात्तसेरेव प्रमाणेनेति लब्धे तत एव करणार्थो लभ्यत इति कस्मादित्ययुक्तमित्यत आह। प्रकृतीति। ननु तसिना करणत्वलाभस्योक्तत्वादेवास्या ऽपि न जिज्ञासेत्यत आह। अयमाशय इति। तथा च तत्रैव विप्रतिपन्नस्यायं प्रश्न इत्यर्थः॥

ननु करणभावस्तृतीयया ऽवगम्येत, सैव नास्ति, सत्त्वे वा प-

किं तृतीययेति। ज्ञापकस्य कारकत्वशङ्का माभूदित्यत आह। अर्थ-मर्थाधिगतिमिति। [१२।११]

ननु प्रमाणेति(१) प्रातिपदिकादेव साक्षात्करणत्व-मर्थतो हेतुत्वं गम्यत इति किं विभक्तिव्याप्त्यत आह। अत चेति। [१२।११]

न च वाच्यं करणभावेनापि प्रमाणफलयोस्ता-दात्म्यं प्रतिषेद्धुं शक्यं तत्किं तन्नान्तरीयकहेतुताभि-धानार्थं पञ्चम्येति। साधकत्वमात्रस्यैव सामर्थ्ये

---

स्वम्या अभिधानमिति व्याहतमित्यत आह। नन्विति। विभक्ति-व्याप्तिफलस्य साक्षादर्थतस्य प्रातिपदिकादेव लाभादित्यर्थः।

साधकत्वमात्रस्यैवेति। ननु किमसामर्थ्यं न तावद्व्याप्ति-विरह उपाधिव्यभिचारयोर्बाधात्, तत्त्वे वा साधकप्रामाण्ये ऽप्य प्रतीकारात्, विशेषव्यभिचारे सामान्याव्यभिचारस्यासम्भवात्, नाप्याधिक्य. हेतुद्वयोपन्यासे ह्येकेनापरस्य कृतकर्तव्यत्वं दूषकता-बीजमत्र तु विशिष्टस्यैव हेतुत्वात् साधकत्वे ऽपि पौर्वापर्यमात्र स्यैव तादात्म्यनिषेधानुमापकत्वे नियमांशस्य वैयर्थ्याच्च। मैवम्। विशिष्टस्य व्याप्यत्वे ऽपि वैशिष्ट्यं न व्याप्यतावच्छेदकं, येन विशेष-णेन विना व्याप्तिर्ग्रहीतुं न शक्यते तत्रैव वैशिष्ट्यस्य व्याप्यताव-च्छेदकत्वात्। अत एव गन्धादिषु मध्ये गन्धस्यैव व्यञ्जकत्वादि-त्यत्रासिद्धिवारकविशेषणाभावेनापि व्याप्तिस्तेन विना गन्धस्यैव

(१) प्रमाणमिति—२ पा० पु०।

तमवयंस्यासमर्थत्वात् तत्र विप्रतिपत्तेश्च। कस्मादिति प्रश्नार्थमभिप्रेत्याह। प्रमाणप्रातिपदिकेति। [१२।१३]

तदेवमनुवादकत्वं समर्थयता ल्युट्तृतीययोः पौनरुक्त्यं समाहितं, न चानुवादकत्वं शब्दाभ्यासस्य प्रयोजनवत्ताव्यतिरेकेण सिद्ध्यतीत्यतः प्रयोजनं दर्शयति। प्रमाकारकान्तरेभ्य इति। [१२।१४]

---

व्यञ्जकत्वादित्यस्याप्रसिद्धेर्व्याप्त्यग्रहात्। यत्र तु विशेषणेन विनापि व्याप्तिर्गृह्यते तत्र विशेषणवैयर्थ्यं यथा शरीराजन्यत्वादौ, इहापि तमवर्थानन्तर्भावेनापि व्याप्तिः सुग्रहेति स व्यर्थ एव, साधकत्वेन च पौर्वापर्यमेव हेतूकृतं न तु नियमांशोऽपि येन तत्रापि वैयर्थ्यमाशङ्कनीयम्। न च साधकतमत्वेऽपि करणत्वनान्तरीयकहेतुत्वेनैव साध्यसिद्धिः स्यादिति वाच्यम्। अविनाभावात्तदुपस्थितेर्विलम्बितत्वेन पञ्चम्या श्रुतिव्याप्तस्यैव हेतुत्वस्यादरणौचित्यात्। यद्वा पूर्वाऽपरितोषेणाह। तत्रेति। कारणमात्रेणैव स्वोत्पत्त्यनन्तरमेव कार्यजननादतिरिक्तस्तमवर्थो नास्तीति बौद्धैरप्युपगमात् तान् प्रति तमवर्थाभावेन हेतोरसिद्धिः स्यादित्यर्थः।

ननु प्रमाणत इत्यत्र न पञ्चम्या करणत्वमनूद्यत इत्यत आह। कस्मादितीति। विभक्तिव्यात्या यदा तृतीयान्तात्तसिस्तदा तृतीयया करणत्वलाभे किं प्रकृतिस्थेन ल्युट्प्रत्ययेनेति यत्पौनरुक्त्यमापादितं तत्परिहरतीत्यर्थः। प्रमाकारकान्तरेभ्य इतीति। न च प्रमाणपदाधीनकरणत्वलाभादेवाभ्यर्हितत्वमपि लब्धमिति वाच्यम्

लौकिके तु प्रयोगे सङ्ख्याभिधानाद्विभक्तेः सार्थकत्वमिति द्रष्टव्यम्। विशिष्टविषयत्वेन संप्लवाक्षेपो ऽसङ्गत एव अग्न्यादिविशिष्टे पर्वतादौ प्रत्यक्षानुमानयोः संप्लवादित्यत आह। विशिष्टो—भिन्न इति। [१२।१६]

---

प्रमाणस्य फलाङ्गेदे साध्ये केन रूपेण पक्षत्वमित्यपेक्षायां पक्षतावच्छेदकरूपस्य प्रमाणत्वस्य प्रमाणपदेनाभिधानात् इन्द्रियत्वादेः करणान्तराव्यापकत्वेन तदनवच्छेदकत्वात्। तथा चाभ्यर्हितत्वं करणत्वमेवोक्तं तृतीया च न करणत्वे, किं त्वित्थम्भाव इति सम्प्रदायविदः॥

ननु यत्राभ्यर्हितत्वं न प्रमाणानां प्रतिपाद्यं तत्र ना ऽयं समाधिरित्यत आह। लौकिके त्विति। प्रातिपदिकात् करणत्वमात्रलाभे ऽपि तद्गतमेकत्वादिकं न प्रतीतं तदर्थं तृतीया प्रयुज्यते न तु करणत्वप्राप्त्यर्थमिति भावः। न च यत्र प्रमाणेनार्थं जानातीत्यत्र सङ्ख्यापि न विवक्षिता, यत्र वा प्रमाणतो ऽर्थं जानातीत्यत्र तस्मिन्नेव, तत्र का गतिरिति वाच्यम्। घटः कर्म करोतीत्यादावन्वयबोधाभावाद्विभक्त्युपस्थापित एवान्वयप्रकारे ऽन्वयबोध इति व्युत्पत्तेः प्रकृतिलब्धकरणत्वस्य तृतीयया ऽनुवादात्। वस्तुतस्तु पाचकादौ कृतां योग्यतावाचकत्वेन निर्णयात् स्फुटा योग्यतामात्राभिधाने ऽपि तृतीयया करणत्वप्रत्ययाददोष इति भावः। विशिष्टपदस्य विशेषणवन्मात्रवाचकस्य भिन्नार्थत्वव्याख्यानबीजमनुपपत्तिमाह। विशिष्टेति। विशिष्टविषयत्वं यदि व्यावृत्तिविषयत्वं तदा स्वलक्षणमात्रविषयकप्रत्यक्षे ऽलोकव्यावृत्तिविषयत्वं हेतुर्भागासिद्धः,

विषयत्वसामान्याभिप्रायमेकवचनम्। अर्थसामर्थ्य-समुत्थं प्रत्यक्षं यतः अतो ऽर्थगोचरम्। तत्किं हेतुत्व-मेव विषयलक्षणं? नेत्याह। स एव चार्थ इति। [१२।१७]

अथाग्न्यादिविशिष्टपर्वतादिस्वलक्षणविषयत्वं तदा ऽनुमाने हेतुरसिद्ध इति विशेषणवद्धर्मिविषयत्वं तद्वाच्यमिति विशिष्टे धर्मिणि संप्लवः स्यादित्यर्थः। यद्यप्येतावता प्रत्यक्षयोरनुमानयोर्वा संप्लवे न बाध-कमुक्तं तथा ऽपि विजातीयप्रमाणसंप्लवनिराकरणपरो ऽयं ग्रन्थः॥

ननु विषय इत्येकवचनमयुक्तं प्रमाणानां प्रत्येकं विषयभेदादि-त्यत आह। विषयत्वेति। नन्वर्थगोचरत्वेनैवार्थसामर्थ्यसमुत्थत्वे लब्धे तदभिधानं व्यर्थमित्यत आह। अर्थसामर्थ्येति। तथा चार्थ-गोचरत्वे विप्रतिपन्नं प्रति तद्धेतुतया तदपि भणितमित्यर्थः। नन्वर्थसामर्थ्यसमुत्थत्वेनैवार्थान्वयव्यतिरेकानुविधायित्वे लब्धे पुन-स्तदभिधानं पुनरुक्तमित्यत आह। तत्किमिति। तज्ज्ञान-हेतोरपि तद्विषयत्वे ज्ञानस्येन्द्रियादिरपि विषयः स्यादतीताना-गतयोश्चासत्त्वेनाकारणतया तद्विषयत्वमनुमितेर्न स्यादित्यर्थः। "ज्ञानप्रतिभास"मिति टीकायां ज्ञानाकारमित्यर्थः। तथा च यो ऽर्थः स्वाकाराधायको यत्र ज्ञाने तदाकारज्ञानस्य स विषयः एतच्च प्रत्यक्षज्ञानविषयत्वे व्यवस्थापकमुक्तमनुमित्यादावलीकस्या-कारानाधायकस्यापि विषयत्वादिति भावः। ननु "विशिष्टविषय-त्वा"दिति प्रमाणविशेष्यको हेतुरुक्तो न त्वर्थधर्मिक इति प्रत्यक्षं न

किमतो यद्येवमित्यत आह। न च सांमान्यमिति। [१२।१८]

ननु च सांव्यवहारिकं स्वलक्षणमप्येवमेवेत्यत आह। स्वलक्षणमिति। [१२।१९] देशकालाननुगतं विचारसहमित्यर्थः।

ननु यद्यपि न प्रत्यक्षं सामान्यरूपमवगाहते तथापि यद्यनुमानमपि स्वलक्षणमवगाहेत् तथापि संप्लवः स्यादित्यत आह। न चेति। [१२।२२]

---

सामान्यविषयकमिति वक्तुमर्हतीत्यत आह। किमत इति। प्रत्यक्षस्य स्वलक्षणविषयत्वे सत्यपि सामान्यविषयत्वसम्भवात् संप्लवः स्यादेवेत्यर्थः। न च सामान्यमिति प्रत्यक्षधर्मिकमेव विशिष्टविषयत्वमभिप्रेत्य सामान्यस्य प्रत्यक्षाविषयत्वमुक्तमिति भावः॥

ननु "स्वलक्षणं तु स्या"दिति पुनरुक्तं प्रत्यक्षं समर्थगोचरमित्यनेनैव तदभिधानादित्यत आह। नन्विति। सांव्यवहारिकं—व्यवहारमात्रविषयः। एवमेव—अवास्तमित्यर्थः। नन्वर्थक्रियासामर्थ्येनैव स्वलक्षणस्य वस्तुत्वव्यवस्थापनात् किमर्थं तस्य देशाद्यननुगम उच्यते अत आह। देशकालेति। तथा चार्थक्रियासामर्थ्यसिद्धार्थमेव तदभिधानमित्यर्थः॥

अप्रसक्तनिषेधमाशङ्क्य प्रसक्तिमाह। ननु यद्यपीति॥

नन्वर्थक्रियासामर्थ्यात् स्वाकारानाधायकत्वेन सामान्यस्य

ननु भवत्वनुमानं सामान्यमात्रनियतं, प्रत्यक्षमपि स्वत्र प्रवर्त्स्यति, भविष्यति च सामान्यमपि सत्त्वादाकाराधायकमतोऽपि संप्लवसिद्धिरित्यत आह। न चेति। [१।२।२४] भवितु मर्हति-परमार्थसदिति शेषः। विचारासहत्वादित्यर्थः।

तत्किं ? सामान्यस्यासत्त्वात् स्वलक्षणे च प्रतिबन्धग्रहासम्भवादनुमानं निर्विषयमेवेत्यत आह। तदिदमिति। [१।२।२५]

---

प्रत्यक्षाविषयत्वादेव संप्लवे निरस्ते सामान्यस्य किमर्थमनेकदेशादिसंसर्गो निषिद्धात इत्यत आह। ननु भवत्विति। तथा चार्थक्रियासामर्थ्यमसिद्धं मत्वा तत्सिद्ध्यर्थं तन्निषेध इत्यर्थः॥

परैर्व्यावृत्तिरूपस्यापि सामान्यस्यानेककालादिसंसर्गस्वीकारादाह। परमार्थेति। विचारेति। कार्त्स्न्यैकदेशादिवृत्तिनिरासादित्यर्थः॥

संप्लवस्यैतावतैव निरासात् तदुत्तरग्रन्थोपयोगार्थमाह। तत्किमितीति। तदिदमित्यादिटीका-तत्तस्मादिदं-सामान्यमनादिवासनोद्भूतविकल्पस्याधिष्ठानं-विषयो-ऽलीकमिति यावत्। विकल्पाकारस्याऽलीकस्य बाह्यत्वं चाऽनुमानगोचरोऽभ्युपेयमित्यर्थः। विकल्पाकारस्येति प्रसङ्गागतं मतान्तरं, अलीकत्वमात्रस्यैव प्रकृतत्वात्। अत एवाग्रे तदेव विकल्पाकारतया साधयति।

तत्किमनुमानमप्रमाणमेवापरमार्थगोचरत्वात्, यद्येवं कथं तदन्यदुल्लिख्यान्यत्र प्रवर्त्तयति, कथं च तद-विसंवादकम्, कथं च बाधिताकारं प्रमाणतया व्यवह्रियत, इत्यत आह। तस्मादिति। [१३।६]

ननु प्रमाणान्तरेण सह संप्लवो भविष्यत्यनयोरित्यत आह। न चेति। [१३।१०] नन्वस्ति शब्दादिकमित्यत आह। प्रमाणस्येति। [१३।१०]

ननु नान्तर्भवत्येवाऽस्वलक्षणविषयत्वाद्विषयाप्रतिबद्धत्वाच्चेत्यत आह। अनन्तर्भावे चेति। [१३।१०]

---

तच्चेति। तत्सामान्यमित्यर्थः। आद्यं हेतुं विवृणोति। यत्स्वल्विति। अन्यव्यावृत्तिरेव निजा स्वरूपं यस्य तत् तथा। द्वितीयहेतुविवरणं न चालोकस्येति। अत्यन्तविलक्षणानां यत्सादृश्यं तदन्यव्यावृत्तिरूपं यथा विज्ञानालोकयोः सादृश्यममूर्त्तत्वम्। तृतीयहेतुविवरणं न च गौरिति। गौरिति विकल्पो यद्यश्वादिव्यावृत्तिविषयो न स्यात्तद्व्यावृत्तिविषयः स्यादित्यवश्यं तस्य व्यावृत्तिविषयत्वे तत एवानुगतमतिरित्यर्थः। प्रमात्राशयः–पुरुषाभिमानस्तद्वत्तत्प्रमाणमिति व्यवह्रियत इत्यर्थः।

निबन्धे ऽन्यदिति। अन्यत्-अलीकमन्यत्र-स्वलक्षणे। अवगतिप्रवृत्त्योः समानविषयत्वादित्यर्थः।

प्रमाणान्तरसत्त्वे ऽपि प्रकृते यत् सिद्ध्यति तदाह नन्विति।

ननु स्वलक्षणसामान्ययोर्व्यवस्थायामपि प्रत्यक्षानुमानयोर्विषयान्तरे संप्लवो भविष्यति, अस्ति हि विषयान्तरं तद्वदित्यत आह। न चेति। [१३।११]

न ह्यसता सामान्येन परमार्थसत्(१) स्वलक्षणं तद्वद्भवितुमर्हति सदसतोः सम्बन्धाभावादित्यर्थः। सो ऽयं गहनः पन्था इत्याशयवानाह। यथा चैतदिति। [१३।१२]

विशेष इत्यत्र यदि कर्मकारकं न ततस्तद्वन्नामापरो ऽस्तीत्यत आह। विशेष इति। [१३।१३] संप्लवमसृ-

शब्दादेः प्रत्यक्षानन्तर्भावे हेतुमाह। असलक्षणेति। अनुमानानन्तर्भावे हेतुमाह। विषयेति।

अप्रसक्तप्रतिषेधमाशङ्क्याह। ननु स्वलक्षणेति। व्यवस्थायां नियतमानवेद्यतायामित्यर्थः। तद्वदिति। विशिष्टमित्यर्थः।

यथाश्रुतस्यागमकत्वादाह। न ह्रीति। नन्वाक्षेपवत् समाधानमपि विस्तरेणैव किं नोक्तमित्यत आह। सो ऽयमिति। तथाच गहनतयाऽऽक्षेपस्य तन्निराकरणे ऽतीव ग्रन्थगौरवमापद्येतेत्यर्थः॥

विशेषशब्दे कर्मव्युत्पत्त्यनादरे हेतुमाह। विशेष इति। कर्मव्युत्पत्तौ विशेषपदेनैव तद्वतो विशेष्यस्याप्यभिधानात् तद्वदिति व्यर्थस्याद् विशिष्टस्यान्यस्याभावादित्यर्थः। अन्यथेति टीकायामत्यः-पदार्थविशेषः। ननु संप्लवस्य व्यवस्थापितत्वात्तमसृष्यमाण

(१) परमार्थसन् इति—२ पा० पु०।

ष्यमाण इदमाह। मीमांसक इति शेषः। "अधिगतं चार्थ"मित्यादिवार्त्तिकस्याधि"गंतत्वा"दित्यादिवार्त्तिकादधिकार्थतां विवक्षन्नाह। स्यादेतदित्यादि। [१।२।१५]

अधिगते ऽर्थे प्रमाणान्तरस्य न तावदर्थाधिगमं प्रत्युपयोगस्तस्य प्रागेव प्रमाणसिद्धत्वात्। नाप्युत्तरोत्तरप्रवाहव्यवहारनिर्वाहं प्रति, तस्यापि तज्जन्यसंस्कारप्रभवस्मृतिसन्ततिसिद्धत्वात्। न च वाच्यं स्मृतिसन्ततिरधिगतिसन्ततिर्वा ऽस्तु व्यवहारप्रवर्त्तिनी न कश्चिद्विशेष इति। स्मृतिवदुपदर्शितार्थमात्रविषयतया तासामप्रमात्वेन तत्साधनस्याप्रमाणत्वप्रसङ्गात्, तासां च

---

इत्ययुक्तमित्यत आह। मीमांसक इति। पूर्वोक्तसमाधिना बौद्धः परं निराकृतः सामान्यादिसत्त्ववादी भट्टः संप्लवमिदानीमाक्षिपतीत्यर्थः। नन्वाक्षेपविवरणत्वसम्भवे किमन्यथा व्याख्यानेनेत्यत आह। अधिगतं चार्थमिति। अधिगतार्थताविवक्षाविवरणपरत्वे समुच्चयार्थचकारानुपपत्तिर्बीजमिति भावः॥

ननु स्मृतिसन्ततिसम्भवे ऽप्यधिगत्यन्तरत्वेनोत्तरस्यानुभवान्तरस्योत्पादनेनार्थवत्त्वं तदवस्थमेवेति कुतः पिष्टपेषणमित्यत आह। अधिगते ऽर्थे इति। अधिगत्यन्तरं हि स्वत एवोत्पद्यते उत्तरव्यवहारहेतुत्वेन वा, आद्य आह। तस्येति। अन्त्य आह। नापीति। तासामिति। गृहीतमात्रविषयतया स्मृतिवत्तासामप्रमात्वेन

तत एव स्मृतित्वप्रसङ्गात्, स्मृतिसन्ततेश्चावश्यम्भावितया तत एव व्यवहारसिद्धावधिगतिसन्ततिकल्पनायां कल्पनागौरवप्रसङ्गादित्याशयवान् पिष्टपेषणमेवोपसंहरति। अधिगतमिति। [१३।१८]

"अन्यथेति" वार्त्तिके यदि कारणगतमन्यप्रकारत्वं विवक्षितं तदा कारणगतप्रकारभेदे ऽपि न कश्चिद्विषयगतो(१)विशेषः पिष्टपेषणपरीहारोपयोगी दर्शितः स्यात्। अथ विषयगत एव प्रकारभेदो दर्शितः तदा ऽनधिगतार्थगन्तृतया कुतः संप्लवः, न च विषयाभेदे ऽपि प्रमाणभेदात् कश्चित्फलप्रकारभेदः प्रकृतोपयोगवानस्तीत्यत आह। अयमभिसन्धिरिति। [१३।२१] पिष्टपेषणे निष्फलत्वं वा स्यात्, अविशिष्टफलत्वं वा, अनपेक्षितफलत्वं वा, अधिगते ऽप्यर्थे किमित्यधिगतिसाधनमधि-

---

तत्कारणस्याप्रमाणत्वमेव विशेष इत्यर्थः। तत एवेति। गृहीतमात्रगोचरत्वादेवेत्यर्थः। स्मृतिसन्ततेश्चेति। पूर्वाधिगतिजन्यसंस्कारस्य हेतोः सम्भवादित्यर्थः। भट्टमते ज्ञानमतीन्द्रियत्वात् कल्प्यमित्याशयेनाह। कल्पनेति।

कुतः संप्लव इति। यद्यपि प्रकारभेदेनानधिगतार्थतया

(१) विषयकृतो इति -२ पा० पु०।

गतिं करोतीति प्रश्नमात्रं वा, साधनासम्भव एव वेति । तत्र साधनासम्भवं दूषयति । न हीति । [१३।२७]

स्वकारणप्रतिबन्धे हि प्रमाणं न स्यात् । न च विषयाधिगमः प्रमाकारणविरोधी येन तस्मिन् सत्येव प्रमाकारणमकारणं भवेत् । तस्मादालोच्य स्वयमेव निवर्त्तेरन्, यदि चेतयेरन्, न चैतदस्तीत्यर्थः ।

प्रश्नमात्रं दूषयति । नापीति । [१३।२३] अनपेक्षितफलत्वमुत्थाप्य दूषयति । प्रमातुरिति । [१३।२५] निष्फलत्वं निराकरोति । तस्मादिति । [१३।२७]

प्रत्युत्पन्नकारणसामग्रीजनितत्वं(१)-तात्कालिका-

धर्मिणि संप्लवः सम्भवत्येव तथा ऽप्यन्यूनानतिरिक्तविषयतया न संप्लव उपपादित इति भावः ॥

तात्कालिकेति । संस्कारासमवहितसामग्रीजनितत्वमित्यर्थः । तेन संस्कारोत्पत्त्यव्यवहितोत्तरक्षणजातस्मृतौ नातिव्याप्तिर्न वा धारावाहिके चिरस्थिरेन्द्रियसन्निकर्षे ऽपि व्यासङ्गोत्तरजातप्रत्यक्षे चाव्याप्तिः । न च प्रत्यभिज्ञानाव्याप्तिस्तस्यापि संस्कारजन्यत्वादिति वाच्यम् । अत एव विशिष्टज्ञानस्याव्यवहितविशेषणज्ञानजन्यत्वाच्च तस्य संस्काराजन्यतया तज्जन्यतत्तास्मृतिजन्यत्वात् । अत एव टीकाकारो द्वितीयाध्याये वक्ष्यति "प्रागनुभवः पुनरनुभवोत्प-

(१) मुद्रिततात्पर्यटीकायां १४ पृ०-१ पङ्क्तौ परिशुद्ध्यनुसारेण तत्कालप्रत्युत्पन्नकारणजनिता बुद्धिरिति पाठो युक्तः ।

साधारणकारणविशिष्टसामग्रीजनितत्वम्। एतेनानुभवत्वं दर्शितं, स्मृतेर्ह्यसाधारणं कारणं संस्कारः, आत्मान्तःकरणादीनां ज्ञानान्तरसाधारण्यात्, स च चिरकालोत्पन्नो न प्रत्युत्पन्नः। यत्तु प्रत्युत्पन्नमुद्बोधापरनाम, सहकारि न तदसाधारणं, अनुभवस्य तु चतुष्टयसन्निकर्षाद्यसाधारणं, तच्च प्रत्युत्पन्नं-प्रत्यग्रमुत्पन्नं, तथाभूता बुद्धिरबाधितेति शेषः।

अविशिष्टफलत्वमभ्युपेत्य पराभिप्रायं निराकरोति। तज्जनकानीति। [१४।३] प्रथमप्रमाणफलतो ऽप्यविशिष्ट-

---

स्मृतिरथ प्रत्यभिज्ञानमिति"। यद्वा ऽनयैवानुपपत्त्या पूर्वापरितोषेणाह। एतेनेति। यद्वा व्यक्तिष्वसाधारणजन्यत्वं ग्रहीतुमशक्यमित्यनुगमकं कार्यगतं सामान्यमाह। एतेनेति। अनुभवत्वजातेः व्यञ्जकमेवानेनोक्तम्। स्मृतेर्हीति। न च स्मृतेर्न संस्कारो ऽसाधारणं कारणं प्रत्यभिज्ञाने ऽपि तस्य जनकत्वादिति वाच्यम्। संस्कारस्य प्रत्यभिज्ञानाजनकत्वादित्युक्तत्वात्। इतरजनकत्वे ऽप्यसाधारणकारणत्वस्यानपायाच्च कर्मणो विभागजनकत्वे ऽपि संयोगासाधारणकारणत्वादिति भावः। यत्त्विति। तस्य सदृशदर्शनादिरूपस्यानियतत्वेनासाधारणत्वाभावादित्यर्थः। चतुष्टयेति। इन्द्रियार्थतदुभयावयवा इत्यर्थः। आदिशब्दादनुमित्यादौ लिङ्गपरामर्शादेः परिग्रहः। एतावन्मात्रं भ्रमसाधारणमित्यतो विशेषयति। अबाधितेति॥

फलतया यद्यानर्थक्यं द्वितीयवत् प्रथमप्रमाणस्यापि द्वितीयाविशिष्टफलतया ऽऽनर्थक्यं स्यात् । अनपेक्षत्वात् सार्थकत्वमिति चेत् एवं तर्हि द्वितीयस्यापि स्वफले ऽनपेक्षत्वमेव । तत् फलं प्रमारूपमेव न भवति गृहीतमात्रगोचरत्वात् स्मृतिवदित्यपि न युक्तम् । यथार्थानुभवत्वनिषेधे साध्ये कालातीतत्वात् । अधिगतार्थत्वे (१) सिद्धसाधनात् साध्यसमत्वाच्च । व्यवहारनिषेधे च तन्निमित्तविरहोपाधिकत्वात् । बाधितत्वाच्च । प्रमाव्यवहारनिमित्तं च वक्ष्याम इत्यर्थः ।

---

यथाश्रुतस्य पराभिप्रायानिवर्त्तकत्वादाह । प्रथमेति । स्वफ इति । परामर्षादेः स्वोत्पत्तौ प्रत्यक्षापेक्षत्वे ऽपि फले ऽनुमिता वन्यानपेक्षत्वमेवेत्यर्थः । साध्यसमत्वाच्चेति । अधिगतार्थत्वगृहीतमात्रगोचरत्वयोः साध्यहेत्वोरविशेषादित्यर्थः । तन्निमित्तेति प्रमाव्यवहारे यथार्थानुभवत्वस्यैव निमित्तत्वात्तस्य चात्र सत्त्वमेवे त्यर्थः । बाधितत्वाच्चेति । उक्तस्यैव निमित्तत्वात्तस्य चा सत्त्वात्तन्निषेधे साध्ये बाधादित्यर्थः । नन्वधिगतार्थगन्तृत्वं प्रमा पदप्रवृत्तिनिमित्तमित्युपाधिः साधनव्यापको न बाध इत्या माह । प्रमाव्यवहारेति । तत्राव्याप्त्यादिदोषस्य वक्ष्यमाणत्वात् तत्प्रवृत्तिनिमित्तमित्यर्थः ॥

---

(१) अनधिगतार्थत्वे साध्ये इति २--पा० पु० ।

एवं तर्हि वार्त्तिकार्थः क ? इत्यत आह । स एव चेति । [१४१४]

ननु फलस्याऽपि साक्षात्कारासाक्षात्काररूपः प्रकारभेदो ऽस्त्येव स एवानेन किं? न प्रदर्श्यत इत्यत आह। यद्यपीति । [१४१५] आदिग्रहणेन कारणगतो ऽपीन्द्रियलिङ्गादिरूपः प्रकारभेदः सङ्गृहीतः । कारणभेदसंप्लवनिरासार्थमेव हि परः प्रत्यवस्थितः स कथं तेनैव प्रतिबोधनीयः । तथा साक्षात्कारासाक्षात्कारभेदेनापि धारावाहिषु कथं परः प्रत्याय्यः । परप्रतिबोधस्य प्रकृतः तदिदमुक्तं प्रकृतानुपयोगादिति ।

( इति विभक्त्यर्थव्याख्यानपरतात्पर्यव्याख्यानम् । )

---

एतावतैवाक्षेपस्य निराकृतत्वादग्रिमग्रन्थोपयोगार्थमाह । एवं तर्हीति ॥

ननु प्रकारान्तरसत्त्वे ऽपि प्रकृते किमुक्तं स्यादित्यत आह। नन्विति । प्रकृतानुपयोगमाह । कारणभेद इति । ज्ञानानां कारणभेदे सत्यपि न संप्लव इति वदन् कथं कारणभेदेन निराकृतः स्यादित्यर्थः॥

धारावाहिष्विति । तत्रैकजातीयेष्वेव संप्लवस्वीकारान्न फलजातिभेदः स्यादित्यर्थः । परेति । अनधिगतार्थत्वप्रयोजकविषयभेदप्रदर्शनेनैव स निर्वहतीति भावः ॥

( इति विभक्त्यर्थव्याख्यानपरतात्पर्यव्याख्याव्याख्यानम् । )

एवं सिद्धं प्रमाणं हृदि कृत्वा संप्लवव्यवस्थे विचारिते, संप्रति प्रमाणस्वरूपं निरूप्यत इत्याह। विभक्त्यर्थेति। [१४।१०] अवधार्यत इति। [१४।११] तथा च विचारस्य परीक्षाया अवश्यं संशयपूर्वकत्वादये सन्दिग्धस्य प्रश्नो युक्त इति भावः।

सन्देहकारणत्वेन निमित्तमाह। केचिदिति। [१४।१२]

---

नन्विदानीं प्रातिपदिकार्थनिरूपणमित्ययुक्तं. पूर्वं प्रमाण-पदार्थमादायैव संप्लवस्य व्यवस्थापनादित्यत आह। एवमिति। यद्विचारनिरूपितं प्रमाणमादाय संप्लव उक्तः स एवेदानीं प्रस्तूयत इत्यर्थः। तस्य तस्यापि तद्धितान्तत्वेन प्रातिपदिकत्वात् तन्निरूपणनिरासायाह। प्रमाणस्वरूपमिति। विभक्त्यर्थेनेति। ननु तसिर्न विभक्तिः। न च तसेश्चेत्यनेन तसिस्थाने प्राग्दिशीय-तसिलो विहितस्य विभक्तिसंज्ञेति वाच्यम्। किंसर्वनामबहुभ्य एव तसेः तसिल्विधानात्। न, यस्या विभक्तेस्तसिस्तद्विभक्त्यर्थमि-त्यर्थात्। अवधारणशब्दे करणव्युत्पत्त्यादरबीजमाह। तथा चेति। अन्यथाऽवधृतिक्रियां प्रतिज्ञायाऽग्रे प्रश्नक्रिया कथं सङ्गच्छतेति भावः। यद्यपि यथा विचारः संशयपूर्वकस्तथा तत्साध्याऽवधृति-क्रियापि संशयपूर्विकेति करणव्युत्पत्तिरफला, तथापि करण-व्युत्पत्तिं विनाऽवधृतिक्रियायां विचारसाध्यत्वमेव न ज्ञायत इति सैव दर्शिता। भावभविताराविति टीकायां भावो-धर्मः-प्रमाण-त्वम्। भविता-धर्मी-प्रमाणलक्षणमित्यर्थः॥

प्रमाणं हि कारणविशेषः करणं च साधकतमम्। न च साध्यसिद्धौ तज्जातीयस्य साधकत्वमस्ति, छिन्ने परशोरिव, तस्माद्यथा ऽच्छिन्नविषयतया व्याप्रियमाणः परशुः छेदने भवति तथा ऽप्रमिते विषये व्याप्रियमाणमिन्द्रियादिकं प्रमाणमिति मीमांसकाः।

मतान्तरमाह। विषयसारूप्यमिति। [१४।१२] फलं तावत्प्रमाणस्यार्थप्रतीतिरेव प्रमारूपत्वात्। न हि प्रमाणस्यार्थे प्रमातिरिक्तमपि किञ्चित् कर्त्तव्यमस्ति। प्राप्तिरपि प्रवृत्तिरेव। प्रवृत्तिरपि प्रवृत्तियोग्यार्थोपलम्भनमेव। तस्मात् प्रमाणस्यार्थप्रतीत्यतिरिक्तं न किञ्चित् फलमिति। यदाह—

"तदेव प्रत्यक्षज्ञानं प्रमाणफलमर्थप्रतीतिरूपत्वा"दिति।

---

पराभिमते उपपत्तिमाह। प्रमाणं हीति। तज्जातीयस्येति। करणजातीयस्येन्द्रियादेरित्यर्थः। तस्मादिति। तद्विषयसाध्यस्वसाध्यजातीयक्रियान्तराभावे तदनुकूलव्यापारवत्करणं तथा च प्रमाणमप्यप्रमित एव विषये व्याप्रियमाणं प्रमाणमिति भाट्टा इत्यर्थः॥

प्रमाणस्यार्थेन प्राप्तत्वनियमादर्थस्य प्राप्तिमाह। प्राप्तिरपीति। नन्वेवमुपेक्षणीयविषयकं प्रमाणं न स्यात्तस्याप्राप्तिफलत्वादित्यत आह। प्रवृत्तिरपीति। न किञ्चिदितीति। प्रमाणव्यवहाराङ्ग-

प्रमाणमपि तदेव यदर्थं व्यवस्थापयति । अर्थमपि तदेव व्यवस्थापयति, यदर्थप्रतीतिं तदीयतया नियमयति । तथात्वेनानियतायां तु तस्यां न कस्यचित् सर्वस्यैव वेति नार्थेन नियता प्रतीतिः स्यात् । अनियतार्थप्रतीतिजनकं च कथं प्रमाणं नाम । न चेन्द्रियादिभिर्ज्ञानं करणैर्ज्ञानं तदीयतया नियम्यते । न हि चक्षुषा जनितत्वादेव नीलस्य नीलज्ञानं, पीतज्ञानस्याऽपि तथात्वप्रसङ्गात् अपि तु नीलाकारत्वादेव नीलज्ञानं नीलस्य । तस्मादर्थाकार एव बुद्धिगतो बुद्धिं तदीयतया व्यवस्थापयन्नर्थमपि तथा व्यवस्थापयति ततश्चार्थव्यवस्थापनहेतुत्वात् स एव प्रमाणम् । यदाह—

"अर्थसारूप्यमस्य प्रमाणं तद्वशेनार्थप्रतीतिसिद्धे"रिति ।

अर्थप्रतीतिसिद्धेः-अर्थप्रतीतिव्यवस्थितेः-तथा चार्थ-

---

मित्यर्थः । तदीयतयेति । नियतविषयसम्बन्धितयेत्यर्थः । ततश्चेति । विषयव्यवस्थापकस्य प्रमाणत्वात्तादृशस्य चान्यस्याभावात् परिशेषेणाकार एव तादृश इति स एव प्रमाणमित्यर्थः । तथा चेति । अर्थप्रतीतिव्यवस्थितौ सत्यामित्यर्थः । प्रतीतिभेदनियमस्य-

व्यवस्थितेरिति यावत्। न चाभिन्नात्मनि करणफल-भावो विरुध्यते। स हि व्यापारव्यापारिभावो वा, गम्यगमकभावो वा। वृक्षादिभिः संयुज्यमान एव हि परशुः संयोगेन व्यापारेण करणमिति व्यवह्रियते लोके। न च संयोगो नाम विग्रहवानन्यः संयुज्यमानात् परशोरस्ति। गम्यगमकभावोऽपि स्वप्रकाशे विज्ञाने बाह्ये च वृक्षे शिंशपया गम्यमाने दृष्ट एव। न हि शिंशपातः कश्चिदन्यो वृक्षो नाम। वृक्षाद्वा शिंशपा। वैकल्पिके तु व्यवहारे यथाऽत्र व्यावृत्तिभेदस्तथा कारकतद्धेतोरपीति कश्चिन्न विशेष इति सौत्रान्तिकाः।

---

त्वादर्थस्येति भावः। न चेति। तद्दर्शने आकाराकारिणोरभेदादित्यर्थः। विग्रहवान् प्रमाणमिव इत्यर्थः। गम्यगमकभावयोर्यदि विषयविषयिभावस्तत्राह। स्वप्रकाश इति। अथ ज्ञाप्यज्ञापकभावः तत्राह। बाह्ये चेति। ननु शिंशपात्ववृक्षत्वयोर्गम्यगमकभावस्तयोश्च व्यावृत्तिरूपतया नाभेद इत्यत आह। वैकल्पिके त्विति। वैकल्पिके-सविकल्पकजन्ये। तथा चात्रापि तद्वदेव व्यावृत्तिभेदस्तुल्य इत्यर्थः। यद्यप्यनागतायाः शिंशपाया गमकत्वाभावात्तद्‌ज्ञानं गमकं तच्च ततो भिन्नमेवेति न तादात्म्यं तथापि परामृश्यमाणं लिङ्गं करणमिति मतमभिप्रेत्यैतदुक्तम्।

मतान्तरमाह। विज्ञानस्यैवेति। [१४।१३] अर्थप्रकाशनं हि यस्य व्यापारस्तदेव प्रमाणं, 'प्रकाशनं च चैतन्यरूपं तस्यैव, यश्चेतयते। न चेन्द्रियादीनि करणानि तथा, जडरूपत्वात्। न हि ज्ञानातिरिक्तः कश्चिच्चेतनो नाम ? तस्माद्विज्ञानमेव चेतनतया दर्शनव्यापारतया च प्रमाणम्। व्यापारव्यापारिणोश्चाभेद एव संयुज्यमानपरशुवदिति निराकारवादिनो वैभाषिकादयः।

मतान्तरमाह। उपलब्धीति। [१४।१४] वृद्धाः-प्रमाणवृद्धाः।

"भावप्रश्नव्याख्यानेन भवितृप्रश्नोव्याख्यात"—

---

तदेवेति। प्रमायाः स्वप्रकाशात्मकत्वादित्यर्थः। जडरूपत्वादिति। अज्ञानरूपत्वादित्यर्थः। न हीति। तस्य स्थिरत्वे अर्थक्रियाया अभावादित्यर्थः।

वृद्धत्वमात्रेण न पक्षस्य प्रामाणिकत्वज्ञापनमत आह। प्रमाणवृद्धा इति। न तु धनादिवृद्धा इत्यर्थः।

ननु भवितृप्रश्न एव टीकाकृता व्याख्यायते न तु भावप्रश्नस्तथाच विपरीतं वक्तुमर्हतीत्यत आह। सहेति। सहेत्यध्याहृत्येति व्याख्या न युक्ता भावप्रश्नस्याव्याख्यानात् महार्थत्वानुपपत्तेः। न च भावभवितारौ पृच्छतीत्यनेनोभयप्रश्नो व्याख्यातः। तदा स्वशब्देनैव तस्य व्याख्यातत्वात् पुनस्तदभिधानवैयर्थ्यापत्तेः।

इति तु सहेत्यध्याहृत्य केचिद्व्याचक्षते। केचित्तु भाव-प्रश्नव्याख्या बोद्धव्या, अनेन भवितृप्रश्नो व्याख्यात इति। अन्ये तु भावप्रश्नव्याख्यानेन हेतुना भवितृप्रश्नो व्याख्यातो भावप्रश्नं व्याख्यातुं भवितृप्रश्नो व्याख्यातः तदन्तरेण तदनुपपत्तेरिति। लिपिप्रमादो ऽयमिति सम्प्रदायविदः।

व्यभिचारो विसंवादः। अनर्थवत्त्वं विपरीतार्थ-वत्त्वम्। अतो न साध्याविशिष्टता।

ननु स्थाणुर्वा पुरुषो वेत्युपदर्शितयोरन्यतरः प्राप्यत एव तत्कथं विसंवादकत्वं कथं चानर्थवत्त्व-मित्यत आह। नो खल्विति। [१४|१७] यतो न प्राप्यते

द्वितीयतृतीयव्याख्या ऽप्ययुक्ता भवितृप्रश्नस्य स्वातन्त्र्येणैव कृतत्वात् तद्व्याख्यानस्य भावप्रश्नव्याख्यानपरत्वाभावादित्यत आह। लिपीति।

ननु अतद्वति तत्प्रकारकज्ञानत्वस्य व्यभिचारित्वात् साध्या-वैशिष्ट्यमित्यत आह। विसंवाद इति। विसंवादः फलानभि-सम्बन्धोऽतद्वति तत्प्रकारकज्ञानत्वं च व्यभिचारित्वमित्यर्थभेद इत्यर्थः (१)।

अप्रमत्वप्रतिषेधमाशङ्क्याह। नन्विति। नोखल्वितीति। न

(१) व्यभिचारानर्थवत्त्वमित्यर्थभेद इति २ प्रा॰ पु॰।

ऽत एव नार्थक्रियासूपयुज्यते, अप्राप्तेरनुपयोगाच्च नास्तीत्यर्थः ।

यद्यप्यनुभवाभिप्रायेणोपलब्धौ व्याख्यायमानायां स्मृतिहेतौ नास्ति प्रसङ्गः स्मृतेरननुभवत्वात्, तथापि "बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तर"मिति (१) सूत्रयतो-पलब्धिशब्दो ज्ञानपर्यायः स्वीकृतः । अस्ति च स्मृते-रपि ज्ञानत्वमित्यनेनाभिप्रायेणोक्तम् । न ह्यसा-विति । [१४।१८]

अतीतार्थे परम्परया तत्कार्यतयाऽपि शब्दलिङ्गादे-रर्थसम्बन्धो ऽस्ति, अनागते तु सो ऽपि नास्तीत्यत आशङ्कितं ज्ञापकतयेति । संस्कारस्यापीति । [१४।२२]

चान्यतरस्यापि संशयविषयत्वेन विकल्प्यमानत्वात्तत्प्राप्तौ विकल्प्य-मानप्राप्तिरस्त्येवेति वाच्यम् । तथापि विशिष्टस्याप्राप्तेर्यावदुपदर्शि-तार्थप्राप्त्यभावादन्यतरप्रमात्वे ऽपि विशिष्टे प्रमात्वाभावादित्यर्थः । अर्थक्रियानुपयोगित्व एव हेत्वाकाङ्क्षायां पूरयति । यत इति ।

तथापीति । यद्यपि सूत्रस्यार्थान्तरत्वमात्रनिराकरणपर-तया सामान्यविशेषभावेनाप्युपपत्तेर्न ततः पर्यायत्वं लभ्यते तथापि व्याख्यातृभिः पर्यायत्वकथनपरत्वेनैव सूत्रस्य व्याख्यान-पारम्पर्यात्तत एव चार्थान्तरनिराकरणस्यापि लाभ इति भावः ।

(१) गौ सू अ० १ आ० १ सू १५ ।

तस्यापि परम्परयाऽर्थकार्यत्वमर्थज्ञापकत्वं च साक्षात् समानमित्यर्थः ।

ननु न स्मृतिः प्रमेत्यत्रैव विवाद इत्यत आह । लोकेति । [१४।२४]

अनेन प्रमाशब्दप्रवृत्तिनिमित्तग्राहकं प्रमाणमुपलक्षयति । तथाहि न तावद् ज्ञानत्वादिकं तन्निमित्तं, येन स्मृतिरपि प्रमा स्यात् विपर्ययस्यापि तथात्वप्रसङ्गात्। नापि प्रमात्वं नाम सामान्यविशेषः समस्ति,

---

परम्परयेति । शब्दलिङ्गादेः प्रत्यक्षपूर्वकत्वात्तस्य चार्थजन्यत्वात् परम्परया ऽर्थसम्बन्ध इत्यर्थः । प्रमाणशब्देनेति टीका—यद्यपि प्रमाणपदं लक्ष्यपदं न च ततो लक्षणे विशेषलाभस्तथाप्युपलक्षिपदमेव प्रमाणपदसमभिव्याहारात् तदन्वययोग्यानुभवे वर्त्तत इत्येतावतैव प्रमाणपदेनैवेत्युक्तम् ।

ननु स्मृतिर्न प्रमा ततस्तत्साधनमपि न प्रमाणमित्येतावतैव प्रकृतसिद्धेः किं लोकानुसरणेनेत्यत आह । ननु नेति ।

ननु यथार्थं ज्ञानमेव प्रमा लाघवात् न तु तद्विशेषो गौरवादित्यत आह । अनेनेति । ज्ञानत्वादिकमित्यादिपदेन सविषयकत्वादिग्रहणम् । नन्वनुगतप्रमाव्यवहारात् प्रमात्वं जातिरस्ति सैव प्रमापदप्रवृत्तिनिमित्तं स्यादित्यत आह । नापीति । सामान्यं-जातिः । तद्विशेषः-स्मृतिसाधारणः । समस्ति-सम्भवति ।

ज्ञानगतस्य सामान्यविशेषस्य मनोमात्रग्राह्यत्वात्। प्रमात्वस्य चानुमेयतया प्रागेव प्रतिपादितत्वात्। प्रमात्वं च सामान्यविशेषस्तदभाववति तद्विरुद्धसामान्यवति वा विपर्ययज्ञाने न समवेयात् तथा च विपर्ययज्ञानं धर्मिण्यपि न प्रमा स्यात्। एवं च निरालम्बनमापद्येत। सामान्यं च सामान्यान्तरेण सह परापरभावेन एकस्यां व्यक्तौ समाविशेत्। तत्रानुभवत्वं वा परं प्रमात्वं वा। आद्ये स्मृतिः कथं प्रमा। द्वितीये त्वनुभवः प्रमात्वं न व्यभिचरेत्। तथा च

---

येन तदेव प्रमापदप्रवृत्तिनिमित्तं स्यादित्यर्थः। जातेर्व्यक्तियोग्यतयैव योग्यत्वाज्ज्ञानग्रहे प्रमात्वस्यापि ग्रहापत्तेः। प्रमात्वस्य नित्यानुमेयत्वसिद्धान्तविरोध इत्याह। ज्ञानेति। अप्रमात्वं यदि प्रमात्वात्यन्ताभावज्ज्ञानत्वं तत्राह। तदभाववतीति। अथ प्रमात्वविरुद्धजातिरप्रमात्वं तत्राह। तद्विरुद्धेति।

एवं सति को दोष इत्यत आह। तथा चेति। निरालम्बनमिति। न स्मरणे व्यभिचारः। विपर्ययो यदि स्मृत्यन्यत्वे सति प्रमाणं स्यात् ज्ञानं न स्यात् पटवदित्यर्थः। व्याप्यव्यापकभावानुपपत्तिमाह। सामान्यं चेति। गुणजातौ परापरभावानुपपत्तिर्न दोषायेति प्रमादो निर्मूल एव, दूषकताबीजस्य तुल्यत्वात्। गन्धतारत्वादावन्यथोपपत्तेर्वक्ष्यमाणत्वात्। तथा चेति।

विपर्ययोऽपि दत्तजलाञ्जलिः स्यात्। साक्षात्कारित्वं च यदि परं तदा ऽसाक्षात्कारवत्यो ऽनुमितिप्रभृतयो न प्रमाः स्युः। अथापरं, विपर्ययबुद्धिर्न साक्षात्कारवती स्यादप्रमात्वादिति। यथार्थत्वमात्रमिति चेन्न। स्मरामीत्यत्रापि प्रमिणोमीति बुद्धिव्यपदेशप्रसङ्गात्। इष्ट एवायमिति चेत् न, ईश्वरेच्छामात्रेण लौकिकप्रयोगाप्रयोगयोर्नियन्तुमशक्यत्वात्। तेनैवायं प्रमाणशब्दो

---

जातेर्व्याप्यवृत्तितानियमात्। न च संयोगात्यन्ताभावस्य यथा कर्मादौ व्याप्यवृत्तित्वे ऽपि संयोगवत्यव्याप्यवृत्तित्वमनुभवबलात् तथा प्रमात्वतदत्यन्ताभावयोरपि तथाऽस्त्विति वाच्यम्। अवच्छेदभेदं विना विरुद्धयोरेकत्रासमावेशादप्रतीतेश्च। न च विषय एवांशरूपः प्रमात्ववृत्तावच्छेदकः, तद्विषयत्वस्य भ्रमे ऽपि सत्त्वात्। अतिप्रसक्तस्य चानवच्छेदकत्वात्। अन्यस्य चावच्छेदकत्वे तदेव प्रमात्वमस्तु आवश्यकत्वात् किं जात्या। तथापि विपर्यये धर्म्यंशे स्मृतिरूपायाथार्थ्यमात्रमस्त्विति चेत्। न। तथा सत्यावश्यकत्वेन यथार्थानुभवत्वस्यैव प्रमात्वापत्तेः प्रमाव्यवहारस्योभयत्रापि तुल्यत्वेन विनिगन्तुमशक्यत्वाच्च। ननु यथा परमाणुं साक्षात्करोमीत्यत्र साक्षात्कारित्वं न परमाणुना निरूप्यते किं तु तज्ज्ञानेन, अन्यथा परमाणोः प्रत्यक्षत्वापत्तेः, तथात्राप्यबाधितेन धर्मिणा प्रमात्वं निरूप्यते न तु बाधितेनापि रूपेण। मैवम्। ज्ञानत्वज-

यथार्थज्ञानमात्रे नियतः कुत इति चेत् । न । तस्यापि लौकिकप्रयोगेऽनियतत्वात् । अस्त्येव लोकप्रयोग इति चेत् । न । महर्षिभिस्तदभियुक्तैः स्मृतिफलस्य प्रमाणत्वेनापरिसङ्ख्यानात् । उक्तेष्वन्तर्भावादपरिसङ्ख्यानमिति चेत् । न । प्रत्यक्षस्याऽसाक्षात्कारिफलत्वानुपपत्तेः । लिङ्गशब्दादेश्च सत्तामात्रेण(१) प्रतीत्यसाधकत्वादिति ।

किं च स्मृतेर्याथार्थ्यमपि कुतः । न हि यादृशो ऽर्थः स्मर्यते यदा तादृश एवासौ तदा, पूर्वावस्थाया वर्त्तमाने

ज्ञानत्वव्याप्यजातिविषयविशेषनिरूप्यत्वाभावात् । प्रत्यक्षत्वमपि न परमाणुमात्रेण, नापि ज्ञानमात्रेण निरूप्यते किं तु परमाणुविषयकज्ञानेन । ज्ञानोपनीतत्वेन परमाणोरपि तत्र प्रत्यक्षत्वाच्च । अपि चैवं ज्ञानत्वानुभवत्वाभ्यां प्रमात्वस्यान्यूनानतिरिक्तव्यक्तिवृत्तित्वापत्तिः । यथार्थत्वमात्रमिति । प्रमापदप्रवृत्तिनिमित्तमिति शेषः । उक्तेष्विति । प्रत्यक्षादिप्रमाणेष्वेव संस्कारान्तर्भावान्न पृथक् कथनमित्यर्थः । प्रत्यक्षस्येति । तथा च स्मृतेरसाक्षात्कारित्वात् तत्फलकस्य संस्कारस्य न प्रत्यक्षे ऽन्तर्भावः, अज्ञातस्यैव तस्य स्मृतिजनकत्वात् न ज्ञायमानकरणे ऽनुमानादावन्तर्भाव इत्यर्थः ।

एतावता स्मृतेर्यथार्थत्वमवगम्य तदप्रामाण्यमुपपादितमिदानीं स्मृतिरयथार्थत्वादेव न प्रमेत्याह । किञ्चेति । तदुपपादयति । न हीति । स घट इति स्मृत्या पूर्वावस्थाविशिष्टो घटो विषयी-

(१) सत्तामात्रेणाप्रतीत्य इति २ - पा० –पु० ।

निवृत्तत्वात् अनिवृत्तौ हि पूर्वतैव न स्यात्। न च निवृत्तपूर्वावस्थतयैव तमर्थं स्मृतिरालम्बते, पूर्वावस्था-निवृत्तेरननुभूतत्वात् अननुभूते चार्थे स्मृतेरप्रवृत्तेः ॥

ननु समानविषयत्वे ऽपि स्मृत्यनुभवयोरनुभवो यथार्थो न स्मृतिरिति कुत एतत् ?, अनुभवकाले तस्यार्थस्य तावदवस्थ्यात् स्मृतिकाले त्वताद्वस्थ्यात्। ननु पूर्वं तावत्तद्वस्थ एवासावासीत् एतावतैव ज्ञान-मस्तु यथार्थम्। न। पाकरक्ते ऽपि श्यामप्रत्ययस्य यथार्थत्वप्रसङ्गात्। नन्वतीतः श्याम इति प्रत्ययस्तत्र

क्रियते घटो ऽयमिति वर्त्तमानविषयकानुभवात्। न च स्मृतिकाले पूर्वावस्था वर्त्तमानेत्यर्थः। पूर्वतैवेति। वर्त्तमानध्वंसप्रतियोगिन एव पूर्वत्वादित्यर्थः ॥

कुत एतदिति। स्मृत्यनुभवयोरन्यूनानतिरिक्तविषयत्वात्समा-नविषयनिबन्धनत्वाच्च प्रमात्वस्य, स्मृतेरेवाप्रमात्वं न त्वनुभवस्येति कुत इत्यर्थः। उत्तरम् अनुभवेति। घटो ऽयमित्यनुभवकाले घटस्य वर्तमानत्वात् स्मृतिकाले त्ववर्तमानत्वात् तुल्यविषयत्वे ऽप्यनयो-र्वैषम्यमित्यर्थः। नन्विति। पूर्वं वर्तमानैव पूर्वावस्था आसीदि-त्यत एव स्मृतिः तद्वर्तमानत्वविषयापि यथार्था स्यादित्यर्थः। पाक-रक्त इति। यदि यदा कदाचिद्वर्तमानत्वेनैवातीतस्यापि वर्तमान-त्वप्रतीतिर्यथार्थेति भावः। नन्वतीता पूर्वावस्था स्मृत्या न स्वकाले वर्तमानत्वेन विषयीक्रियते येनैतदयाथार्थ्यं स्यात् किं त्वतीतस्या-

यथार्थ एव । सत्यम् । तद्विषयस्य तदानीमेवं तद-वस्थत्वात् । न तु स्मर्यमाणार्थस्तदानीं तदवस्थः

तीतत्वेनाविषयत्वेऽपि यो वस्तुगत्याऽतीतः स (१) एव स्मृतेर्विषयः तथा चेदानीमतीतावस्थाविशिष्ट इति स्मृतेरभावात् नायथार्थत्वम् । एवं पाकरक्ते ऽपीदानीं श्याम इति प्रतीतिर्नास्त्येव, किन्तु श्याम इति प्रतीतिः सा च कदाचिच्छ्यामत्वे ऽप्युपपन्नेति नायथार्था ।

अत्र तत्तेदन्ते स्मृत्यनुभवविषयावखण्डावेवोपाधी क्रमधर्मवि-लक्षणौ । एवं च इदन्तानुभवजन्यसंस्कारेणेदन्तैव तत्तया स्मार्यते। न च तत्तायाः क्वचिदनारोपे कथं तदारोपः स्यादिति वाच्यम प्रत्यभिज्ञायां तत्तांशे यथार्थत्वात् । इदन्तानुल्लेख्यनुभवप्रभवे ऽपि स्मरणे धर्मान्तरमेव तत्तया भासते । अत एवायं घट इति न स्मृति-रिति सर्वा स्मृतिरयथार्था चायथार्थानुभवाच्च प्रमुष्टतत्तांशा च स्मृतिर्न भवत्येव । हरिहराद्यनुचिन्तनं च कविकाव्यादि-मूलज्ञानवन्मनोरथनिर्मितज्ञानसाकाङ्क्षपदानुस्मरणप्रभवमनुभवरू-पमेवेति रत्नकोषकृतः ।

तन्न । स्मृतेः पूर्वमिदन्त्वोपस्थितिं विना तत्र तत्तारोपाऽसम्भवात् । आरोपविषयोपस्थितिं विनाऽऽरोपासम्भवात् । तथाप्यंशे याथार्थ्या-परिहाराच्च । किं च तत्तांशे ऽननुभूतगोचरत्वेन स्मृतेः संस्कारसीमा-लङ्घने इदन्ता तत्तया स्मर्यत इत्यत्र मानाभावः । घट एव कदाचित् तत्तया स्मर्यते इत्येवास्तु लाघवात् । न च तत्तायास्तत्र सत्त्वान्ना-रोप इति वाच्यम् । इदन्तायामपि तत्तास्त्वित्वेनारोपासम्भवात् ॥

(१) सर्व इति २—पा०—पु० ।

अत्र सम्प्रदायविदः स घट इति स्मृतौ तत्ताविशिष्टस्य वर्तमानता भासते। संस्कारस्य वर्तमानज्ञानसामग्रीसहितस्यैव हेतुत्वात्। सो ऽयमिदानीमिति प्रत्यभिज्ञायां तथा कल्पनात्। गेहे स घट इति स्मरणान्निष्कम्पप्रवृत्तेश्च, अन्यथा तत्ताविशिष्टस्येदानीं संशये सा न स्यात्। न च वर्तमानांशे ऽननुभूतविषयत्वं स्मृतेर्वर्तमानत्वेनानागतवर्तमानस्य पूर्वमनुभवात्। एवं च स्मृतेस्तथाभूतस्य वर्तमानता विषयः तत्र विशेष्यस्य विशेषणस्य वा वर्तमानत्वाभावात् स्मृतिरयथार्थैव।

अस्मत्पितृचरणास्तु - विवादपदं स्मृतिः स्वविषयवर्तमानत्वविषया अतीतानागताविषयत्वे सति प्रतीतित्वात् प्रत्यभिज्ञानवत्। प्रतीतेः समयविशेषविषयत्वनियमात्। ज्ञानसामग्रीमहिम्ना चाऽननुभूते समयांशे स्मृतिने तत्र संस्कारो व्यापारो ऽन्यथासिद्धत्वात्। अत एव पाकरक्ते श्यामोऽयमिति प्रतीतिरयथार्थत्वव्यवहारः। श्यामत्वे वर्त्तमानत्वेनानवगमात्। अत एवातीतानागतान्यगोचरत्वे विद्यमानधूमेन पर्वते ऽग्निरित्यनुमितेर्वर्त्तमानाग्निविषयत्वादिदानीमग्निरिति निश्चयात् प्रवृत्तिः अन्यथेदानीं तत्संशये प्रवृत्तिर्न स्यात् कालगर्भव्याप्यप्रतिसन्धाने गत्यन्तराभावादिति स्मृतिरयथार्थेति श्रीतत्त्वचिन्तामणावाहुः॥

अथ केयं तत्ता? न तावदतीतानुभवविषयत्वम्, अतीतानुभवविषयत्वस्या ऽनुभवे ऽविषयत्वेन स्मृत्या तदुल्लेखानुपपत्तेः। न च तस्यानुभवाविषयत्वे ऽपि यदा ज्ञानान्तरेण ग्रहणं तदा स घट इति स्मृतिरन्यथा प्रमुष्टतत्तांशा घट इति वाच्यम्। अतीतानुभवविषयत्वस्यानुमितौ भाने ऽपि स इति बुद्धेरभावात्। तन्निश्चये ऽपि तत्ता-

**तस्मात् स्मृतिरयथार्थैव । यथानुभवं तु भवेत् ।**

संशयात् । सत्त्वप्रयोगानुपपत्तेश्च । नाप्यतीतधर्मवैशिष्ट्यं तत्ता, सत्त्व-प्रयोगश्च धर्मविशेषातीतत्वमादाय समाधेयः, क्वचित्तद्विषये ऽपि तत्तासंशयश्च निश्चितेतरधर्मविशेषविषयत्वेनोपपत्स्यत इति वाच्यम् । यदि हि वस्तुगत्या यो ऽतीतधर्मः तद्वैशिष्ट्यं तत्ता, तदाऽनुभवे ऽपि तद्विषयत्वात्तत्तोल्लेखापत्तिः । नाप्यतीतत्वेन भासते यो धर्मस्तद्वै-शिष्ट्यं भासमानधर्मस्यातीतत्वेनानुभवाविषयत्वात् । प्रत्युत वर्त-मानत्वेनानुभवात् स्मृतौ तत्तोल्लेखानुपपत्तेः । न चानुभवानन्तरं यत्र ज्ञानान्तरे तद्भासते तत्रैव स्मरणे तत्तोल्लेखो नान्यत्रेति वाच्यम् । अतीतधर्मवैशिष्ट्यानुमितौ तत्तोल्लेखानुपपत्तेः । अत एव नातीत-समयसम्बन्धस्तत्ता, अनागतगोचरस्मृतिप्रत्यभिज्ञयोस्तत्तोल्लेखानुप-पत्तेः । इदन्ता ऽपि न तद्वृत्तिगुणादि, गुणादावभावात् । नापि प्रत्यक्षज्ञानगोचरत्वम्, अचाक्षुषत्वापत्तेरिति ।

उच्यते । अनुभवे य एव धर्मः कालो वर्तमानत्वेनाभासते स एव स्मरणे ऽपि, तयोरेकविषयत्वे ऽपि स्मृतावेव तत्प्रयोगा उन्नेयाः । संस्कारज्ञानस्यैव तत्तच्छब्दप्रयोगहेतुत्वात् । प्रत्यभिज्ञाने तथा कल्पनात् । तत्रैव प्रत्यक्षानुभवेनेदंशब्दप्रयोगः । विषयकृतः स्मृत्यनुभवयोर्विशेषो नास्त्येव । अत एवाऽयं घट इत्यनुभवादयं घट इति न स्मृतिः । स घट इति स्मृतिहेतुश्च स घट इति नानु-भवः सत्त्वप्रयोगश्च धर्मविशेषमादायेति ॥

यथा ऽनुभवमिति । येन रूपेणानुभवस्तादृप्येणैव स्मृत्युपपत्ते-

तत्रानुभवस्य यथार्थत्वात् तदेकविषया स्मृतिरपि यथार्थेत्युच्यते। अत एवानुभवस्यायथार्थत्वे स्मृतिरविपरीतार्थाऽप्ययथार्थैव, यथा रज्जुं भुजङ्गतयाऽनुभूय विद्रुतस्य तथैव स्मृतिः। तस्मात् स्मृतेर्याथार्थ्यं याचितकमण्डनप्रायं नाजानिकम्। इदमेव पारतन्त्र्यपदवाच्यं कैश्चिन्निरुक्तिशून्यैरन्यथोपप्लूयत इति। तस्मादुभयथापि स्मृतेरन्यस्यानुभवस्यैकनियतं यथार्थत्वमेव प्रमापदस्य प्रवृत्तिनिमित्तं लोको ऽवधारितवान्, कथमन्यथा तत्रैव प्रमाशब्दं प्रयुङ्क्ते नान्यत्रेति यद्यपि, तथाऽपि धर्मिण्यपि स्मृतेः प्रामाण्यं माभूदित्याशयवान्

---

रित्यर्थः। यथार्थत्वव्यवहारं समर्थयति। तत्रेति। एतदेव द्रढ़यति। अत एवेति। यतो यत्रानुभवो न यथार्थस्तत्रस्मृतिर्यथार्थापि न व्यवह्रियत इत्यर्थः। अविपरीतार्था ऽपीति। अनुभवादनतिरिक्तार्था ऽपीत्यर्थः। नाजानिकं-न स्वतन्त्रं, किं तु कारणानुभवानतिरिक्तविषयत्वे सति तद्याथार्थ्यपरतन्त्रमित्यर्थः। तेन क्वचिदनुमितेः स्वकारणलिङ्गपरामर्शयाथार्थ्याधीनयाथार्थ्ये ऽपि न दोषः, तस्याः स्वकारणलिङ्गपरामर्शविषयातिरिक्तविषयत्वात्। शाब्दानुभवस्य तु स्वकारणसमानविषयकाप्तज्ञानयाथार्थ्यापेक्षयाथार्थ्ये ऽपि न प्रतिपाद्यज्ञानयाथार्थ्यापेक्षत्वम्, अत्र तु स्मर्तुरेवानुभवयाथार्थ्यं स्मृत्या स्वयाथार्थ्यायापेक्ष्यत इति भावः। उभयथापीति।

प्रागुक्तयुक्तिकं लोकप्रयोगमेवाश्रितवान्। तदिदमुक्तं लोकश्चेति ॥ [१४।२५]

एवं तावद्यथार्थो ऽनुभवः प्रमा तत्साधनं च प्रमाणमिति स्वलक्षणमाशङ्कितातिव्याप्तिनिराकरणे-

---

स्मृतेर्याथार्थ्यं ऽयाथार्थ्यं चेत्यर्थः। प्रागुक्तयुक्तिकमिति। ज्ञानत्वादिकं न प्रवृत्तिनिमित्तमित्याद्युक्तयुक्तिः।

एवं तावदिति। ननु यथाशब्दः सादृश्यवाची तत्र सादृश्यमात्रं वा विवक्षितं सर्वथा सादृश्यं वा, नाद्यः भ्रमे ऽतिव्याप्तेः, नान्त्य, ज्ञाने घटत्वादिना सादृश्याभावात्। न चाबाधितत्वं यथार्थत्वम्, बाधस्य विपरीतप्रमारूपत्वेनाऽऽत्माश्रयात्। नापि संवादित्वं, तद्धि न ज्ञानान्तरेण तथोल्लिख्यमानत्वं, भ्रमसाधारण्यात्। नापि समर्थप्रवृत्तिजनकत्वं, उपेक्षाप्रमायामव्याप्तेः। योग्यतायाश्च प्रमात्वनिरूप्यत्वात्। नापि विशेष्यनिष्ठात्यन्ताभावाप्रतियोगिधर्मप्रकारकानुभवत्वं, संयोगादिप्रमायामव्याप्तेः। अभावे व्याप्यवृत्तित्वविशेषणे च संयोगभ्रमे ऽतिव्याप्तेः। तदत्यन्ताभावस्यैकत्वात्। न हि प्रतियोगिभेदादिवाधिकरणभेदादप्यभावभेदः, एकैकविशेष्यावृत्तिनानाप्रकारकसमूहालम्बनाव्याप्तेश्च। न च प्रकारस्यैकविशेष्यवृत्तितया न विशेष्यावृत्तित्वमिति वाच्यम्। अप्रमाप्रमारूपसमूहालम्बनाऽतिव्याप्तेः। यावद्विशेष्यावृत्तित्वविवक्षायामेकविशेष्यके यावदर्थाभावात्। अथ परज्ञानं ज्ञानत्वेन तद्विशेषं च घटत्वेन जानतो घटमयं जानाति न वेति संशयाद्विषय-

नादुष्टमिति समाहितम्। न चैतन्मीमांसकस्यानभिमतम्। न हि तेनाप्यताव्याप्त्यतिव्याप्ती प्रसञ्जयितुं शक्येते। न ह्यस्ति सम्भवो यथार्थो ऽनुभवो न प्रमेति।

---

ज्ञानस्वरूपातिरिक्तस्य स्वाश्रयस्वभावादिविशेषणताविलक्षणस्य विषये ज्ञानविशेषणतारूपस्य विषयत्वस्यावश्यं स्वीकाराद्विषयताश्रया विशेष्य: ज्ञानं तत्प्रतियोगि भ्रमे शुक्तिवृत्तिविषयता व्यधिकरणेन रजतत्वेनावच्छिद्यते, रजतवृत्तिश्च समानाधिकरणेन रजतत्वेन, तथा च विषयतासमानाधिकरणप्रकारको ऽनुभव: प्रमेति स्यात्। न स्यात्। निर्विकल्पकाव्याप्ते:। स्वव्यधिकरणधर्मानवच्छिन्नविषयताप्रतियोग्यनुभव: प्रमा, समूहालम्बने च प्रतिविशेष्यं विषयताभेदादेकवृत्तिविषयता नापरवृत्तिना ऽवच्छिद्यत इत्यतो नाव्याप्तिरिति चेत्। न। भ्रमांशप्रमायामव्याप्ते:। न हि विषयता व्यधिकरणेनावच्छिद्यते सा तदनवच्छिन्ना विरोधात्। अतिरिक्तविषयताया अभावाच्च मानाभावात्। सामान्यतो ज्ञाने ज्ञाते तस्य कश्चिद्विशेषणतेति सामान्यतो विशेषणताज्ञाने ऽपि घटमयं जानाति न वेति संशयतादवस्थ्यात्। तस्माद्घटतज्ज्ञानयो: स्वरूपग्रहे ऽपि तदीयत्वं तद्विषयत्वं न गृहीतमिति तत्र संशय: तदीयत्वं च तत्स्वभावसम्बन्धत्वं यथा तत्र विशेषणतायाम्, अन्यथा ऽनवस्थानात्। अन्यत्रापि स्वरूपसम्बन्ध एषैव गति: अन्यथा सामान्येनाभावसमवाययोर्ग्रहे ऽधिकरणे च ज्ञाते तयो: संशयो न स्यात्। अधिकरणतदुभयस्वरूपाणां ज्ञातत्वात्। तत्राप्यभावसमवाययो-

तल्लक्षणे त्वस्माकं कुतो विप्रतिपत्तिरित्यत आह। अनधिगतार्थगन्तृत्वं चेति ॥ [१४।२७]

उपलक्षणं चैतत्। नित्यपदार्थेष्वनधिगतत्वं नाम

---

विशेषणताविशेषो न ज्ञात इति चेत्। न। सामान्यतस्तद्वहेऽपि तत्संशयात्। नापि विशेष्याऽवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकधर्मप्रकारकानुभवत्वम्, अव्याप्यवृत्तिप्रमायामव्याप्तेः। मूले वृक्षः कपिसंयोगवानित्यबाधितानुभवात् संयोगवदन्योन्याभावस्याप्यव्याप्यवृत्तित्वात्। अवच्छेदभेदेन भेदाभेदयोरविरोधात्।

अत्रास्मत्पितृचरणाः। यत्र यदस्ति तत्र तदनुभवः प्रमा। यत्र यन्नास्ति तत्र तदनुभवोऽप्रमा। इदं रजतमिति ज्ञानमिदन्त्ववति तदनुभवत्वात् प्रमा, रजतत्वाभाववति रजतत्वानुभवत्वादप्रमा। समूहालम्बनं च नाप्रमा, एका भाववति तदप्रतीतेः। न चैवमव्याप्यवृत्तिभावाभावयोरेकत्र प्रमाप्रमयोः प्रसङ्गः, तदभाववति तदनुभवत्वादिति वाच्यम्। भिन्नभिन्नावच्छेदेन हि वृक्षे संयोगतदभावौ, न वृक्षमात्रे, विरोधादननुभवाच्च। एवं च यत्र वृक्षे संयोगो न तत्र तदभावः। न च यत्तद्भ्यां लक्षणेऽननुगमो, लक्ष्यस्याननुगतत्वात्। न हि या प्रमा सा सर्वत्र प्रमा, किं तु क्वचित्। तथा च किं ज्ञानं कुत्र प्रमेत्यपेक्षायां यथोक्तमेव लक्षणं युक्तमिति सङ्क्षेपः॥

सामान्यतः प्रमेयत्वादिना सर्वेषामेव सर्वैरवगमादनधिगतत्वं न सम्भवतीत्यभिप्रेत्याह। उपलक्षणं चेति। अथ विशिष्यानधि-

नास्त्येव। यदि नेह जन्मनि, जन्मान्तरे ऽप्यधिगमात्। यदि न प्रत्यक्षेणानुमानोपदेशाभ्यामपि। अनित्येष्वपि प्रायश उपलब्धानामेवोपलम्भाच्च। अन्यथा च प्रत्यभिज्ञानं दत्तजलाञ्जलि स्यात्। ततश्च स्वरूपतो ऽप्यनधिगतत्वं बह्वाकुलयेत्। प्रकारतोऽपि भूयोभूयः स्तम्भादिष्वनुभूयमानेषु न कश्चिद्गुणप्रकारः प्रतिक्षणलब्धजन्मापवर्गः परिभाव्यते। कर्मकृतो ऽप्याशुतरविनाशी न प्रतिक्षणमपूर्वः। न च चतुःपञ्चक्षणावस्थायिनि अपि तस्मिन्नेकमेव ज्ञानं जनयित्वेन्द्रियादिकमुदासीनमनागतकर्मादिजन्म प्रतीक्षते। ततश्च

---

गतत्वं विवक्षितं तत्राह। नित्येति। अनधिगतत्वं च यदि धर्मपरं तत्राह। अन्यथा चेति। अथ धर्मिपरं तत्राह। ततश्चेति। प्रकारकृते ऽनधिगतत्वे दोषमाह। प्रकारत इति। प्रतिक्षणेति। यद्यपि जन्ममात्रेणैवाधिगतत्वमुपपद्यते तथाप्यपवर्गग्रहणं दृष्टान्तार्थमित्येके। ध्वंसेनैवापूर्वत्वप्रतिपादनार्थमपवर्गग्रहणमित्यन्ये। अत्र च ध्वंसस्यापि जनितत्वेनैव लाभे गोवृषन्यायेनाभिधानम्। कर्मकृत इति। कर्मणा जनितो विभागादिः कर्मणैवाकृतो विशिष्टस्तत्र कर्मभेदो ऽपि नास्तीत्यर्थः। अथ यत्किञ्चिद्विषयपरत्वेनानधिगतत्वं तत्राह। ततश्चेति॥

सर्वजन्मान्तरोपलम्भादन्ये तदुत्तरकालप्रत्यया धारया विच्छेदेन वा भवन्तो न प्रमाणं स्युरित्यर्थः ॥

शङ्कते। न चेति। [१४।२८] यद्यपि स्वरूपस्य प्रकारस्य वा तथाविधस्य तादवस्थ्यं, तथापि प्रत्यक्षज्ञानधारायां वर्त्तमान एवार्थः परिस्फुरति। न च क्रमभाविनामेक एव वर्त्तमानकालो विषयः। नानाप्रमातृवज्ज्ञान-यौगपद्यप्रसङ्गात्। प्रत्यभिज्ञानानुपपत्तिश्च, ज्ञानानेकत्वेऽपि एककालावस्थानाकलनात्। तस्मात् पूर्वपूर्व-ज्ञानैरनाकलित एव वर्त्तमानोऽर्थ उत्तरोत्तरोत्तरैरव-सीयत इत्यनधिगतार्थत्वमेव तत्रापीत्यर्थः ॥

परिहरति। परमेति।[१५।१] न तावत् प्रतिक्षणवर्त्त-

---

ननु स्थूलकालभेदमात्रेण प्रतिक्षणभाविनो ज्ञानस्य नानधिगतार्थत्वमित्यत आह। यद्यपीति। तथा च प्रत्यक्षस्य वर्त्तमानार्थग्राहित्वनियमेन स्वाश्रयक्षणविशिष्टस्तम्भादिग्राहकत्वेनागृहीतत्वं भविष्यति, अन्यथैकसमये ज्ञानयौगपद्यप्रसङ्ग इत्यर्थः। प्रत्यभिज्ञानेति। एकस्य पूर्वापरकालावस्थानं प्रत्यभिज्ञानविषयो यदि च तेनापि पूर्वानुभवकालावस्थानमेव विषयीकृतं तदा तत्र स्यादिति तदसिद्धौ स्थैर्यमपि न सिद्ध्येदित्यर्थः ॥

ननु परमसूक्ष्माणामभाने ऽपि प्रकारान्तरेणैव वर्त्तमानत्वमध्यक्षगोचरो भविष्यतीत्याशयेन प्रकारान्तरं निराकरोति। न

मानत्वं सौगतमतवद्वस्तुनः स्वरूपोत्पादः, नापि साङ्ख्य-वद्वस्तुस्वरूपस्थैर्येऽपि परिणतिभेद एव मीमांसकैः स्वीक्रियते। नापि धर्मभेद एव कश्चित् प्रतिक्षणापूर्वो वर्त्तमानाऽपरनामा समस्ति। न च तैरभ्युपेतः। न च कालः प्रत्यक्षगोचरो नापि भिन्नस्वभावः। तस्मात् कालकलाभेदका उपाधय एव कालभेदः तत्प्रत्यक्षमेव कालभेदप्रत्यक्षमिति परमार्थः। तत्र न तावत् प्रतीय-मानस्तम्भादिसंसृष्टा उपाधयः सन्तीत्युक्तम्। ज्ञात-तायाश्च निराकरिष्यमाणत्वात्। धारावहनबुद्धिषु तद-भासनाच्च। प्रतीयमानेतरसंसृष्टास्तूपाधयस्तज्ज्ञानसं-सर्गिणो वा स्युरन्यथा वा, न तावत् स्तम्भादिषु ज्ञाय-

---

तावदिति। तत्रेति। उक्तं—भूयोभूयः स्तम्भादिष्वित्यादिना। ननु यथा भट्टानां ज्ञानानाकलनेऽपि ज्ञातोऽयमिति बुद्धिरध्यक्षा ज्ञानो-पाधिको भवति तथा क्षणानामनाकलनेऽपि तदुपहितोऽर्थो धारावहनबुद्धीनां विषयः स्यात्। न। अननुसंहितोपाधेरप्युपहित-प्रत्यये दण्डाननुसन्धानेऽपि दण्डिधीप्रसङ्गादिति भावः। अथ पूर्वपूर्वज्ञानाहिता ज्ञातता उत्तरोत्तरज्ञाने भासत इति तद्विशि-ष्टानुभवादगृहीतग्राहित्वं स्यात्तत्राह। ज्ञाततायाश्चेति। स्मृता-वपि स्मृततोल्लेखापत्तावनधिगतार्थत्वेन प्रमात्वप्रसङ्गादिति भावः। धारावहनबुद्धिष्विति। न हि स्तम्भोऽयं स्तम्भोऽयमित्यत्र ज्ञातत्व-

मानेषु तदितरसंसर्गिण: क्षणभङ्गुरा: के चनावश्यं तज्ज्ञानसंसर्गभाजो भवन्ति । कांचिन्नवन्त्यपीति चेत् । तत्रैव तद्धियां प्रमाणता स्यात् । यत्र तु तदेकज्ञानसंसर्गिण उपाधयो न सन्ति तत्र धारावाहिकबुद्धीनामप्रमाणत्वमेव स्यात् । तथाविधा एव च विचारविषयत्वेनाभिप्रेता: ज्ञानान्तरगोचरा विषयान्तरसंसर्गिण उपाधयो भविष्यन्तीति चेत् एवं तर्हि धारावहनबुद्धयो न स्युरेव । न खलु प्रमाणान्तरेण इन्द्रियान्तरेण तेनैव वा तद्धर्मिपरित्यागाद्धर्मान्तरेऽनुभूयमाने विवक्षितैकविषयबुद्धिधारासम्भव: । इष्ट एवायमर्थ इति चेत् । न । अपूर्वापूर्वोपाध्युपनिपातनियमे प्रमाणाभावात् । अनुपनिपातिनां च ज्ञानान्तरेणाऽप्यनाकलनात् । अत एव घटोऽयं घटोऽयमिति बुद्धिसहस्रस्यापि न विषयकृतं विशेषमुपलभा-

---

मपि भासत इत्यर्थ: । अन्यथा वेति पक्षमुत्थापयति । ज्ञानान्तरेति । एवं तर्हीति । यदि स्तम्भादिज्ञानाद्यज्ञानानन्तरमन्यसंसृष्टोपाधिविषयकं तदुपनीत एवोपाधिस्तम्भादिज्ञानविषय: स्यात् तदानन्तरा तत्स्मरणादिना निरन्तरायत्वाभावाद्धारावहनबुद्धिरेव न स्यादित्यर्थ: । इष्ट एवेति । अन्यूनानतिरिक्तविषया अनेकबुद्धयो

महे।' अनुपलभ्यमानस्य तु विषयत्वकल्पनायां सर्व-सर्वज्ञतापत्तिरिति। तस्मात् स्तम्भादिरिव प्रागभाव-निवृत्तिप्रध्वंसाभावानुत्पत्तिरूपो वर्त्तमानः। तदव-च्छिन्नः कालो ऽपि वर्त्तमानः। स च तथाविधो ऽनेक-ज्ञानसाधारण एव। न चैतावता ज्ञानयौगपद्या-पत्तिः, सूक्ष्मकालापेक्षया क्रमसम्भवात्। न च सूक्ष्मोपाधीनामप्रतीतिश्चेदतो ऽसम्भव एव, कार्य-क्रमेणैवोन्नीयमानत्वात्। नापि प्रत्यभिज्ञानानुपपत्तिः, पूर्वज्ञानविषयानुसन्धानमेव हि प्रत्यभिज्ञानं तच्च ज्ञा-नक्रमादेवोपपन्नम्। तस्मात् कालतदुपाधिप्रत्यक्षत्वे

---

ऽसिद्धा एवेत्यर्थः। धारावाहिके मानमाहुः—अयं चैत्र एतदीय-घटो ऽयमितिज्ञानभिन्नैतदन्यूनानतिरिक्तविषयैतत्समानकालीन-ज्ञानवान् अनीश्वरात्मत्वात्। मैत्रवत्। सूक्ष्मकालापेक्षयेति। स्व-रूपसत्क्रमिकक्षणोत्पत्तिकत्वेन ज्ञानायौगपद्यात् स्थूलकालोपाधि-मादाय वर्त्तमानत्वाध्यक्षस्याप्युपपत्तेरित्यर्थः। न चेति। क्षणो न प्रत्यक्ष. स एव हि प्रत्यक्षो यः पूर्वापरकालवर्त्ती सन् ज्ञानसमान-कालो न च क्षणस्तथेत्यर्थः। कार्यक्रमेणैवेति। ज्ञानयौगपद्यनिषे-धादनेकज्ञानोत्पत्त्यैव तदनुमानमित्यर्थः। नापीति। प्रत्यभिज्ञा-नस्यैकत्र पूर्वापरकालवैशिष्ट्यविषयकतया पूर्वकालसम्बन्धानुभवं विना तदसम्भवादित्यर्थः। वेदात् क्रमोत्पन्नवेदार्थगोचरधारावहन-

ऽपि न सर्वत्र सूक्ष्मोपाधिसंसर्गो, नापि तत्प्रतीतिः । तदिदमुक्तम् । परमसूक्ष्मायामिति ॥ [१५।१]

एतेनैतन्निरस्तं सिद्धे साधकतमत्वाभावादिति । न हि साधकतमस्य (१) तथात्वं साधकतमान्तरापेक्षया, किं तु प्रधानक्रियाकारकान्तरापेक्षया । अन्यथा यत्र करणानां समुच्चयस्तत्र परस्परापेक्षया ऽनतिशयितत्वादकरणत्वापत्तेः करणानां समुच्चयः क्वचिदपि न स्यात् । इतरकारकापेक्षया तु धारावाहिकबुद्धिष्वपि प्रमाणस्यातिशयित्वमस्त्येव । यत्तु छिन्ने कुठारस्याकारणत्वमिति, तत् छिदालक्षणफलाभावात् । न च ज्ञाते ज्ञानान्तरासम्भवो येनाज्ञाफलत्वादेवाकारणत्वं

---

बुद्धौ वर्त्तमानकालाभानात्तत्रानधिगतार्थत्वमेतावतापि नोपपादितम् । अपि चाधिकविषयत्वसंशये प्रमात्वसंशयाननुभव इति भावः ॥

न हीति । न ह्येकस्य कारणस्य कारणान्तरापेक्षयैवातिशयस्तमबर्थः, किं तु कर्त्राद्यपेक्षः अन्यथाऽनेककरणनिष्पाद्यमेकं कार्यं न स्यात् । दृश्यते चानेकदीपचक्षुरादिकरणकमेकं प्रत्यक्षमित्यर्थः । तच्छिदालक्षणेति । अवयवसंयोगध्वंसस्य छिदात्वादिति भावः । न च ज्ञाते ऽपीति । यावज्ज्ञानोत्पादकसाकल्ये कार्यावश्यम्भावात् । न चानुत्पन्नस्वसाध्यजातीयक्रिये व्यापारवत्त्वं करणत्वं

(१) साधकतमत्वस्य - इति २--पा०--पु० ।

भवेत् धारावाहिकज्ञानोत्पत्तिः। तस्माद्यो ऽनधिगतार्थबोधनं प्रमाणमिच्छति तस्य धारावाहिकबुद्धयो ऽप्रमाः प्रसज्येरन्नित्यर्थः॥

न चेति।[१५।२] प्रवृत्तिं प्राप्तिं च जनयदेव विज्ञानं प्रमा, तदर्थमेव प्रमाणानुसरणात्। आद्यं च तथा ऽतस्तदेव प्रमा। द्वितीयादीनां च न प्रवृत्तिप्राप्तिहेतुत्वमतो नैतानि प्रमारूपाणि ततस्तज्जनकान्यपि न प्रमाणानीति तदेतदिष्यत एवेत्यर्थः॥

न हीति।[१५।४] न ह्यप्रवर्त्तयदेव विज्ञानमर्थं प्रापयति। नापि हठादेव प्रवर्त्तयति। किं त्वर्थोपदृष्टिरूपतया, सा च सर्वसमानेत्यर्थः। तदिदमुक्तम् प्रदर्शनं चेति॥ [१५।६]

---

कारकान्तरसाधारणात् इतरव्यवच्छेदासिद्धौ च वैयर्थ्यादित्यर्थः।

प्रवृत्तिप्राप्तिजनकमेव ज्ञानं प्रमेत्युपपादयति। प्रवृत्तिमिति। तदेतदिति। प्रवृत्तिप्राप्तिजनकानामेव प्रामाण्यमित्यभ्युपगन्तृमते तदजनकानां द्वितीयादिज्ञानानामप्रमात्वमिष्यत एवेतीष्टापादनमित्यर्थः॥

न हीति। अप्रवर्त्तकाप्रापकयोरपि प्रमात्वात्तज्जननस्वरूपयोग्ययोरेव प्रमात्वम्। तच्च यथार्थानुभवत्वं तदविशिष्टमेव सर्वेषामित्यर्थः॥

ननु तथापि प्रथमादेवापेक्षितसिद्धेः पुरुषस्य किं द्वितीयादिनेत्यत आह । पुरुषेति । [१५।७]

स्यादेतत् । वादिविप्रतिपत्तयो वार्त्तिककृता न निराकृता इत्यत आह । उपलब्धीति । [१५।१०] व्यापकस्याव्यापकविरुद्धत्वादनधिगतार्थगन्तुस्तेन रूपेण प्रमाणत्वमेवार्थान्निषिद्धमित्यर्थः ॥

सारूप्यशक्ती निराकरोति । हेत्विति । [१५।१३] तदीयतया ह्यर्थप्रतीतिं व्यवस्थापयन्नाकारः प्रमाणमिति कोऽर्थः ? । न तावत् तदीयतया नियतां प्रतीतिं जनयन्, स्वात्मनि स्वक्रियाविरोधात् । नापि ज्ञापयन् स्वात्मीभूत-

---

ननु पुरुषापेक्षयापि प्रामाण्ये द्वितीयादिज्ञानानां कुतः पुरुषानपेक्षितत्वमित्यत आह । नन्विति ॥

नन्वनधिगतार्थगन्तृत्वं प्रमाणत्वमित्यस्य प्रागेव निरसनात् किं पुनस्तदनुवादेनेत्यत आह । स्यादेतदिति । वार्त्तिकद्वारा वादिविप्रतिपत्तिनिरासार्थं तदनुवाद इत्यर्थः । व्यापकस्येति । धारावहनव्यापकस्य यथार्थानुभवत्वस्य तदव्यापकानधिगताधिगन्तृत्वविरोधादित्यर्थः ॥

स्वात्मनीति । न हि तदीयतया नियता प्रतीतिः नीलाकारप्रतीतेरन्या तथा चाकाराकारिणोरभेदे प्रतीत्यभिन्न आकारः कथं स्वजनकः स्यादित्यर्थः । स्वात्मीभूतेति । स्वविषये स्वात्मनि क्रियावि-

प्रतीतिं प्रति, ज्ञानान्तराजननात् (१)। नापि *निश्चाययन्, आकारतद्वतोरेकत्वेन व्यावृत्त्योश्चैकनिश्चयगोचरत्वेन निश्चेयनिश्चायकत्वनियमानुपपत्तेः।* नीलमहं जानामीत्याकारनिश्चयो, न चातोऽपरः तदीयतानिश्चयो नाम ?। नीलमिदमित्याकारव्यवसायः प्रथममप्यनीलमहं जानामीत्यर्थकर्मकप्रतीत्यनुव्यवसाय इति चेत्। तत्किं? बुद्धावनिश्चितायामेवाकारो निश्चितः। न चैतत् सम्भवति, सामान्यनिश्चये विशेषानिश्चयात्। निश्चीयत एव परं न तदीयतयेति चेत्। अथ केयमर्थाकारान्त-

रोधेन ज्ञानानां ज्ञानान्तराऽजनकत्वादित्यर्थः। ज्ञानसामान्ये दोषमुक्त्वा तद्विशेषे दोषमाह। नापीति। अनुमापयन्नित्यर्थः। अत एवाग्रेऽनुमितिं भावयन्निति वक्ष्यति। अत्रापि स्वात्मनि क्रियाविरोध एव युक्तिः। व्यावृत्त्योरिति। स्वज्ञानव्यावृत्त्यनाकारव्यावृत्त्योरित्यर्थः। व्यावृत्त्योरपि द्विभेदः प्रतियोगिभेदात् स चात्र नास्ति क्वचिदाप्तोपदेशादनिश्चितवृक्षस्य शिंशपानिश्चयेऽपि व्यावृत्त्योरलीकत्वेन न निश्चयनिश्चायकत्वमिति भावः। नीलमहमिति। स्वप्रकाशवादिनस्तवमतेऽर्थप्रतीतेरिव स्वविषयकतयाऽऽकारनिश्चायकत्वादित्यर्थः। अनुव्यवसाय इत्यत्र तदीयतानिश्चय इत्यनुषञ्जनीयम्।

तत् किमिति। आकारस्य बुद्ध्यभिन्नस्य बुद्ध्यनिश्चये निश्चया-

(१) जनकत्वात्—इति २—पा०—पु०।

दन्या तदीयता नाम(१)?। तदुद्भवत्वमिति चेत्। नन्वेवमनुमितिं भावयन्नाकारः प्रमाणम्। ओमिति चेत्। हन्त हतं तर्हि पामरप्रत्यक्षमतिरिक्तमर्थमनुमापयताऽऽकारेण

नुपपत्तेर्न नीलमिदमित्याकारनिश्चयः प्रथममित्यर्थः। तदुद्भवत्वमिति। अर्थोद्भवत्वं तदीयता सा चार्थाकारे निश्चितेऽप्यनिश्चितेत्यर्थः। नन्वेवमिति। एवमर्थोद्भवत्वानुमापकः स्वाकारः प्रमाणं न स्वाकारमात्रमित्यर्थः। हन्तेति। तर्हि पामरप्रत्यक्षाव्याप्तिः तेषामर्थोद्भवत्वापरामर्षादित्यर्थः।

ननु पामरस्यापि सम्मुग्धमनुमानमङ्गीकृतमेवान्यथा धूमेनाप्यनुमानात्तेषामप्रवृत्तिप्रसङ्गात्। न आकारकादाचित्कस्यार्थोद्भवत्वेन नैयत्यापरामर्षे तत्सन्देहे वा पामरप्रत्यक्षानुपपत्तिप्रसङ्गात्। आकारपरामर्षस्यैवानुमितिहेतुत्वेनैवं सति प्रमाणत्वापत्तेश्च न स्वाकारस्य। न च परामृश्यमाणः स एव लिङ्गम्, असत्यप्याकारे तत्स्मरणादप्यनुमितेरिति भावः।

अन्ये त्वनयैवानुपपत्त्यैवं व्याचक्षते अनुमितिं भावयन्नाकारः प्रमाणमित्यत्र नञः प्रश्लेषः तथा चानुमितेरर्थोद्भवत्वाभावात्तत्र तदीयतानिश्चयो न स्यादित्यर्थः। ओमितीति। माभूदनुमानं प्रमाणमित्यर्थः। हन्तेति। अनुमानाप्रामाण्ये साकारविज्ञानवादिना त्वया आकारकादाचित्कत्वेन लिङ्गेनार्थसिद्धिरङ्गीकृता न स्यादिति। हे पामर? प्रत्यक्षमर्थविषयं न सिद्ध्येत् आकारेणैवातिरिक्तमर्थमनुमा-

(१) या नाम इति २—पा०—पु०।

व्यवस्थापितत्वात्। अपि च या क्रिया यत्करणफलत्वेन विवक्षिता जनयत्येव तां तत्करणमिति लोकसिद्धम्। न हि छिदामजनयन्तो ऽपि चक्षुरादयस्तन्निश्चायकतामात्रेण छेदनतया व्यवह्रियन्ते, ऽपि त्वनिश्चाययन्तो ऽपि जनयन्त एव कुठारादयः। तदत्रापि प्रमां जनयदेव निश्चायकमपि प्रमाणमिति व्यवह्रियताम्। ननु तामजनयन्निश्चायको ऽप्याकारः, अन्यथा तु परिभाषां कुर्वता लोको ऽप्रतिपादितः स्यात्। न च जन्यजनकयोस्तादात्म्यगन्धो ऽपीति।

एतेन शक्तिः प्रमाणमिति प्रत्युक्तम्। शक्तेः शक्यनिष्ठत्वात्। शक्यं च कार्यमुच्यते। प्रकाशनं चाऽऽत्मभूतत्वान्न तस्याः कार्यमिति। तदिदमुक्तम्। हेतुहेतुमद्भावस्येति॥ [१५।१३]

ननु यदि प्रमाणं सिद्धं किं तत्र प्रमात्रादिना

---

पयता बुद्धेर्व्याहृत्तिसिद्धेरित्यर्थः। नन्वाकारः स्वात्मभूतप्रमामजनयन्नपि तन्निश्चायकत्वमात्रेण प्रमाणं स्यादित्यत आह। अपि चेति।

एतेनेति। यदि शक्तिः प्रमाणं स्यात्तदा तत्कार्या प्रमैव शक्या प्रकाशात्मिका वाच्या शक्तिश्च शक्तिमतः प्रकाशान्न भिन्नेत्यभेदे करणफलभावः पूर्ववदेव विरुद्ध इत्यर्थः॥

कर्त्तव्यं ?, न हि सिद्धेन सिद्धमेव साध्यते। न चान्यत्र चरितार्थस्यान्यत्र कारकत्वमस्ति। अथासिद्धं कथं प्रमाणं, न ह्यसिद्धं कारकं नाम ?। नाप्यकारकं करणं नाम?। नाप्यकरणं प्रमाणमित्यत आह। अयमर्थ इति। [१५।१७] करणीभूतस्य परशोः संयोगस्य-व्यापारीभूतस्येति शेषः। परिणतिविशेषः—सहकारिसमवधानम्। करणं व्यापार्योत्पाद्य वा फलार्थं कर्त्तव्यान्तराभावात् कर्त्तुश्चरितार्थता। करणस्य तु फलेन विना ऽपर्यवसानमचरितार्थतेत्यर्थः॥

अथ प्रमेयस्य कथं प्रमाणे चरितार्थत्वं ? न हि प्रमातृवत्तेनापि प्रमाकरणमुत्पाद्यते व्यापार्यते वेत्यत आह। प्रमेयस्य त्विति॥ [१५।२७]

---

ननु संयोगो न करणं व्यापारतया निर्व्यापारत्वात् किं तु परशुः कारणं तथा च तस्यैवाव्यवहितव्यापारफलं द्वैधीभाव इति वक्तुमर्हतीत्यत आह। व्यापारीभूतस्येति। परशोरपि संयोगव्यापारवत एव कारणत्वात्तद्गोचरत्वमेवोक्तमित्यर्थः। साङ्ख्यानामिव न परिणतिभेदो ऽस्माकमित्यन्यथा व्याचष्टे। सहकारीति। यावत्सहकारिसमवधानमित्यर्थः। विवक्षितमर्थं सङ्क्षेपेणाह। करणमिति। अनेन यागवत् कर्त्तुः पारम्पर्यमात्रं विवक्षितं न तु कुम्भकारपितृवदन्यथासिद्धत्वं कर्त्तुरकारणत्वप्रसङ्गादिति भावः॥

अयमाशयः। सर्वत्र हि कर्मकारकं करणफल-*तद्व्यापारयोर्विषयतया व्यवतिष्ठते। तत्र फलविषयत्व*-मस्य न कर्मत्वं प्रति प्रयोजकम्। असत्त्वेनाकारक-स्यापि फलविषयत्वात्। यदाह—"केवल"मित्यादि। करणव्यापारविषयत्वात् कर्मत्वं, न ह्यस्तिसम्भवः कर्म च न च करणव्यापारविषय इति, तत्र करणस्य व्यापार-विषयत्वाभावात् व्यापार एव न निर्वहेदिति तन्निर्वाह एवास्य चरितार्थत्वमिति। तदिदमुक्तम्। तत्रापी-न्द्रियसम्बन्धमात्र इति॥ [१५।२८]

न च करणमपि कर्तृव्यापारविषयस्तावन्मात्रेण

---

तुशब्दद्योत्यं प्रमाणात् प्रमेये विशेषमाह। अथेति। नन्विन्द्रियमपि प्रमेयवत् सम्बन्धमात्र एवोपचययात् प्रत्यक्षा-कारणं स्यादित्यत आह।

अयमिति। फलं-ज्ञानादि। तद्व्यापारः-करणव्यापारः। अत्र विषयत्वं ज्ञानादिरूपकरणफलसंयोगरूपकारणव्यापारसाधारण-माश्रयाश्रयिभाव एव घटे ज्ञानमिति प्रतीतेः। फलेनापि विषयस्याऽऽश्रयाश्रयिभावादिति भावः। असत्त्वेनेति। अनुमेयादे-रित्यर्थः। तत्रेति। सव्यापारस्य करणत्वादसति व्यापारविषये निर्व्यापारस्य करणस्य करणत्वमेव न निर्वहतीति प्रमेयस्य करण-निर्वाहकतया चरितार्थत्वमिति विवक्षितत्वान्नोक्तदोष इत्यर्थः॥

चरितार्थमधिकव्यापारवत्त्वात् । नापि कर्मव्यापारविषयः करणं, नापि फलविषयसदुद्देशेन कर्मणः कर्त्रा ऽव्यापारितत्वात् । फलस्य तन्निरूपणाधीननिरूपणत्वात् येन कर्मवदस्य चरितार्थत्वं कल्प्येत । तस्मात् कर्तृकर्मणोश्चरितार्थत्वे ऽप्यचरितार्थमेव करणमिति ।

समवायित्वविषयत्वकृतां सन्निपत्योपकारकभ्रान्तिं प्रयोगाभ्यां निराकरोति । तस्मिन्नमतदिति ॥

---

तावन्मात्रेणेति। करणाभावाद्विषयाभावेन व्यापाराभावान्निर्व्यापारस्य कर्तृत्वाभावेन करणमपि कर्त्रैव चरितार्थं स्यादित्यर्थः । अधिकेति। कर्तृव्यापारापेक्षयाऽधिकव्यापारत्वात् । कार्याव्यवहितपूर्ववर्तिव्यापारत्वादित्यर्थः । नापि कर्मेति । येन कर्मणि करणस्यापि चरितार्थत्वं स्यादिति भावः । नापि फलविषय इति दृष्टान्तार्थम् । यथा न फलविषयः करणं तथा न कर्मव्यापारविषयोऽपीत्यर्थः । फलविषयत्वे सत्यपि कारकान्तराचरितार्थत्वस्य निर्वाहात् । अत्र साध्यद्वये यथाक्रमं हेतुद्वयमाह । तदुद्देशेनेति । करणोद्देशेनेत्यर्थः ॥

ननु प्रमातृप्रमेययोः फलं प्रति न साक्षात्साधनत्वमित्युभयवादिसिद्धमपि कुतः साध्यत इत्यत आह । समवायित्वेति । प्रमासमवायिकारणत्वमात्मनः, प्रमाविषयत्वं प्रमेयस्येति । तत्कृतायां तयोः प्रमायां साक्षाद्धेतुत्वमिति भ्रान्तिं निवारयितुं प्रयोगौ दर्शयतीत्यर्थः ॥

यद्यप्यनुमेयाद्यतीताद्यहेतुरेव तथापि सामान्यनिषेधो विशेषप्रकारमर्यादाश्रयेतेत्येतावतैव दृष्टान्तत्वम्। तस्मात् "तदेव फलहेतुः"—सन्निपत्येति शेषः। कथञ्चिदिति-अनाहत्येत्यर्थः॥

---

तथापीति। हेतुत्वसामान्याभावे साक्षाद्धेतुत्वाभावोऽप्यस्तीति तत्र साध्ये ऽनुमेयादेर्दृष्टान्तत्वमित्यर्थः। तदेवेत्येवकारेण कर्तृकर्मणोः फलहेतुत्वं निवर्त्तितमिति भ्रमनिरासायाह। सन्निपत्येति। साक्षादित्यर्थः। कथञ्चिदिति प्रकारापेक्षायां साक्षात्तस्याऽप्यन्वये विरोध इत्यन्यथा व्याचष्टे। अनाहत्येति। परम्परयेत्यर्थः।

ननु कारकान्तर इत्यत्र यद्यन्तरशब्दो विशेषमात्रवचनस्तदा व्यवच्छेद्याभावः, न हि विशेषमपहाय कारकसामान्यं केनचिज्ज्ञायते, यद्व्यवच्छेद्येत, अथा ऽन्यवचनस्तदा यदि कारणादेवान्यत्वं तदान्योन्याश्रयः, कर्त्तृकर्मणोरपि करणादन्यत्वाचरितार्थत्वात्तत्रातिव्याप्तेश्च। नापि कर्त्तृकर्मणी अपेक्ष्यान्यत्वं वैयर्थ्यात्। न हि कर्त्तृकर्मणोः किञ्चिच्चरितार्थं यद्व्यवच्छिद्येत, स्वरूपेण तयोरजननात्। तद्व्यापारस्य कस्य चित् करणजन्यत्वेन करणस्यापि व्यवच्छेद्यत्वप्रसङ्गात्। नापि कर्त्तृकर्मणोः स्वरूपवचन एवान्तरशब्दः, ताभ्यामेवातिव्याप्तेः। न हि तयोस्तत्रैव चरितार्थत्वम्। अन्तरशब्दाप्रयोगे च हस्ताद्यव्याप्तिः तस्याग्नौ कारके चरितार्थत्वात्। व्यापारवत् कारणत्वेन कारकत्वे हस्तादेः करणत्वस्याऽऽ-

वश्यकत्वात्। कर्त्रादावनन्तर्भावात्। सप्तमकारकापत्तेर्वा। न च व्यवधानात्तस्याहेतुत्वमेव, कर्त्तुरप्यहेतुत्वापत्तेरिति खण्डनकार:।

अत्राहु:। कर्त्तृकर्मस्वरूपोपादानपरे ऽप्यन्तरशब्दे ताभ्यामतिव्याप्तिर्न दोषाय, तेनोपाधिना तत्रापि करणव्यवहाराङ्गीकारात्। "बन्धुरात्माऽऽत्मनस्तस्य येनात्मैवाऽऽत्मना जित(१) इत्यादिप्रयोगात्। शास्त्रे ऽपि "प्रमेया च तुलाप्रामाण्यव"दिति (२) प्रयोगात्। न च कर्मणो ऽपि करणत्वे घटं पश्यतीत्यर्थे घटेन पश्यतीति प्रयोग: स्यादिति वाच्यम्। कर्मत्वकरणत्वयोरेकाश्रयत्वे ऽपि तयोर्भेदात्। तथा च कर्मत्वे ऽभिधेये कथमस्तु तृतीया, करणत्वे वा विवक्षिते कथं द्वितीया। तत्र तयोरसाधुत्वात्। साधकतमत्वविवक्षायां घटेन पश्यतीत्यपि भवत्येव। न चैतद्गौणं मुख्ये ऽनुपपत्त्यभावात्। न च-तथा विशेषणं कारकमात्रं करणमित्येवोच्यतामिति वाच्यम्। प्रवृत्तिनिमित्तकथनार्थत्वात्। न हीदं विशेषणं धर्मान्तरव्यवच्छेदाय, किं त्वेकत्रापि धर्मिणि तस्मात् करणव्यवहार एव न कारकान्तरव्यवहार इत्येतदर्थम्। अत एव प्रमेयमात्रं करणमित्येवोच्यतामित्यपास्तम्। चरमध्वंससाधारण्यात्। व्यवच्छेद्याभावाच्च॥

शिवादित्यमिश्रास्तु व्यापाराजनकव्यापारहेतुत्वं करणत्वमित्यनया वाचोभङ्ग्याऽभिहितम्। इन्द्रियादेर्योगादेश्च न करणत्वं, किं तु कारकान्तरत्वमेव। न च करणत्वानुशिष्टतृतीयाऽनुपपत्ति:।

(१) भगवद्गीता अ॰ ६। श्लो॰ ६।

(२) गौ. सू. अ. २ आ. १ सू. १६।

तदनेन कारकान्तरे ऽचरितार्थस्य हेतुत्वमेव करणत्वमिति करणलक्षणं दर्शयता कर्तृव्यापारगोचरः करणमित्यपि करणलक्षणं सूचितम्। तदेव टीकाकृता व्याख्यातम्। एतच्च "यद्वानिति" वार्त्तिके स्फुटी-भविष्यति ॥

---

करणनिरूपकत्वमात्रेण परम्परया करणत्वसम्बन्धेन करणत्वविवक्षणात् हस्तादीनामपि कारकत्वे ऽप्यकारणत्वात्। तथैव तृतीयोपपादनात्। पाणिनिस्मृतेर्न्यायमूलकत्वेन षट्कारकपरिगणनस्योपलक्षणत्वात्। "जनिकर्त्तुः प्रकृति"रिति (१) सूत्रयतः पाणिनेरपि प्रकृतिपदेन कर्त्रादिभ्यः कारकान्तरमस्तीति सम्मतम्। न च शब्दाभावमात्राकारस्य श्रोत्राकरणकत्वप्रसङ्गः विशेषणताया अजन्यत्वेनाव्यापारत्वादिति वाच्यम्। कर्णशष्कुल्याकाशसंयोगस्यैव श्रोत्रव्यापारत्वादित्याहुः ॥

अन्ये तु कारकार्थत्वविषयक्रियार्थोपादानगोचरकत्वं कारकत्वं करणत्वं कर्त्रादेरप्येवंविधोपाधिसम्भवे करणत्वमिष्यत एव। हस्तादीनां त्वग्न्यादिकारकोपादानार्थक्रियागोचरत्वेनाकारणत्वमेवेत्याहुः ॥

तदनेनेति। यद्यप्येतत्कर्मण्यतिप्रसक्तं तथाप्यनेनोपाधिना तदपि करणमेव कारकत्वेन च विशेषणादकारके ऽतिव्याप्तिरितिभावः ॥

---

(१) (पाणिनि सू.) अ १ पा. ४ सू. ३०।

अकरणा प्रमाणोत्पत्तिः प्रसज्येत कर्त्तुः करणे चरितार्थत्वादिति किं केन सङ्गतमित्यत आह। नाकरण इति ॥ [१६।८]

वस्तुसिद्धप्रधानक्रियासम्बन्धनिबन्धनप्रवृत्तयः कारकशब्दा इत्याशयवतश्चोद्यं "यदीत्यादिना" बुद्धिसिद्धप्रधानक्रियासम्बन्धनिबन्धनप्रवृत्तयः कारकशब्दा इत्याशयवतः समाधानं "न पाचकशब्दादिवदित्यादिने"ति टीकायां निक्षिप्तस्य वार्त्तिकतात्पर्यस्य सङ्क्षेपः ॥

तुल्यवदिति । [१६।२७] तुलया सम्मितमिव न न्यूनं नाधिकमित्यर्थः ॥

---

अपदार्थव्याख्यानबीजमनुपपत्तिमाह । अकरणेति । यथोक्ते वैयधिकरण्यात् तथा व्याख्यातमित्यर्थः ।

वस्तुसिद्धेति । क्रियाकारकयोः कार्यकारणभावसम्बन्धे विशेषणीभूता क्रिया कारकनिरूपिकेत्याक्षेप इत्यर्थः । बुद्धिसिद्धेति । उपलक्षणीभूतैव क्रिया तादृशसम्बन्धे कारकनिरूपिका उपलक्षणं चासदपि स्वज्ञानेन व्यावर्त्तकमिति समाधानमित्यर्थः ।

तुल्यवदित्यत्र तुल्यशब्दस्यैव सादृश्याभिधायित्वात् सादृश्यवाची वतिप्रत्ययो व्यर्थः इत्यत आह । तुलयेति । तथा च तुलया सम्मितमित्यत्रार्थे "नौवयोधर्मविषमूलमूले"त्यादिसूत्रेण (१) सम्मि-

(१) ( पाणिनि सू. ) अ ४ पा ४ सू. ९१ ।

तदनेन प्रपञ्चेन प्रमां प्रति प्रमातृप्रमेययोरकारणत्वमेव दर्शितमिति भ्रमो माभूदित्युपसंहारव्याजेनाह। तत्प्रमाणमिति। [१७॥६] सत्यपि चोपलब्धिसाधनत्वे साक्षादिति शेषः। सम्प्रत्ययो-झटितिप्रत्ययः॥

"साधकतमार्थं पृच्छति"—न तावत् साधकानां फलकृतावतिशयानतिशयौ, तस्यैकस्य सर्वान् प्रत्यविशेषात्। नापि व्यापारकृतौ, परस्परविलक्षणव्या-

तार्थे यत्प्रत्ययात्तस्तुल्यशब्दो न सदृशवाची, किं तु अन्यूनानतिरिक्तवाचीति नोक्तदोष इत्यर्थः॥

सन्निपत्याऽनाहत्येति पूर्वोक्तदोषयोष्टीकाकारसम्मतिमाह। तदनेनेति। ननु पूर्वमपि प्रमातृप्रमेययोरुपलब्धिसाधनत्वे सत्येव करणे विशेष उक्त इति न पूर्वापेक्षया विशेष इत्यत आह। साक्षादिति। तथा च पूर्वं साक्षात्साधनत्वमनादाय लक्षणमुक्तमिदानीं तु साक्षात्साधनत्वमभ्युपगम्य तदुच्यत इत्यर्थः। स्फुटः प्रत्ययः मुख्यताबोधः। साधकत्वतमपोः प्रसिद्धार्थत्वान्न तत्र सन्दिग्धस्य प्रश्नः किं तु विप्रतिपन्नस्येति दर्शयितुं विप्रतिपत्तिबीजमाह। न तावदिति। तमप्प्रत्ययस्य प्रकृत्यर्थातिशयवाचित्वात् फलकृतौ-फलजनने कारणस्य न कर्त्राद्यपेक्षया ऽतिशयस्तमबर्थ इत्यर्थः। तस्येति। तस्य-फलहेतुत्वस्य सर्वकारकसाधारणत्वात् फलाहेतोरकारणत्वादित्यर्थः। नापीति। प्रधानक्रियानुकूलस्वव्यापारोऽपि सर्वकारक-

पारवत्तामात्रस्य सर्वसाधारण्यात्। फलानुगुणत्वं तु व्यापारस्याविशिष्टमेवेत्याशयवानिति हृदयशेषः॥

यद्यप्ययोगव्यवच्छेद एवातिशयस्तथापि तुल्यत्वे सत्यपि अतिशयानतिशयौ तस्यैव चिन्त्येते, न तु वैधर्म्यमात्रमतिशय इत्यभिसन्धायाऽन्ययोगव्यवच्छेदोऽपि दर्शितः। अमुं चार्थमनन्तरमेव विभावयिष्यति॥

ननु यथा कर्त्रादौ सति नावश्यं फलं, तथा करणेऽपि सति कदाचित् न स्यात् कारकत्वाविशेषात्, दृश्यते च, न हि परशौ सति छिदा भवत्येवेत्यत आह। प्रमातृप्रमेये हीति॥ [१७:१४]

"उपक्षीणवृत्तिनी" इति व्यापारवतः कारकत्वमभिप्रैति। तेन परशुरपि व्यापारवानेव करणं, तथाभूतेन च फलस्यायोगव्यवच्छेद एव, न तु व्यापारवताऽपि

---

साधारण इत्यर्थः। हृदयशेष-स्तात्पर्यम्। यद्यपीति। तथा चान्यव्यवच्छेदस्य कारकान्तरसाधारणतया तमवर्थकथने तदनुपयोग इत्यर्थः॥

ननूपक्षीणवृत्तिनी इत्यनेनान्यथासिद्धिप्रदर्शनात् प्रमातृप्रमेययोरकारणत्वे ऽपसिद्धान्त इत्यत आह। नन्विति। व्यापारवत इति। फलाव्यभिचारिव्यापारवत्त्वमित्यर्थः।

यद्यपि व्यापाराऽऽश्रयणे व्यासङ्गे चिरस्थिरत्वगिन्द्रियसंयोगे च

कर्त्रादिनेः, तद्व्यापारेण करणव्यापारस्य सम्पादनविलम्बात्। व्यापारवतस्तु करणस्य नान्यत् सम्पादनीयमस्तीत्यर्थः। तदिदमुक्तं प्रमाणव्यापारे सति तु भवत्येवेति ॥ [१७।१६]

---

सति फलाभावादिदमसिद्धं, तथापि कार्यसामग्रीव्याप्तव्यापारवत्त्वमर्थः, आद्यक्षणे व्यासङ्गे च फलाभावेन न सामग्री। न च हस्ताद्यव्याप्तिः फलाव्यवहितपूर्वक्षणवर्त्तिज्वालनादिव्यापारवत्त्वस्य हस्ते सम्भवात्। अनुमितौ तु लिङ्गपरामर्शजनकव्याप्तिस्मृतिरेव करणं, परामर्शस्तु व्यापारः, व्यापारत्वं च तज्जन्यजनकत्वे सति तज्जन्यत्वं शब्दतद्ध्वंससाक्षात्कारयोस्तु शब्द एव श्रोत्रव्यापारः। शब्दप्रागभावसाक्षात्कारे तु कर्णशष्कुलीसंयोग इत्युक्तम्। यद्वा क्रियया ऽयोगव्यवच्छेदेन सम्बन्धि करणमित्यर्थः। न च पौनरुक्त्यम्। क्रियया ऽयोगव्यवच्छिन्नं कारकं करणमित्यर्थात्। कारकत्वेन विशेषणादीश्वरस्य स्वज्ञानं प्रति करणत्वप्रसङ्गः। न च सामग्र्यामतिव्याप्तिः। सा हि नैकक्षणवर्त्तियावत्कारणात्मिका, यागादौ चिरान्तरितत्वेन स्वर्गादिसामग्र्यामव्याप्तेः। अपि च सामग्री क्षणिका स्थिरा वा, आद्ये अपसिद्धान्तः। अन्त्ये क्षणान्तरे ऽपि कार्योत्पादप्रसङ्गः। किं तु प्रागभावेतरकादाचित्कयावत्कारणप्रागभावानाधारः कार्यप्रागभावाधारः क्षणः सामग्री, क्षणस्य लक्षणाद्यवृत्तित्वेन न क्षणिकत्वं न वा स्थिरत्वम्। न चैवमेकक्षणोत्तरवर्त्यनेककार्याणां समानसामग्रीकत्वापत्तौ भेदाभावप्रसङ्ग इति

तदनेन व्यापारवतः फलाव्यभिचारित्वं साधकतमत्वमिति दर्शितम् ॥

कल्पान्तरम्—यद्वानिति । परतन्त्रेणेति परव्यापारेणाश्रीयते ऽपेक्ष्यत इत्यर्थः ॥

एतदेव पूर्वमुक्तमिति स्मारयति । कर्त्रधीनं चेति ॥ [१।७।२०]

---

वाच्यम् । अधिष्ठानाभेदे ऽपि निरूपककारणभेदेन सामग्रीभेदात् । तत्तत्कारणजन्यत्वस्य तत्त्वं प्रति प्रयोजकत्वात् । अन्यथा घटादेः सामग्रीध्वंसस्यैकसामग्रीकत्वेनाभेदप्रसङ्गः । क्षणस्याकारणं कालोपाधीनां ह्यधिकरणत्वेन कारणत्वम् अधिकरणत्वं चानेककालावस्थायिनामेवेत्यकारणत्वान्न सामग्र्यामतिव्याप्तिः ।

ननु "यद्वान् प्रमिमीत" इत्यत्र यद्वानित्येतावन्मात्रं कल्पान्तरं, न तु समुदाय इत्यनुपपत्त्या यावदेव कल्पान्तरं तावदितिशब्देनावच्छेदयति । कल्पान्तरं यद्वानिति । ननु "कल्पान्तरमाह यद्वान्वा प्रमिमीते सो ऽतिशय" इत्यनन्वित इति पदावच्छिन्नमाहेति—क्रियाकर्मेत्याह । कल्पान्तरं यद्वानिति । यद्वा कल्पान्तरत्वेन रूपेण न कल्पान्तरग्रहणं किं तु यद्वस्तुगत्या कल्पान्तरं तस्य ग्रहणमिति बोधयितुमाहेति परित्यज्य ग्रन्थो गृहीतः । एवमग्रे ऽपि । परतन्त्रेणेत्यस्य परजन्येनेत्यर्थ इति भ्रमं निवारयति । परव्यापारेणेति । सर्वेषां कारणानां न कर्त्राश्रितत्वमित्यन्यथा व्याचष्टे । अपेक्ष्यत इति ॥

यद्यपि कर्त्तृव्यापार्यत्वं करणत्वमिति न व्यभिचरत्येव, तथापि परम्पराव्यापार्येणापि कर्मणा व्यभिचारो माभूदित्याशङ्का प्रकृते ऽवधारणं सम्भवप्राचुर्यात् कृतम्। आगामिवार्त्तिकस्य कल्पान्तरत्वं निवारयति। अस्यैवेति। [१७।२३] कल्पान्तरमिति ॥ [१७।२४]

पूर्वकल्पविवरणेन पौनरुक्त्यभिया कल्पान्तरं संगृहीतं कथञ्चित् समर्थयति। पूर्वेणेति ॥ [१७।२५]

कर्मणः स्वातन्त्र्यमसम्भावितप्रायमिति विशेषनिषेधो ऽनुपपन्न इत्यत आह। अकर्त्तृत्वमिति ।[१७।२६] कल्पान्तरं—संयोगवदिति ॥

---

कर्मणा व्यभिचार इति। यद्यपि तेनोपाधिना कर्मण्यपि करणव्यवहार इष्यत एव तथापि यो ऽनेन व्यभिचारं मन्यते तं प्रत्यवधारणमत एव सम्भवप्राचुर्यादित्युक्तम्। न चात्मधर्मध्वंसकौपीनाच्छादनादावपि करणत्वप्रसङ्गः फलकालस्य व्यापारशालिप्रकरणतेत्यर्थात्।

कल्पान्तरमितीति। कल्पान्तरमिति कृत्वा यत्कल्पान्तरं गृहीतं तत्र पूर्वकल्पविवरणेन पौनरुक्त्यभिया कथञ्चित्समर्थयतीति योजना ॥

हेतुविशेषवाचककर्त्तृपदस्य हेतुसामान्यपरतायां लक्षणाबीजमाह। कर्मण इति। विशेषेति। हेतुत्वविशेषस्य कर्त्तृत्वस्य निषेध इत्यर्थः ॥

| | | |
|---|---|---|
| *Markandeya Purana, Fasc. 5-7 @ /10/ each ... ... | 1 | 14 |
| *Mimāṁsā Darçana, Fasc. 10-19 @ /10/ each ... ... | 6 | 4 |
| *Nyāyavārtika, Fasc. 1-6 @ /10/ each ... ... ... | 3 | 12 |
| *Nirukta, Vol. IV. fasc. 1-8 @ /10/ each ... ... | 5 | 0 |
| *Nitisara, Fasc. 3-5 @ /10/ each ... ... ... | 1 | 14 |
| Nityācārapaddhatiḥ, Fasc. 1-7 @ /10/ each ... ... | 4 | 6 |
| Nityācārapradīpaḥ Vol. I. Fasc. 1-8 ; Vol. II, Fasc. 1-3. @ /10/ each .. | 6 | 14 |
| Nyayabinduṭīkā, Fasc. 1 @ /10/ each .. ... | 0 | 10 |
| *Nyāya Kusumāñjali Prakaraṇa Vol. I, Fasc. 2-6 ; Vol. II, Fasc. 1-3 @ /10/ each ... ... ... ... | 5 | 0 |
| Nyayasarah ... ... ... ... ... | 2 | 0 |
| Padumawati, Fasc. 1-5 @ 2/ ... ... ... | 10 | 0 |
| *Pariçiṣṭa Parvan, Fasc. 3-5 @ /10/ each ... ... | 1 | 14 |
| Prākrita-Paingalam, Fasc. 1-7 @ /10/ each ... ... ... | 4 | 6 |
| Prithivirāj Rāsa. Part II, Fasc 1-5 @ /10/ each ... ... ... | 3 | 2 |
| Ditto (English) Part II, Fasc. 1 @ 1/- .. ... ... | 1 | 0 |
| Prākṛta Lakṣaṇam Fasc. 1 @ 1/8/ each .. ... ... ... | 1 | 8 |
| Parāçara Smṛti, Vol. I, Fasc. 1-8 ; Vol. II, Fasc. 1-6 ; Vol III, Fasc. 1-6 @ /10/ each ... ... ... ... | 12 | 8 |
| Parāçara, Institutes of (English) @ 1/- each ... ... ... | 1 | 0 |
| Pariksamukha Sutram ... ... ... | 1 | 0 |
| Prabandhacintāmaṇi (English) Fasc. 1-3 @ 1/4/ each ... ... | 3 | 12 |
| Rasarnavam, Fasc. 1-3 .. ... ... ... | 3 | 12 |
| Saddarsana-Samuccaya, Fasc. 1-2 @ /10/ each ... ... ... | 1 | 4 |
| Samaraieca Kaha Fasc. 1-3, @ /10/ ... ... ... ... | 1 | 14 |
| Sāṅkhya Sūtra Vṛtti, Fasc. 1-4 @ /10/ each ... ... ... | 2 | 8 |
| Ditto (English) Fasc. 1-3 @ 1/- each ... ... | 3 | 0 |
| *Sankara Vijaya, Fasc. 2-3 @ /10/ each ... ... ... | 1 | 4 |
| Six Buddhist Nyaya Tracts. ... ... ... ... .. | 0 | 10 |
| Srāddha Kriyā Kaumudī, Fasc. 1-6 @ /10/ each ... ... ... | 3 | 12 |
| Sragdharā Stotra ( Sanskrit and Tibetan ) ... ... ... | 2 | 0 |
| Suçruta Saṁhita, (Eng ) Fasc. 1 @ 1 - each ... ... ... | 1 | 0 |
| Suddhikaumudī, Fasc 1-4 @ /10/ each ... ... .. ... | 2 | 8 |
| Sundaranandam Kavyam ... ... ... ... ... | 1 | 0 |
| Suryya Siddhanta fasc. 1 ... ... ... ... ... | 1 | 4 |
| Syainika Sastra .. ... ... ... ... ... | 1 | 0 |
| *Taittreya Brahmana, Fasc 11-25 @ /10/ each .. .. | 9 | 6 |
| " Pratisakhya, Fasc 1-3 @ /10/ each ... ... ... | 1 | 4 |
| *Taitterīya Saṁhitā, Fasc 27-45 @ /10/ each ... ... ... | 11 | 14 |
| Tāṇḍya Brāhmaṇa, Fasc 10-19 @ /10/ each ... ... ... | 6 | 14 |
| Tantra Vārteka (English) Fasc. 1-8 @ 1/4/ each .. ... | 10 | 0 |
| *Tattva Cintāmaṇi, Vol. I, Fasc 1-9, Vol II, Fasc 1-10, Vol III, Fasc 1-2, Vol. IV, Fasc. 1, Vol. V, Fasc 1-5, Part IV, Vol II, Fasc. 1-12 @ /10/ each | 24 | 6 |
| *Tattva Cintamani Didhiti Vivriti, Fasc, 1, @ /10/ each ... .. | 0 | 10 |
| Ditto Prakas, fasc 1 2, @ /10/ each ... ... | 1 | 4 |
| Tattvārthadhigama Sutram, Fasc 1 3 @ /10/ each ... ... ... | 1 | 14 |
| Tirthacintamoni, fasc, 1, @ /10/ each ... ... ... | 0 | 10 |
| Trikāṇḍa-Maṇḍanam, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| Tul'si Satsai, Fasc. 1-5 @ /10/ each ... ... | 3 | 2 |
| Upamita-bhava-prapañca-kathā, Fasc 1-2, 5 13 @ /10/ each ... ... | 6 | 14 |
| Uvāsagadasāo, (Text and English) Fasc. 1-6 @ 1/- each ... | 6 | 0 |
| Vallāla Carita, Fasc 1 @ /10/ ... ... ... | 0 | 10 |
| Varṣa Kriyā Kaumudī, Fasc 1-6 @ /10/ each ... .. ... | 3 | 12 |
| Vāyu Purāṇa, Vol. I, Fasc. 3-6 ; Vol. II, Fasc 1-7, @ /10/ each ... | 6 | 14 |
| Vidhāna Pārijata, Fasc. 1-8 Vol. II Fasc. 1 @ /10/ each ... ... | 5 | 10 |
| Ditto Vol. II, Fasc. 2-4 @ 1/4/ ... ... ... | 3 | 12 |
| Vivādaratnākara, Fasc 1-7 @ /10/ each ... ... ... | 4 | 6 |
| Bṛhat Svayambhū Purāṇa, Fasc. 1-6 @ /10/ each .. ... ... | 3 | 12 |
| Yoga Aphorisms of Patanjali, Fasc. 3-5 @ /10/ each ... ... | 1 | 14 |
| Yogasāstra of Hemchandra Vol. I. Fasc. 1-3 ... ... | 3 | 12 |
| *Tibetan Series.* | | |
| Baudhyastotrasangraha, Vol. I ( Tib. & Sans. ) ... ... ... | 2 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1-4 @ 1/- each ... ... | 4 | 0 |
| Nyayabindu of Dharmakirti, Fasc. 1 ... ... ... ... | 1 | 0 |
| Rtogs-Sam S'hi Ṭiā, Fasc. 1-4 @ 1/- each ... ... ... ... | 4 | 0 |
| Rtogs brjod dpag hkhri S'iñ ( Tib. & Sans. Avadāna Kalpala Vol. I, Fasc. 1-8 ; Vol. II. Fasc. 1-7 @ 1/- each .. ... | 15 | 0 |
| Sher-Phyin, Vol. I, Fasc. 1-5 ; Vol. II, Fasc. 1-3 ; Vol. III, Fasc 1-6, @ 1/ each | 14 | 0 |
| *Arabic and Persian Series.* | | |
| Alamgirnāmah, with Index, (Text) Fasc. 1-13 @ /10/ each ... ... | 8 | 2 |
| Al-Muqaddasi (English) Vol. I, Fasc. 1-4 @ 1/- each ... ... | 4 | 0 |
| Akbarnāmah, with Index, Fasc. 1-37 @ 1/8/ each | | |

| Title | Rs. | As. |
|---|---|---|
| Ain-i-Akbari, Fasc. 1-22 @ 1/8/ each | 33 | 0 |
| Ditto (English) Vol. I, Fasc. 1-7, Vol. II, Fasc. 1--5, Vol. III, | 36 | 0 |
| Ditto (English) Vol. I, Fasc. 1--8; Vol. II, Fasc. 1-7 Vol 3 @ 1/4/ each | 20 | 0 |
| Arabic Bibliography, by Dr. A. Sprenger, @ /10/ | 0 | 10 |
| *Bādshāhnāmah, with Index. Fasc. 1--19 @ /10/ each | 11 | 14 |
| Conquest of Syria, Fasc. 1-9 @ /10/ each | 5 | 10 |
| Catalogue of Arabic Books and Manuscripts, 1-2 @ 1/- each | 2 | 0 |
| Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1-3 @ 1/ each | 3 | 0 |
| Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1-21 @ 1/8/ each | 31 | 8 |
| Farhang-i-Rashīdī, Fasc. 1--14 @ 1/8/ each | 21 | 0 |
| Fihrist-i-Tūsī, or, Tūsy's list of Shy'ah Books, Fasc. 1--4 @ 1/- each | 4 | 0 |
| Futūḥ-ush-Shām of Wāqidi, Fasc. 1--9 @ /10/ each | 5 | 10 |
| Ditto of Āzādi, Fasc. 1--4 @ /10/ each | 2 | 8 |
| History of Gujarat | 1 | 0 |
| Haft Asmān, History of the Persian Masnawi, Fasc. 1 @ /12/ each | 0 | 12 |
| History of the Caliphs, (English) Fasc. 1--6 @ 1/4/ each | 7 | 8 |
| Iqbālnamah-i-Jahāngīrī, Fasc 1--3 @ /10/ each | 1 | 14 |
| Iṣābah, with Supplement, 51 Fasc. @ 1/- each | 51 | 0 |
| Ma'āsir-i-'Ālamgīrī, Fasc 1--6 @ /10/ each | 3 | 12 |
| Maa'āsir-ul-Umarā, Vol. I, Fasc. 1--9, Vol. II, Fasc. 1--9; Vol III, 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. II, Fasc. 10-12; Index to Vol. III, Fasc. 11-12 @ /1/ each | 35 | 0 |
| Maghāzi of Wāqidi, Fasc. 1--5 @ /10/ each | 3 | 2 |
| Marhamu 'L Ilali 'L-Mu'Dila | 1 | 0 |
| Muntakhabu-t-Tawārīkh, Fasc. 1--15 @ /10/ each | 9 | 6 |
| Ditto (English) Vol. I, Fasc. 1--7; Vol. II, Fasc. 1--5 and 3 Indexes; Vol III, Fasc 1 @ 1/ each | 16 | 0 |
| Muntakhabu-l-Lubāb, Fasc. 1- 19 @ /10/ each | 11 | 14 |
| Ditto Part 3, Fasc. 1 | 1 | 0 |
| Nukhbatu-l-Fikr, Fasc. 1 @ /10/ | 0 | 10 |
| Niẓāmi's Khiradnāmah-i-Iskandari, Fasc 1- 2 @ /12/ each | 1 | 8 |
| Qawaninu 's-Sayyad of Khuda Yar Khan 'Abbasi, edited in the original Persian with English notes by Lieut. Col D. C. Phillott | 5 | 0 |
| Riyāẓu-s-Salātīn, Fasc 1--5 @ /10/ each | 3 | 2 |
| Ditto (English) Fasc. 1--5 @ 1/ | 5 | 0 |
| Tadhkira-i-khushnavīsān | 1 | 0 |
| Tabaqāt-i-Nāṣirī, (English), Fasc. 1-14 @ 1/- each | 14 | 0 |
| Ditto Index | 1 | 0 |
| Tārīkh-i-Fīrūz Shāhi of Ẓiyāu-d-dīn Barni Fasc 1--7 @ /10/ each | 4 | 6 |
| Tārīkh-i-Fīrūzshāhi, of Shams-i-Sirāj Aif. Fasc. 1--6 @ /10/ each | 3 | 12 |
| Ten Ancient Arabic Poems, Fasc. 1--2 @ 1/8/ each | 3 | 0 |
| Tuzuk-i-Jahāngīrī, (Eng) Fasc. 1 @ 1/ | 1 | 0 |
| Wis-o-Rāmin, Fasc. 1--5 @ /10/ each | 3 | 2 |
| Zafarnāmah, Vol. I, Fasc. 1--9, Vol. II, Fasc 1--8 @ /10/ each | 10 | 10 |

## ASIATIC SOCIETY'S PUBLICATIONS.

1. ASIATIC RESEARCHES. Vols. XIX and XX @ 10/ each ... ... 20
2. PROCEEDINGS of the Asiatic Society from 1870 to 1904 @ /6/ per No
3. JOURNAL of the Asiatic Society for 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7), 1901 (7), 1902 (9), 1903 (8), 1904 (16), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members

*N. B.—The figures enclosed in brakets give the number of Nos. in each Volume.*

4. Journal and Proceedings, N. S., 1905, to date, (Nos. 1-4 of 1905 are out of stock), @ 1-8 per No. to Members and Rs. 2 per No. to Non-Members.
5. Memoirs, 1905, to date. Price varies from number to number. Discount of 25% to Members
6. Centenary Review of the Researches of the Society from 1784-1883 ... 3 0
7. Catalogue of the Library of the Asiatic Society, Bengal, 1910, ... 3 0
8. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I--III. with 8 coloured Plates, 4to. @ 6/ each ... ... 18 0
9. Kaçmiraçabdāmrta, Parts I & II @ 1/8/ ... ... ... 3 0
10. Persian Translation of Haji Baba of Ispahan, by Haji Shaikh Ahmad-i-Kirmani, and edited with notes by Major D. C. Phillott. ... 10 0

Notices of Sanskrit Manuscripts, Fasc. 1-34 @ 1/ each ... ... 34 0
Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... 5 0

[illegible] Money Orders, &c. must be made payable to the "Treasurer

BIBLIOTHECA INDICA:

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE ASIATIC SOCIETY OF BENGAL.

NEW SERIES NO. 1358.




# न्यायवार्त्तिकतात्पर्यपरिशुद्धिः ।

श्रीमदुदयनाचार्यविरचिता ।

श्रीवर्द्धमानोपाध्यायविरचित-न्यायनिबन्धप्रकाशाभिध-व्याख्यासहिता ।

# NYĀYA-VĀRTTIKA-TĀTPARYA-PARIŚUDDHI

BY UDAYANĀCHĀRYA

With a gloss called Nyāya-nibandha-prakāśa by Varddhamānopādhyāya

EDITED BY

Pandit Vindhyeśvarī Prasād Dvivedin

*Librarian Govt. Sanskrit College, Benares.*

AND

Pandit Lakshamana Śāstri Drāvida

*Professor, Govt. Sanskrit College Calcutta.*

FASCICULUS III.

CALCUTTA:

PRINTED BY UPENDRA NATHA CHAKRAVARTI, AT THE SANSKRIT PRESS.

No. 5, Nandakumar Chawdhury's 2nd Lane.

AND PUBLISHED BY THE

ASIATIC SOCIETY, 1 PARK STREET.

1914.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

## ASIATIC SOCIETY OF BENGAL.

No. 1, PARK STREET, CACUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MR. BERNARD QUARITCH, 11, GRAFTON STREET, NEW BOND STREET, LONDON, W., AND MR. OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied.—some of the Fasciculi being out of stock.*

BIBLIOTHECA INDICA.

*Sanskrit Series*

| | Rs. | |
|---|---|---|
| Advaitachintā Kaustubha, Fasc. 1-3 @ /10/ each ... | 1 | 1 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5; Vol. II, Fasc 1-5; Vol. III. Fasc. 1-5, Vol. IV, Fasc. 1-8 @ /10/ each ... | 14 | [illegible] |
| Aitereya Lochana. ... | 2 | [illegible] |
| Amarkosha, Fasc. 1 ... | 2 | [illegible] |
| *Aṇu Bhāṣhya, Fasc 2-5 @ /10/ each ... | 2 | [illegible] |
| Anumana Didhiti Prasarini, Fasc. 1 @ /10/- ... | 1 | [illegible] |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc 1-6 @ /10/ each ... | 3 | 12 |
| Atmatattaviveka, Fasc I. ... | 0 | 10 |
| Açvavaidyaka, Fasc. 1-5 @ /10/ each ... | 3 | 2 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol I, Fasc. 1-10; Vol II. Fasc. 1-10 @ 1/ each ... | 20 | 0 |
| Bālam Bhaṭṭī, Vol. I, Fasc 1-2, Vol II, Fasc. 1 @ /10/ each ... | 1 | 14 |
| Baudhāyana S'rauta Sūtra, Fasc. 1-3 Vol. II, Fasc 1-5 @ /10/ each ... | 5 | 0 |
| Bhāsavritty ... | 0 | 10 |
| Bhāṭṭa Dipikā Vol. I, Fasc 1-6; Vol. 2, Fasc. 1, @ /10 each ... | 4 | 6 |
| Bauddhastotrasangraha ... | 2 | 0 |
| Bṛhaddēvatā Fasc. 1-4 @ /10/ each ... | 2 | 8 |
| Bṛhaddharma Purāṇa Fasc 1-6 @ /10/ each ... | 3 | 12 |
| Bodhicaryāvatāra of Çāntideva, Fasc. 1-6 @ /10/ each ... | 3 | 12 |
| Cri Cantinatha Charita, Fasc. 1-3 ... | 1 | 14 |
| Çatadūṣaṇī, Fasc. 1-2 @ /10/ each ... | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc 1-4 @ 2 each ... | 8 | 0 |
| Çatapatha Brāhmaṇa, Vol I, Fasc. 1-7, Vol II. Fasc. 1-5, Vol. III, Fasc. 1-7 Vol. V, Fasc. 1-4 @ /10/ each ... | 14 | 6 |
| Ditto Vol. VI, Fasc. 1-3 @ 1/4/ each ... | 3 | 2 |
| Ditto Vol. VII, Fasc. 1-5 @ /10/ ... | 3 | 2 |
| Ditto Vol. IX. Fasc 1-2 ... | 1 | 4 |
| Çatasāhasrikā Prajñāpāramitā Part, I. Fasc. 1-17 @ /10/ each ... | 10 | 10 |
| *Caturvarga Chintāmaṇi, Vol II, Fasc. 1-25; Vol. III. Part I, Fasc 1-18. Part II, Fasc. 1-10 Vol IV. Fasc 1-6 @ /10, each ... | 36 | 14 |
| Ditto Vol. IV, Fasc. 7-8, @ 1/4/ each ... | 2 | 8 |
| Ditto Vol. IV, Fasc. 9-10 @ /10/ ... | 1 | 4 |
| Çlockavartika, (English) Fasc 1-7 @ 1/4/ each ... | 8 | 12 |
| *Çrauta Sūtra of Çānkhāyana, Vol. I, Fasc 1-7; Vol II, Fasc 1-4; Vol. III, Fasc. 1-4; Vol 4, Fasc 1 @ /10/ each ... | 10 | 0 |
| Çrī Bhāshyam, Fasc 1-3 @ /10/ each ... | 1 | 14 |
| Dāna Kriyā Kaumudī, Fasc 1-2 @ /10/ each ... | 1 | |
| Gadadhara Paddhati Kālasāra Vol. I, Fasc 1-7 @ /10/ each ... | 4 | |
| Ditto Āchārasārah Vol. II, Fasc. 1-4 @ /10/ each ... | 3 | [illegible] |
| Gobhiliya Grihya Sutra, Vol I @ /10/ each ... | 3 | [illegible] |
| Ditto Vol II. Fasc. 1-2 @ 1/4/ each ... | 2 | [illegible] |
| Ditto (Appendix) Gobhila Parisista ... | 2 | [illegible] |
| Ditto Grihya Sangraha ... | 0 | [illegible] |
| Haralata ... | 1 | 1 |
| Karmapradiph, Fasc. I ... | 1 | [illegible] |
| Kāla Viveka, Fasc. 1-7 @ /10/ each ... | 4 | [illegible] |
| Kātantra, Fasc 1-6 @ /12/ each ... | 4 | [illegible] |
| *Kūrma Purāṇa, Fasc 1-9 @ /10/ each ... | 5 | 10 |
| Kiranavali, Fasc. 1-2 @ /10/ each ... | 1 | 4 |
| Madana Pārijāta, Fasc. 1-11 @ /10/ each ... | 6 | 14 |
| Mahā-bhāṣya-pradipōdyōta, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-12 Vol III, Fasc 1-10 @ /10/ each ... | 19 | 6 |
| Ditto Vol. IV, fasc. 1 @ /4 ... | 2 | 8 |
| Manutīkā Sangraha, Fasc. 1-3 @ /10/ each ... | 1 | 14 |
| Mārkaṇḍēya Purāṇa, (English) Fasc. 1-9 @ 1/- each ... | 9 | 0 |
| *Mīmāṁsā Darçana, Fasc. 10-19 @ /10/ each ... | 6 | 4 |

[illegible] Money Orders, &c. [illegible]

अत्रापि कारकान्तरेभ्यश्चरमव्यापारं करणमिति लक्षणम् । कल्पान्तरं—प्रतिपत्तेरिति । अत्राप्यनन्तरफलं करणमिति लक्षणं, विकल्पसमुच्चयाभावात् चोऽवधारणे । अस्मिन् पक्षे स एवातिशय इत्यर्थः ॥

कल्पान्तरम् । असाधारणेति ॥

सर्वकारणेष्वसाधारणत्वोपपादनानुपयोगात् प्रकृते प्रमाणे घटयति । चतस्र इति ॥ [१८।७]

अत्रापि प्रमाविवक्षितजातिभेदव्यपदेशकं प्रमाणमिति लक्षणम् । प्रमां प्रति कारणानां साधारणत्वासाधारणत्वे निरूप्यमाणे पुरुषविषयस्य साधारण्यस्य किमायातमित्यत आह । अशेष इति ॥ [१८।११]

कल्पान्तरं—प्रमाकारणेति ॥ [१८।१२]

अत्रापि विवक्षितप्रमाजातिभेदौपयिकत्वेन प्रमित्यसमवायिकारणविशेषकं प्रमाणमिति लक्षणमिति ॥

---

अत्रापीति । व्यापाराजनकव्यापारवत्त्वमित्यर्थः । अनन्तरफलमिति । कार्याव्यवहितप्राक्कालवृत्तिव्यापारवत्त्वमित्यर्थः ॥

अत्रापीति । प्रत्यक्षादिचतुष्टयान्यतमप्रयोजककारकत्वमित्यर्थः । विवक्षितेति । प्रमाकारणसंयोगजन्यसंयोगजनकत्वे सति प्रमाकारकत्वमित्यर्थः ॥

"स्वरूपात् कार्यतः कर्त्तुरर्वाक् प्राक् कर्तृकार्ययोः।
प्रमाजातेः प्रमातृभिर्विशेषात्मानलक्षणम्"
इति सङ्ग्रहश्लोकः ॥

स्वरूपादिति। यस्य रूपात्रिजादेव रूपात् कारकान्तरा-चरितार्थत्वस्य तथात्वात्। कार्यादिव्यापारवतः फलाव्यभिचारित्व-मिति फलादित्यर्थः। कर्त्तुरिति पञ्चम्यन्तम्। यद्यानित्यत्वेन लक्षणादर्वाक् प्रागिति यथासङ्ख्यमन्वयः। तेन कर्त्तुरर्वागित्यनेन कारकान्तरेभ्यश्चरमभावित्वं कार्यात् प्रागित्यनेनानन्तरफलं करण-मित्युक्तम्। कर्तृव्यापारविषयः करणमित्यपि कर्त्तुरित्यनेनैव सङ्-गृहीतम्। लक्षणस्य नित्यत्वे ऽपि हेतुत्ववाचकपञ्चम्यन्वयश्च ज्ञेय-मित्यध्याहाराद्द्रष्टव्यः। यद्यप्येषां लक्षणपरत्वे विशेषणवैयर्थ्यं, प्रवृत्ति-निमित्तत्वे चानेकार्थत्वम्, एकस्यैव तत्त्वे शेषवैयर्थ्यमविनिगमश्च। तथापि साधकतमत्वमेव निमित्तं, शब्दार्थव्यवस्थापकैः पाणिन्या-दिभिराचार्यैस्तथा सूत्रणात्। करणशब्दोच्चारणानन्तरं प्रमाद्यभेदे तद्भेदे वा नानानिमित्तावसायादनेकार्थतैवेत्यप्याहुः ॥

रत्नकोषकृतस्तु द्विविधं हि सामान्यं जातिरुपाधिश्च, समवेता जातिः असमवेतं चोपाधिसामान्यम्। अत एव भट्टपादैः जाति-रन्यदेव कृत्स्नादि सामान्यं वनादिसामान्यवदभ्युपेतम्। यदाहुः—

"यौगिकानां यथा जातिरन्यत्सामान्यमिष्यते।
तथा समूहसामान्यं जातं जातिविलक्षणमिति"(१)

(१) तन्त्रवार्त्तिके २ अ ३ पा. १ अधिकरणे।

तदेभिर्निमित्तैः करणव्यवहारे व्यवस्थाप्यमाने यदि कर्मादिव्यवहारनिमित्तसत्तावशात् तद्व्यवहारो भवति, भवतु, तस्येष्यमाणत्वात्, यैर्निमित्तैस्तु कर्मादिव्यवहारो नेष्यते स तु नास्त्येव। तथाहि—सर्वत्र कर्मव्यवहारः करणव्यापारविषयत्वादिभिः, करणव्यवहारश्च कर्तृव्यापारविषयत्वादिभिः। एषां निमित्तानां भेद एवेति नातिप्रसङ्गः।

इति प्रमाणत इतिपदतात्पर्यव्याख्याव्याख्यानम्।)

---

"तात्पर्यतो व्याचष्टे"—वाच्ये(१)स्फुटत्वादित्यर्थः।

एवं च सत्यग्रे ऽर्थ्यत इति व्युत्पत्तिरपि तात्पर्यपरतयैवेति मन्तव्यम्।

कस्मात्पुनरिति। [१८।१८] न हि प्रमाणविषयस्य प्रमाणस्यार्थवत्त्वमव्युत्पादनीयमेवेत्याशङ्काबीजम्।

---

तथा च करणत्वमप्युपाधिसामान्यमित्याहुः। तन्न। जातेरेव परम्परासम्बन्धेन तद्व्यवहारोपपत्तावखण्डे तस्मिन्मानाभावात्॥

(इति प्रमाणत इति पदतात्पर्यव्याख्याव्याख्याव्याख्यानम्)।

---

पर्यायव्याख्याने हेतुमाह। वाच्य इति॥

---

(१) वाक्ये इति—२ पु० पा०।

तात्पर्यान्तरमिति। [१८।२१] कथञ्चित् भागासिद्धता-परिहारस्य फलस्यैकत्वात्। तत्किं? प्रवृत्तिसामर्थ्या-भावात्तदप्रमाणमेवेत्यत आह। न चेति। [१८।२१]

कथं तर्हि तत्प्रामाण्यमवसेयमित्यत आह। त-स्यापीति। [१८।२२]

न तावत् सर्वो विषयः सर्वत्र सर्वस्य सर्वदोपेक्षणीयः, निर्माणवैयर्थ्यप्रसङ्गात्। तथा चानुपेक्षणीयतादशायां प्रवृत्तिसामर्थ्येन तद्विषयस्य ज्ञानस्य प्रामाण्यमवधार्य गृहीतेन तज्जातीयत्वेनोपेक्षणीयतादशायामपि प्रामा-

अग्रिमवाक्यार्थव्याख्याने विरोधं परिहरति। कथञ्चिदिति। फलाभेदे ऽपि विषयभेदमात्रेणेत्यर्थः। फलाभेदमाह। भागा-सिद्धेति। प्रमाणविषयप्रमाणोपेक्षणीयविषयप्रमाणयोरपि प्रमाण-त्वात् प्रमाणमात्रपक्षीकरणे पक्षे ऽन्तर्भावात् तत्र भागे समर्थ-प्रवृत्तिहेतुत्वस्य हेतोरसिद्धा तयोः पक्षबहिर्भावेन तत्परीहारस्य फलस्याभेदादित्यर्थः। न च तयोरपक्षत्वे ताभ्यां हेतुव्याप्तेर-साधारण्यम्। निश्चितसाध्यस्यैव सपक्षत्वात्। अनुमितिकाले च तयोः साध्यवत्त्वानिश्चयादित्युक्तम्। अप्रमाणत्वे हेतोरपेक्षा-यामाह। तत्किमिति॥

( इति अर्थपदतात्पर्यव्याख्याव्याख्याव्याख्यानम्। )

ण्यं सुग्रहमेव, यत्राप्याहत्य प्रवृत्तिर्न भूता(१)तत्राप्यसम्भवद्बाधसंवादित्वं प्रात्यक्षिकमानुमानिकमौपदेशिकं वा तज्जातीयत्वमवसेयमित्यक्षरार्थः।

( इति अर्थपदतात्पर्यव्याख्याव्याख्यानम्। )

---

शङ्कानिवर्त्तने मन्द इत्यत आह। अयमभिसन्धिरिति। [१८।२६] साक्षाज्जनकत्वं गृहीत्वा व्यधिकरणत्वशङ्का माभूदित्यवश्यं परम्पराजनकत्वं दर्शनीयं तच्च प्रमाणस्य प्रतीतिजनकत्वकथनमन्तरेणाशक्यमित्यर्थः।

कथमयमर्थो वार्त्तिकाल्लभ्यत इत्यत आह। प्रमाणस्य विशेष इति। [१६।१५]

एतावतापि किमुक्तमित्यत आह। एतदुक्तं भवतीति। [१६।१६]

ननु तवायमाशयो न तु वार्त्तिककृत इत्यत आह।

---

साक्षादिति। प्रमाणमर्थवदित्यत्र समर्थप्रवृत्तिसाक्षाज्जनकत्वं हेतुरपक्षधर्मः स्यात् प्रवृत्तेर्ज्ञानजन्यत्वात्, अतः परम्परया तज्जनकत्वं विवक्षितमतः परम्परयाऽर्थप्रतिपत्तिद्वारा प्रमाणस्य तत्र हेतुत्वं दर्शयितुं प्रमाणत इत्युक्तमित्यर्थः।

(१) इता इति २पु० पा०।

तदिदमुक्तमिति । [१।१।८] तदिदमपरमनर्थसूत्रम् । न हि प्रतिपत्तिप्रवृत्तिसामर्थ्ययोः प्रतिपाद्यप्रतिपादकभाव इत्यत आह । अयमर्थ इति । [१।१।९]

नन्वर्थपदेन सर्वसङ्ग्रहो ऽयुक्त एव किमित्याशङ्क्यते तथाविधशङ्कायामनवस्थानादित्यत आह । एकदेशीति । [१।१।१२] व्याघात इति ।

यद्यप्यपवर्गस्य सुखदुःखतद्धेतुभावो नास्त्यत एव तथात्वेनार्थमाणतया ऽर्थपदेन सर्वसङ्ग्रहोऽप्यशक्यः । तथापि तदभ्युपगमे व्याघात एव स्फुट इति स एवोक्तः । स च शास्त्रावतारेण यदि ह्यपवर्गः सुखदुःखतद्धेतुरूपतया हेयः स्वीकृतः तर्हि शास्त्रमपि विपरीतप्रयोजनत्वादनारम्भणीयं शास्त्रप्रमाणयोस्तु सामान्यतो यद्यपि दुःखहेतुत्वं, तथाऽपि विवक्षितपरमपुरुषार्थविषययोस्तद्धेतुतया दुःखहेतुतां परिभूय उपादेयत्वमेव, अन्यथा पुनरपि स एव व्याघातः ।

---

अनर्थसूत्रम्-अनर्थसूचकमित्यर्थः । अत्र हेतुमाह । न हीति । नार्थप्रतिपत्तिः प्रवृत्तिसामर्थ्यज्ञापिका किं तु तज्जनिकेत्यर्थः ॥

एकदेशिमततात्पर्यमाह । नन्विति ॥

स चेति । स—व्याघातः । सहार्थे तृतीया । तमेवाह । यदि हीति । शास्त्रप्रमाणयोरिति । यथा परमपुरुषार्थस्वर्गसाधने

नन्वशक्यत्वेनाहेयत्वे सुखतद्धेतुत्वेनोपादेयत्वमपि कथमित्यत आह। न चास्मादिति। [१८।१८] तस्मादुभयथापि स्वात्मनि क्रियाविरोधेन परमपुरुषार्थहेतुत्वेन च प्रमाणमशक्यहानम्। न चैवं सत्यहानिरेव स्यात् स्वोच्छेदककारणवशेनोपादेयस्य पुरुषप्रयत्नेनाशक्यहानस्यापि सुखवदुच्छेदादित्यर्थः।

अधिकारादनुवृत्तेरित्यनुपपन्नमादिवाक्यत्वादित्यत

---

दुःखमये ऽपि यागादौ प्रवर्त्तते तथा परमपुरुषार्थापवर्गसाधने दुःखहेतौ शास्त्रादावपीत्यर्थः॥

ननु शक्यत्वव्युत्पादनावसरे ऽपवर्गसाधनत्वाभिधानमर्थान्तरमित्यत आह। नन्विति। उभयथापीत्यस्य विवरणं स्वात्मनीति। हानेः प्रमाणसाध्यतया तेनैव न तद्धानिः शक्या प्रमाणहानिदशायां तत्साधनतया प्रमाणोपादेयतापत्तेरित्यर्थः। परमेति। प्रमाणहानौ तत्साध्येष्टानुपपत्तिप्रसङ्गाच्च न युक्ता प्रमाणहानिरित्यर्थः। न चैवमिति। एवं पूर्वोक्तयुक्तिभ्यामस्य प्रमाणस्यापवर्गदशायामप्यहानिरेवेत्यर्थः। स्वोच्छेदकेति। स्वोच्छेदककारणवशेनोच्छेदादित्यन्वयः। स्वकारणशरीरेन्द्रियाद्युच्छेदात् तत्कार्यप्रमाणस्यापि सुखस्य चोच्छेदादित्यर्थः॥

अधिकारशब्दस्याधिकारसूत्रादावनुवृत्तिवाचकत्वेनावधृतस्य योग्यतापरत्वे बीजमनुवृत्तिपरत्वे बाधकमाह। अधिकारादिति।

आह ।' प्रवृत्तिसामर्थ्यादिति । [१८।१२] अधिकारो योग्यता सा चात्र प्रकृतत्वात् प्रवृत्तिं प्रतीत्यर्थः ।

एकदेश्युपालम्भे पूर्वहेतुभिः सह हेत्वन्तरस्य समुच्चयं दर्शयन्नाह । न केवलमिति । [१८।२४] अशक्यत्वादपि-संविदि हेत्वोरसिद्धेरिति शेषः ।

नन्वसंवेद्यमानायाः संविदः प्रमाणसद्भावे कथमसंवेद्यत्वं, तदभावे तु कथं सत्त्वव्यवहार इत्यत आह । न तावदिति । [१८।२८]

अस्यादिवाक्यत्वेनैतत्पूर्ववर्त्ति नास्त्येव वाक्यं यस्यैकदेशो ऽत्रानुवर्त्ततेत्यर्थः । तथापि योग्यतामात्रमधिकारपदार्थो न तु प्रवृत्तिसामर्थ्याधानयोग्यतेत्यत आह । अधिकार इति । योग्यतायां विशेषः प्रकरणादिलभ्य इत्यर्थः ॥

ननु पूर्वोक्तहेतूनामनुवादः किमर्थ इत्यत आह । एकदेशीति । तथा चावान्तरार्थान्तरकथनेन पूर्वहेतूनामन्तरितत्वात् तैः सह समुच्चयार्थमनुवाद इत्यर्थः । अशक्यत्वे हेतुर्नोक्त इति तमाह । संविदीति । हेत्वोरिति । सुखदुःखहेतुभावस्यार्थमाणत्वस्य चेत्यर्थः । न च बुद्धित्वेनैव सुखदुःखहेतुभावः तच्च तत्राप्यस्तीति वाच्यम् । उपेक्षणीयज्ञाने निर्विकल्पके च तदभावेन विशिष्टज्ञानविशेषत्वेन तद्योग्यत्वादिति भावः ॥

ननु सर्वासां संविदां संवेद्यत्वे मानाभावेनैवासंवेद्यत्वसिद्धेः किं ? तत्साधनेनेत्यत आह । नन्विति ।

अनवस्थाप्रसङ्गलक्षणं तर्कं दर्शयता तद्विपर्य्यये मानसं प्रत्यक्षं प्रमाणमादर्शितं अज्ञातोपरतज्ञानव्यवहारे कालान्तरे तद्विषयस्मरणं निमित्तम् । एवं च सामान्याकारेण जिज्ञासानुरोधात् तज्ज्ञानमस्त्येव, अज्ञातस्य विधिनिषेधव्यवहाराविषयत्वात् । ततश्च सामान्याकारेण सिद्धमादाय विचारो, यदि ज्ञानविषयं ज्ञानमवश्यं ज्ञायेत अवश्यं वा जिज्ञास्येत तदा ज्ञानपरम्परालक्षणाऽनवस्था स्यात्, सा त्वनुपलम्भबाधितेत्यर्थः । तदिदमुक्तं कस्यांश्चिदिति ॥ [२०।२]

तर्कस्य स्वतन्त्रस्यासाधकत्वात् तदनुग्राह्यं मानमाह । तद्विपर्यय इति । सर्वासां संविदां संवेद्यत्वाभाव इत्यर्थः । न च येन मानसप्रत्यक्षेण चरमबुद्धावसंवेद्यत्वं तेनैव तत्संवेदनात् कथमसंवेद्यत्वं ? न स्वाधिकरणज्ञानव्यतिरेकेणाभावज्ञानमिति वाच्यम् । उपान्त्यबुद्धाविव संवेद्यसंवेदनविषयत्वव्यतिरेकस्य मनसा ग्रहणात् । ननु चरमबुद्धेरसंवेद्यत्वे तत्र मानाभात् तदसिद्धिरेव स्यादित्यत आह । अज्ञातेति । ननु स्मरणे ऽप्यनुभवस्य कारणत्वात् तज्ज्ञानं स्यादेव । न । बुद्धित्वेन सामान्यलक्षणया प्रत्यासत्त्या तदनुभवात् । न च तथाप्ययमाणत्वापत्तिः योगजधर्माजन्यसामान्यलक्षणप्रत्यासत्त्यजन्यजन्यस्वविषयकसविकल्पकाजन्यजन्यसाक्षात्कारविषयत्वरूपाप्रामाण्यस्य निषेधात् । एवं चेति । बुद्धित्वावच्छिन्नं

भाष्यग्रन्थेनेतिवदता ग्रन्थविरोधश्चेत्यपि दर्शितम्।

( इति प्रमाणार्थपदयोः पदकृत्यमेकदेशिव्याख्यान-
दूषणं च । )

चतुष्टयस्योभयत्वविरोधं परिहरन्नाह । कार्यकार-
णाभ्यामिति । [२०।७]

नन्वर्थशब्दस्य प्रयोजनवचनत्वे ऽपि विरोधव्यधि-
करणत्वे तदवस्थे एवेत्यत आह । चन्दनादीति । [२०।८]

---

ज्ञायत एव न वेत्ति सामान्याकारेण संशयात्तज्जनितजिज्ञासया सामान्यतो ज्ञातायामन्तिमबुद्धौ विचारे ऽनवस्थामहत्कृतेन मनसा संवेद्यत्वाभावो ज्ञायत इत्यर्थः ॥

ग्रन्थविरोधश्चेति । एकदेशिव्याख्येयभाष्यविरोधादपि तद्व्या-
ख्यानमयुक्तमित्यर्थः ॥

( प्रमाणार्थपदप्रयोजनमेकदेशिव्याख्यानदूषणं च । )

चतुष्टयस्येति । सुखदुःखयोस्तत्साधनयोश्च चतुष्टयत्वादुभयत्व-
विरोधः सुखदुःखयोः कार्यत्वेन तत्करणयोश्च कारणत्वेनैक्यं विव-
क्षित्वा परिहृत इत्यर्थः ॥

परिसङ्ख्याशब्दस्य परिगणनार्थत्वमपहाय नियमार्थत्वव्याख्याने
बीजमनुपपत्तिमाह । नन्विति । प्रमाणप्रयोजनस्यापि सुख-
दुःखतत्साधनभावेन परिसङ्ख्यातत्वाविरोधो व्यधिकरणत्वम-
पक्षधर्मत्वं चात्रापि व्याख्याने तदवस्थमिति नियमार्थतया परि-
सङ्ख्याशब्दो व्याख्यात इत्यर्थः ॥

परिसंख्यातुं नियन्तुमिति वदता गणनीयार्थो ऽनभ्युपगमेन निराकृतः । अथ किमभिप्रेत्याप्रस्तुतमेव भाष्यकृतेदं प्रस्तूयत इत्यत आह । एवं किलेति । [२०।१२]

न प्रमाणप्रयोजनं भवितुमर्हतीति, प्रमाणस्य भूतार्थत्वादिति भावः । तथा च प्रमाणादीनां शक्यज्ञानत्वे ऽपि तदुत्पादकं शास्त्रमनारम्भणीयमेव, पारमार्थिकप्रयोजनाभावादिति निगर्वः ।

---

विरोधपरिहारार्थं स्पष्टयति । परिसंख्यातुमिति । व्यधिकरणत्वं चाग्रे निरस्य यथोक्तेनैव प्रकृतोपपादनादेवं किलेत्यादेराधिक्यमाशङ्क्याह । अथेति । अप्रस्तुतं—प्रकृतानुपपादकत्वादित्यर्थः । तृष्णज इवेति (१) टीकायां पिपासोरिवेत्यर्थः ॥

सुखादीनां प्रमाणप्रयोजनत्वाभावे हेतुर्नोक्त इति तमाह । प्रमाणस्येति । भूतार्थत्वं—सत्यप्रयोजनत्वं प्रमाणस्य प्रवृत्तिहेतुज्ञानद्वारा प्रवर्त्तकत्वं तस्येष्टसाधनताज्ञानम् । न च काल्पनिकस्येष्टत्वं तत्साधनत्वं च सम्भवतीत्यर्थः । एतावता यद्दूषणं प्रकृते तदाह । तथा चेति ।

कार्यकारणभावो यदि पारमार्थिकः स्यान्नीलादिवत्सर्वसाधारणः स्यात्, न चैवं, तस्मान्न पारमार्थिक इति दूषणं यद्यपि प्रकृते, न हि प्रकृते कार्यकारणभावमात्रं दूष्यते किं तु पुरुषविशेषसम्बन्धितायाः नियतकार्यहेतुत्वं, तथापि यथा पुरुषविशेष-

(१) तृष्णालोरिवेति—२ पु॰ पा॰ ।

एवंसाधारणनीलादिवैधर्म्येण हि काल्पनिकत्वं कार्यकारणभावस्य व्युत्पादयता नीलादि पारमार्थिकं स्वीकर्त्तव्यम्। तदपारमार्थिकत्वे त्वभिमतसिद्धिरेव न स्यात्। न च कार्यकारणभावस्यापारमार्थिकत्वे नीलादि पारमार्थिकं भवतुमर्हति, नित्यत्वप्रसङ्गात्। तस्माद्यो नीलादि पारमार्थिकमिच्छति तेन कार्यकारणभावोपि पारमार्थिक एष्टव्यः। न चोभयमपि। तथा च तुल्यमेतत्। इदं त्ववशिष्यते। कथमेकमनेकं परस्परविरुद्धं कार्यं कुर्यात्। तत्स्वभावत्वादिति यदि, तदोत्पत्तेरारभ्य कुर्यात् अविशेषात् तत्राह। निवेदयिष्यते हीति। [२०।१८]

सम्बन्धिकार्यनिरूप्यत्वेन हेतुत्वस्य नैयत्यं निषिद्धाते तथा कार्यविशेषघटादिनिरूप्यत्वेनापि हेतुत्वं निराक्रियत इति कार्यकारणभावमात्रमेव निराकृतमित्यभिप्रेत्याह। सर्वसाधारणेति। तदपारमार्थिकत्व इति। नीलादेरपारमार्थिकत्वे तद्वैधर्म्येणास्य पारमार्थिकत्वमेव स्यादित्यर्थः। तथा चेति। नीलादावपि काल्पनिकत्वं तुल्यमिति न तद्वैधर्म्येण काल्पनिकत्वं कार्यकारणभावस्य सिद्ध्यतीत्यर्थः॥

ननु जात्या कार्योत्पत्तिर्नाक्षिप्तेति किं ? तत्समाधानेनेत्यत

न जात्या-जन्मप्रभृति सहकारिनिरपेक्षतयेत्यर्थः ।

जातिदेशेति । [२०।२१] स्वभावंनियामिका जातिः ॥

अव्यवस्थयेति ।[२०।२२] सहकारिव्यवस्थावैचित्र्येणे-त्यर्थः । प्रमाणार्थः सुखदुःखलक्षणोऽनियतः—चन्द-नात् सुखमेव कण्टकाद्दुःखमेवेति नियमरहितः, अनि-यतहेतुकत्वात्—अनियतचन्दनादिसहकारिकारणक-त्वादित्यर्थः । प्राणभृदिति सहकारिवैचित्र्यसूच-नाय । अत एवोदाहरणमनियतकालमिति । यथा-

---

आह । जन्मेति । जातेरपि न सहकारित्वमित्यन्यथा व्याचष्टे । स्वभावेति । स्वो भावः कारणत्वम् । तन्नियामकत्वं तदवच्छेदकत्वं चन्दनत्वादिजातेरित्यर्थः ॥

ननु कार्यकारणभावस्याव्यवस्थायामनियमे सर्वं सर्वस्माद्भवे-दित्यत आह । सहकारीति । प्रमाणार्थः-प्रमाणप्रयोजनम् । यद्यप्यनेन कारणे नियमः प्रतिषिध्यते अनियतहेतुत्वं च हेतुः कार्यवृत्तिरिति व्यधिकरणस्तथापि चन्दनमेव पक्षीकृत्य सुख-दुःखजनकयावत्सहकारिमत्त्वेन सुखदुःखजनकत्वं तज्जनकसह-कार्यभावेन तदजनकत्वं वा साध्यमिति भावः । ननु चानियत-हेतुकत्वमात्रं साध्यव्याप्यमिति प्राणभृदिति व्यर्थमित्यत आह । सहकारीति ।

ऽनियतकालेत्युपलक्षणं देशावस्थासहकारिणामपि अनियमो द्रष्टव्यः ।

एतदुक्तं भवति—यथा केषु चित्कालदेशावस्थासहकारिषु सत्सु मेघाः सलिलमुद्गिरन्ति, केषु चित् सत्सु स्वत एव सलिलं पिबन्ति, तथा चन्दनादयोऽपि केषु चित् सुखं जनयन्ति केषु चिच्च दुःखमिति ।

विष्टिः—दण्डाकृष्टः कर्मकरः ।

ननु अर्थवति च प्रमाणे प्रमात्रादीन्यर्थवन्ति भवन्ति ज्ञायन्ते इत्यभिप्रेतं न तु जायन्ते इति, न चैवमस्ति, प्रमित्यव्यभिचारेणैवेतरेषामव्यभिचारावधारणादित्यत आह । यद्यपीति । [२१।११]

न च वाच्यं वैदिकी प्रतिपत्तिरव्यभिचारिणी आप्तोपदेशजप्रतिपत्तित्वादिति शक्यत एवेति । न

---

यथेति । उभयजनकमपि यदा यत्सहकारिसमवहितं तदा तज्जनयतीति सामान्येन व्याप्तिरित्यर्थः ।

आक्षेपसम्भावनायामर्थवन्तीति सम्मुखं विवेचयति । ज्ञायन्त इतीति । प्रमितीति । तथा चार्थाव्यभिचारज्ञापकत्वेन प्रमितेरेव प्राधान्यं युक्तमिति भावः ।

आप्तोपदेशजेति । यद्यपि यत्र क्वचिदाप्तत्वमनाप्तसाधारणं,

ह्याप्तोपदेशो ऽव्यभिचारिणीमेवार्थधियमाधत्त इत्यनवधार्य शक्यमिदं, न वा ऽव्यभिचारिप्रतिपत्तिजनकत्वादन्यदेव प्रमाणानामर्थवत्त्वमित्युक्तमेवेति। तथापि लोके तावदेवमस्तीति चेत् अत आह। अदृष्टार्थेति। [२७।१७]

यद्यपि तत्समवायः-प्रमासमवायः प्रमातृत्वमिति प्रकृतोपयोगि स्यादेव, तथापि वार्त्तिककृता प्रश्नोपलक्षणाभ्यां स्वातन्त्र्यमुपक्रान्तं, सामान्यन्यायेन विशेषोऽपि लभ्यत इत्यभिसन्धाय तथैव व्याचष्टे। कारकाभिधानेनेति। [२२।२] प्राधान्येन धातुप्रत्ययाभिधीय-

---

प्रकृतविषयाप्तत्वं च तद्विषयकज्ञानप्रामाण्यमज्ञात्वा ज्ञातुमशक्यं तथापि मन्त्रायुर्वेदैककर्तृकवाक्यजप्रतिपत्तित्वाद्वेदजप्रतिपत्तित्वादेति विवक्षितम्। अत्राप्तोपदेशस्य प्रमाकरणस्यैवोपजीव्यत्वात् प्राधान्यमित्याशयेनाह। तथापीति।

सामान्येति। सामान्येन कर्तृत्वेन प्रमातृत्वं लभ्यते विशेषेण तु प्रमातृत्वेन सामान्यं कर्तृत्वं न लभ्यत इति सामान्यपरतयैव व्याख्यानमित्यर्थः। आख्यातप्रत्ययाभावे ऽपि पाचकादिपदे कर्तृत्वमित्येतदर्थमाख्यातपदस्य प्रत्ययमात्रपरत्वमाह। धातुप्रत्ययेति। एतावन्मात्रं च करणादिसाधारणं एकस्मात् कार्योत्पत्तेः करणादेरपि तादृशव्यापारशालित्वादिति तन्निवृत्तिः

मानव्यापारसम्बन्ध एव तत्समवायः। प्राधान्यं च कारकान्तरात्तिरश्चीन्यमात्रमभिप्रेतं, तेन पचतीत्यादौ सर्वत्रातिरश्चीनपाकादिव्यापारवतो देवदत्तादेरेव कर्त्तृत्वं सिद्धं भवति। पाचयतीत्यादौ तु प्रयोज्यव्यापारप्रतीतावपि तस्यान्यतिरश्चीनत्वात् न तद्वतः कर्त्तृत्वं, किं नाम ?, प्रयोजकस्यैव, तद्व्यापारस्यातिरश्चीनत्वात्। एवं तर्हि—

"स्वव्यापारे हि कर्त्तृत्वं सर्वत्रैवास्ति कारके"—

इति न्यायेन करणादिव्यवहारविलोपप्रसङ्ग इत्यत आह। प्राधान्येनेति। [२२।६] स्वव्यापारापेक्षया न करणादिव्यवहारः, किं तु प्रधानक्रियापेक्षयेत्यभिसन्धिः। ननु च कारकसाध्यत्वाऽविशेषे ऽपि प्रधानक्रियापेक्ष-

---

प्राधान्यपदस्य प्रयोजनमिति दर्शयितुं प्राधान्यं व्याचष्टे। प्राधान्यं चेति। न करणादेः साक्षात्तदभिधीयमानव्यापारसम्बन्धः, किं तु कर्त्तृतैरश्चैन्येन कर्त्तुश्च तत्सम्बन्धो न कारकान्तरगर्भः तथा च कारकान्तरागर्भताहशव्यापारसम्बन्ध एव कारकान्तरात्तैरश्चीन्यमिति न करणादौ प्रसङ्ग इत्यर्थः। पाचयतीत्यादाविति। प्रयोजकताहशव्यापारसम्बन्धद्वारकः प्रयोज्यस्य तत्सम्बन्ध इति प्रयोजक एव कर्त्ता न प्रयोज्य इत्यर्थः। प्राधान्येन चेत्यादिग्रन्थस्योपयोगार्थमाह। एवं तर्हीति।

येत्येतदेव कुत इत्यत आह। अवान्तरेति। [२२।७] अस्ति हि काञ्चित्क्रियामुद्दिश्य प्रवर्त्तमानानां कारकाणामवान्तरव्यापारयोगो, न त्ववान्तरव्यापारार्थमेव तेषां प्रवृत्तिरित्यर्थः।

ननु न सर्वो व्यापारः प्रधानक्रिया वा पुरुषमाश्रयते तत्कथमाह "पुरुष" इतीत्यत आह। पुरुष इति प्रकृतापेक्षम्। [२२।८] तदेतद्वैयाकरणानां लक्षणं, तच्चानुपपन्नं, शब्दप्रयोगमात्रस्याव्यवस्थापकत्वात् व्यवस्थाहेतोश्च लक्षणत्वात्। अभिधानयोग्यता लक्षणमिति चेत्। न। तस्या एव विचार्यमाणत्वात्। विवक्षा-

---

क्रियामुद्दिश्येति। उद्देश इच्छा, सा चाचेतनं यद्यपि नास्ति तथापि तत्कारकजन्यकार्याजनकत्वे सति तत्कारकजन्यत्वं, कारकसहकृतकारकजन्यक्रियात्वं वा प्रधानक्रियात्वमिति भावः।

नन्वेतत्कर्तृलक्षणमचेतनसाधारणं अचेतनकर्तृत्वे चापसिद्धान्त इति तद्दूषयति। तदेतदिति। अभिधीयमानत्वं विशेषणमुपलक्षणं वा, आद्यं दूषयति। शब्दप्रयोगमात्रस्येति। अनभिधानदशायां कुर्वतो ऽप्यकर्तृत्वापत्तेरित्यर्थः। अन्ते चेतरव्यावृत्तानुगतोपलक्ष्यसम्भवे तस्यैवावश्यकत्वेन लक्षणत्वापत्तेः, तदसम्भवे चोपलक्षणत्वाभावादिति भावः। तस्या एवेति। योग्यतावच्छेदकज्ञानाभावे तदज्ञानात्, ज्ञाने वा तदवच्छेदकस्याऽऽवश्यकत्वेन

मात्रमिति चेत्। न। तस्या अपि निमित्तमन्तरेणा-व्यवस्थितेरित्याशयवानाह।

लक्षणान्तरमिति। [२२।९] पुरुष इति वर्त्तते।

तथा च तत्प्रयोक्तृत्वमित्यत्र तस्य प्रयोक्तेति विग्रह-शङ्का माभूदित्याशयवानाह। तस्य चेतनस्येति। [२२।१०] एतेन स चासौ प्रयोक्ता चेति वा, तस्य चेतनस्य प्रयो-क्तृत्वं धर्मो वा इत्यर्थः।

सर्वकारकाणीति स्वेतरपरस्परविसदृशानेककार-

---

लक्षणत्वादित्यर्थः। विवक्षात: कारकाणीति वैयाकरणमतं यदा यस्य कर्तृत्वं विवक्ष्यते तदा स कर्तेति शङ्कते। विवक्षेति। विवक्षाया अपि विशेषणत्वोपलक्षणत्वयोरभिधीयमानत्वपक्ष-दूषणान्येवेति निराकरोति। तस्या अपीति।

तस्य प्रयोक्तृत्वमिति विग्रहव्यावर्त्त्यं विग्रहान्तरे दोषमाह। पुरुष इतीति।

तस्य प्रयोक्तेति विग्रहे पुरुषप्रयोजक एव कर्त्ता गम्येत न त्व-चेतनप्रयोजक इत्यव्याप्तिरित्यर्थः। एतेनेति। स चासौ प्रयोक्ता चेति तत्प्रयोक्ता तस्य भाव: तत्प्रयोक्तृत्वम्। तस्य प्रयोक्तृत्वं धर्म इति वा षष्ठीसमास इत्यर्थः। यद्यपि तत्प्रयोक्तृत्वमित्यत्र तृच: कर्त्तरि विधानादात्माश्रयस्तथाऽपि कारकप्रयुक्तानुकूलज्ञानेच्छा-कृतिसमवायित्वं कर्तृत्वमित्यत्र तात्पर्यम्।

काभिप्रायम् । तेनादृष्टमनधितिष्ठतोऽपि कुलालस्य कर्त्तृत्वमक्षतमेवेति ।

एतावतैव लक्षणे परिसमाप्ते इतराप्रयोज्यत्वमित्यनेन चेतनप्रयुक्तिं प्रति स्वातन्त्र्यमितरेषां व्यवच्छिन्दता परस्परप्रयोजकत्वमपि व्यवच्छिन्नम् । चेतनस्यापि तानि व्यापारयत एव कर्त्तृत्वमित्युक्तम् । तथा च यथा कार्यं कर्त्रधीनं तथा कारकान्तराधीनमित्युभयव्याप्तात् कार्यादेकतरापाये ऽन्यतरापाय इति

---

ननु सर्वकारकप्रयोक्तृत्वं कर्तुरसिद्धं कर्तुरदृष्टस्य च कारकस्य कर्त्रा ऽनधिष्ठानादित्यत आह । अत्र चेति । तथा च सर्वपदं न यावत्कारकपरं किन्त्वनेकतत्परमतः स्वस्यादृष्टस्य च कर्त्रानधिष्ठाने ऽपि न दोष इत्यर्थः । यत्रैकजातीयाऽनेककारकव्यक्त्यधिष्ठातृत्वं तत्र कर्त्तृत्वव्यावर्तनाय विसदृशेति विशेषणम् । स्वरूपकथनमात्रपरं वा । अदृष्टमिति । आत्मानं चेत्यपि द्रष्टव्यम् ।

परस्परेति । कर्तृविनाकृतस्य चक्रादेर्न दण्डादिप्रयोज्यत्वमित्यर्थात् न कर्त्रा विना दण्डादिश्चक्रादिप्रयोजक इत्यर्थः । यत्रापि चेतनस्यास्मदादेर्न प्रयोजकत्वं, तत्रापि न कारकाणां परस्परप्रयोज्यत्वं किं तु तत्रेश्वर एव परमाण्वादिकारकप्रयोक्तेत्याह । चेतनस्यापीति । उक्तं-तत्प्रयोक्तृत्वमित्यनेन । ननु तत्र चेतनाधिष्ठाने किं मानमित्यत आह । तथा चेति । एवं च चेतनाधिष्ठानं विना कार्यमेव नास्तीति चेतनस्यैव कारक-

दर्शितम् । अतो लक्षणस्य नातिव्यापकत्वम् । अचेतनेषु तु कर्तृव्यवहारः कथमित्यवशिष्यते तत्राह । अचेतनस्य त्विति । [२२।११] स्वाभाविकं-मुख्यम् ।

"तत्त्वं हि प्रमाणव्याप्यत्वं प्रमाणव्यापारविषयत्व"मिति वदतः करणव्यापारविषयः कर्मेति कर्मलक्षणं सम्मतम् । अत्र च लक्षणे ऽवान्तरव्यापारो ग्राह्यः, प्रकृते च प्रधानव्यापारः प्रमितिलक्षण इति विभागः ।

विनियोज्यतेति ।[२२।१३] अनेन वार्त्तिकस्थस्य विनियो-

---

प्रयोक्तृत्वमित्यर्थः । अत इति । यदीतराप्रयोज्यत्वमित्यनेनाचेतनकारणानां परस्परप्रयोजकत्वं न व्यवच्छिद्येत तदा कर्तृलक्षणमचेतने ऽतिव्यापकं स्यादित्यर्थः । अचेतनस्य त्वितीति । रथो गच्छतीत्यादौ व्यापारवत्त्वमात्रगुणयोगाद्गौणः कर्तृव्यवहार इत्यर्थः । ननु कर्तुरपि कृत्युपाधिकं कर्तृत्वं न स्वाभाविकमित्यत आह । मुख्यमिति ।

अत्र लक्षण इति । अवान्तरव्यापारश्चक्षुर्घटसंयोगादि स्वद्विषयः कर्म । न च हस्तादिकरणव्यापारविषयत्वेन दात्रादेरपि छिदाकर्मत्वापत्तिः, यावत्करणव्यापारविषयत्वस्य विवक्षितत्वात् । न च व्यर्थविशेषणत्वं, प्रवृत्तिनिमित्तनिर्वचनादिति भावः । प्रकृते त्विति । तद्धेतुप्रमितिरूप एव प्रधानव्यापारो ग्राह्य इत्यनुषज्यते ।

केचित्तु कर्मत्वमपि तद्विषयत्वमेवास्तु ? युक्तं चैतत्करणस्य मनसो व्यापार आत्मज्ञानम् । तद्विषयस्यात्मनोपि ज्ञानक्रियाकर्मत्वोप-

गस्य विषयनिष्ठत्वं दर्शयता योग्यतापि विषयगतैव द्रष्टव्येत्यपि दर्शितम्। तेन विनियोगाय(१) योग्यता विषयगतैवेत्यर्थः। ज्ञानपरं चैतत्-तेनायमर्थः विनियोगो वाऽर्थगतः तद्योग्यताज्ञानं वा चतुर्वर्गस्य पर्यवसानमिति।

( सोऽयं इत्यादि-परिसमाप्यत इत्यन्तभाष्यतात्पर्यव्याख्याव्याख्यानम्। )

---

पञ्चेति। [२२।१८] रूपं संज्ञा संस्कारो वेदना विज्ञानमिति। तत्र रूपरसगन्धस्पर्शशब्दा-रूपस्कन्धः, सवि-

---

पत्तेः रन्यथा तु तद्वाक्यत्वापत्तिः। न चैवमतीतानागतयोरपि प्रमितिविषयत्वेन कर्मत्वापत्तिः, कारकत्वेन विशेषणादित्याहुः।

विषयगतैवेति। एवकारान्न विनियोक्तृगता। एवं सति योग्यतया समसमन्वयं परिहरति। तेनेति। विनियोगाय-उपादानायेत्यर्थः। तादर्थ्ये चतुर्थी। तथापि विषयगता विनियोगयोग्यता न चतुर्वर्गव्यापारः प्रमातर्यभावादिति ज्ञानपरत्वमाह। ज्ञानपरं चेति। उपेक्षणीयमधिकृत्याह। तद्योग्यतेति।

( सोऽयमित्यादि-परिसमाप्यत इत्यन्तभाष्यतात्पर्यव्याख्याव्याख्याव्याख्यानम्। )

---

सौगतमतं व्याचष्टे। रूपमिति।

---

१विनियोगोपयोग्यतेति २पु० पा०।

कल्पकं विज्ञानं संज्ञास्कन्धः, समनन्तरप्रत्ययः संस्कारस्कन्धः, सुखदुःखे वेदनास्कन्धः, निर्विकल्पकं ज्ञानं विज्ञानस्कन्धः। जीवेति। [२२।२०] जीवश्चेतनः तदितरो ऽजीवः। आस्रवन्तीत्यास्रवाः-स्रोतांसीन्द्रियाणि। स्रोतोभिरिव तैरयं जीवो धर्माधर्माभ्यां पूर्यत इत्यर्थः। संवरणं-संवरः-जीवाजीवविषयो ऽभेदाभिमानस्तेन संवृतो ह्ययं जीवो ऽसर्वज्ञ इति। निर्जरणं-निर्जरः-तपश्चरणं निःशेषेण जीर्यते धर्माधर्मलक्षणो बन्धो ऽनेनेत्यर्थः। बन्धनं-बन्धः-धर्माधर्मौ ताभ्यां निगडकटकाभ्यामिवायं बद्धो ऽस्वतन्त्रो जीव इत्यर्थः। मोक्षः सकलावरणविगम इत्यर्थः। सर्वत्र नियमो ऽप्रामाणिकः।

---

दिगम्बरमतं व्याचष्टे। जीव इति। आस्रवादय इत्यत्राऽऽदिपदग्राह्यमाह। संवरणमिति। जीवाजीवयोरिति। आत्मशरीरयोरित्यर्थः। तपश्चरणमिति। मलपङ्कधारणतप्तशिलाधिरोहणतिष्ठद्भोजनवीरासनाद्याचरणमित्यर्थः। आवरणं-शरीरेन्द्रियादि। एतद्दूषयति। सर्वत्रेति। अन्येषामपि प्रामादिकत्वादित्यर्थः। यद्यपि जीवश्चेतनस्तदितरो ऽजीव इति नियम एव ताभ्यामतिरिक्ताभावात्। तथाप्यजीवशब्देन गोवृषन्यायाज्जीवशरीराद्यभेदाभिमानविषयस्यैवोक्तत्वाद्घटादिना सहात्माभेदाभिमानस्याप्यभावादिति भावः।

ननु न विधायकप्रमाणनिवृत्तिमात्रेणासत्त्वमित्यत आह। तदिति। प्रमाणविषयत्वेन सदसतोरेकत्वमविलक्षणव्यवहारविषयत्वमभिमतमेव ततो निर्दला शङ्केत्यत आह। सर्वसामर्थ्येति। [२३।३]

अर्थक्रियासामर्थ्यं हि सल्लक्षणं तच्चेद्भवदभिमते भावे ऽप्यस्ति सोऽपि सद्व्यवहारविषयः प्रसक्त इति टीकार्थः। "न वय"मित्यादिना भावस्य सामर्थ्यमङ्गीकृतं, न तु सामर्थ्येन सद्व्यवहारः अननुसंहितसामर्थ्यस्यापि सद्व्यवहारविषयत्वात्, अपि त्वस्तिनास्तिप्रतीति विषयत्वेन। न ह्यस्ति सम्भवः सदिति व्यवह्रियते न

---

तच्छब्देन विधायकस्य परामर्शं दोषमाह। ननु नेति। न हि प्रमाणाभावेन प्रमेयनिवृत्तिरिति भावः। प्रमाणं भिन्नस्याभिन्नीकरणे असमर्थमित्यभिप्रेत्याह। सद्व्यवहारविषय इति। व्यवहारस्य व्यवहर्त्तव्योपलम्भननिबन्धनत्वादित्यर्थः। सद्व्यवहारविषयत्वापादनं टीकाकृता न निराकृतमिति निराकरणायाह। नत्विति। अननुसंहितेति। असामर्थ्याननुसन्धाने ऽप्यभावव्यवहारादित्यपि द्रष्टव्यम्। अस्तीतिप्रतीतिविषयत्वं यद्यप्यभावे ऽप्यस्ति इह घटाभावोऽस्तीति प्रतीतिः, तथापि भावत्वं धर्मान्तरं भावलक्षणमभिप्रेतम्। तच्च द्रव्यादिषडन्यतमत्वमित्येके। अभाव-

चास्तिप्रत्ययविषय इति। असदिति व्यवह्रियते न च नास्तिप्रत्ययविषय इति प्रकरणार्थः।

स्यादेतत् प्रमेयवैलक्षण्यवत् प्रमाणवैलक्षण्येनापि साक्षात्कारादिवत् प्रतीतिभेदो घटते ततः सदन्तर एव इयं नास्तीति प्रतीतिः कदा चिद्भवेदित्याशङ्क्याह। सम्प्रतीति। [२३।१३] अबाधिते प्रसिद्धतरे विप्रतिपत्तिर्न काञ्चित्क्षतिमावहतीत्यर्थः।

ननु निषिध्यतां भावान्तरं, तथाऽप्यभावविधौ

---

भिन्नत्वं भावत्वं भेदश्च वैधर्म्यमन्योन्याभावो वा, वैधर्म्यं चाभावावृत्तिघटत्वादिधर्मः। अन्योन्याभावस्तु अभावत्वसामान्यावच्छिन्नप्रतियोगिक एव। न च भावत्वे ऽपि निरूपिते ऽभावनिरूपणमित्यन्योन्याश्रयः, द्रव्यत्वादिषट्कात्यन्ताभाववत्त्वस्य भावत्वज्ञानं विनाऽपि निरूपणात्। अत्यन्ताभावव्यक्तिश्चाभावत्वाज्ञाने ऽप्यवगतैवेति सम्प्रदायविदः।

ननु "सदुपलम्भकमेवा ऽसदुपलम्भक"मितिभाष्यप्रतिपाद्यस्य प्रयोजनं टीकाकृता नोक्तमिति तन्निराकार्यां शङ्कामाह। प्रमेयेति। साक्षात्कारादिवद्विषयाभेदे ऽपि कारणभेदादेव भावजातीय एव नास्तीति प्रतीतिः स्यादिति भावव्यतिरिक्ताभावसिद्धिरित्यर्थः। ननु न प्रदीपदृष्टान्तमात्रेण विप्रतिपत्तिनिरास इत्यत आह। अबाधित इति।

किमायातं, न हि नीलनिषेधे पीतादिविधिरवश्यमि-
त्यत आह । नीलपीतौ हीति । [२३।२२]

ननु सर्वशङ्कानिराकरणपटीयसि प्रत्यक्षे ऽपि प्रवृत्ते
कुतस्तर्कस्यावकाशः ततः किमत्रोपपत्त्येत्यत आह ।
यदि कश्चिदिति । [२३।२८] सन्त्येव हि केचिद्वादिनो ये
विपक्षदण्डमपश्यन्तः प्रत्यक्षपरिकलितमपन्हुत्य शङ्का-
मुत्थापयन्ति तान् साङ्ख्यादीन् प्रत्ययं प्रकार
इत्यर्थः । पूर्ववद्व्याख्येयम् । तुल्योपलम्भयोग्यतातर्का-
न्तर्भाविनेत्यर्थः ।

ननु यद्यसङ्केताः प्रकृतानुपयोगिनस्तदा ऽनुपयोगा-

---

नीलपीतहरितादीत्यादिग्रन्थोपयोगार्थमाह । नन्विति । नील-
पीतयोः परस्पराभावव्याप्यत्वं विरोधस्तेनान्यतरनिषेधे ऽपि नान्य-
तरविधिः भावाभावयोस्तु परस्पराभावरूपत्वं विरोध इत्यन्यतर-
निषेधे कथं नान्यतरविधिरिति परिहारार्थः ।

ननु लौकिकप्रत्यक्षस्यैव सहकारी किं न तर्कः प्रदर्श्यत इत्यत
आह । ननु सर्वेति । शङ्कानिराकरणार्थं तर्कस्योपयोगस्तत्र
च प्रत्यक्षमेव समर्थमिति किं तर्केणेत्यर्थः । शङ्कामिति । अन्यथा-
सिद्धिशङ्कामित्यर्थः । तानिति । प्रत्यक्षान्यथासिद्धिशङ्कानिरासार्थं
परीक्षकैस्तर्क उपादीयत इत्यर्थः ।

ननु पारतन्त्र्यादभावानभिधाने वार्त्तिककृता समर्थितं “भा-

देव, नोच्यन्त इत्युच्यताम्, अथोपयोगिनस्तदा ऽवश्यं वक्तव्या एव, पारतन्त्र्येण प्रतिभासान्नोच्यन्त इति क्वोपयुज्यत इत्यत आह। निषिध्येति। [२४।६] प्रतिपादनाय हि ते वक्तव्यास्तच्च प्रतियोग्यधिकरणप्रतिपादनादेवार्थतो भूतमिति किं? तदर्थप्रयासेनेत्यर्थः। तदिदमुक्तं गम्यन्त इति नोक्ता इत्यर्थ इति। [२४।८]

ननु यद्युपायप्रतिपादनेनैव प्रतिपादिता इति नोक्तास्तर्हि प्रमेयादयोपि प्रमाणव्युत्पादनेनैव प्रतिपादिता इति किं तत्कथनेनापि?। अथ प्रतीता अपि प्रयोजनविशेषादभ्यर्हिततया प्रतिपाद्यन्ते हन्ताऽसद्भेदा अपि उपयुक्तास्तथा किं? नेत्यत आह। अथवेति। [२४।८]

ननु "भावप्रपञ्चवदभावप्रपञ्चो ऽप्युद्दिष्टो वेदितव्य" इति प्रतिज्ञाते ऽर्थे "चतुर्वर्गानन्तर्भावा"दिति हेतुर्भागासिद्धो विरुद्धश्चेत्यत आह। निःश्रेयसेति। [२४।११]

---

वभेदकथनेनैवाभावभेदा अपि गम्यन्त" इति नोक्ता इति व्याख्यानं किमर्थमित्यत आह। ननु यदीति।

ननु कथमनुपयुक्तं तत्फलस्य प्रतिपत्तेरन्यथैव सिद्धत्वादित्यत आह। ननु यद्युपायेति। निःश्रेयसानुयोगीनीत्यस्योपयोगार्थ-

तेन निःश्रेयसानुपयोग्यभावप्रपञ्चाधिकरणतया चतु-र्वर्गानन्तर्भावो हेतुस्तदधिकरणतया तथाभूत एव भावप्रपञ्चो दृष्टान्तः।

नोच्यन्त इति साध्यं निःश्रेयसोपयोगी तूद्दिष्टो वेदितव्यश्चतुवर्गान्तर्भावादुपयुक्तभावप्रपञ्चदिति वार्त्ति-कार्थः । अत एवोद्दिष्टो वेदितव्य इति अनुपलब्धिबा-धितं मन्यमान उत्तरग्रन्थमवतारयति । अथेति ।[२४।१२]

कारणानुपलब्ध्या सर्व एवानुपलब्धिभेदा उप-लक्षिताः । अपवर्ग एव मूर्द्धाभिषिक्तः-प्रधानतया राज-

---

माह । ननु भावेति । भागासिद्ध इति । अभावे प्रमाणप्रमेययो-र्यथायथमन्तर्भावादित्यर्थः । विरुद्धश्चेति । चतुर्वर्गानन्तर्भावस्या-नभिधानव्याप्यत्वादित्यर्थः । नन्वेवं यथाश्रुतवार्त्तिकमसङ्गतमेवेत्यत आह । तेनेति । तदधिकरणतयेति । यद्यपि दृष्टान्तत्वेन सर्वे-षामभिधानं कृतमेव तथापि विशिष्य गङ्गावालुकादीनामनभि-धानमेवेति भावः ।

अत एवेति । अत एव निःश्रेयसोपयोग्यभावोद्दिष्टत्वेन चतु-र्वर्गान्तर्भावो हेतुरत एव भावोद्देशो योग्यानुपलब्धिबाधित इति पूर्वपक्षनिरासायाग्रिमग्रन्थमवतारयतीत्यर्थः ।

कारणानुपलब्ध्येति । जहत्स्वार्थलक्षणयेत्यर्थः ।

कल्पः। एतदप्युपलक्षणम्। अर्थोऽपि शत्रुपुत्राद्यभावादिः। प्रवृत्तिरप्यहिंसादिः। प्रेत्यभावोऽपि पूर्वशरीरपरित्यागादिः। फलमप्युत्पन्नरोगप्रध्वंसाद्यसङ्केद इति मन्तव्यम्। संशयस्य ज्ञानरूपत्वादमद्रूपता न सम्भवतीति तमुल्लङ्घ्यातिदिशति। एवं प्रयोजनेति। [२४।१५] तथाहि सन्ध्यावन्दनप्रायश्चित्तादावहितनिवृत्तिरेव प्रयोजनम्। दृष्टान्तोऽपि कश्चिदभावरूपो यथा सुषुप्तावस्थानमपवर्गे दृष्टान्तयिष्यति। सिद्धान्तोऽपि नैरात्म्यादिः परेषाम्। अस्माकं यथाभाऽभावस्तम इत्येवमादिः। सर्वेषामपवर्गो दुःखाभाव इति। अवयवतर्कनिर्णयवादजल्पवितण्डास्तु सङ्केदा एव। हेत्वाभासा द्विविधाः यथाऽनित्यः शब्दः सत्तारहितत्वाच्चाक्षुषत्वादित्येवमादिः। छलं जातयः सङ्केदा एव। निग्रहस्थानेषु विप्रतिपत्तिविधाः सङ्केदाः

---

प्रेत्यभावोपीति। यद्यपि मृत्वा जन्म प्रेत्यभावो भाव एव तथापि मरणस्य पूर्वशरीरसम्बन्धाभावरूपत्वमेवेति भावः। अहितनिवृत्तिरेवेति।

नन्वेतावता प्रत्यवायपरीहारः फलं स्यात्। न चाहरहः

अप्रतिपत्तिविधा असङ्गेदाः। तदिदमुक्तं एवं तत्र तत्रोहनीयमिति। [२४।१५]

ननु भाष्ये असङ्गेदकथनवार्त्तापि नास्तीत्यत आह। अत्रेति। [२४।१७]

परस्परविरुद्धयोरभिधानानभिधानयोः पारमार्थिकत्वं न सम्भवति तत्कतरदनुपारमार्थिकमित्यत आह। द्वितीये तु कल्पे पारमार्थिक इति। [२४।१८]

सूत्रस्य सप्रपञ्चं तात्पर्यम्—प्रमाणत इत्यादिप्रपञ्चः,

---

सन्ध्यामुपासीतेत्यत्र विधिप्रवृत्तेः प्राक् प्रत्यवाये मानमस्ति, विधेः कर्त्तव्यत्वमवगम्य विहिताकरणेन प्रत्यवायकल्पनात् प्रत्यवायाभावं च फलमुद्दिश्य विधिप्रवृत्तेरित्यन्योन्याश्रयश्च। मैवम्। अनुवादोपस्थितफलोपाधिकर्तव्यत्वे सन्ध्यावन्दनस्यावगते "अकुर्वन् विहितं कर्म"त्यादिवाक्याच्छौचे सति सन्ध्यानुपासने निन्दानुवादेन नरकफलत्वश्रुतेः प्रायश्चित्तोपदेशाच्च प्रत्यवायकल्पने तत्फलकामनाविरहे ऽपि प्रत्यवायपरिहारार्थं नियमतः प्रवृत्तेः विधिप्रवृत्त्यनन्तरं प्रत्यवायस्य प्रामाणिकत्वात्। अकरणोन्मुखस्य करणेन प्रत्यवायप्रागभावस्यापि साध्यत्वं च वक्ष्यते। भाष्यस्य परस्परविरुद्धव्याख्यानद्वयकरणनिराकार्यां शङ्कामाह। नन्विति। असङ्गेदोपि सूत्रे कथित इति भाष्ये नास्तीति तात्पर्यं किमर्थं प्रदर्श्यत इत्यर्थः। उभयस्याप्यर्थस्य प्रामाणिकत्वादुभयमप्यर्थं शाब्दं

"सञ्च खलु षोड़शधा व्यूढ़मुपदेच्यत" इति तात्पर्यम्। तस्य तात्पर्यमिति। [२४।२२] "तासां खल्वासा"मित्यवतारभाष्यस्य न तु सूत्रपाठस्य, अवयवार्थव्याचिख्यासुनेत्यनेनैव तत्र तात्पर्यस्य स्फोरितत्वात्॥

( इति सप्रपञ्चसूत्रतात्पर्यनिरूपणव्याख्यानम् )।

---

कर्तुं द्विधा व्याख्यातमिति परीक्षारार्थः। सूत्रस्येति सूत्रत्वकीर्तनं प्रयोजनाभिधेयसम्बन्धप्रतिपादनपरादप्युद्देशलाभाय॥

( इति सप्रपञ्चं प्रथमसूत्रतात्पर्यनिरूपणव्याख्याव्याख्यानम्। )

सू०। प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्ता-वयवतर्कनिर्णयवादजल्प-वितण्डाहेत्वाभासच्छलजाति-निग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः ॥ १ ॥

---

द्वन्द्वस्वरूपमाह—तत्तात्पर्याभिधानायेति शेषः। द्विग्वव्ययीभावौ प्रयोगमात्रनिराकृतत्वान्नोपन्यस्तौ। असम्भवात्—अर्थासम्भवात्। षष्ठीसमास इति सम्भावितत्पुरुषोपलक्षणपरम्। इति हि—इत्यादि

---

ननु द्वन्द्वपदादेव तत्स्वरूपे लब्धे पुनस्तदभिधानं पुनरुक्तमि-त्यत आह। तत्तात्पर्येति।

प्रयोगेति। द्विगुसमासे आकारोत्तरपदो द्विगुरित्यादि-ना स्त्रीत्वे द्विगोरिति ङीपः प्राप्तेः। अव्ययीभावे च नपुंसकत्वे नाव्ययीभावादित्यमि यथावस्थितसूत्रवैरूप्यापत्तेरित्यर्थः। अर्था-सम्भवादिति। अभिमतार्थासम्भवादित्यर्थः। प्रमाणं च तत्प्रमेया-दिकं चेति कर्मधारयस्य प्रमाणप्रमेयादिभ्य इति बहुव्रीहेश्च सम्भवे ऽप्यभिमतार्थासम्भवात्। सम्भावितेति। सम्भावितः प्रमाणा-दीनां निग्रहस्थानानीति षष्ठीसमासः तैर्निग्रहस्थानानीति तृतीया-समासश्चेत्यर्थः। नन्विति हीत्यनेन प्रमाणप्रमेययोरेव वचन-भेदप्रयोजनमुक्तं नान्येषामित्यत आह। इत्यादि हीति। न तु प्रत्येकमिति टीका। न च प्रमेयवत्प्रमाणेष्वप्येकस्याप्यज्ञाने निःश्रेयसासिद्धेः समुदाय एव प्रयता अन्यथा तद्वत्पादन-

हीत्यर्थः। तेनार्थनिर्देशमुपादाय संशये ऽपि बहुवचनं द्रष्टव्यम्। तत्रापि संशयानां परस्परनिरपेक्षाणामेव न्यायप्रवर्त्तकत्वमिति तात्पर्यम्। दृष्टान्ते ऽपि विशेषलक्षणकरणावसरे द्विवचनमेव तस्यापि परस्परनिरपेक्षोदाहरणे सम्प्रतिपत्तिः प्रयोजनम्। एवं सिद्धान्तानामपि स्वप्रयोजने परस्परानपेक्षत्वमेव। तच्च बहुवचनसमानार्थेन सङ्ख्यावचनेन प्रतिपादितम्। अवयवानां तु यद्यप्येकस्मिन् वाक्यार्थे प्रतिपादयितव्ये मिथः सापेक्षत्वं, तथापि परस्परासम्प्रतिपत्त्याऽपि

---

वैयर्थ्यादिति वाच्यम्। प्रमाणानां प्रमाहेतुभावस्य प्रत्येकपर्यवसानात्। न हि यथाऽऽत्मादिसमुदाये प्रमेयता तथा प्रत्यक्षादिसमाहारे प्रमाकरणतापि, प्रत्यक्षादिभिर्मिलित्वा प्रमाया अजननादिति सूचयितुं प्रमाणप्रमेययोर्वचनभेद इति भावः। तेनेति। संशयसूत्रे विमर्शः संशय इत्येकवचननिर्देशे ऽप्यार्थं बहुवचनं संशयविशेषाणां लक्षणादिति। तत्रापि परस्परनैरपेक्ष्येण न्यायप्रवर्त्तनं प्रयोजनमित्यर्थः। प्रयोजने विशेषलक्षणाभावात् तत्परित्यज्य दृष्टान्ते वचनभेदमाह। दृष्टान्ते ऽपीति। दृष्टान्ते विशेषलक्षणाभावे ऽपि दृष्टान्तप्रतिपादकोदाहरणद्वैविध्यस्य दृष्टान्तद्वैविध्यं विनाऽनुपपत्तेरार्थं दृष्टान्ते ऽप्यन्वयव्यतिरेकविशेषलक्षणद्वयमिति भावः। सङ्ख्यावचनेनेति। स चतुर्विध इति सूत्रप्रतीकेनेत्यर्थः।

तमर्थमभिदधतामेवेति बहुवचनप्रयोजनम् । हेत्वाभासेष्वपि बहुवचनस्य स्वव्यापारे परस्परनिरपेक्षत्वप्रतिपादनमेव तात्पर्यम् । तथा छलजातिनिग्रहस्थानेष्वपि । यत्र तु निर्देशो नास्ति तत्र लक्षणे यथावचनं विग्रहः, सामान्यमात्रस्यैव प्रयोजकत्वादिति भावः ।

( इति विग्रहे वचनभेदप्रतिपादकभाष्यतात्पर्यव्याख्याव्याख्यानम् । )

---

यत्र त्विति । यत्र निर्देशे ऽवान्तरविभागो नास्ति एकवचनं च श्रूयते तत्र प्रयोजनविशेषस्य सूचनीयस्याभावाद्यथा लक्षणवचनं तथैवात्र विग्रहः कर्तव्य इत्यर्थः । सामान्यमात्रस्यैवेति । प्रयोजनतर्कनिर्णयवादजल्पवितण्डासु प्रयोजनादिमात्रस्यैवेत्यर्थः ।

ननु वचनभेदे द्वन्द्वः समासो नास्ति तस्य युगपदधिकरणस्वभावत्वात्, (१) अधिक्रियत इत्यधिकरणं पदार्थास्तेषां यौगपद्यमितरसाहित्यं द्वन्द्वे प्रतीयते, तथा च नित्यसमासत्वेनात्र वाक्यमेव नास्ति कुतो वचनभेदः, अन्वय प्रदर्शनन्तु समासार्थसाहित्योपस्थापकद्विवचनबहुवचनाभ्यामेव युज्यते न तु वचनान्तरेण । न च द्वन्द्वे साहित्यप्रतीतिरसिद्धा, इतरेतरद्वन्द्वे धवखदिरौ छिन्धीत्यत्र विभक्त्युपनीतद्वित्वे धवखदिरयोः प्रत्येकमन्वयायोगान्निराकाङ्क्षत्वाच्च । द्वित्वमपि प्रत्येकं न साकाङ्क्षम् एकत्र द्वित्वाभावात् ।

---

(१) अधिकरणवचनत्वात्-पा० १पु० ।

द्वित्वं च व्यासज्यवृत्तितया यद्यपि प्रत्येकमेव, तथापि न प्रत्येकं परिसमाप्यते, अन्यथा एकत्रापि द्वाविति प्रतीत्यापत्तिरतो द्वन्द्वे पदशक्यस्य न द्वित्वान्वयबोधः बोधे वा धवद्वयधीः खदिरद्वयधीश्च स्यात्। तस्मात् पदशक्ये द्वित्वान्वयानुपपत्त्या सहितावस्थमुभयं द्वित्वान्वययोग्यं तत्साकाङ्क्षं चेति खदिरसहितधवोपस्थितये प्राथम्यात्तु धवपदे साहित्यलक्षणा, अत एवाङ्गवङ्गकलिङ्गशब्दानां प्रत्येकमेकत्वेऽपि द्वन्द्वे बहुषु वृत्तः तत्परस्य तद्राज्यस्याङ्गादेस्तद्राजस्य बहुषु तेनैवास्त्रिया(१)मित्यनेनाप्रत्ययलोपे अङ्गवङ्गकलिङ्गा इति प्रयोगाः अन्यथा द्वन्द्वे साहित्यलक्षणां विना तेषां प्रत्येकपदस्य बहुषु वृत्त्यभावात् प्रत्ययलोपो न स्यात्। न चैवं साहित्यस्य पदार्थत्वे खदिरसहितो धव इत्यत्रेव द्विवचनानुपपत्तिः, प्रत्युत साहित्यावस्थाया लक्ष्यत्वात् तस्याश्चैकत्वादेकवचनापत्तिरिति वाच्यम्। इतरेतरयोगे साहित्यावस्थाया अवच्छेदकतया गुणत्वेन साहित्याश्रयस्य प्रधानत्वात् तस्य चानेकत्वात् समाहारे च पदार्थस्य गुणतया साहित्यस्य प्राधान्येन तदेकत्वादेकवचनम्। अत एव धर्मे धर्मिणि च तात्पर्यभेदाद्द्वन्द्वयोर्भेदः। घटौ घटा इत्यत्रापि साहित्यलक्षणा इतरघटसहितघटत्वेनान्वययोग्यतया तदुपस्थितेस्तं विनाऽनुपपत्तेः। अथ धवपदस्य खदिरेण सह स्वार्थसम्बन्धाभावे कथं लक्षणा, धवपदाद्युगपच्छक्यलक्ष्योपस्थितौ वृत्तिद्वयविरोधश्च। शक्यलक्ष्यसाधारणैकधर्माभावेन अजहत्स्वार्थलक्षणाया अप्यनुपपत्तेर्द्वित्वैकक्रियान्वयित्वादेश्च द्वित्वान्वयात् पूर्वमप्रतीतेः। मैवम्। साहि-

(१) पाणिनिसूत्रम् २।४।६२।

त्यस्य तुल्यद्वारत्वरूपत्वात् । तच्च धातूपनीतफलानुकूलसजातीय-विजातीयव्यापारप्रचयरूपम् । अयमेव लक्षणाबीजं सम्बन्धः । अजहत्स्वार्थलक्षणायां लक्षणस्यैव सम्बन्धत्वात् । यथा काकपदेन श्वादिभिः सह दध्युपघातकत्वलक्षणीयमेव सम्बन्धः शक्यलक्ष्य-साधारणमपीदमेव रूपं लक्षणायामन्यत्र लक्षणीयपदानुपयोगे ऽपि नात्र खदिरपदानर्थक्यम् । साहित्याश्रयद्वितीयविशेषज्ञापनार्थ-त्वात् अन्यथा धवद्वयबुद्ध्यापत्तिरित्युक्तम् । न च साहित्ये द्वन्द्वस्य शक्तिरेव, लक्षणयैवोपपत्तेः । अत्रोच्यते । द्वित्वान्वययोग्यानेक-स्मृत्यर्थं न लक्षणा, एकस्मृतिविषयपदद्वयात् स्वशक्त्यैव तदुप-पत्तेः । एकैकमात्रगोचरसंस्कारद्वयात् समूहालम्बनपदयोस्तद-र्थयोश्चैका स्मृतिरभ्युपगन्तव्या, अन्यथा वाक्यादन्वयबोधानुपपत्तिः । तथा च पदद्वयात् स्मारिते धवखदिरस्वरूपे विभक्त्या द्वित्वान्वयो बोध्यते । इन्द्रियसन्निकृष्टे तत्र प्रत्यक्षेणैव द्वित्वम् । न च तदु-भयरूपार्थे तुल्यद्वारत्वादिकं साहित्यं प्रतीयते । न च योग्यताव-च्छेदकरूपेणोपस्थित एवेतरपदेनान्वयो बोध्यते साहित्याश्रयत्वेन च तयोस्तथात्वं न स्वरूपेणेति वाच्यम् । योग्योपस्थितेरेवान्वयबोधाङ्ग-त्वात् लाघवात् । ननु पदार्थतावच्छेदकधर्मव्याप्यसङ्ख्याबोधकत्वं विभक्तीनां व्युत्पत्तेः । अन्यथा घटावानय पटश्चेत्यत्र घटत्वसमाना-धिकरणं द्वित्वं समभिव्याहृते पटे ऽपीति तमादायान्वयबोधः स्यात् । न । पदार्थतावच्छेदकधर्मसमानाधिकरण-स्वार्थबोधकत्वे एव विभक्तीनां व्युत्पत्तेः । न तु सामानाधिकरण्ये नियमोऽप्यन्त-र्भवति, गौरवात् योग्यतादिमत्प्रकृत्यनुगत स्वार्थान्वयबोधकत्वाच्च ।

विभक्तीनां न पटमादायान्वयबोधः पटस्य प्रकृतित्वात्। धव-खदिरावित्यत्र च समासस्यैव प्रातिपदिकत्वेन व्यवहितस्यापि धवपदार्थस्य विभक्त्यर्थान्वयात्। न चैकधर्मावच्छेदं विना स्वरूपद्वये ऽन्वयबोधाद्विशिष्टैकार्थाप्रतिपादकत्वेन धवं खदिरं चेत्यत्रैव वाक्यभेदापत्तिः। आनयनान्वितद्वित्वविशिष्टैकार्थप्रति-पादकत्वात्। नापि प्रत्येकं क्रियान्वयाद्वाक्यभेदः। लक्षणापक्षे ऽपि चैत्रमैत्रौ गच्छत इत्यादौ गमनादिक्रियाया व्यासज्यवृत्ति-त्वाभावे प्रत्येकमेव क्रियान्वयात्। न च सहितत्वेन पदा-र्थैकदेशे चैत्रे मैत्रे च धात्वननुगमान्नान्वय इति वाच्यम्। सहितो गच्छतीति धीप्रसङ्गात। तद्राजानाम् प्रत्येकं बहुष्ववर्तनात्परेषां लोपो भवति तेनैव तद्राजान्तेनैवेति वचनात् न त्वेकेना-न्वयात् परेषाम्। अत एवाङ्गानामपत्यानि राजानो वा अङ्गा इत्युदाहरणम् अङ्गानामपत्यं राजा वा आङ्ग इति प्रत्युदा-हरणं दर्शितवान् वृत्तिकारः। तस्मादनेकपदोपस्थिते ऽप्यनेकत्र द्वित्वान्वय इति नानेकोपस्थित्यर्थं साहित्यलक्षणा। घटौ घट इत्यत्र च द्वित्वबहुत्वान्वययोग्यानेकार्थोपस्थितिः शक्तित एव तत्तद्वृत्त्या घटपदात् सम्भवतीति न तदर्थं लक्षणा, यथा ग्रहं संमार्ष्टीत्यत्र ग्रहपदात् तत्तद्वृत्त्या स्मृतानेकग्रहे सम्मार्गान्वयः। समाहारे तु पाणिपादं पञ्चपूली इत्यादौ तावद्वस्त्वेकधर्माभि-धानं लक्षणयैवेति तदेकत्वादेकवचनम्। विरूपैकशेषे पितरावित्यत्र एकस्य पितृद्वयाभावादगत्या पितृपदे जनकलक्षणा। ब्राह्मणावानयेत्यत्र प्रमाणान्तराद्ब्राह्मणीपरत्वावगमे पुमान्

कारकस्यार्थरूपत्वान्न तस्याभिधेयमस्तीत्यत आह।

**कारकार्थः प्रधानक्रियेति।** [२५।६]

स्त्रियेति (१) विरूपैकशेषत्वाद्ब्राह्मणपदे स्त्रीपुंसलक्षणा। अनन्यगतित्वात्। पुल्लिङ्गं तु पदार्थैकदेशगतमनूद्यते। स्त्रीपरत्वाज्ञाने च ब्राह्मणपदेन तन्त्रवृत्त्या पुरुषद्वयमेवोच्यते न तु स्त्रीपुंसौ। विरूपैकशेषस्य लाक्षणिकत्वेन जघन्यत्वात्। शिवौ प्रणमेदित्यत्र नमस्यशिवान्तराभावाद्विरूपैकशेष इत्यगत्या शिवपदेन शिवस्य शिवा च लक्षणयोच्यते। भ्रातरौ पुत्रावित्यत्रापि मानान्तरात् स्त्रीपरत्वज्ञाने भ्रातृपुत्रौ स्वसृदुहितृभ्यामिति (२) विरूपैकशेषाद्भ्रातृपदेन भ्रातृस्वसारौ पुत्रपदेन पुत्रदुहितरौ लक्ष्येते। स्त्रीपरत्वाज्ञाने च तन्त्रवृत्त्या भ्रातृद्वयं पुत्रद्वयं चोच्यत इति तत्त्वचिन्तामणावस्मत्पितृचरणाः।

युगपदधिकरणवचनता च द्वन्द्वस्य प्राधान्येन समस्तपदार्थोपस्थापकत्वमेव। अत्र च लक्षणसमानवचनानामेव विग्रह इत्युद्देशविभागलक्षणानामेकवाक्यत्वसूचनायोक्तं वचनभेदविरोधेनैकवाक्यत्वाभावप्रसङ्गादिति साम्प्रदायिकाः। तथा च येन प्रयोजनेन लक्षणवचनं तेनैव प्रयोजनेन तथैवात्र विग्रहः कर्तव्य इति भाष्यार्थः॥

( इति विग्रहे वचनभेदप्रतिपादकभाष्यतात्पर्यव्याख्याव्याख्याव्याख्यानम्। )

---

ननु प्रधानक्रियेत्यत एव कारकान्तरव्यापारनिवृत्तौ यदुद्देशे-

(१) पाणिनि सू० १।२।६७।

(२) पाणिनि सू० १।२।६८।

अर्थशब्दः प्रधानक्रियावचनो न क्वचिद्दृष्ट इत्यत आह। यदुद्देशेनेति। [२५।७]

कारकाणामविवक्षेत्येतावतैव सुस्थे प्रधानक्रिया-ऽविवक्षा किमर्थमित्यत आह। कारकग्रहणेनेति। [२५।८]

ननु कारकाणामविवक्षा शेषलक्षणं तदा स्याद्यदि तत्र कारकत्वं सम्भवेत्, तदेव तु नास्तीत्यत आह। यद्यपीति। [२५।९]

अत्र चोदयति-शैषिक्यां षष्ठ्याम्। षष्ठी चान-

---

नेत्यधिकमित्यत आह। अर्थशब्द इति। अर्थशब्दस्य प्रयोजनवचनत्वेन प्राधान्यात्प्रधानक्रियोक्तेति परिहारार्थः॥

ननु कारकाणामविवक्षा कारकसत्त्ववत्कारकासत्त्वेऽप्युपपद्यते तत्किमर्थं कारकोपपादनं कृतमित्यत आह। नन्विति। कारकासत्त्वे तदेव शेषपदार्थः स्याल्लाघवादिति कृतमविवक्षयेति तदुपपादनार्थं कारकसत्त्वे तदविवक्षा शेष उक्त इत्यर्थः। न च कारकाणामुपयुक्तत्वेन तदन्यः सम्बन्ध एव शेषोऽस्त्विति वाच्यम्। तथात्वे कारकविवक्षया सम्बन्धमात्रविवक्षया वा कारकपदेभ्यः शैषिकषष्ठ्यभावापत्तेरविवक्षामात्रेण कारकान्यत्वानुपपत्तेरिति भावः। सम्बन्धमात्रस्येति टीकायां सम्बन्धो जन्योऽभिप्रेतः समवायस्याजन्यत्वान्न तत्र कारकापेक्षेति। अत्र विवक्षायामित्यर्थप्रतीत्यभावादाह। शैषिक्यामिति॥

र्थिका-निष्प्रयोजना। अव्यतिरेके तदनुपपत्तेः-षष्ठ्यर्थस्य सम्बन्धस्यानुपपत्तेः।

एकदेशित्वे बीजम् अनियमवादीति।

"तस्याऽस्वतन्त्रत्वात्प्रमाणादयो गम्यन्त" इति किं केन सङ्गतमत आह। भावस्येति। [२५।१३]

न प्रमाणादिमात्रमुच्यते तत्त्वशब्देन, अथ च नार्थान्तरं तत्त्वमिति परस्परव्याहतम्, अत एकदेशिनं किञ्चिदुद्दीपयति। अभेदे ऽपीतीति। [२५।१४] अनारोपितरूपेण स्वरूपतः प्रतीयन्तां प्रमाणादय इत्येतदर्थमनतिरिक्तार्थमपि तत्त्वग्रहणं कृतमित्यर्थः।

दृष्टान्तमसिद्धं मत्त्वा सोपपत्ति व्याचष्टे। द्वित्वैकत्वयोरिति। [२५।१८]

---

ननु "षष्ठी चानर्थिका"-निरभिधेयेति साध्ये "ऽव्यतिरेके तदनुपपत्त"रिति हेतुः साध्याविशिष्ट इत्यत आह। निष्प्रयोजनेति। प्रमेयत्वादावभेदे ऽपि सम्बन्धः प्रामाणिको ऽत्र तु न तथेति भावः। अत्र प्रमाणादीनां तत्त्वमित्यन्वये तत्त्वस्य नित्यसापेक्षत्वान्नासमर्थसमासः॥

अनारोपितेति। यद्यपि सर्वेषामेवारोपविषयत्वेनानारोपितत्वमप्रसिद्धं, तथाप्यनारोपः प्रमा तद्विषयस्तत्त्वमिति यो यद्वृत्तिः स तस्य तत्त्वमित्युक्तमिति भावः॥

व्यवहारगतिवस्तुगत्योः समानयोगक्षेमत्वं मन्यमानो ह्यभावमपह्नोतुं न शक्नोत्येव अभावव्यवहारगतेः सर्ववादिसिद्धत्वात्। वस्तुतस्तु निरपेक्षोपि व्यवहारोऽस्तीति मन्यते तन्मतमवशिष्यते इत्याशयवानाह। क्षणभङ्गेति। [२५।२३]

( इति शेषस्वरूप-प्रमाण-तत्त्वानां निरूपणमेकदेशिमतखण्डनं च। )

---

ननु क्षणभङ्गनिराकरणे ऽपि न भावान्यत्वमभावस्य सिद्ध्यतीत्यत आह। व्यवहारेति। अभावप्रतीतिर्न भावविषया अभावस्य सप्रतियोगिकत्वात्। घटो नेत्यनुभवात्। नभावस्यानुभवात्। भावस्तु निष्प्रतियोगिक इति नाभावबुद्धिर्भावविषया। न चाभावव्यवहारः सप्रतियोगिको नाभाव इति तस्यैव प्रतियोगिज्ञानापेक्षेति युक्तं, व्यवहारस्य व्यवहर्त्तव्यमात्रोपलम्भनिबन्धनत्वेन प्रतियोगिज्ञानानपेक्षत्वादिति। यो व्यवहारेण वस्तुसिद्धिमिच्छति स व्यवहारबलेनैवाभावमङ्गीकारयितुं शक्यते। यस्तु वस्त्वनपेक्षमपि व्यवहारं मन्यते तन्मतमग्रे निषेत्स्यत इत्यर्थः॥

( इति शेषप्रमाणादि-तत्त्वानां निरूपणमेकदेशिमतखण्डनं च। )

---

यथार्थज्ञानोत्पत्तिं प्रति स्वरूपलक्षणा शक्तिरारोपरहितत्वमेव, सहकारिलक्षणा दोषविरहीन्द्रियादि।

ननु दृष्टनिःश्रेयसदूषणे किं तात्पर्यं? न हि तदस्मान्न सिद्ध्यतीत्यत आह। एतदुक्तं भवतीति। [२६।७] अदृष्टमेव निःश्रेयसमभिप्रेतं शास्त्रफलत्वेनेति शेषः। अन्यथा आत्मादिप्रमेयविशेषप्रतिपादनं न कुर्यात् तत्त्वज्ञानमन्तरेणापि दृष्टनिःश्रेयससिद्धेरिति भावः। अप्रामाणिकं दर्शनाभावादिति। [२६।८] दर्शनफलैकोन्नेयं प्रमाणं कथं तदभावेऽप्यस्तीति भावः। आगमानुमा-

---

ननु पूर्वमारोपितरूपराहित्यं तत्त्वमुक्तमत्र तु स्वरूपशक्तिस्तत्त्वमुच्यते इति विरोध इत्यत आह। यथार्थेति।

ननु दृष्टमपि निःश्रेयसमेतच्छास्त्रसाध्यमिति तत्कुतो नाभिमतमित्यत आह। शास्त्रफलत्वेनेति। ननु तथापि दृष्टं निःश्रेयसमेतच्छास्त्रफलत्वेनाभिमतं किं न स्यादविरोधादित्यत आह। अन्यथेति। उत्तरसूत्रे कारणोच्छेदक्रमेण तदुत्पादनाददृष्टमेव निःश्रेयसमभिमतं, दृष्टं तु शास्त्रात् सम्भवदपि बलवदनिष्टसंभिन्नतया प्रेक्षावद्धेयमिति न शास्त्रफलत्वेनापेक्षितमिति भावः। ननु दर्शनमेव न मानं, येन तदभावादप्रामाणिकत्वं स्यादित्यत आह। दर्शनेति। ननु कारणाभावेन कार्याभावानुमानस्य केवलस्यैव मानत्वे सम्भवति कृतं तस्याऽऽगमादिसहकारित्वेनेत्यत आह। आगमेति।

नयोः सहकारिता पश्चाद्युपनायकत्वेन। तत्रात्मलक्षण-धर्मिसिद्धावागमोऽयमात्माऽपहतपाप्मा इत्यादि। अनु-मानं चेच्छासूत्रसमुत्थम्। जन्माभावरूपलिङ्गसिद्धौ त्वशरीरं वाव सन्तमित्याद्यागमः। अनुमानं तु प्रवृत्त्य-भावः प्रवृत्त्यभावे ऽपि—

नन्वात्मा मानान्तरसिद्धो न वा, आद्ये तत एव सिद्धः किमागमेन, अन्त्ये तु प्रत्यक्षेतरप्रमाणानां मानान्तरसिद्धमेव धर्मिणमुपजीव्य प्रवृत्तेः कथं धर्मिण्यागमः प्रमाणं अन्यथा आत्ममात्रस्य सामान्यतो-ऽनुपस्थितौ व्युत्पत्तिग्रहाभावादागमः प्रतिपादको न स्यात्। अत एवागमसहकारिताऽनुमानस्य संवादार्थमित्यपास्तम्। आत्मस्वरूपा-वधारणाऽनवधारणयोरुक्तदोषात्। मैवम्। योऽपहतपाप्मा-पापध्वंस-वानयमात्मेत्यागमस्यैव प्रसिद्धपदसामानाधिकरण्येनात्मपदव्युत्पत्ति-ग्राहकत्वात्। प्रमाणान्तरसिद्धेऽप्यात्मनि सङ्केतग्रहे आगमेनापि तदु-पस्थापने विरोधाभावाच्च। अशरीरमिति। वावसन्तमिति यङ्लुकि। तेन संसारितादशायां क्षणमात्रमशरीरत्वे ऽपि नान्यथासिद्धिः। अति-शयेन तत्र शरीराभावाभावात्। उत्पन्नतत्त्वज्ञानवतो मोक्षप्रकरणे श्रुतत्वाच्च प्रलयकालीनातिशयशरीराभावेनान्यथोपपत्तिः। यद्वा अशरीरं वावसन्तमित्यादौ त्वत्रातद्गुणसंविज्ञानो बहुव्रीहिः तेन—

"आत्मानं चेद्विजानीयादहमस्मीति पुरुषः।

किमिच्छन् कस्य कामाय शरीरमनुसंज्वरे"-

दिति श्रुतिर्विवक्षितेति भावः।

"यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते (१)"

इत्येवमादि। अनुमानं तु दोषाभावः। दोषाभावेऽपि "रसोप्यस्य परं दृष्ट्वा निवर्त्तते" (२) इत्येवमादि। अनुमानं तु मिथ्याज्ञानाभावः। अत्रापि "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः" इत्यादि। अनुमानं तु तत्त्वज्ञानसद्भावः। तत्त्वज्ञाने तु "आत्मा वा अरे द्रष्टव्य" इत्येवमादि। अनुमानं तूपायाभ्यासप्रकर्ष इत्येवमादि। उपलक्षणं त्वागमानुमानग्रहणं प्रत्यक्ष-

---

प्रवृत्त्यभाव इति। जन्मकारणस्य प्रवृत्तेरभावः तत्कार्यजन्माभावे लिङ्गमित्यर्थः। एवमग्रे ऽपि। कार्याभावे कारणाभावो लिङ्गम्। प्रवृत्त्यभावे ऽपीति। धर्माधर्मजनकप्रयत्नाभावे ऽपीत्यर्थः।

रसोऽप्यस्येति। रसो-रागः। न च मोहद्वेषतादवस्थ्यम्, रागाभावस्य तदुभयनिवृत्तिनियतत्वेन तयोरप्यभावादिति भावः। उपायेति। यद्यप्यभ्यासप्रकर्षमात्रं तत्त्वज्ञानव्यभिचारि, आत्मसाक्षात्कारव्याप्यस्य चाभ्यासप्रकर्षविशेषस्य न व्याप्तिर्गृहीता, तथापि ज्ञानोपायाभ्यासेन ज्ञाने प्रकर्षदर्शनात् तत्त्वज्ञाने ऽपि तथात्वमनुमीयत इति भावः। प्रत्यक्षमपीति। आत्मादि यावद्योग्यं तावत्

---

(१) भगवद्गीता अ. ३ श्लो. १७।

(२) भगवद्गीता अ. २ श्लो. ५९।

मपि द्रष्टव्यम्। एवं शरीरादिष्वप्यूह्यम्। अनुमान-मेवात्र प्रमाणमिति। [२६।१०] विप्रतिपन्नं प्रतिपिपादयि-षतामिति शेषः। उपनिषदामपि "तमेव विदित्वाऽतिमृत्युमेती"त्यादीनां प्रामाण्यात् सन्तानानुमानस्य च, पृथगुपदेशाच्च प्रमेयस्य प्रमाणादिभ्यः प्रथमसूत्रे एतद्विवरणाद्यवच्छेत्तुमुत्तरग्रन्थमेवावतारयति। यदि-चेति। [२६।१६] विहितत्वादाद्येन सूत्रेणेति। [२६।२०] श्रुत्यर्थाभ्यामिति शेषः।

परम्। एवमिति। प्रवृत्त्याद्यभावेन शरीराद्यभावोऽनुमातव्य इत्यर्थः। शेषदानं हेतुमाह। उपनिषदामिति। सन्तानानुमानस्य चेति। दुःखसन्ततिरत्यन्तमुच्छिद्यते सन्ततित्वादित्यस्येत्यर्थः॥

नन्वात्मादिद्वादशविधप्रमेयतत्त्वावगमस्य निःश्रेयसोपयोगित्वं पूर्वोक्तं यदि चेत्यनेन किमर्थं पुनरुच्यत इत्यत आह। एतद्विवरणा-दिति। पृथगुपदेशाच्चेत्यस्य विवरणादित्यर्थः। नन्वाद्यसूत्रं प्रयोजनाभिसम्बन्धपरम्, तस्य प्रमेयविधानपरत्वे वाक्यभेदापत्ति-रित्यत आह। श्रुत्यर्थाभ्यामिति। श्रुत्या—साक्षात्प्रयोजनाभि-सम्बन्धपरमर्थाच्चोद्देशपरमाद्यं सूत्रमित्यर्थः। न च तथापि श्रुत्य-र्थाभ्यामित्यसङ्गतं न हि श्रुत्यापि प्रमेयं विधीयत इति वाच्यम्। अर्थेऽप्यर्थे श्रुतेस्तात्पर्यात्। अन्ये त्वेवं व्याचक्षते—ननु तत्त्व-ज्ञानपदस्य सूत्रे शास्त्रपरत्वात् कथं तत्त्वज्ञप्तेर्निःश्रेयससाधनत्वं प्रत्येतव्यमित्यत आह। श्रुत्यर्थाभ्यामिति। तथा च श्रुत्या

तदियता प्रबन्धेन वार्त्तिककृता किं? कृत मित्यत आह । तदनेनेति । [२६।२२]

( इति तत्त्वस्येत्याद्यधिगमेत्यन्तभाष्यग्रन्थतात्पर्य-
व्याख्याव्याख्यानम् । )

---

उत्तरवार्त्तिकविषयीभूतभाष्यं तावद्व्याचष्टे । अथ किमिति । [२६।२३]

ननु द्वितीयसूत्रार्थो नात्रोदितस्तत्किं तत्रानूद्यत इत्यत आह । निःश्रेयसेति । *

---

शास्त्रस्य निःश्रेयसाधनत्वे प्रतीते ऽर्थात्तत्त्वज्ञप्तेरपि निःश्रेयससाधनत्वं प्रतीयत इति ॥

( इति तत्त्वस्येत्याद्यधिगम इत्यन्तभाष्यतात्पर्य-
व्याख्याव्याख्याव्याख्यानम् ।

---

ननु वार्त्तिकव्याख्यानं प्रतिज्ञाय टीकाकृता किमर्थं भाष्यं व्याख्यातमित्यत आह । उत्तरेति । वार्त्तिकविषयभूतभाष्यम-

---

* "निःश्रेयसहेतुभावाभिधानस्य-अनु-पश्चात् उद्यते अनूद्यते । तत्त्वज्ञानोत्पादे हि साक्षात्तद्विषयमिथ्याज्ञानादिनिवृत्तिक्रमेणापवर्गोत्पाद इति द्वितीयसूत्रेणानूद्यते । तदेतद्भाष्यं तत्त्वज्ञानादित्याद्यधिगच्छतीत्यन्तमनूद्य व्याचष्टे, हेयमिति । मिथ्याज्ञानमात्मादिषु प्रमेयेषु अविद्या । तन्मूलं तृष्णा । उपलक्षणं चैतत् द्वेषोऽपि द्रष्टव्यः । तन्मूलौ च धर्माधर्मौ तदेतद्धेयम्, ज्ञानं-तत्त्वज्ञानं हीयते ह्यनेन तत्सर्वं तस्य प्रमाणस्योपायः शास्त्रमधिगन्तव्यो मोक्षः । एवमवयवान्विभज्य तात्पर्यमाह – एता-

अत्र च ज्ञेयेत्याद्यनुवादवार्त्तिकं नास्त्येवेत्यनाशङ्क-नीयं, टीकाकृता सिद्धवदुत्थापितत्वात् क्वचिल्लिप्यभावस्य लेखकदोषेणाप्युपपत्तेः। अन्यथा भाष्यतात्पर्यार्थानुवादकत्वात्। व्याचष्ट इति तु यद्व्याख्यातं तदभिप्रायं

व्याख्याय तद्विषयवार्त्तिकं व्याख्यातुं न शक्यत इति वार्त्तिक-व्याख्यानार्थमेव भाष्यं व्याख्यातमित्यर्थः॥

अत्र भाष्यानुवादतायामयथाभाष्यता न युज्यत इति वार्त्तिक-मेवैतन्नास्तीत्याशङ्क्याह। अत्र चेति। ननु वार्त्तिककृता सकल-मनूद्यैकदेश एव व्याख्यात इति भाष्यमनूद्य व्याचष्ट इत्ययुक्त-मित्यत आह। व्याचष्ट इति त्विति॥

नीति। एतानि चत्वार्यर्थपदानि-पुरुषार्थस्थानानि न केवलं ज्ञेयाधिगन्त्रभेदेन द्वादशविधं प्रमेयं दर्शयतः तद्विषयतत्त्वज्ञानाय च सोपकरणन्यायाभिधानप्रमाण-व्युत्पादकं शास्त्रं प्रणयतः सूत्रकारस्य सम्मतमपि तु सर्वेषामेवाध्यात्मविदामाचार्या-णामिति भाष्यतात्पर्यमित्यर्थः। तत्र संशयादीनां पृथग्वचनमनर्थकमित्यादि-चोद्यभाष्यं व्याचष्टे। संशयाद्यप्रकरणमिति। परिहारभाष्यं व्याचष्टे। न विद्येति। चोद्यं विवृणोति। संशयादय इति। परिहारं विवृणोति। न विद्येति। प्रस्थानं व्यापारः। तेषां पृथग्वचनमित्यादिभाष्यं व्याचष्टे। तस्याः संशयादीति। न च वाच्यमस्तु विद्या त्रयमेव, कृतमान्वीक्षिक्या विद्ययेति। एतस्या एव समस्त-विद्यावदातीकरणहेतुत्वात्। यथा वक्ष्यति "प्रदीपः सर्वविद्याना"मिति। सचायं किं स्विदितिवस्तुविमर्शमात्रम् अनवधारणज्ञानं संशय इति भाष्यं तद्व्याचष्टे तत्र तेषु संशयादिषु, संशयस्तावदिति। ज्ञानमवधारणं प्रत्ययश्चेति पर्याय इति मन्वानश्चोदयति, अनवधारणात्मक इति। न ज्ञानमात्र" -एतावान् ग्रन्थः काश्यां मुद्रितायां तात्पर्यटीकायां २६ पृष्ठे १५ पङ्क्तिमारभ्य त्रुटितो वर्तते ऽतोऽस्माभिर-ध्येतृजनानां सौकर्यायात्र पृथ मुद्रित इति सुधीभिर्ज्ञेयम्।

तेन तच्चैतदुत्तरसूत्रेणानूद्यत इत्यस्यानुवादानन्तरम-
व्याख्याने ऽपि न दोषः। एवं चार्थं द्वितीयसूत्र
इत्यादिना पूर्वमेव व्याख्यातत्वात् नेहेदं व्याख्यात-
मित्यर्थः।

ननु द्वेषः किमहेय एव न वा प्रवृत्तिहेतुरित्यत
आह। उपलक्षणमिति।

ननु हानपदमात्यन्तिकपदसमभिव्याहारादपवर्गे
वर्त्तते तत्कथं तत्त्वज्ञानमुच्यत इत्यत आह। हीयते
हीति। करणव्युत्पत्तिमाश्रित्यानेन तत्त्वज्ञानं विव-
क्षितं, भावव्युत्पत्त्या त्वात्यन्तिकपदसमभिव्याहाराद-
पवर्ग इत्यर्थः।

तत्त्वज्ञानपदस्य व्युत्पत्तिसन्देहमपनयन्नेवाह। तस्य-
प्रमाणस्येति। एतेनाऽऽदिवाक्यविरोधः परिहृतः।

वार्त्तिककृतैव समस्तमनूद्यैकदेशः कुतो व्याख्यायत इति
समाधत्ते। एवं चार्थमिति॥

ननु हानपदे भावव्युत्पत्तिरेव कुतो नोक्तेत्यत आह। ननु
हानेति॥

ननु तच्छब्देन तत्त्वज्ञानपरामर्शे विरोधः, तत्त्वज्ञानपदेनाऽऽदि-
वाक्येन शास्त्रस्याभिहितत्वात्, न हि शास्त्रमेव तदुपाय इत्यत
आह। तत्त्वज्ञानपदस्येति। तथा च योग्यतयाऽत्र तत्त्वज्ञानपदेन

अर्थपदानीतिभाष्यगतस्यार्थपदस्य त्वन्यथार्थो भविष्यतीति यदुक्तं तदाह। पुरुषार्थस्थानानीति। तात्पर्यमित्यर्थः वार्त्तिकस्येति शेषः॥

( इति तत्त्वेत्याद्यधिगच्छतीत्यन्तभाष्य-
तात्पर्यव्याख्यानम्। )

---

प्रस्थानं-प्रकार-इत्यम्भावस्तथा चेत्थम्भूतत्वादान्वी-

---

प्रमाणमुच्यत इत्येतावता शास्त्रमेव तत्त्वज्ञानमुच्यत इत्यर्थो निराकृत इत्यर्थः। एतेनेति। तत्त्वज्ञानपदस्य प्रमाणपरत्वव्याख्यानेन तत्त्वज्ञप्तिपरत्वे तत्त्वज्ञानपदस्यादिवाक्ये ज्ञानपदेन यत्प्रमाणमुक्तं तद्विरोधः स्यादित्यपि निरस्तमित्यर्थः॥

अर्थपदानीत्यस्य पूर्वव्याख्यानादन्यथा व्याख्याने हेतुमाह। अर्थपदानीति। यदुक्तमिति। उक्तं टीकाकृता आदिवाक्ये। इत्यर्थो वार्त्तिकस्येति तात्पर्यं भाष्यस्येति भावः॥

( इति तत्त्वेत्याद्यधिगच्छतीत्यन्तभाष्यतात्पर्य-
व्याख्याव्याख्याव्याख्यानम्। )

---

प्रकारार्थत्वमपहाय व्यापारार्थत्वव्याख्याने हेतुमाह। प्रस्थान-

चिक्या इति यद्यप्यभिमतमेव, तथापि निरुपपत्तिक इत्यभ्भावः स्यादित्यत आह । प्रस्थानं-व्यापारः ।

तदनेन भाष्यगतप्रस्थानपदस्य प्रकृत्यर्थोऽभिहितः प्रत्ययार्थस्तु "संशयादिभिः पदार्थैः पृथक् प्रस्थाप्यते" इति वदता भाष्यकारेणैव दर्शितः ॥

तदेतदुक्तं भवति न्यायव्युत्पादने व्यापारवत्तया हि इयमान्वीक्षिकी विद्यान्तराङ्गियते । स च संशया-द्यङ्गोपाङ्गेनैव व्युत्पादितो भवति, ततोऽस्याः संशयादयो विषयभूताः तानन्तरेण निर्विषयतया विद्यैव न स्यात् विषयान्तरवत्तया विद्यान्तरमेव वा स्यादिति ।

अत्रैव शङ्कते । न च वाच्यमिति । न ह्यन्या विद्याः स्वं स्वमर्थं व्युत्पादयन्त्योऽपि कथमेतदित्यश्रद्धा-

---

मिति । निरुपपत्तिक इति । इत्यभूतत्व एव हेतुर्नोक्तः स्यादिति न्यायाङ्गसंशयादिव्युत्पादनरूपव्यापारभेदेन तदुपपत्तिकत्वेत्यर्थः ॥

तदनेनेति । व्यापारो-व्युत्पादनम् । तस्य धात्वर्थता, तद्विष-यत्वं प्रत्ययार्थ इत्यर्थः ॥

अत्रैवेति । निर्विषयतया विद्यैव न स्यात् विषयान्तरवत्तया विद्यान्तरमेव वा स्यादित्यनिष्टापत्तिरित्यर्थः । ननु विद्यान्तराणां स्वार्थप्रतिपादने नैतदपेक्षा तत्किमनया तासामवदातीकरणमित्यत

मलमपनेतुमीशते विनैवमान्वीक्षिकीमित्याशयवान् परिहरति। एतस्या एवेति।

( संशयादीनां पृथगुपदेशसाधकभाष्य-
तात्पर्यव्याख्यानम्। )

---

वार्त्तिकान्तरविषयं भाष्यं दर्शयति। "स चाय"-मित्यादिभाष्यमिति। निर्दलं देश्यं दीपयति। ज्ञान-मिति।

"उपलब्धो ऽनिर्णीतश्चेति" व्याघातोऽनुपपन्न एव, उपलब्धेर्निर्णयपर्यायत्वस्यानन्तरमेव निराकृतत्वात्।

---

आह। न ह्यन्या इति। अन्यस्याप्यर्थस्याश्रद्धामलक्षालनं शास्त्र-व्यापार एवावदातीकरणमित्यर्थः॥

( संशयादीनां पृथगुपदेशसाधकभाष्यतात्पर्य-
व्याख्याव्याख्यानम्। )

---

वार्त्तिकान्तरेति। "अनवधारणात्मकः प्रत्ययश्च"त्यग्रिमाक्षेप-वार्त्तिकविषयमित्यर्थः॥

यथाश्रुतस्यागमकत्व एवाभिप्रायान्तरवर्णनं युज्यते इति तदाह। उपलब्ध इति। उपलब्धेरिति। यद्युपलब्धिर्निर्णय एव स्यात् तदोपलब्धत्वानिर्णीतत्वयोर्व्याघातः स्यात् न चैवं, किं

नापि प्रमाणप्रवृत्तिविषय उपलब्धो भवन्निर्णय एव भवेदित्यत आचेमुरभिप्रायान्तरं दर्शयति । पक्षरूप इति । [२७।१] *यथा प्रत्यक्षमागमो वा ऽज्ञाते ऽप्यवतरति तथा ऽसन्दिग्धे ऽपि, अनुमानं तु यथा नाज्ञाते तथा ऽसन्दिग्धे ऽपि,* तस्मादस्याप्यन्यैव रीतिरित्यर्थः । समानविषयत्वमेकविषयत्वम् । सामानाधिकरण्यं न समर्थयस इति न तादात्म्यमिति भावः ।

रूपलब्धिज्ञानमात्रं तच्च संशयसाधारणमित्यर्थः । नापीति । यत्र पर्वतादौ न्यायः प्रवर्त्तते तस्योपलब्धत्वं सन्दिग्धत्वेनापि भविष्यतीति न निर्णीतत्वमेव तस्य भवतीत्यर्थः । यथेति । प्रत्यक्षे विषयेन्द्रियसन्निकर्षः कारणं न तु विशेष्यज्ञानं, शाब्दे ऽपि ज्ञाने न विशेष्यज्ञानं कारणं, किन्तु विशेषणविशेष्ययोर्वैशिष्ट्यावगाहिज्ञानमेकदैवोत्पद्यत इत्यज्ञाते ऽपि धर्मिणि तयोः प्रवृत्तिः । एवं यत्रापि धर्म्मिणि न सन्देहः किन्तु निश्चयः तत्रापि तयोर्यथा प्रवृत्तिर्न तथाऽनुमानस्य धर्म्मिणो ज्ञातत्वे सन्दिग्धत्वे च हेतोराश्रयासिद्धेः सन्दिग्धाश्रयासिद्धेश्चेत्यर्थः । तस्मादिति । अनुमानस्य मानान्तरविलक्षणैव सामग्रीत्यर्थः । समानशब्दस्य सदृशार्थत्वेनोपलब्धानिर्णीतयोर्नाभेदः सिद्ध्यतीत्यन्यथा व्याचष्टे । एकविषयत्वमिति । ननु तादात्म्यं सामानाधिकरण्यं यदुक्तं तन्न न यथोक्तं समाधानमित्यत आह । समानेति ॥

**परस्परं समानेनाधिकरणेन सम्बन्धमात्रं सामानाधिकरण्यं न तु तादात्म्यमित्यभिप्रेत्य परीहारं विवृणोति। सामान्यविशेषयोरिति।** [२७।१४]

---

ननु संशयः कथं न्यायाङ्गम्?, न तावन्न्यायकारणतया, तस्य लिङ्गपरामर्शात्मकस्य संशयं विनापि सत्त्वात्। कारणत्वासिद्धौ फलवैजात्यकल्पने मानाभावात्। अन्योन्याश्रयाद्वा। नापि सहकारित्वेन। तद्धि न साक्षात्, लिङ्गपरामर्शादिना तन्नाशात्। न च लिङ्गपरामर्शानन्तरं संशयः; तस्यानुमितिचरमकारणत्वात्। न च लिङ्गपरामर्श एव साध्यांशे संशयात्मा, तस्यैव विशेषदर्शनत्वेन संशयाभावात्। शाब्दलिङ्गपरामर्शे संशयकारणाभावाच्च। संशयस्य कारणत्वासिद्धौ तत्कल्पने मानाभावात्। प्रमाणसंप्लवे तदभावाच्च। नापि परम्परया सहकारित्वमत एव। नाप्याश्रयावच्छेदकत्वेन, पर्वतत्वादेरेव तथात्वात्। अन्यथा पक्षतावच्छेदकसामानाधिकरण्यभाननैयत्ये पर्वतत्वादेरिव सन्दिग्धत्वस्याप्यनुमितौ भानापत्तेः। अथ व्याप्तपक्षधर्मत्वं पक्षत्वं च सन्दिग्धसाध्यकत्वमतः संशयोऽवश्यं कारणं वाच्यमिति चेत्? न। श्रोतव्यो मन्तव्य इति श्रुतेः। श्रुते ऽप्यात्मनि मननबोधनात् श्रुतिप्रामाण्यसंशयात्तत्राऽपि संशय इति चेत्। न। तावता श्रुतिप्रामाण्यमात्रस्य साधनौचित्यात्। न हि घटज्ञानप्रामाण्यसंशयात् तत्संशये घटज्ञानोपायान्तरमाश्रीयते। किं नाम? प्रामाण्यनिश्चयादेव प्रमाता कृतकृत्यः। अनुमानान्तरसंप्लवे वा का गतिः?।

"सन्दिग्धे प्रवर्त्तते" इति अस्य योग्यतापरतां दर्शयति। असन्दिग्ध इति। [२७।१६] संशयानर्हस्य प्रकारद्वयेन सर्वथाऽज्ञातो विशेषतो वा निर्णीतस्तद्विपरीतस्तु सन्दिग्धः संशयार्हस्तत्र न्यायः प्रवर्त्तते इति तात्पर्यम्।

---

श्रुते ऽप्यात्मनि आहार्यः संशय इति चेत् न द्वित्वसाधनोच्छेदापत्तेः। तस्य निर्णयानिवर्त्यत्वाच्च। निर्णयनिवर्तनीयस्यैव तस्याङ्गत्वात्। किं च केवलान्वयिनि साध्याभावाप्रसिद्ध्या कथं संशयः?। नापि फलावच्छेदकतया तदुपयोगः, अनुमितौ सन्दिग्धत्वस्यापि भानापत्तेः। मानाभावाच्च। नापि सन्दिग्धसाध्यत्वं यत्र पक्षविशेषणं तत्र तदुपयोगः, पक्षविशेषणान्तरसाम्यात्। नापि विप्रतिपन्नं प्रति न्यायाभिधानाद्विप्रतिपत्तिजन्मा संशयोऽङ्गम्, वादिप्रतिवादिमध्यस्थानां त्रयाणामपि निश्चितत्वात् तद्विशेषणासिद्धेः। अन्यथा तेषां तत्त्वायोगादित्यत आह। योग्यतेति। संशयेन स्वयोग्यतोपलक्षणात् साधकबाधकप्रमाणाभावो न्यायाङ्गमित्यर्थः॥

नन्वेवं संशयस्य न्यायाङ्गतया विरोधः। अथ योग्यतामात्रं न तदङ्गं किं तु संशययोग्यता तथा च विशिष्टकारणताग्राहकमानेन विशेषणस्य संशयस्यापि हेतुत्वं विषयीकृतमिति चेत् न। मिलिताभावस्य प्रत्येकसत्त्वे ऽपि सत्त्वात्। प्रत्येकं च न योग्यता ऽननुगमात् केवलान्वयिनि बाधकाप्रसिद्धेः तदभावाप्रसिद्धेश्च। न च सन्दिग्धे नान्यो वाच्य इति यत्र समयबन्धस्तत्र संशयोऽङ्ग-

अत एव व्यतिरेकि प्रधानामुपलक्षणतयैकां (१) विधामुदाहरति । नहीति । [२७।१६]

( संशयस्य व्याघातनिवृत्तिपूर्वकं न्यायाङ्गत्वव्युत्पादनम् । )

---

किं पुनः प्रयोजनमिति प्रश्ने "येन प्रयुक्तः प्रव-

---

मिति वाच्यम् । उपलब्धत्वानिर्णीतत्वयोरपि न्यायाङ्गत्व-प्रसङ्गात् । अथैवं सिद्धसाधनं न दोषः स्यात् । न चेष्टापत्तिः । लिङ्गोपहितलैङ्गिकभाने ऽनुमित्यानन्त्यापत्तेः । तन्न । पक्षता-विघटकत्वेन तस्य दोषत्वात् । तस्य च सिषाधयिषाविरहेणाप्युप-पत्तेः । अत एवासिद्धावुपजीव्यत्वे ऽपि तत्र पृथक् दोषः स्वतो-ऽदूषकत्वात् । न च प्रतिपाद्यगतः संशयोऽङ्गम् । अज्ञे प्रतिपाद्ये तदभावात् । योग्यतायाश्च निरस्तत्वात् ।

अत्राहुः । संशयस्यानुमितिमात्राहेतुत्वे ऽपि जिज्ञासितार्थानु-मितौ जिज्ञासाद्वारानुमितिहेतुत्वम् । जिज्ञासायास्तत्साधनत्वात् । एकवक्तृकविचाराङ्गमित्यन्ये । शङ्कग्रस्तकतानिवृत्तये न्यायोपासने-ऽङ्गमित्यपरे ।

( संशयस्य व्याघातनिवृत्तिपूर्वकं न्यायाङ्गत्वव्युत्पादनम् । )

---

अनवगतप्रयोजनपदार्थस्य प्रयुक्तिजनकत्वमप्यज्ञातमेवेति तेनैव तल्लक्षणमयुक्तमित्यभिप्रेत्याह । किं पुनरिति ॥

(१) प्रधानामुपलक्षणतयैकाम् इति पु० पा० ।

त्तेत" इत्युक्तं वैयात्यादित्यत आह। स्फुटतरमेवैत-दिति। [२७।२६]

ननु "वयं त्विति" स्वाभिमतप्रदर्शनमेकदेशिमते ऽपरितोषं सूचयितुं, न चापरितोषबीजमुपलभामह इत्यतस्तद्बीजं दर्शयति। तत्रेति। [२७।२०] सर्वेषामेव काम्यत्वाद्धर्मादीनामिति। तथा च धर्मादिविषयस्त-त्साधनविषयो वा कामस्तत्रापि प्रवर्तक इत्यर्थः। न च तद्विषयत्वेनापि धर्मादीनामुपादानं, स्रक्चन्दना-दीनामप्युपादानप्रसङ्गादिति। सरकः—पानम्।

ननु तथापि नैतेषां प्रयोजनत्वच्यतिरित्यत आह। धर्ममोक्षयोरिति। [२७।२१] उपलक्षणं चैतत्। कामार्थ-

---

ननु काम इच्छेति विकल्पात् कथं धर्मादीनामनुपादानं तेषा-मनिच्छारूपत्वादित्यत आह। तथा चेति। प्रवृत्तिकारणेच्छा-विषयस्यैव पुरुषार्थत्वाद्धर्मादीनां चेच्छाविषयत्वेन तत एव तेषा-मपि लाभाद्धर्मादीनामुपादानं व्यर्थमित्यर्थः। तद्विषयत्वे ऽपीति। कामविषयत्वे ऽपीत्यर्थः। स्रक्चन्दनादीनामिति। काम्यत इति काम इति व्युत्पत्त्या कामपदेन यदि कामविषयस्याविशिष्योपादानं तदा स्रगादीनामप्युपादानप्रसङ्ग इत्यर्थः। न च गोवृष-न्यायः सूचनीयप्रयोजनविशेषाभावे तदभावादिति भावः। पानं—सुरापानम्॥

योरपि विरक्तान् प्रत्यप्रयोजनकत्वमिति द्रष्टव्यम्। तेनैतदुक्तं भवति। 'न हि धर्मादिषु धर्मत्वादिकमेव प्रवृत्तिं प्रति प्रयोजकं, किं नाम? इष्यमाणत्वम्। अन्यथाऽविशेषेण सर्वस्य सर्वत्र प्रवृत्तिप्रसङ्गादिति।

---

ननु नास्तिकानामपि जन्मान्तरे धर्मादौ कामनासत्त्वाद्विरक्तानामपि कदाचिद्रागित्वादेतदयुक्तम्। न हि यः पुरुषार्थः स सर्वास्ववस्थासु प्रवर्त्तयति सुषुप्तावस्थं प्रत्यप्रवर्त्तकत्वादित्यत आह। एतदुक्तमिति। अन्यथेति। धर्मत्वादिरूपस्य नास्तिकत्वदशायामपि प्रतिसन्धानात् तत्रापि प्रवृत्तिः स्यादित्यर्थः॥

नन्वत्र वार्त्तिककृता सुखदुःखाप्तिहान्योरेव प्रयोजनत्वमुक्तं तदयुक्तं तत्साधनावाप्तिहान्योरपि काम्यमानतया प्रयोजनत्वात्। न च गौणं प्रयोजनं तत् मुख्यं च प्रयोजनमत्र विवक्षितमिति वाच्यम्। मुख्यत्वानिरुक्तेः। तथाहि न तावत् साधनत्वागोचरेच्छाविषयत्वं तत्। दुःखसाधनाभावस्यापि मुख्यत्वात्। न हि तेन दुःखाभावो जन्यते प्रागभावादेरसाध्यत्वात् तद्ध्वंसस्य च प्रतियोगिनमनुत्पाद्योत्पादयितुमशक्यतया दुःखोत्पत्तेरावश्यकत्वापत्तेः। अत एवेच्छाजन्येच्छाविषयत्वं मुख्यत्वमिति निरस्तं दुःखसाधनाभावस्यापि दुःखाभावेच्छाजन्येच्छाविषयत्वात् दुःखाभावस्य साध्यत्वाभावादित्युक्तम्। सुखसाक्षात्कारस्यापीच्छाजन्येच्छाविषयत्वेन मुख्यत्वप्रसङ्गाच्च। किं चैवं सुखमप्यमुख्यं प्रयोजनं स्यात् तत्साक्षात्कारेच्छाजन्येच्छाविषयत्वात्। अहं सुखी स्यामित्यत्रात्मसुखत्वयो-

रपि ताहशेच्छाविषयत्वेन मुख्यप्रयोजनतापत्तेश्च । दुःखाभावगोचरेच्छाया दुःखविषयत्वनैयत्येन दुःखस्यापि ताहशेच्छाविषयतया मुख्यप्रयोजनत्वप्रसङ्गश्च ।

अत्राहुः—साध्यतयेच्छाविषयत्वं प्रयोजनत्वम्, आत्मसुखत्वयोर्दुःखस्य च न साध्यतयेच्छाविषयत्वं, किं त्वाश्रयत्वावच्छेदकत्वप्रतियोगित्वरूपेण, सुखदुःखाभावसाक्षात्कारस्य च साध्यत्वे ऽपि नेच्छाविषयत्वं सुखी निर्दुःखः स्यामिति ह्रीच्छा । न तु सुखं दुःखाभावं जानीयामिति । सुखत्वस्य साक्षात्कारविषयत्वव्याप्यतया सुखोत्पत्तौ तत्साक्षात्कारस्यावर्जनीयत्वेन तत्रापीच्छाया अभावात् । एवं दुःखत्वस्यापि साक्षात्कारविषयत्वनियतत्वेन तदुपलब्ध्या तदभावसाक्षात्कारस्यावश्यकत्वेन तत्रापीच्छा नास्ति तत्र साधनत्वाविषयज्ञानजन्येच्छाविषयत्वं मुख्यत्वं दुःखसाधनाभावेच्छापि दुःखाभावसाधनताज्ञानादेव, प्रागभावस्यापि प्रतियोगिजनकनाशमुखेन साध्यताया वक्ष्यमाणत्वात् । अन्यथा कार्याभावार्थिनः कारणाभावार्थं प्रवृत्त्यभावापत्तेः । न च दुःखसाधनध्वंसस्य स्वत एव पुरुषार्थत्वात् तत एव तत्र प्रवृत्तिरिति वाच्यम् । दुःखसाधनत्वमप्रतिसन्धाय तत्साधनाभावे इच्छाया अभावेन मुख्यप्रयोजनत्वाभावात् । साधनत्वविषयकज्ञानजन्येच्छाविषयत्वं तु गौणप्रयोजनत्वम् ।

केचित्तु न हि सुखं दुःखमित्येवेच्छाद्वेषौ किं त्वात्मभुज्यमानतयेति विशिष्टमेव मुख्यं प्रयोजनम् ।

अन्ये त्विष्यमाणत्वमेव पुरुषार्थत्वं तच्च सुखदुःखहानान्यतरनिरूपणाधीनमेव । तयोर्निरूपणप्रयोजकत्वं तु सुखे साक्षात्

ननु यथाश्रुते को दोषो येन "विषयेण विषयिणमुपलक्षयतीति" व्याख्येयत आह। असत्योरिति। [२७।२५]

सत्योर्वेति सप्तमी। उत्तरवार्त्तिकं ग्रहीतुमेतत् यथाश्रुतं दूषयति। तथापीति। [२७।२६]

इह फलज्ञानमन्यत्र प्रवर्तयत् तत्साधन एव प्रवर्तयतीति अतो नातिप्रसङ्ग इत्येव यद्यपि शङ्कितु-

---

तत्साधने परम्परया। एवं दुःखज्ञाने साक्षात् तत्साधने परम्परयेति। लक्षणाबीजमनुपपत्तिमाह। नन्विति॥

ननु सत्योर्वा सुखदुःखावाप्तिहान्योरनर्थकत्वादित्यन्वये प्रवृत्तेरित्यनन्वितमित्यत आह। सप्तमीति। सुखाप्तौ दुःखहानौ च सत्यामित्यर्थः। यद्यपि सत्योरसत्योर्वा सुखदुःखावाप्तिहान्योरकारणत्वमिति विकल्पेन षष्ठ्यैवान्वयः सम्भवति तथाप्यावृत्तिदोषभिया सम्भवमात्रेण वा सप्तम्युक्ता। ननु सुखदुःखाप्तिहानिज्ञानयोः प्रवर्त्तकत्वमिति वार्त्तिकं न युक्तं, प्रवृत्तिकारणेष्टसाधनताज्ञाने इष्टस्याविषयत्वादित्यत आह। उत्तरेति। सुखदुःखाप्तिहानिज्ञानमेव प्रवर्तकमिति यथाश्रुतवार्त्तिकादिष्टसाधनताज्ञानं प्रवर्तकमिति न लभ्यत इति तद्दूषितमित्यर्थः। तथापीति टीकायां ज्ञानलक्षणायामपीत्यर्थः॥

ननु फलज्ञानादन्यत्र प्रवृत्तावतिप्रसङ्गे तत्साधनत्वज्ञानात्

सुचितं, तथापि तत्साधनत्वेनाऽज्ञाने प्रवृत्तिरेव नास्तीत्यतस्तज्ज्ञानमन्तर्भाव्याऽऽशङ्कते। तत्साधनत्व-ज्ञानादिति।[२७।२८]सामानाधिकरण्येन-एकविषयतया। सम्प्रतिपत्तेरविरोधतः कार्यकारणभावसिद्धेरित्यर्थः।

एवं तर्हि "सुखदुःखाप्तिहानिभ्या"मिति वार्त्तिकम-सङ्गतमेव किमित्यत आह। एतदुक्तं भवतीति। [२८।५] प्रवृत्तिविषयतयेष्यमाणत्वमुपायता, स्वरूपेणेष्यमाणत्व-मुद्देश्यता। उभयोरपि ज्ञानं प्रयोजयतीति उभयमपि प्रयोजनम्।

---

प्रवृत्त्या न समाधानं यथा च समाधानं तथा न शङ्कितमित्यत आह। इहेति। तथापीति। यदि फलज्ञानं तत्साधन एव प्रवर्तयेत् तर्हि प्रमादसाधने प्रवृत्तिर्न स्यादिति तत्साधनत्वज्ञानादेव प्रवृत्ति-रित्यर्थः। ननु सामानाधिकरण्यमेकाधिकरणत्वं भिन्नविषयत्वे ऽपि सम्भवतीत्यत आह। एकविषयतयेति। सामानाधि-करण्ये हेतुर्नोक्त इत्यत आह। अविरोधत इति। लाघवा-दुपस्थितत्वाच्च सर्वैरेवाद्यप्रवृत्तौ ज्ञानस्य स्वविषय एव प्रवर्तक-त्वावधारणादित्यर्थः। तथा च फलसाधकताज्ञानं विना फलज्ञानान्न फलसाधने प्रवृत्तिः। यद्यपि प्रवृत्तिविषयत्वं प्रवृत्तिजनकेच्छा-जनकज्ञानविषयत्वरूपं फले ऽप्यस्ति तथापि प्रवृत्तिजन्यव्यापारा-श्रयत्वरूपं तत् सिद्धत्वात् साधन एवेति भावः।

इयांस्तु विशेषो यदुपायताज्ञानं साक्षात् प्रवर्त्तयति। एतदेव च तस्य साक्षात् प्रवर्त्तकत्वं यत् साक्षात् प्रयत्नजननसमर्थामिच्छां प्रसूते सैवाद्या प्रवृत्तिरित्युच्यते। उद्देश्यज्ञानं तु तद्विषयामिच्छां जनयत् तथाभूततत्साधनज्ञानजननद्वारेण इत्यर्थः।

( प्रयोजननिरूपणम्। )

---

न्यायपरीक्षाशब्दयोरेकार्थत्वमपश्यत आक्षेप इत्याह। न्यायेति। [२८।१३]

ननु परीक्षाशब्दस्य विचारार्थत्वे प्रयोजनापेक्षित्वं कदाचिद्युज्यते। स चेन्न्यायार्थस्तस्य च व्युत्पत्तिबलेन

---

उत्तरग्रन्थोपयोगार्थमाह। एवं तर्हीति। उभयोरिति। उभयोः फलसाधनयोरपि ज्ञानं प्रयोजयतीति प्रवृत्तिहेतुरित्यर्थः।

इयांस्त्विति। साधनस्यैव साक्षात्प्रयत्नविषयत्वं सिद्धत्वेन प्रयत्नजन्यव्यापाराश्रयत्वादित्यर्थः। उद्देश्यत्वेति। इच्छाजन्यप्रयत्नजनकेच्छाविषयत्वमुद्देश्यत्वमित्यर्थः।

प्रयोजननिरूपणम्।

---

ननु न्यायपरीक्षयोरेकत्वादाक्षेपो न युक्त इत्यत आह। न्यायेति। ननु व्युत्पत्त्या न्यायशब्दस्य प्रत्यक्षाद्यर्थत्वे प्रकृते किं दूषणमित्यत आह। नन्विति। स चेदिति। स परीक्षाशब्दो न्यायार्थो

प्रमाणमात्रमर्थः । तस्य च न प्रयोजनापेक्षेति सर्वं समाकुलमित्याक्षेपावतारटीकार्थः ।

नन्वेतावतापि चोद्यं तदवस्थमेवेत्यतः समाधानं विभजते । प्रत्यक्षादीति । [२८।१८]

ननु अवयवैरर्थस्य परीक्षणमधिगतिर्यदि न्याय स्तर्हि किं तस्य फलमित्यत आह । अर्थस्य लिङ्गस्येति । [१८।१६]

अथ यदि परीक्षापरनामा न्यायो नानुमेयविषयः कुतस्तदधिगमो भविष्यतीत्यत आह । परीक्षितं त्विति । [२८।१६]

---

न्यायशब्दसमानार्थ इत्यर्थः । सर्वमिति । संशयाद्यपेक्षापि प्रमाणमात्रात्मनो न्यायस्य नास्तीत्यर्थः ।

प्रमाणशब्दस्य मुख्यार्थहाने हेतुमाह । नन्वेतावतापीति ।

नन्वर्थशब्दस्यार्थ्यमानतयाऽनुमेयो वाच्यः तत्कुतोऽर्थस्य लिङ्गस्येति व्याख्यानमित्यत आह । नन्ववयवैरिति । किं तस्येति । अनुमेयाधिगतेरेव न्यायत्वे तस्य फलान्तराभावे निष्फलत्वमेव स्यादित्यर्थः ।

नन्वनुमेयार्थप्रत्ययस्य न्यायफलत्व एव नानुपपत्तिरिति किं तत्कीर्तनेनेत्यत आह । अथेति ।

अथ यथा प्रमाणमूलैरवयवैर्लिङ्गं प्रतिपाद्यते तथाऽनुमेयमेव किं नेत्यत आह। न त्विति। [२८।२०]

ननु सन्दिग्धत्वाविशेषेऽपि कुत एतदित्यत आह। तस्येति। [२८।२१] परीक्षानास्पदत्वाल्लिङ्गप्रतिपादनमन्तरेण तदपेक्षिणं प्रत्याहत्य प्रतिपादयितुमशक्यत्वादित्यर्थः।

न तर्हि प्रमाणैरिति। [२८।२२] तथा चार्थस्य लिङ्गस्य परीक्षाऽधिगतिर्न प्रमाणफलं स्यात्। अथ प्रमाणैरेव, निष्फलास्तर्ह्यवयवा इत्याशयः। न साक्षादित्यादिना

---

नन्वर्थलभ्यस्याभिधाने वैयर्थ्यमप्रसक्तप्रतिषेधश्चेत्यत आह। अथ यथेति।

नन्वनुमेयार्थस्य परीक्ष्यत्वं निर्बीजं कुतः शङ्क्यत इत्यत आह। नन्विति। सन्दिग्धत्वेनैव परीक्ष्यत्वं तच्चानुमेयेऽस्तीति न निर्बीजा शङ्केत्यर्थः।

ननु परीक्षाया निर्णयात्मकत्वादनुमेयार्थे न सम्भव इत्यत आह। लिङ्गेति।

ननु प्रमाणैरर्थपरीक्षणाभावे को दोष इत्यत आह। तथा चेति। निष्फला इति। अनुमेयार्थपरीक्षायामनुपयोगादित्यर्थः। अवयवप्रमाणयोः कार्यकारणयोरभेदो नास्त्येव येनावयवैर्यत्परीक्षणं तत्प्रमाणैरेवेति स्यादिति भावः। पूर्वोक्तदोषनिराकरणपरत्वं

लिङ्गाधिगतावयवयवानां स्वातन्त्र्यं निराकुर्वता अधिगतेरप्रमाणफलत्वमपास्तम् । अवान्तरव्यापारत्वं चावेदयताऽवयवानामानर्थक्यमपास्तमिति । प्रमाणत्वाविशेषे ऽपि तस्यैव विप्रतिपन्नपुरुषप्रतिपादकत्वं नान्यस्येत्यचापि हेतुं परः प्रत्यतीत्यतस्तथैवाह । समस्तेति । [२८।२९] तदयं वार्त्तिकार्थः सोऽयमित्थम्भूतसमस्तप्रमाणोपकरणात्मा यतस्तस्माद्विप्रतिपन्नपुरुषप्रतिपादकः । ततश्च परम इति व्यवह्रियत इत्यर्थः ।

ननु नाविरुद्धत्वमेवाश्रितत्वमनाश्रितस्यापि अविरुद्धत्वाद्विरुद्धस्याप्याश्रितत्वात् । अत एव नाविना-

परिहारस्य व्याचष्टे । न साक्षादिति । अवान्तरेति । यद्यप्यवयवफलाजनकानां प्रमाणानामवयवा न व्यापारास्तथापि प्रमाणमूलकत्वमात्रमभिप्रेत्याह । अवयवानां प्रमाणव्यापारत्वमुक्तम् । न्यायस्य परमत्वे वार्त्तिककृतैव हेतुरुक्त इति तत्र हेत्वन्तरवचनं व्यर्थमित्यत आह । प्रमाणत्वेति । वैयधिकरण्याभावायाह । तस्मादिति । ननु यद्येतदेव परमत्वं तदा तत्रैव तद्धेतुः स्यादित्यत आह । ततश्चेति । तथा च परमशब्दप्रयोगरूपे व्यवहारेसाध्ये ऽयं हेतुरिति न साध्याविशिष्ट इत्यर्थः ।

आश्रितमविरोधीति व्याख्यानबीजमाह । नन्विति । ननु परमाणौ हेतोर्भागासिद्धिपरीहारायाऽवयवीति व्यर्थं द्रव्यत्वसाक्षा-

भावोऽप्यनयोः तत्कथमाह "आश्रितमित्यविरोधीति" न चैव तत्प्रकृतमित्यत आह । पञ्चावयवे इति । [२८[२७]
न्यायमूलफलयोरेकविषयत्वं वस्तुतस्तच्चाविरोधे सति निर्वहति नान्यथेति, तदेतद्भाष्यकारेणार्थतः कथितं वार्त्तिककारैरुत्तरैरेव विवृतमित्यर्थः । यद्यप्यग्निशब्दस्तेजोविशेषवचनः सूर्याऽलोकादावग्निव्यवहारा-भावात्, तथापि तेजोमात्रे ऽपि क्वचित्प्रयुज्यते तदभि-प्रायेण परमाणुना भागासिद्धतापि माभूदित्याशय-वानाह । अग्निरवयवीति । [२९।९]

---

द्रव्यजातिरेव परमाणुवृत्तित्वेन तेजस्त्वव्याप्याग्नित्वस्य परमाणावप्रवृत्तेः, तस्याप्रत्यक्षत्वेन तत्र हेतोरवृत्तावपि भागासिद्ध्यभावादित्यत आह । यद्यपीति । अग्निशब्दस्य तेजोमात्रवचनत्व-निरासायाह । सूर्येति । तेजोमात्रेपीति । "अग्नेरपत्यं प्रथमं हिरण्य"मिति वेदे अग्नेस्तेजस इत्यर्थस्य तद्व्याख्यातृभिरुक्तत्वादित्यर्थः । भागासिद्धताऽपीति ।

ननु भागासिद्धावपि बाधो भवत्येव । न चासङ्कीर्णबाधो विवक्षितः । बाधोदाहरणमात्रस्य तत्परत्वेनासङ्करस्याप्रकृतत्वात् । न च विशेषणे ऽप्यसङ्करः । अग्निद्व्यणुकौदर्यानलादौ प्रत्यक्षबा-धाभावादग्निपदस्य विशेषपरत्वमवश्यमिति तत्रैवानैकान्तिक-त्वात् । अत्राहुः । इतरासङ्कीर्णबाधोदाहरणमेव प्रकृतमन्यथाव्ये-

ननु विरुद्धार्थपरिच्छेद एव प्रमाणेन विरोधः, स चात्र प्रत्यक्षेण स्फुटतर एवेति किमर्थं प्रश्नः "कः पुन"-रित्यत आह। इदमत्रेति। [२८।३०] तत एव-रूपत्रया-सम्पत्तेरेव तदनुमानाभासं इति व्यवहर्त्तव्यमिति शेषः। न च रूपत्रयसम्पन्नमेवेदं, साध्यसिद्धिप्रसङ्गा-दिति। अत्र शङ्कते। अथान्वयेति। [२८।१२]

ननु यदि रूपत्रयसम्पत्तिरेव अविनाभावः तदा

---

नैवानुमाने दूषिते बाधामुपयोगापत्तेः। न चानैकान्तिकसङ्करः। अग्निद्रव्यकादावप्यौष्ण्यविप्रतिपत्तेस्तत्रानैकान्तिकत्वाभावात्। न चातैजसत्वोपाधिना सङ्करः। यावद्योग्यतैजसामौष्ण्यं न परि-च्छिद्यते तावन्न सर्वतैजसामौष्ण्यं निर्णीयते इत्यतैजसत्वोपाधेः प्रत्यक्षबाधोपजीवकत्वात्। यद्वा परमाणुनित्यतीन्द्रियपरं तन्न तद्बाधे प्रत्यक्षबाधोऽसिद्धो माभूदित्यवयविपदं योग्योपस्थापक-मुक्तम्। तत इत्यनेन प्रतियोगिपरामर्शभ्रमं निवारयति। रूप-त्रयेति। अन्वयव्यतिरेकौ पक्षधर्मता चेति रूपत्रयम्।

ननु रूपत्रयासम्पत्तिरेवाभासत्वमिति साध्याविशेष इत्यत आह। व्यवहर्तव्यमिति। ननु रूपत्रयसम्पत्त्या प्रमाणत्वस्य पूर्वमनुक्तत्वान्निराकरणमयुक्तमित्यतः पूरयित्वा शङ्कते। न चेति।

ननु बाधाविनाभावयोः सद्दासम्भवमभिधाय बाधापक्षधर्मत-योस्तदभिधानमसङ्गतमित्यत आह। ननु यदीति। ननु च सपक्षा

कथं बाधया सह सम्भवः? इहैव सम्भवादित्यत आह। बाधायामिति। [१६।१४] पक्षधर्मत्वं स्वीकृत्यानैकान्तिकत्वव्युत्पादनम्। अतो "न च सपक्षे"त्यादिशङ्का न निरवकाशा भवति। यत्रेदं तत्रेदमित्याकारेण पक्षस्यापि साधनवतः साधर्म्यवत्ताप्रतीतिः सर्वोपसंहारः। अयं च यत्रेदं न साध्यमस्ति तत्रापीदं साधनमभिमत-

सपक्षावित्यनेन व्याप्तिग्रहोपायकथनादनैकान्तिकत्वे परिहृते ऽप्य पक्षधर्मत्वं तदवस्थमेवेति तत्परीहारो व्यर्थ इत्यत आह। पक्षधर्मत्वमिति। टीकायामन्तः पक्षे बहिः सपक्षासपक्षयोरित्यनेन सपक्षासपक्षसाधारणः सर्वोपसंहारो नोक्तः कथं वा पक्षे साध्याभावप्रमितौ स भज्यत इत्यपि नोक्तमतस्तदुभयमाह। यत्रेदमिति।

ननु व्याप्तिग्रहदशायामनागतोपि धूमो भासते अन्यथा अन्यस्य व्याप्तिग्रहादन्यस्य च पक्षवृत्तित्वान्न व्याप्तस्य पक्षधर्मत्वज्ञानमित्यनुमितिर्न स्यादिति सामान्यलक्षणप्रत्यासत्तौ बीजम्। तदयुक्तम्। धूमत्ववह्नित्वावच्छेदेन सन्निकृष्टव्यक्तिष्वेव तद्व्यक्तित्वमपहाय व्याप्तिर्गृह्यते। ततः पक्षवृत्तिधूमदर्शनजन्यव्याप्तिस्मरणाद्वह्निव्याप्तिमानयमिति विशिष्टज्ञानानुमितिरिति किमसन्निकृष्टभानेन। न च वह्निमानयमित्यनुमितेर्विशिष्टज्ञानत्वेन विशेषणज्ञानपूर्वकत्वनियमाद्वह्नेः पूर्वं ज्ञानमावश्यकमेवं क्वचिद्धूमस्यापीति युक्तम्। विशिष्टवैशिष्ट्यबोधस्य विशेषणतावच्छेदकप्रकारकज्ञानजन्यत्व-

नियमादावश्यकत्वात्। न च तथा विशिष्टज्ञानसामान्ये यद्विशेषणं भासते तज्ज्ञानस्य कारणत्वम्। अत्र च पर्वतीयोग्निर्विशेषणं भासत इति तज्ज्ञानं पूर्वमावश्यकमतस्तुल्यसन्निकर्षतया धूमोपि प्राग् भासत इति वाच्यम्। विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वे मानाभावात्। दण्डी पुरुष इत्यस्य विशिष्टविशिष्टज्ञानत्वेनोक्त-सामग्रीजन्यत्वात्। अविशिष्टविशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वा-नङ्गीकारात्। न चान्यस्य व्याप्तिज्ञानादन्यत्रानुमितावतिप्रसङ्गः। समानप्रकारकत्वेनैव व्याप्तिपक्षधर्मताज्ञानयोर्मिथः सहकारित्वात्। समानविषयत्वेनापि तत्त्वे तस्यावश्यकत्वात्। अथ सुखादाविच्छा न स्यादसिद्धस्याज्ञातत्वेनेच्छाविषयत्वात्। सिद्धस्य चेच्छाविषयत्वा-भावात्। सुखत्वेनासिद्धस्यापि ज्ञानमभ्युपेयमिति चेत्। न। असि-द्धस्यापि स्वाबे सिद्धज्ञानादेव प्रवृत्तिस्वाभाव्यादसिद्धगोचरप्रवृत्त्युप-पत्तेः। न चातिप्रसङ्गः। समानप्रकारकत्वेनैव ज्ञानेच्छाकृतीनां कार्यकारणभावावधारणात्। समानविषयत्वेनापि तत्त्वे समानप्र-कारकज्ञानाभावादिच्छाकृत्योरभावेनावश्यकत्वाल्लाघवाच्च। तस्मात् सामान्यलक्षणानभ्युपगमे ऽनुकूलतर्कावतारं विना धूमादौ व्यभि-चारसंशयो न स्यात्। प्रसिद्धधूमे अग्निसम्बन्धनिश्चयात्। असन्नि-कृष्टधूमस्य चाज्ञानात् सामान्ये न तु तज्ज्ञाने धूमान्तरे विशेषादर्श-नात्, संशय उपपद्यते। न चैवं प्रमेयत्वेन व्याप्तिपरिच्छेदे सार्व-ज्ञ्यापत्तिः। प्रमेयत्वेन तथात्वे इष्टापत्तेः। न चैवं परकीयज्ञानविषये घटत्वसंशयानुपपत्तिः। घटत्वादिप्रकारकनिश्चयस्य तद्विरोधि-त्वात्। तस्य च स्वसामग्रीविरहेणाभावादित्यस्मत्पितृचरणाः।

मस्तीत्येतावन्मात्रेणैव भज्यते। एष च व्यभिचार-प्रकारः पक्षेऽपि न निवारयितुं शक्य इत्यर्थः। न बाधस्य स्वातन्त्र्येण दूषणत्वं व्यभिचारात् पक्षधर्मता-विरहिणि तदभावात्। यत्र च बाधसम्भवस्तत्र तयोरे-वान्यतरावगतस्वातन्त्र्ययोर्विद्यमानत्वादनुमानमाभासतां गतम्। व्यभिचाराद्युत्थापनेन तु विरोधश्चरितार्थ इति पूर्वपक्षार्थः। "अनुमानाविषये प्रयोग" इति यथाश्रुते वार्त्तिके पराभिमताऽपक्षधर्मत्वमेव स्फुटमपक्षस्यैवानु-मानाविषयत्वात्, अतोऽन्यथा व्याचिख्यासुर्भूमिमार-चयति। वक्ष्यते हीति। [२६।२७]

अतिप्रसङ्गादतिव्याप्तेरित्यनुमानाधिकारे वक्ष्यते हीति योजना।

तत्र तयोरिति। नचैवं विरुद्धानैकान्तिकयोरप्यसिद्धस्यैव दूषकत्वे तयोरपि स्वातन्त्र्येण दूषकत्वं न स्यादिति वाच्यम्। अनुमितिप्रतिबन्धकानुमितिहेतुपरामर्शप्रतिबन्धकान्यतरस्यैव हेत्वा-भासत्वात्। बाधस्थले त्वन्यत्र क्लृप्तदूषणभावस्यानैकान्तिकस्यैव प्रतिबन्धकत्वमिति भावः।

अतिशयिततर्कपरत्वभ्रममतिप्रसङ्गशब्दस्य निवारयति। अति-व्याप्तेरिति। वक्ष्यति क्रियाया अनुमानाधिकारमध्यन्तर्भाव्य कर्म-त्वमिति भ्रमं निवारयति। इत्यनुमानाधिकार इति।

किमतो यद्यद्येवमित्यत आह। स चेति। [१०।१]
आर्द्रेन्धनमेकोपाधिरेकव्यभिचारात्। अध्ययनमुभयो-
पाधिरुभयव्यभिचारात्। सोयमित्यादिना नास्तीत्यन्तेन
प्रत्यक्षस्याकारो दर्शितः। यद्यभविष्यदिति तर्कस्य।
नास्त्येवेति फलभूतस्य निश्चयस्य।

ननु कृतकस्य तेजसो बुद्धौ विपरिवर्त्तमानत्वे यो
यः कृतकः स सर्वोऽनुष्ण इति सर्वोपसंहारो न
सम्भवत्येव, अपरिस्फुरति तस्मिन्नितरां, न हि यद्यत्र
न स्फुरति तदपि तस्य विषय इति अत आह। सामा-
न्येन यो यः कृतक इति। [१०।८] अनेनाकारेण सोऽपि
बुद्धौ विपरिवर्त्तत एव, न तु विशेषाकारेण व्याप्ति-
ग्रहणविषयतामभिरगादित्यत आह। न तु निर्वि-
भज्य-विशेषतो ज्ञात्वा, तेजोवयविनि-सम्बन्धो ऽवधा-
रित इत्यर्थः।

---

उपाधिद्वयोपन्यासं समर्थयति। आर्द्रेन्धनमिति। एकस्य
वह्निमत्त्वस्य साधनस्य व्यभिचारादित्यर्थः। धूमस्य साध्योपाधिना
सममव्यभिचारादित्यर्थः। उभयोपाधिरिति। अयं गुरुः शिष्यो
वा पुरुषत्वादित्यादावुभयधर्मसम्बन्धे साध्ये ऽध्ययनमुपाधिः उभय-
स्यैव तेन व्यभिचारादित्यर्थः॥

सामान्येनेत्यस्य तात्पर्यमाह। न त्विति। यदि तत्तद्विशेषे

अथ सामान्याकारेणापि तेजोवयविनः किमित्यवकाशो देयो यावता पृथिव्यादावेव व्याप्तिरवधार्यतामित्यत आह। न हीति। [१०।१०] न हि सामान्याकारेण व्याप्तौ गृह्यमाणायां प्रत्यक्षबाधात् प्रागेव तेजोवयविपरित्यागे का चिदुपपत्तिरस्ति अन्यत्रादर्शनात्। तथा च न केवलं स एव न दृष्टः, पृथिव्यादयोपि के चिन्न दृष्टा इति ते ऽपि परित्याज्याः। एवं च गृहीत्वा गृहीत्वा व्याप्तिर्ग्राह्या, अदृष्टेषु व्यभिचाराशङ्का न वेत्युभयथापि सर्वानुमानोच्छेदप्रसङ्ग इत्यर्थः। स्वयमेव परः पक्षं गृह्णात्वित्यभिसन्धिना सुकुमारप्रकारमाह। न

---

व्याप्तिग्रहः स्यात् तदा तेजोऽवयविनि दृष्टे व्याप्तिर्ग्राह्येति बाधाद्व्यभिचारेण व्याप्तिग्रह एव नास्तीति स्यात्, न त्वेवं, किं तु सामान्याकारेण पूर्वमेव व्याप्तिग्रह इत्यर्थः॥

अप्रसक्तप्रतिषेधमाशङ्क्याह। अथेति। ननु चादर्शनमेव तेजोवयवित्यागे हेतुरित्यत आह। तथा चेति। ननु चापक्षधर्मत्वाद्वेत्यपि विकल्पा निषेद्धुमर्हतीत्यत आह। स्वयमेवेति। यत एवानैकान्तिकाद्बाधस्य भेदस्तत एवापक्षधर्मत्वादपीत्याशयेनानैकान्तिकस्यैव दूषणं सुकुमारता। न हीति। तर्केण व्याप्तौ गृहीतायां वक्त्रादर्शनेन व्यभिचारशङ्काया अनुदयात् पूर्वमौष्ण्यस्य तेजसि प्रसिद्धावपि तदा ज्ञातकत्वस्य

तावदिति । [३०।१५] न हि व्याप्त्यनपवादे व्यभिचारावकाशः समस्तीति हृदयम् ।

तर्हि तदपवादे सत्येव हेतोरनैकान्तिकत्वमस्त्वित्याशयवानाशङ्कते । प्रत्यक्षेणेति । [३०।२०]

इह व्याप्तेरपवादः पक्षतामपरिभूय तत्परिभवे वा तत्राद्यं तावद् दूषयति । नेति । प्रवृत्तानुमानाप्रति-

---

तत्राग्रहात् पश्चादनौष्ण्येन सह कृतकत्वस्य व्याप्तिग्रहे विरोधो नास्तीत्यर्थः । उष्णतेजोवयविनीति टीकाहेतुदर्शनात् पूर्वं पक्षधर्मताज्ञानाभावादेव नानुमितिः तद्दर्शने च सति साध्याभाववति हेतुनिश्चयादनैकान्तिकत्वमेव दूषणमित्यर्थः । अनुमानेनेति टीका । वह्नौ प्रत्यक्षेण साध्याभावग्रहात् पूर्वं हेतुदर्शने सत्यनैकान्तिकत्वज्ञानाभावादनुमितिसामग्री निष्प्रत्यूहैवेत्यर्थः ॥

विशेषादर्शनदशायामुत्पन्नमपि व्याप्तिज्ञानं वह्नौ साध्याभावप्रमया बाध्यत इत्यनुमितिसामग्रीवैकल्यादनैकान्तिकमेव दूषणमस्त्विति शङ्कत्याह । तर्हीति ।

ननु यदि पक्षाभिमते व्यभिचारानुद्भावनं तदा कथमग्रे प्रत्यक्षेण साध्यधर्मविपर्ययेत्यादिना पक्षाभिमत एवानैकान्तिकोद्भावनं, कुतो वा प्रयोजनक्षतिमात्रात् तत्र व्यभिचारे सत्यपि तदनुद्भावनं, तदनुद्भावने ऽप्यपक्षधर्मतोद्भावनं स्यादेवेत्यत आह । इहेति । प्रयोजनक्षतिमात्रस्यादूषणत्वं परिहरति । प्रवृत्तेति । पक्षधर्मताया अपरिभवः पक्षाभिमते साध्याभावग्रहात् पूर्वमिति

रोधे व्याप्तेरपवाद इति कुतः? तत्प्रतिरोधं तु विपरीत-प्रत्यक्षं न चेत्करोति कोऽपरः करिष्यतीत्याशयः ।

ननु यदि पक्षे ऽपि व्यभिचारः सम्भवति स नोद्भाव्य इति कस्यायं दण्ड इत्यत आह । [३०।२७] अन्यथेति । न पक्षधर्मतामपरिभूय प्रत्यक्षेण व्यभिचारः शक्यग्रहः, न ह्यस्ति सम्भवः सन्दिग्धसाध्यधर्मा तद्विरहेण निर्णीत-श्चेति शून्यहृदयं प्रति न प्रतिबन्दीत्यर्थः ।

प्रत्यक्षेण पक्षधर्मतापरिभवाद्व्यभिचारो भविष्यतीत्याशङ्कते । प्रत्यक्षेणेति । [३०।२२]

---

न तदा व्याप्त्यपवादो व्यभिचाराग्रहादिति न तत्रानैकान्तिकोद्भावनमित्यर्थः । कोऽपर इति । न च प्रत्यक्षमेव तत्प्रतिबन्धं करोतीति वाच्यम् । तथा सति पक्षधर्मतापरिभवपक्ष एव प्रवेशात् तस्य चानन्तरमेव दूष्यत्वादित्यर्थः ॥

ननु पक्षाभिमते साध्याभावप्रमातः पूर्वं पक्षत्वापरिभवेनैकान्तिकत्वाग्रहादेव तदनुद्भावनं स्यादिति किमन्यथेत्यादिप्रतिबन्द्या । न च निश्चितव्याप्तिकस्य पक्षधर्मत्वविशेषदर्शने सति तत्र साध्यसन्देह इति प्रतिबन्दिरपि । तथात्वे ऽपि सर्वानुमानोच्छेदात् सन्दिग्धानैकान्तिकत्वं नोद्भाव्यतामनैकान्तिकोद्भावने तु न विरोध इत्यत आह । शून्यहृदयमिति । यस्य हृदि नायं परामर्शः तं प्रतीत्यर्थः ॥

निराकरोति । तर्हीति । [३०।२५] यथा हि साध्यविपरीतप्रवृत्तिरेव साध्यनिवृत्तिः तथा विपरीतप्रमाणप्रवृत्तिरेव साधननिवृत्तिः, अन्यथा विपरीतप्रमाणप्रवृत्तावपि यदि साधकं न निवर्तते तदा तदायत्तं साध्यमपि न निवर्तेत, तदनिवृत्तौ तु न पक्षत्वक्षतिरिति न व्यभिचारावकाश इत्यर्थः ।

सिद्धमर्थं वार्त्तिके समर्थयति । तदिदमुक्तमिति । [३०।२५]

ननु यदि नामानुमाननिवृत्तेः पूर्वमपक्षधर्मत्वं व्यभिचारो वोद्भावयितुं न शक्यस्तथापि तदुत्तरकालं

---

ननु साध्यधर्मिणि प्रत्यक्षेण साध्याभावप्रमितावपि तत्र साधनस्य प्रवृत्तिज्ञान एव साधनस्य निवृत्तेरित्यनेनानैकान्तिकज्ञानमेव दूषणं स्यादित्यत आह । यथा हीति । साध्याभावप्रत्यक्षमेव साधननिवृत्तिरिति न साध्याभावसामानाधिकरण्यग्रहादेव साधननिवृत्तिरिति भावः ॥

टीकाकारोक्तं वार्त्तिककारोक्तमिति विरुद्धमित्यत आह । सिद्धमिति ॥

नन्वनैकान्तिकत्वापक्षधर्मत्वयोरेतावतैव दूषकत्वनिरासात् कुतः पुनस्ततो निराक्रियत इत्यत आह । नन्विति । बाधोत्तरकालं तयोर्दूषणत्वमिदानीं निरस्यत इत्यर्थः ॥

तावच्छक्यत एव, ततस्ताविव स्तां कृतमपहृतविषयत्वे-नेत्यत आह। एवं चेति। [१०।२७] यावद्धि प्रत्यक्ष-विरोधिनानुमानं न दूष्यते तावद्व्यभिचाराद्यवकाशो नास्त्येव ततः सावकाशावेतौ प्रत्यक्षविरोधमुपजीवतः। तेन चेद्दूषितमनुमानं किं ताभ्यां, न हि मृतो ऽपि मार्यत इति सिद्धान्तसङ्क्षेपः।

---

ततः सावकाशाविति। नन्वेतावताऽनैकान्तिकापक्षधर्मत्वा-भ्यामुपजीव्यत्वात्ताभ्यां बाधः पृथगित्युक्तम्। तत्रोपजीव्यत्वं न तावत्तमवगम्यैवावगमः बाधमनवगम्यादिशब्दादनुमानाद्वा व्यभि-चारस्य सुग्रहत्वात्। वस्तुत एकत्र धर्मिणि हेतुसाध्याभावा-विति समूहालम्बनैकैव प्रतीतिर्हेतुसाध्याभावयोः सामानाधि-करण्योल्लेखिनी। अन्यथा धर्मिणि साध्याभावप्रमादशायां यदि हेतोरज्ञानं तद्व्यभिद्धिः स्यादित्येकवित्तिवेद्यत्वं तयोरिति नोप-जीव्यत्वं, नापि बाधमुद्भाव्यैवोद्भावनम् असिद्धेः। न ह्येदमनैका-न्तिकमित्युक्ते कथमिति परानुयोग आवश्यको येनाऽऽवश्यकं तदु-द्भावनं तथात्वेऽपि निर्वाह्यमेव दूषणमस्तु क्लृप्तत्वात्। अत एवावश्यो-द्भाव्यत्वं तदित्यपि निरस्तम्। अथार्थान्तरोपनायकस्मृत्यादिसह-कारिता सामान्यत एव प्रमाणस्य क्लृप्ता प्रत्यभिज्ञादौ, तदिह समीचीनव्याप्तिपक्षधर्मताकलिङ्गपरामर्शस्यासदर्थकाञ्चनमयत्वादि-स्मृतिसहकारिवशाद्यत्राभासाधिकरणत्वं तत्र बाधः पृथगिति चेत्।

न । व्याप्तिपक्षधर्मतोपनीतादन्यस्मादनुमितौ भाने मानाभावात् । प्रत्यभिज्ञादौ प्रतीतिबलेन तथा कल्पनात् । अन्यथा पूर्वानुभूतसकलार्थभाने ऽनुमितेर्याथार्थ्योच्छेदापत्तेः । भाने ऽपि तस्य प्रतिपक्षविषयतया तेन हेत्वाभासत्वानिरूपणात् । अन्यथातिप्रसङ्गात् । अपि चोपनीतस्य स्वातन्त्र्येणाभानात् पक्षस्य हेतोर्वा साध्यस्य वा विशेषणतया तद्भासेत । नाद्यौ । तादृशयोः पक्षहेत्वोरप्रसिद्धेः । नान्त्यस्तादृशस्य साध्यस्याप्रसिद्ध्या तदभावस्याज्ञानात् । न च व्यधिकरणप्रतियोगिकोऽप्यभावो ज्ञायते कथमन्यथा संयोगित्वेन प्रतियोग्यवृत्तिनाऽवच्छिन्नस्य घटत्वस्य घटे ऽत्यन्ताभावो ज्ञायत इति वाच्यम् । तदसिद्धेः । प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्याभावधीहेतुत्वात् । प्रतियोग्यवृत्तिना च धर्मेण प्रतियोगिनो वैशिष्ट्याभावात् । अन्यथा प्रतियोगिनिर्विकल्पकादप्यभावबुद्ध्युदयापत्तेः । अपि च परार्थानुमानेऽयमर्थ उपनीतोऽनुमितौ ममावभासत इत्युद्भावनादेव सर्वत्र वादिविजयापत्तेः । अथोद्देश्यानुमितेरप्रतिबन्धान्न तत्र बाधो दोषस्तु स्वार्थानुमानेऽपि, भवतु वोपनीतस्यानुमितौ भानं तथापि न तत्र हेत्वाभासः तत्सत्त्वे तेन प्रतिबन्धादनुमित्यनुत्पादापत्तेः । न चानुमित्याभासत्वं न हेत्वाभासं विनेति तत्सत्त्वमिति वाच्यम् । विषयासत्त्वादेवानुमितेस्तदुपपत्तेः । अथ प्रत्यक्षादौ प्रमामात्रं प्रति स्वातन्त्र्येण बाधस्य दोषत्वेन क्लृप्तत्वादनुमितावपि स एव दोषः । तन्न । तथा सति बाधस्य हेत्वाभासत्वव्याघात् । अनुमित्यसाधारणदोषस्यैव तत्त्वात् । हेतुत्वाभिमतावृत्तित्वेनासाधकत्वा-

नुमितौ लिङ्गत्वाभावापत्तेश्च। प्रमितसाध्याभाववद्वृत्तित्वस्या-तद्वृत्तित्वेऽपि तेन रूपेणान्यत्र दूषकत्वानवगमात्। अथ यत्र सामान्यतो दृष्टमेवेतरबाधसहकृतं विशेषविषयं तत्र बाधकाना-माभासत्वे तत्प्रयुक्तं सामान्यतोदृष्टस्याभासत्वमिति तत्र बाधस्या-साङ्कर्थ्यम्। न च विशेषविप्रतिपत्तौ यदि सामान्यसाधनं तदा-र्थान्तरं सामान्यविप्रतिपत्तौ तु नेतरत्र बाधकापेक्षेति वाच्यम्। स्वार्थानुमान एवैवं बाधासङ्करस्योक्तत्वात्। तथापि बाधक-ज्ञानसहकृतसामान्यतोदृष्टस्य विशेषज्ञानजनकत्वमसिद्धम्। व्यति-रेकिण एव तत्सामर्थ्यावगतौ तत एव तत्सिद्धेरिति चेत्। न। यत्र प्रथममितरत्र बाधोदयश्चरमं सामान्यतोदृष्टावतारस्तत्र पक्षधर्मताबलेन तस्यैव विशेषविषयत्वात्। अन्यथा पक्षे साध्य-बुद्ध्यपर्यवसानात् यत्र तत्प्रवृत्त्यनन्तरं बाधावतारस्तत्रैव व्यति-रेकिणस्तत्सिद्धेरिति न तत्रानुमितेरप्रतिबन्धे हेत्वाभाससिद्धिः। तत्सिद्धौ चानुमित्यसिद्धेः। न चानुमितेराभासत्वं हेत्वाभासप्रति-योज्यमिति तदावश्यकत्वं प्रत्यक्षादाविव विषयासत्त्वस्यैवाभासत्व-प्रयोजकत्वादित्युक्तत्वात्। अथ पक्षाभिमते साध्याभावग्रहवत् साध्याभावव्याप्यग्रहोऽपि दूषकः विरोधित्वाविशेषात्। एवं च साध्याभावसामानाधिकरण्यमनैकान्तिकत्वं साध्याभावव्याप्यसामा-नाधिकरण्यं बाधः साध्याभावव्याप्यं च वह्नित्वाद्येवेति मतम्। तन्न। पक्षाभिमते साध्याभावग्राहकस्य दूषकत्वासिद्धौ दृष्टान्त-त्वानुपपत्तेः सिद्धौ वा तस्योक्तरूपबाधानन्तर्भावे षष्ठहेत्वाभास-त्वापत्तेः। उक्तरूपश्च बाधः पक्षाभिमतविषयकसाध्याभावबुद्धौ

सत्यामसत्यां वा, आद्येऽनैकान्तिकत्वमेव साध्याभावसामानाधिकरण्यग्रहात् । अन्त्ये लिङ्गत्वाभिमतसाध्याभावव्याप्ययोरुपस्थमाणविशेषतया सत्प्रतिपक्ष एव दोषो न बाधः । तत्र तुल्यबलत्वं प्रयोजकत्वं बाधे त्वधिकबलत्वमिति चेत् न । गमकताप्रयोजकरूपसम्पत्तेरेव बलवत्त्वेन तस्य द्वयोरपि ज्ञातत्वात् । न च बाधस्थले साध्याभावव्याप्यबुद्धेरनन्यथासिद्धत्वं बलं, तथा सति तत्र तत्र साध्याभावानुमितौ तत्र साधनत्वाभिमतज्ञानादनैकान्तिकत्वस्यैवापत्तेः । तामनन्तर्भाव्यैव सत्प्रतिपक्षस्य दूषकत्वावधारणत्वाच्च । अथ साध्यवत्तया सन्दिग्धे धर्मिणि धूमो वह्निमविनाभावितया निर्णीतत्वादग्नौ ज्ञातज्ञतकत्वमौणाग्रहं परिभूय स्वसाध्यं साधयेदेव । यदि साध्याभावबुद्धेः प्रमात्वज्ञानं न प्रतिबन्धकमिति तद्विषय एव बाधः पृथगिति चेत् न प्रमात्वज्ञानं विनापि विरोधिबुद्धेः सत्प्रतिपक्षवत् प्रतिबन्धकत्वसम्भवात् । अथ हेतुतः साध्यसिद्धिसम्भावनायामनैकान्तिकासिद्धेः पक्षाभिमते धर्मिणि साध्याभावप्रमितेः साधनाभिमतात्साध्यसिद्धिसम्भावनाविरह एवानैकान्तिकावतार इत्युपजीव्यत्वाद्बाधः पृथक् अन्यथा हेतोरसाधकत्वे सिद्धे साध्यसिद्धिसम्भावनाविरहादनैकान्तिकत्वबुद्धिः तस्यां च सत्यां हेतोरसाधकत्वमित्यन्योन्याश्रयः । तन्न । साध्यसिद्ध्यनुगुणहेतुज्ञानस्य प्रमितसाध्याभावसहचरितहेतुविषयत्वेनानैकान्तिकज्ञानतया दूषकत्वात् यद्यप्यनैकान्तिकत्वेऽपि साध्याभावप्रमैव प्रयोजिका तां विना तदभावादिति तस्या एव दोषत्वमर्हं, तथापि तस्याः

साध्याभावसमानाधिकरणहेतुज्ञानत्वेन दूषकत्वं क्लृप्तत्वात्। न तु साध्याभावप्रमात्वेन तस्यावश्यकत्वे ऽपि तेन रूपेण दूषकत्वाकल्पनात्। यत्तु केनचिदुक्तं उद्भावनलाघवाद्बाधः पृथक् अनैकान्तिकत्वे वह्निरूष्णः कृतक इत्युद्भावनापेक्षया वह्निरूष्ण इत्युद्भावनस्य लघुत्वादिति। तदनवबोधात्। स्वार्थानुमाने दूषकत्वेनाक्लृप्तस्य परार्थानुमाने ऽप्यदोषत्वादुद्भावनस्यैवासिद्धेः।

एवं प्राप्ते ऽस्मत्पितृचरणाः—पक्षाभिमते धर्मिणि साध्याभावज्ञानस्य प्रमात्वमनिश्चित्य व्यभिचारादिकं ज्ञातुमुद्भावयितुं च न शक्यमित्युपजीव्यत्वाद्बाधः पृथक्। तथाहि साध्याभाववद्वृत्तित्वनिश्चयः साध्याभावनिश्चयाधीनस्तन्निश्चयश्च न साध्याभावज्ञानमात्रात् विशेषदर्शने ऽपि भ्रमादर्थनिश्चयप्रसङ्गात्, प्रामाण्यानुमितिवैयर्थ्यापाताच्च। किं तु साध्याभावज्ञानस्य प्रमात्वनिश्चयात्। न चैवमसिद्ध्युपजीव्यत्वेन सिद्धसाधनमपि पृथक् स्यात्, उपजीव्यत्वेऽपि स्वतो दूषकत्वाभावात् साध्यज्ञानस्य साध्यज्ञानविरोधित्वे धारावाहनबुद्ध्युच्छेदप्रसङ्गात् तदनुमितिविरोधित्वे श्रवणानन्तरं मननानुपपत्तेः अन्यथोपाधेरपि असिद्ध्युपजीव्यतया हेत्वाभासान्तरत्वापत्तेः। अन्यस्य साध्यव्यापकत्वसाधनाव्यापकत्वज्ञानमन्यस्य साध्यव्याप्यत्वज्ञाने न स्वतो दूषकमपि तु व्याप्तिज्ञानविघटनद्वारेति दूषकतायामन्योपजीवकत्वान्न तस्य स्वतो दूषकत्वमिति चेत्। हन्त सिद्धसाधनमपि न स्वतो दूषकमपि तु पक्षत्वविघटनद्वारेति तदप्यसिद्ध्युपजीव्यं न स्वतो दूषकमिति न पृथक् हेत्वाभासः। न च साध्याभावप्रमापि न स्वतो दूषिका युक्तं

शङ्खं प्रमापयत एव पीतः शङ्ख इति विभ्रमदर्शनादिति वाच्यम्। प्रत्यक्षविशेषदर्शनस्यैव प्रत्यक्षभ्रमविरोधितया तद्विधुरस्य भ्रमसम्भवे ऽपि साध्याभावप्रमामात्रस्यानुमितिप्रतिबन्धकत्वात्। न च प्रमावधारितसाध्याभावबुद्धेः प्रामाण्यं साध्याभावबुद्धिमात्रस्यैव सत्प्रतिपक्षवदनुमितिप्रतिबन्धकत्वादिति वाच्यम्। शङ्खे पीतज्ञानवतः शुक्लत्वस्य शङ्खत्वेनाननुमानप्रसङ्गात्। वादिवाक्यात् साध्याभावमात्रज्ञाने ऽनुमितिमात्रोच्छेदप्रसङ्गात्। एवमसिद्धेरपि बाध एवोपजीव्यः साध्याभावधियः प्रमात्वनिश्चयादेव साध्यसन्देहविघटनद्वारा पक्षत्वविघटनात्। अपि च गन्धप्रागभावावच्छिन्ना पृथिवी गन्धवती पृथिवीत्वादित्यत्र बाधः पृथक्। न च तत्राप्यनैकान्तिकमेव दोषः। साध्यात्यन्ताभाववद्वृत्तित्वस्यानैकान्तिकत्वेन साध्यप्रागभाववद्वृत्तेरतथात्वात् अन्यथा द्रव्यत्वेन गुणाननुमानापत्तेः। आद्यक्षणे द्रव्यत्वस्य साध्याभाववद्वृत्तित्वात्। न च वस्तुतो यो गन्धप्रागभावावच्छिन्नस्तत्र साध्यमस्त्येवेति सिद्धसाधनं तत्र दोष इति वाच्यम्। पक्षतावच्छेदकधर्मविशिष्टे साध्यवैशिष्ट्यस्यानुमेयत्वात्। न च वस्तुगत्या यत्र तद्वैशिष्ट्यं तत्र साध्यवैशिष्ट्यमनुमेयं वर्त्तमानकालविशिष्टे पर्वतत्वविशिष्टे च धर्मिणि धूमज्ञानादग्न्यनुमितौ तत्राग्न्यर्थिनोऽप्रवृत्तिप्रसङ्गात्। एवं तर्हि भाविदिनविशिष्टः पर्वतोऽग्निमान् धूमवत्त्वादित्यादौ विद्यमानधूमादपि भाविकालावच्छेदेनाग्निः सिध्येदिति चेत् न भाविकालावच्छिन्ने पर्वते विद्यमानधूमस्याप्रसिद्धेः। तथापि विद्यमानेयं नदी उपरिदेशे वृष्टिमती विशिष्टपूरत्वादित्यत्र विद्य-

नन्वश्रावणः शब्द इति ब्रुवाणः कथं शब्दासत्त्वमभिप्रेयात् यावतेन्द्रियान्तरग्राह्यमेव किमिति नाभिप्रैति। अथ तत्र विरोधोऽस्ति ? तत्किं स्वरूपापलापे स नास्ति। तस्मादभिप्रायः परस्य नियन्तुं न शक्यत

---

मानवृत्त्यनुमितिप्रसङ्गः। न चेष्टापत्तिः विद्यमानवृष्टेर्वर्त्तमानविशिष्टनदीपूरं प्रत्यकारणत्वादिति चेत्। न। तत्र समयभेदेनैव व्याप्तिग्रहात् तथैव साध्यसिद्धेः। किं च सिद्धसाधने प्रागभावतत्प्रतियोगिनोरेकदेशवृत्तित्वेनैककालवृत्तित्वमपि स्यात्। यदि च तयोरेकसमयावच्छेदेनैकत्रावृत्तेर्न तथात्वं तर्हि प्रागभावावच्छिन्ने धर्मिणि तत्प्रतियोगिप्रमितावपि न सिद्धसाधनमपि तु बाध एव। अपि चेयञ्जौः सास्नादिमतो गोत्वादित्यादौ प्रसिद्धसास्नादिकं बाधान्न सिद्ध्यतीति तत्र बाधः पृथक्। न च प्रसिद्धाभाववति पक्षे गोत्वादिकमनैकान्तिकत्वान्न प्रसिद्धं सास्नादि साधयतीति वाच्यम्। अप्रसिद्धाभाववति सपक्षेऽपि व्यभिचारेणाप्रसिद्धस्याप्यसिद्ध्यापत्तेः। अथ व्यापकतावच्छेदकसास्नात्वाद्यवच्छिन्नप्रतियोगिकाभाववति न गोत्वादेर्वृत्तिरिति न तत्रानैकान्तिकत्वं तुल्यं प्रसिद्धसिद्धावपीत्यत्रावधेयम्।

ननु न गृहीत्वेत्यादिनेन्द्रियान्तराग्राह्यत्वोद्भावनं व्यर्थं अश्रावणत्वेनैव शब्दापलापसम्भवादित्यत आह। नन्विति। विरोध इति। अनुभवविरोध इत्यर्थः। नियन्तुं नेति। इन्द्रियान्तर-

इत्यत आह। न हीति। [३११३] इन्द्रियान्तरव्यापार-व्यभिचारात् तदग्राह्यत्वविनिश्चयपक्षे स्वरूपापलाप एवाभिप्रेतः तत्रेदमुदाहरणमित्यर्थः।

दर्शितपूर्वपक्षादलनादलग्नकं वार्त्तिकं(१) निवेशयितुं पीठमारचयति। सविशेषणे हीति। [३११५] विशिष्ट-विधानमपीत्युपलक्षणं विशिष्टनिषेधोऽपि द्रष्टव्य इति। अगतिः-प्रमाणान्तरादलाभः। लौहित्यविशिष्टमुष्णीषं

---

ग्राह्यत्व एवाभिप्रायोऽश्रावणत्ववादिनः किमिति न कल्प्यत इत्यर्थः। दूषणं निरस्यति। इन्द्रियान्तरेति। इन्द्रियान्तराग्राह्यत्वमभ्युप-गम्य शब्दाश्रावणत्ववादिनोऽभिप्रायप्राप्तं तदसत्त्वमित्यर्थः।

आपाततोऽर्थान्तरत्वमाशङ्क्याह। वलितेति। वलितः परा-वृत्त्यलग्नः। आगामिविशिष्टनिषेधोदाहरणानुरोधादाह। उप-लक्षणमिति।

अलाभ इति। विशिष्टस्येत्यर्थः। लौहित्यविशिष्टमिति। ननु "सोष्णीषा ऋत्विजः प्रचरन्ती"त्यनेनोष्णीषसम्बन्धस्य ऋत्विजि प्राप्तत्वात्तत्र लौहित्यमात्रमनेन विधीयत इति "दध्ना जुहोती"ति-वद्गुणविधिरेवायं न विशिष्टविधिः। टीकायामपि सविशेषणे हीत्यादेरेवेदमुदाहरणं प्रकृतत्वात्, न तु क्वचिद्विशिष्टविधानमपी-त्यस्य। अत एव विशिष्टनिषेधोपलक्षणपरत्वमप्यस्यायुक्तम्। तत्र

---

(१) वलितवार्त्तिकमिति पाठः प्रकाशस्मात इत्यनुमीयते।

विधीयते जीर्णतामलवत्ताविशिष्टं वासः प्रतिषिध्यते। नञा समसितश्रावणपदश्रवणं श्रुतिः। विशेषणविशेष्य-भावावस्थितः पदसमूहो वाक्यम्। तयोः सामर्थ्यात्।

---

यथा दध्ना जुहोतीत्यत्र होमवद् दध्नोऽपि प्राप्तत्वाद्विशेषणविशेष्ययोरुभयोरप्यविधेयतया दध्युपरक्तहोमविधानाद्विशिष्टविधिस्तथा लौहित्यविशिष्टोष्णीषस्य नियोगसाधनत्वेनाज्ञानादत्र विशिष्टविधिरेव, दध्ना जुहोतीत्यत्र गुणविधिव्यपदेशश्च विशिष्योपादानभिन्नोपादानसाध्यस्याप्राप्तोपरागविधानादित्येके। दधिहोमयोर्ज्ञातत्वादविधेयत्वे ऽपि होमस्य साधनाधीनतया किमस्य साधनमित्यपेक्षायां ज्ञातयोरपि दधिहोमयोः साध्यसाधनभावमात्ररूपगुण एव दध्ना जुहोतीत्यनेन विधीयते। तदिहाप्युष्णीषे विध्यन्तरालब्धे रूपविशेषाकाङ्क्षायां लौहित्यमात्रं विधीयत इति गुणविधिरेव। ग्रन्थस्तु तादृशलौकिकवाक्यविषयतया नेय इत्यन्ये।

जीर्णेति। ननु जीर्णतामलवत्ताविशिष्टवासोनिषेधस्य विशेष्यवासोनिषेधे ऽप्युपपत्तेर्वस्त्राप्राप्तेर्नग्नस्याप्यन्वयः स्यात् केवलजीर्णताविशिष्टस्य केवलमलवत्ताविशिष्टस्य च वाससो न निषेधः स्यात्। एकैकनिषेधपरत्वे च वाक्यभेदः स्यात्। तस्मात् क्रत्वर्थतया वाससि प्राप्ते ऽपि पुरुषार्थतया जीर्णतामलवत्ताभावविशिष्टवासो विधानमेतत्। अत एव भट्टपादैः—"सवाससा भवितव्य"-मित्यस्याः श्रुतेर्मूलत्वं "न जीर्णमलवद्वासाः स्नातकः स्या"दिति स्मृतौ दर्शितं मूलान्तरकल्पने गौरवात्।

एतदुक्तं भवति । समासपक्षे नञ् उत्तरपदार्थ-निषेधार्थः । तत्रैवास्य सामर्थ्यं वाचकत्वं यतः । असमासपक्षे ऽपि समानाधिकरणयोर्विशेषणविशेष्ययोर्मध्ये विशेषणेनैव नञ् सम्बध्यते तत्रैवास्य सामर्थ्यमन्वय-योग्यता यतः । तदिहोभयथापि सङ्केतबलादन्वय-योग्यताबलाद्वा नञः शब्दपदेन न सम्बन्ध इति ।

---

अत्राहुः । निषेधकविधायकयोर्मूलमूलिभावानुपपत्तेर्न विधायिका श्रुतिर्निषेधश्रुतौ मूलं, तथात्वे ऽप्युभयाभावविशिष्टवासो-विधाने ऽर्थादुभयविशिष्टवासोनिषेधः प्रतीयत इत्यभिप्रायेण ग्रन्थः । असंकीर्णविशिष्टविधिनिषेधोदाहरणं तु "सोमेन यजेत" "नैकः शून्यगृहे स्वपे"दिति ।

समसितेति । ण्यन्ते संज्ञापूर्वकत्वात् वृद्धेरनित्यत्वे रूपम् । समसितं सम्बद्धं परस्परं समासादिति षिञ्बन्धन इत्यस्य वा रूपम् । वाचकत्वमिति । नञ्समस्यमानोत्तरपदार्थेन समऽसम्बेतीतिव्युत्पत्तेरिति भावः ॥

असमासपक्षे ऽपीति । "यजति षुये यजामहं करोति नानुयाजेषु" इतिवद्वामान्वये ऽपि नञोऽसमासः । तत्र च नलोपाभावे ऽपि नञ्समानार्थो"ऽमानोनाः प्रतिषेधवचना" इति कोषादशब्दोऽप्यस्तीति तस्यायं प्रयोगः । न अपदं तु निषेधवाचकपरम् । समानाधिकरणयोरिति । अत्र च विशेषणविशेष्याभ्यां

स्यादेतत्—श्रूयमाणस्य नञः श्रावणपदेनैवास्तु सम्बन्धः शब्दनिषेधस्त्वर्थादापद्यत इत्यत आह। नापीति। [३।११०] श्रूयमाणोऽर्थो येन विना नोपपद्यत स तेनाऽऽक्षिप्यमाणो ऽर्थादापद्यत इत्युच्यते। न चोपपादको विरोधी नाम। स ह्यनुपपादक एवेत्यर्थः।

विरोधमेव द्योतयति। श्रावणत्वेति। [३।११८] ननु कल्पितेनाप्यधिकरणेन निषेधनिरूपणमुपपद्यते तस्य

---

स्ववाचकौ शब्दावुपलक्षितौ तथा च भिन्नप्रवृत्तिनिमित्तयोरश्रावणशब्दपदयोरेकार्थाभिधायकयोरित्यर्थः। यद्वाश्रावणत्वशब्दत्वयोरित्यर्थः; नञ् सम्बध्यत इति तु पदयोरर्थद्वारक एव सम्बन्ध इति विवक्षित्वोच्यते। उभयथापीति। समासासमासयोरित्यर्थः। सङ्केतबलादिति। समासे नञ उत्तरपदार्थान्वयस्यैव व्युत्पत्तेरित्यर्थः। अन्वयेति। अत्र श्रावणत्वविशिष्टपदस्य वाक्यार्थस्य नञन्वयसम्भवे ऽपि स नोक्तः समभिव्याहृतपदार्थान्वये सत्येव वाक्यार्थान्वय इति व्युत्पत्तेः॥

नन्वार्थः शब्दनिषेधो न बाधोदाहरणं प्रतिज्ञातार्थ एव बाधासत्त्वादतः किं तन्निषेधेनेत्यत आह। स्यादेतदिति। अशाब्दे ऽप्यर्थे बाधो भवत्येव अन्यथा स्वार्थानुमाने बाधस्यादोषत्वापत्तौ परार्थानुमानेऽप्यदोषत्वापत्तेरिति भावः। श्रूयमाण इति। वाचनिके ऽर्थे तात्पर्ये सतीति शेषः। तेन "गच्छ गच्छसि चेत्कान्ते"त्यत्र

तुच्छत्वात्। तथा च नासत्त्वाधिकरणत्वयोर्विरोध इत्यत आह। न चेति। [११।१२] एवं व्यवस्थिते वार्त्तिकार्थं घटयति। [११।१३] न च श्रावणत्वमिति। शब्दश्रोत्रयोः सम्बन्धः शब्दग्रहणोपायभूतः। ननु यदि सम्बन्धः कथं वार्त्तिककारो वृत्तिरित्याहेत्यत आह। वृत्तिरिति। [११।१७]

---

वाचनिके तात्पर्याभावेन तद्विरोध्येवागमनं कल्प्यते अत्र तु श्रावणत्वाभावे तात्पर्यमस्त्येव। यद्वा यत्र केवलः पदार्थो धूमोऽस्तीत्यत्रेव कल्पकस्तत्रेयं रीतिः, "गच्छ गच्छसि चे"दित्यत्र तु वाक्यार्थ एव कल्पकोऽतो न व्यभिचारः। चशब्दस्वरसाद्वेत्यन्तरमेवेदमकल्पन इति भ्रमं निवारयति। विरोधमेवेति। ननु चाभावस्य तुच्छत्वेन प्रकृते किमुपपादितं स्याद्येन तद्दूष्यत इत्यत आह। नन्विति। अधिकरणज्ञानमात्रस्यैवाभावबुद्धौ हेतुत्वादित्यर्थः। उत्तरग्रन्थोपयोगार्थमाह। एवमेवेति। एतावतार्थगत्या दिङ्नागमते दूषिते ऽप्यग्रिमवार्त्तिकार्थस्य प्रकृतयोजनार्थमित्यर्थः। ननु श्रावणत्वं श्रोत्रजन्यज्ञाने ऽवान्तरजातिः प्रत्यक्षैवेति तन्निषेधे साध्ये प्रत्यक्षबाधो भवत्येवेत्यत आह। शब्दग्रहणेति। समवायोऽत्र परस्य विवक्षित इत्यर्थः।

प्रायश्चित्तोपदेशादशुचित्वं साक्षादशुचित्वबोधकाभाव एवेति तमाह। नन्विति। यद्यपि प्रायश्चित्तोपदेशात् स्वर्गे प्रत्यवायो

ननु न साक्षाद्वेदे नरशिरःकपालाशौचं श्रूयते प्रत्युत "रुद्रो ह वा महाव्रतं चचार स एव नरशीर्षमुपसन्दधारे"ति विपरीतैव श्रुतिरतः कथमागमविरोध इत्यत आह। मन्वादिभिरिति। [१।१।८]

यद्यप्यस्मिन्नर्थे न साक्षाच्छ्रुतिः प्रतीयते तथापि तन्मूला स्मृतिरेव स्फुटतरा प्रमाणम्। रुद्रो ह वेत्यादि ह्यर्थवादमात्रं नरमेधादौ प्राशस्त्यप्रतिपादनार्थं न शुचितायां प्रमाणं भवतीत्यर्थः। ननूपदर्शितमागमं दृष्ट्वापि कुतः पृच्छतीत्यत आह।

---

ऽनुमीयत इत्यनुमानबाध एव नागमबाधः स्मृतेरप्यनुमानमेव मूलं न श्रुतिः असम्भवन्मूलान्तराया एव स्मृतेर्वेदमूलकत्वात्। तथापि प्रायश्चित्तविधेर्निषेधागमकल्पने लोकसिद्धेष्टसाधनत्वस्य शाब्दत्वम् अनिष्टसाधनत्वञ्च प्रत्यवायेऽपीति प्रत्यवायस्य शाब्दत्वं यत्र वा प्रत्यवायहेतुत्वमागमिकं तदभिप्रायमेतत्। तथापि श्रुतिविरोधेन स्मृतिर्नाऽऽशौचं बोधयतीत्यत आह। रुद्रोहवेति। न च शौचमेव तेनानुमेयम्—

"कृतानि यानि कर्माणि दैवतैर्मुनिभिस्तथा।
नाचरेत्तानि धर्मात्मा श्रुत्वा चापि न कुत्सयेत्"

इति स्मृतेरिति भावः॥

ननूपदर्शितमिति। मन्वादिभिरिति शेषः। अत्रेत्यस्योप-

नास्माकमिति । [२१।२०] अत्र वस्तुनि शब्देतरप्रमाणगोचरे आगमान्तराणामप्रामाण्यादित्यर्थः ।

कुतः पुनरस्य निर्घृणस्य कपालशौचाभिमान इत्यत आह । अविगीता हीति । [२१।२४]

न ह्यागमादेव धर्मादिविनिश्चयोऽपि त्वविगीताद्व्यवहारादपि, स चास्माकमप्यस्ति । न च वाच्यं सार्वत्रिको व्यवहारः प्रमाणं यथा कन्यापरिणयनविधौ पुरन्ध्रीणामाचारः प्रादेशिकस्त्वयमित्याशङ्कोदाहरणं कृतं दाक्षिणात्यानामिवेति ।

उपहासे बीजमाह । श्रुतिस्मृतीति । [२२।२] आङ्क्नैवुकादिक्रिया आम्नायमूला अविगीतवेदार्थानुष्ठातृव्यवहारत्वादग्निहोत्रादिवदिति प्रयोगः ।

---

शौव्यमाह । शब्देतरेति । नास्तिकागमगोचरत्वं निराकरोति । आगमान्तराणामिति ।

उपहास इति । न च कर्तृविशेषनियमतया प्रत्यवायतदभावयोरनयनादव्यवस्थितिरिति वाच्यम् । कापालिकानां विगीताचारस्य प्रत्यवायाभावानुमापकत्वादिति भावः । आङ्क्नैवुकादीति । गोमयमयीं देवतां दूर्वादिभिरभ्यर्च्य शान्तिस्वकल्पनमाङ्क्नैवुकमित्येके । मङ्गलवारे दधिमन्थनमित्यन्ये । प्रतिदिनं तण्डुलमुष्टिं मासमेकं भाण्डे निःक्षिप्य घृतेन तेनापूपमेकं कृत्वा

अथ श्रेयोहेतुतैवास्याः कुतो नावसीयत इत्यत आह। न खल्विति। [१२।५] यद्यपि शक्यत एवैतदापाततस्तथापि निर्मलत्वशङ्काकलङ्कितत्वेनानुष्ठानपर्यन्ततानपायात्ततो मूलानुमानमेव साधीय इत्यर्थः। न वेदानुमाने मूलं-लिङ्गमित्यर्थः।

"किमुक्तं भवति शुचीति" अनेन पुनरुक्ततां परिहरन्नाह। अपि चेति। [१२।१०]

अथ तयोर्विद्वेषादिति। [१२।१७] न च वाच्यं यावति विवादस्तावानेवार्थः पक्षः गोमयादेस्तु शुचित्वमुभय-

---

देवतापूजनमित्यपरे। अविगीतेति। अलौकिकविषयाविगीतशिष्टाचारविषयत्वादित्यर्थः॥

अप्रसक्तनिषेधमाशङ्क्याह। अथेति। वेदमनुमायापि इष्टसाधनत्वज्ञानद्वारा प्रवृत्तिर्जननीया तद्वरं लाघवादिष्टसाधनत्वमेवानुमीयतामित्यर्थः। तथापीति। यद्यपि भोजनादावविवादानुमानपरम्परैव मूलं सम्भवति, तथापि तादृशाचारस्य वेदबोधितत्वव्याप्तत्वाद्वेद एव मूलं कल्प्यते। सर्गादौ च तादृशाचारस्य लिङ्गस्याप्रतीतेरिष्टसाधनत्वाननुमितौ प्रवृत्त्यनुपपत्तिः। न चेश्वरस्य कार्यवशाच्छरीरमधिष्ठितवत आचारस्तदानीं लिङ्गम्, तदा तदाचारकल्पने मानाभावात्। आचारवचसोर्वचनस्यैव लघुत्वेनाचारं विनापि वचनादेवाद्य प्रवर्तनीयप्रवृत्त्युपपत्तेरिति

वादिसिद्धमतस्तावदेव दृष्टान्तयिष्यत इति। यावता तस्यापि शुचित्वं नागमप्रामाण्यमनभ्युपगम्य शक्य-मभ्युपगन्तुमिति। चोदयति। अथेति। [३२।२०]

व्युत्थिताभिसन्धेः प्रश्न इत्यर्थः। अभिसन्धिमाह। न खल्विति। [३२।२०] नन्वेकस्मिन्ननुमानद्वयसमावेशो विरोधश्चास्त्येव तत्कथमभावादित्यत आह। अयमभि-सन्धिरिति। [३२।२२] न हि पूर्वप्रवृत्तेन यदेव तदेव बाध्यते, अनियमप्रसङ्गात्। अत उक्तं तद्बलभाविस्वप्रसिद्ध्यर्थं स्वाश्रयसिद्ध्यर्थं स्वव्यापकसिद्ध्यर्थं च तदपेक्षमित्यर्थः।

स्वव्यापकसाधकेन बाधितमुदाहरति। यथोक्त-मिति। [३२।२४] ज्ञानाकारालीके इति द्विवचनम्। धर्मि-

---

चतुर्थं वक्ष्यामः। मूलशब्दस्य कारणमात्रपरतां निवारयति। लिङ्गमिति॥

पूरणनिवारणीयं दोषमाह। किमुक्तमिति॥

तस्यापीति। समानन्यायतया ऽस्याप्यागमप्रामाण्यमित्यर्थः॥

व्युत्थिताभिसन्धिः—विप्रतिपन्नः। स्वसिद्धार्थमिति। किञ्चित् पूर्वानुमानं स्वस्यैव सिद्धये, किञ्चित्स्वपक्षस्य सिद्धये, किञ्चित् स्वव्यापारस्य सिद्धये अग्रिमानुमानेनापेक्ष्यत इत्यर्थः। स्वव्याप-केति। कृतकत्वस्य व्यापकमनित्यत्वं तस्य साधकं जातिमत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वं तेनेत्यर्थः। एतच्चोपलक्षणम्।

साधकेन बाधितमुदाहरति। एवमिति। [११।२] स्वसाधकेन बाधितं तु यथैकसन्ततिपतितानि ज्ञानानि एककर्त्तृविरहेऽपि प्रतिसन्धानयोग्यानि कार्यकारणभावादित्यपि द्रष्टव्यम्। न ह्यत्र कार्यकारणभाव एकप्रतिपत्तृभावे सिद्ध्यति। क्व? तर्ह्यसमावेशो यदभिसन्धायाह समावेशाभावादित्यत आह। तस्मादिति। [११।४] समस्तरूपोपपत्तिः सामर्थ्यम्। समावेशपक्षेऽवश्यमन्तत एकतरस्यान्यतररूपहान्या भवितव्यम्। अन्यथा तदेकं वस्तूभयात्मकमनुभयात्मकं वा स्यात्। तस्माद्वस्तुतस्तुल्यबलयोर्विरुद्धयोः समा-

---

क्वचित्साध्यग्राहकेण क्वचिद्व्याप्तिग्रहेण च बाध्यते। यथा रसचक्षुर्ग्राह्यो बहिरिन्द्रियवेद्यत्वाद्रूपवदित्यत्र चक्षुष्ट्वं रूपादिषु मध्ये रूपमात्रव्यञ्जकेन्द्रियत्वं तद्ग्राहकमानेन बाधः, पर्वतो निरग्निः धूमवत्त्वादिति व्याप्तिग्राहकेण बाधः। न तु ज्ञानाकारालीके बहिरिति टीकायां बहिःशब्दादि न ज्ञानाकारं न चालीकमित्यर्थः। यद्वा विश्वं न तादृशं किं तु बहिः पारमार्थिकमित्यर्थः। स्वसाधकेन बाधितत्वमुपपादयति। न ह्यत्रेति। कार्यकारणभावेऽप्येकः प्रतिसन्धातैव नियामक इत्यर्थः।

अन्यथेति। विरुद्धव्याप्यत्वे सतीत्यर्थः। उभयात्मकमिति। अनित्योऽयं शब्दो यदि नित्यत्वव्याप्यवान् स्यात् नित्यः स्यादित्यु-

वेशो नास्ति, समाविष्टयोस्तु न वास्तवी तुल्यबल-तेत्यर्थः।

तत्किमिदानीं सत्प्रतिपक्षता नास्त्येवेत्यत आह। न हीति। [११।५] एवमेतद्वस्तुतः सत्प्रतिपक्षता नास्त्येव, किं त्वगृह्यमाणविशेषावस्थायां प्रमानुत्पादकत्वे परस्परप्रतिक्षेपेण, अतः स एव दोषत्वेनोपनिबद्धो मुनि-नेत्यर्थः।

एतदेव वार्त्तिकमुखेन दर्शयति। कस्मात् पुन-रिति॥ [११।६]

अनुमानयोरुक्तरूपयोरन्वयव्यतिरेकसम्पन्नयोरपि समावेशदर्शनात् यथाश्रुतवार्त्तिकमसङ्गतमित्यत आह। दृष्टेति। [११।७] अबाधितविषयेण सह प्रत्यक्षादीनामपि समावेशो नास्ति ततस्तेभ्यो न कश्चिदनुमानस्य विशेष उक्तः स्यात् अतस्तद्रूपपरिहारेणोपलक्षणम्।

ननु यथा ऽगृह्यमाणविशेषावस्थायामनुमानयोः

---

भयात्मकत्वापादनार्थः। अनुभयात्मकं वेति। अनित्योऽयं शब्दो यद्यनित्यत्वव्याप्यवान् स्यात् अनित्यभिन्नः स्यादित्यापादनार्थः। एवमिति। एकत्र धर्मिणि परस्परविरुद्धव्याप्यद्वयसमावेशे वस्तुनो द्वैरूप्यापत्त्या परमार्थतः सत्प्रतिपक्षता नास्त्येव, किं तु विरुद्धार्थ-

सत्प्रतिपक्षत्वं तथा प्रत्यक्षानुमानयोरप्यस्तु, ततः क्व बाध्यबाधकभावः ? । अथ विशेषेण गृहीते प्रत्यक्षमनुमानस्य बाधकमिष्यते ? अनुमानमप्येवमिष्यतां, तथा च परस्परनिरपेक्षयोरनुमानयोरपि बाध्यबाधकभावोऽस्त्वित्याशयवान् चोद्याभिप्रायमाह । प्रत्यक्षमपीति । [३३।१५]

परिहाराभिप्रायमाह । तुल्यबलौ हीति । [३३।१५] प्रत्यक्षं हि नानुमानस्यान्यथासिद्धानन्यथासिद्धौ प्रतीक्षते, किं तु स्वयमनन्यथासिद्धं सदनुमानमास्कन्दत्येव,

ग्राहकयोरन्यतरत्र व्याप्तिभङ्गाभङ्गरूपो विशेषः सन्नपि यदा न गृह्यते तदा तयोः सत्प्रतिपक्षत्वं जायत इत्यर्थः ॥

उपलक्षणताबीजमाह । अनुमानयोरिति । ननु चाऽबाधितत्वमपि कुतो नोपलक्षितमित्यत आह । अबाधितविषयेणेति । बाधकत्वप्रयोजकेनान्यथासिद्धादिनेत्यर्थः ।

ननूपजीव्यमनुमानमपि बाधकमनुमानस्येष्यत एवेत्यत आह । तथा चेति ॥

आस्कन्दत्येवेति । प्रतिबध्नात्येवेत्यर्थः । यथेति । यदि तज्जन्यमौष्ण्यं स्यात् तदौष्ण्यं क्वापि न स्यादेव द्रव्यान्तरे तदभावादिति तदपेक्ष्यमनौष्ण्यमपि न स्यादिति तेजस्यौष्ण्यग्राहकं प्रत्यक्षमनन्यथासिद्धमित्यर्थः । अनौपाधिकतयेति ।

यथोष्णत्वग्राहिणोऽनन्यथासिद्धेन प्रत्यक्षेणानुष्णत्वानुमानमनौपाधिकतया बाधकज्ञानात् पूर्वमनन्यथासिद्धमप्यास्कन्दितम्। तदेतदनयोर्हीनाधिकबलवत्त्वम्। अनुमानं तु स्वयमनन्यथासिद्धमपि सत्प्रतिपक्षानुमानस्यान्यथासिद्धिं प्रतीक्षते। न ह्यनन्यथासिद्धं तत्तेन बाधितुं शक्यते अविशेषात्। तदेतदनयोस्तुल्यबलत्वम्। न चानन्यथासिद्धेनाप्यन्यथासिद्धं बाध्यता-

---

बाधज्ञानात् पूर्वमिति शेषः। तदनन्तरं तदुन्नीतस्य पक्षेतरत्वस्योपाधेः सत्त्वात्। नन्वन्यथासिद्धं परिमाणभेदलिङ्गकमनुमानमपि ज्वालैकत्वग्राहिप्रत्यक्षं बाधत एव प्रत्यक्षविरोधेनानुमानमेव नोदेति। अनुमानविरोधे प्रत्यक्षं भवत्येव सञ्जातबाधस्यापि प्रत्यक्षोदयादिति चेत्। न। ज्वालैकत्वग्राहिप्रत्यक्षविरोधेन तद्भेदानुमानानुत्पत्त्यापत्तेः। तत्र प्रत्यक्षमाभासमिति चेत्। न। अनुमानोत्पत्तेः प्राक् तदनिश्चयात्। ज्वालायां सामान्याभेदसुवर्णपिण्डमुपजीव्य प्रत्यक्षप्रवृत्तिरिति चेत्। न। तस्य व्यक्त्यभेदविषयकत्वेनानुव्यवसीयमानत्वात्। मैवम्। अनुमानेन ज्वालैकत्वग्राहिप्रत्यक्षं न प्रतिबध्यते किं त्वनन्यथासिद्धेन प्रत्यक्षमेवाभासतया ज्ञाप्यते। अनुमानं त्वनन्यथासिद्धप्रत्यक्षविरोधेन नोत्पद्यत एवेत्यर्थात्। अनुमानं त्विति। ननु यदा ज्वालादावनन्यथासिद्धमनुमानं प्रत्यक्षस्यान्यथासिद्धिं नापेक्षते

मिति युक्तं, तस्यान्यथासिद्धत्वेनैव दूषितत्वात्। न च यत्र प्रत्यक्षमनन्यथासिद्धं तत्रानुमानेनावश्यमन्यथा-सिद्धेन भवितव्यम्, उभयोरनन्यथासिद्धौ वस्तु दुस्तरं व्यसनमासादयेत्, ततस्तदपि तेनैव परिभूतं, किं तत्र प्रत्यक्षबाधयेति वाच्यम्। तदन्यथासिद्धेः प्रत्यक्ष-बाधोत्थाप्यत्वादिति विशेषः। तस्माद्यावत् प्रत्यक्षस्या-

---

तदानुमानस्यान्यथासिद्धिं प्रतीक्षत इत्यसम्भवि अन्यथानुमाने सति ज्वालैक्यप्रत्यक्षस्यान्यथासिद्धिस्तदन्यथासिद्धौ च तत्सम्भव इत्य-न्योन्याश्रयः। मैवम्। विपक्षबाधकबलेन नानात्वपरिमाणभेदयो-र्व्याप्तिसिद्धौ परिमाणभेदप्रत्यक्षस्य पक्षे ऽनन्यथासिद्धावनुमानात् प्रागेव ज्वालैक्यप्रत्यक्षस्याभासत्वनिश्चयादिति भावः॥

तस्येति। न चान्यथासिद्धत्वे सत्यपि बाधसङ्करो न दोषायेति वाच्यम्। अन्यथासिद्ध्युपजीवनेन बाधस्य प्रवृत्तौ तदन्यथासिद्धेः। न च यत्रेति। न चेति वाच्यमिति योजना। उभयात्मकं वा स्यादिति व्यसनम्। तेनैव—अन्यथासिद्धेनैव। तदन्यथासिद्धेरिति। तेजोमात्रानुगतत्वे साध्ये अतेजस्त्वस्योपाधिगम्यत्वादित्यर्थः। न चौ-ष्ण्यस्य जलाद्यवृत्तित्वे परिशेषाद्बाधमनुपजीव्यापि तेजसि सिद्धा-वतेजस्त्वस्य साध्यव्यापकत्वं प्रतीयत इति वाच्यम्। ततस्तेजो-वृत्तित्वमात्रसिद्धावपि सकलतेजोवृत्तित्वनिश्चयमन्तरेणातेजस्त्वो-पाधेः साध्यव्यापकत्वाग्रहेण तस्य प्रत्यक्षोपजीवकत्वादिति भावः।

नन्यथासिद्धत्वं नावधार्यते तावत्कालमेव तत्र निर्णयानुदयात् तत्प्रतिपक्षरूपतां प्रतिरूपयति, उत्तरकालं तु किं वराकमनुमानमित्यर्थः। तदिदमुक्तं प्रत्यक्षमनन्यथासिद्धमिति । [११।१७] उपदर्शितप्रकारादन्येन व्यवस्थापयितुमशक्यमित्यर्थः। अन्यप्रकारव्यवस्थापनं च विषयसङ्कोचमात्रेण न बाधकं विना भ्रान्तत्वेनापि, तथा सत्यतिप्रसङ्गात् ॥

"अथोपमाने"त्यादि चोद्यं सम्भावयति । गोसदृश इति ॥ [११।१८]

ननु नोपमानविरुद्धमिति विप्रतिपत्तिरेव सम्प्रतिपत्तिर्नागरिकलोकसम्प्रदायेनेत्यत आह । न भवती-

---

नोभयानुदयः-अनुमित्यनुदयः। प्रत्यक्षस्यानन्यथासिद्धिनिश्चयानुदयो वा । विषयसङ्कोचमात्रेणेति । ज्वालाप्रत्यभिज्ञानादौ जातिविषयकत्वं कल्पात इत्यर्थः। यद्यपि प्रत्यभिज्ञानस्य जातिविषयत्वे कथं सङ्कोचः तस्यैकदेशबाधात्मकत्वात्, व्यक्तिविषयत्वे च तस्य जातिविषयत्वव्यवस्थापनम्, तथाप्यभ्युपगमवादोयम् अन्यत्र सङ्कोचसम्भवे ऽप्यौष्ण्यग्राहिणि प्रत्यक्षे न सङ्कोचो नापि बाधकं विना भ्रमत्वमित्याशयः ॥

तदा तथाभूताविति । यद्यपि प्रत्यक्षागमविरोध एव नोपमानविरोधस्तस्य ताभ्यामनित्यत्वात् । तथाप्यनन्यथासिद्धमप्युप

त्यनुषज्यते। [११।२५] चोद्यवार्त्तिकस्येमिति शेषः। अनन्यथासिद्धप्रत्यक्षागमसमुत्थापितमुपमानमनुमानेन यदि बाध्यते सत्प्रतिपक्ष्यते वा तदा तथाभूतौ प्रत्यक्षागमावेवाबाधितौ सत्प्रतिपक्षितौ वा स्यातां तथा च सति सर्वं समाकुलमापद्येत। तस्माद्यथा ताभ्यामनुमानमपनुद्यते तथा तदुत्थापितफलशरीरेणोपमानेनापीति टीकोपबृंहितस्य वार्त्तिकस्यार्थः॥

( प्रत्यक्षागमाविरुद्धन्यायोपपादनम्। )

---

प्रयोजनस्वरूपेति। [२४।५] भ्रान्तस्याक्षेप इति विवरणफलम्। प्रयोजनव्याख्यानाङ्गमिति [२४।५] "वाद-

---

मानं यद्यनुमानेन बाध्येत तदा तथाभूताविति सत्प्रतिपक्षेत वा तदानन्यथासिद्धावुष्णत्वग्राहिप्रत्यक्षनरास्थ्यशौचप्रतिपादकागमावपि बाधितौ स्याताम्। न चैवं, तथा चोपमानेनापि तथाविधेनानुमानस्य बाध एवेत्यर्थः॥

( प्रत्यक्षागमाविरुद्धन्यायोपपादनम्। )

---

भ्रान्तस्येति। "वादजल्पौ स प्रयोजनौ" इत्यत्र तथैव धर्मितया इति तद्विचार एवायं न प्रयोजनविचार इति भ्रान्तस्येत्यर्थः।

| | | |
|---|---|---|
| Nirukta, (2nd Edition) Vol. I. Fasc. 1 @ Rs. 1-4 ... | Rs. 1 | 4 |
| Nyāyavārtika, Fasc. 2--6 @ /10/ each ... | 3 | 2 |
| Nityācārapaddhatiḥ, Fasc. 1--7 @ /10/ each ... | 4 | 6 |
| Nityācārapradīpa Vol. I. Fasc. 1--8 ; Vol. II, Fasc. 1-4. @ /10/ each ... | 7 | 8 |
| Nyayabindutikā, Fasc. 1 @ /10/ each ... | 0 | 10 |
| *Nyāya Kusumāñjali Prakarana Vol. I, Fasc. 1--3 @ /10/ each ... | 1 | 14 |
| Nyaya Vartika Tatparya Pariśudhi, Fasc. 1-2 @ /10/ each ... | 1 | 4 |
| Nyayasarah ... | 2 | 0 |
| Padumawati, Fasc. 1- 6 @ 2/ each ... | 10 | 0 |
| Prākrita-Paingalam, Fasc. 1--7 @ /10/ each ... | 4 | 6 |
| Parāçara Smṛti, Vol. I, Fasc. 2-8; Vol. II, Fasc. 1--6 ; Vol III, Fasc. 1--6 @ /10/ each ... | 11 | 14 |
| Parāçara, Institutes of (English) @ 1/- each ... | 1 | 0 |
| Parikṣamukha Sutram ... | 1 | 0 |
| Prabandhacintāmaṇi (English) Fasc. 1--3 @ 1/4/ each ... | 3 | 12 |
| Rasarṇavam, Fasc. 1-3 ... | 3 | 12 |
| Raviṣiddhanta Manjari, Fasc. 1 ... | 0 | 10 |
| Saddarsana-Samuccaya, Fasc. 1-2 @ /10/ each ... | 1 | 4 |
| Samaraicca Kaha Fasc. 1-5, @ /10/ each ... | 3 | 2 |
| Sāṃkhya Sūtra Vṛtti, Fasc 1 4 @ /10/ each ... | 2 | 8 |
| Ditto (English) Fasc. 1-3 @ 1/- each ... | 3 | 0 |
| Six Buddhist Nyaya Tracts. ... | 0 | 10 |
| Srāddha Kriyā Kaumudī, Fasc. 1-6 @ /10/ each ... | 3 | 12 |
| Suçruta Saṃhita, Eng ) Fasc. 1 @ 1/- each ... | 1 | 0 |
| Suddhikaumudī, Fasc 1-4 @ /10/ each ... | 2 | 8 |
| Sundaranandam Kavyam ... | 1 | 0 |
| Suryya Siddhanta Fasc. 1-2 @ 1-4 each ... | 2 | 8 |
| Syainika Sastra ... | 1 | 0 |
| *Taittreya Brahmana, Fasc 11-25 @ /10/ each ... | 9 | 6 |
| *Taitterīya Saṃhitā, Fasc. 27--45 @ /10/ each ... | 11 | 14 |
| Tāṇḍya Brāhmaṇa, Fasc 10--19 @ /10/ each ... | 6 | 4 |
| Tantra Vārteka (English) Fasc. 1-10 @ 1/4/ each ... | 12 | 8 |
| *Tattva Cintāmaṇi, Vol I, Fasc 1--9, Vol II, Fasc. 2 10, Vol III, Fasc 1--2, Vol. IV, Fasc. 1, Vol. V, Fasc 1--5, Part IV, Vol II, Fasc. 1-12 @ /10/ each | 23 | 12 |
| Tattva Cintamani Didhiti Vivriti, Vol. I, Fasc, 1-6; Vol. I , Fc, 1, @ /10/ each | 4 | 6 |
| Tattva Cintamani Didhiti Prakas, Fasc 1-5, @ /10/ each ... | 3 | 2 |
| Tattvārthadhigama Sutram, Fasc 1-3 @ /10/ each ... | 1 | 14 |
| Tirthacintamoni, Fasc, 1-3, @ /10/ each ... | 1 | 14 |
| Trikāṇḍa-Maṇḍanam, Fasc 1-3 @ /10/ each ... | 1 | 14 |
| Tul'sī Satsai, Fasc. 1--5 @ /10/ each ... | 3 | 2 |
| *Upamita-bhava-prapañca-kathā, Fasc 1-2, 5-13 @ /10/ each ... | 6 | 14 |
| Uvāsagadasāo, (Text and English) Fasc. 1--6 @ 1/- each ... | 6 | 0 |
| Vallāla Carita, Fasc 1 @ /10/ ... | 0 | 10 |
| Varṣa Kriyā Kaumudī, Fasc 1--6 @ /10/ each ... | 3 | 12 |
| *Vāyu Purāṇa, Vol. I, Fasc. 3--6 ; Vol. II, Fasc 1--7, @ /10/ each ... | 6 | 14 |
| Vidhāna Pārijata, Fasc. 1--8 Vol. II Fasc. I @ /10/ each ... | 5 | 10 |
| Ditto Vol. II, Fasc. 2-5 @ 1/4/ ... | 5 | 0 |
| Vivādaratnākara, Fasc 1--7 @ /10/ each ... | 4 | 6 |
| Vṛhat Svayambhū Purāṇa, Fasc. 1--6 @ /10/ each ... | 3 | 12 |
| Yogasāstra Fasc. 1-3 ... | 3 | 12 |

*Tibetan Series.*

| | | |
|---|---|---|
| Amarkosha ... | 2 | 0 |
| Baudhastotrasangraha, Vol. I ... | 2 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1--4 @ 1/- each ... | 4 | 0 |
| Nyayabindu of Dharmakirti, Fasc. 1 ... | 1 | 0 |
| Pag-Sam S'hi Ṭiñ, Fasc 1--4 @ 1/- each ... | 4 | 0 |
| Rtogs brjod dpag hkhri S'iñ ( Tib & Sans Avadāña Kalpalatā Vol. I, Fasc. 1--10 ; Vol. II, Fasc. 1--10 @ 1/- each ... | 20 | 0 |
| Sher-Phyin, Vol. I, Fasc 1-5 ; Vol. II, Fasc 1-3 ; Vol III, Fasc 1 6, @ 1/ each | 14 | 0 |

*Arabic and Persian Series.*

| | | |
|---|---|---|
| Āmal-i-Salih, or Shah Jahan Namah ... | 2 | 0 |
| Al-Muqaddasi (English) Vol I, Fasc 1--4 @ 1/- each ... | 4 | 0 |
| Āīn-i-Akbarī, Fasc. 1-22 @ 1/8/ each ... | 33 | 0 |
| Ditto ( English ) Vol II, Fasc. 1-5 Vol. III, Fasc 1 5, Index to Vol. II, @ 2/- each ... | 22 | 0 |
| Akbarnāmah, with Index, Fasc 1--37 @ 1/8/ each ... | 55 | 8 |
| Akbarnāmah, English Vol. I, Fasc. 1--8 ; Vol. II, Fasc. 1--7, Vol III, Fasc. 1--2 @ 1/4/ each ... | 21 | 4 |
| Arabic Bibliography, by Dr. A. Sprenger, @ /10/ ... | 0 | 10 |
| Conquest of Syria, Fasc. 1-9 @ /10/ each ... | 5 | 10 |
| Catalogue of Arabic Books and Manuscripts, 1-2 @ 1/- each ... | 2 | 0 |

*The other Fasciculi of these works are out of stock and complete copies cannot

Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc 1-3 @ 1/ each ... Rs. 3 0
Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1-21 @ 1/8/ each 31 8
Faras Nama, of Hashini ... ... ... ... ... 1 0
Ditto of Zabardast Khan ... ... ... ... 1 0
Farnang-i-Rashidi, Fasc. 1-14 @ 1/8/ each ... ... ... 21 0
Fihrist-i-Tūsi, or, Tūsy's list of Shy'ah Books, Fasc. 1-4 @ 1/- each .. 4 0
Gulriz ... ... ... ... ... 2 0
Hadiqatu'l-Haqiqat, (Text & Eng) ... ... ... ... 3 8
History of Gujarat ... ... ... ... ... 1 0
Haft Asmān, History of the Persian Masnawi, Fasc. 1 @ /12/ each ... 0 12
Hisātory of the Caliphs, (English) Fasc. 1-6 @ 1/4/ each ... 7 8
Iqālnamah-i-Jahāngīrī, Fasc 1-3 @ /10/ each ... ... ... 1 14
Isābah, with Supplement, 51 Fasc. @ 1/- each ... ... ... 51 0
Ma'āsir-i-Rahīmī, Part I, Fasc 1-8 @ 2/ each ... .. 6 0
Maa'āsir-ul-Umarā, Vol. I, Fasc 1-9, Vol. II, Fasc. 1-9; Vol III, 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. II, Fasc 10-12; Index to Vol. III, Fasc. 11-12 @ /1/ each ... ... ... 35 0
Ditto (Eng) Vol. I, Fasc. 1-2, @ 1/4/ each ... 2 8
Memoirs of Tahmasp ... ... 1 0
Marhamu 'L Ilali'L-Mu'Dila Fasc 1-2 ... ... ... ... 2 0
Muntakhabu-t-Tawārikh, Fasc 1-15 @ /10/ each ... .. 9 6
Ditto (English) Vol. I, Fasc 1-7; Vol II, Fasc. 1-5 and 3 Indexes; Vol III, Fasc 1 @ 1/ each ... 16 0
Muntakhabu-l-Lubāb, Fasc. 1-19 @ /10/ each ... .. ... 11 14
Ditto Part 3, Fasc 1-2 @ 1/- each ... ... ... 1 0
Nukhbatu-l-Fikr, Fasc. 1 @ /10/ .. ... ... 0 10
Nizāmi's Khiradnāmah-i-Iskandari, Fasc 1-2 @ /12/ each ... ... 1 8
Persian and Turki Divans of Bayram Khan, Khan Khanan ... 1 0
Qawaninu 's-Sayyad of Khuda Yar Khan 'Abbasi, edited in the original Persian with English notes by Lieut. Col D. C. Phillott ... ... 5 0
Riyāzu-s-Salātīn, Fasc 1-5 @ /10/ each .. ... ... 3 2
Ditto (English) Fasc. 1-5 @ 1/ ... ... ... 5 0
Shah Alam Nama ... ... ... ... ... 1 14
Tadhkira-i-khushnavīsān ... ... ... .. ... 1 0
Tabaqāt-i-Nāsiri, (English), Fasc. 1-14 @ 1/- each ... ... 14 0
Ditto Index .. .. ... 1 0
Tārīkh-i-Fīrūz Shahi of Ziyāu-d-dīn Barni Fasc 1-7 @ /10/ each . 4 6
Tārīkh-i-Fīrūzshāhi, of Shams-i-Sirāj Aif, Fasc 1-6 @ /10/ each ... 3 12
Ten Ancient Arabic Poems, Fasc 1-2 @ 1/8/ each . ... 3 0
The Mabani 'L Lughat: A Grammar of the Turki Language in Persian 1 8
Tuzuk-i-Jahāngīrī, (Eng) Fasc. 1 @ 1/ ... ... ... ... 1 0
Wis-o-Rāmin, Fasc 1-5 @ /10/ each ... ... ... 3 2
Zafarnāmah, Vol. I, Fasc. 1-9, Vol. II, Fasc 1-8 @ /10/ each ... ... 10 10

## ASIATIC SOCIETY'S PUBLICATIONS.

1. ASIATIC RESEARCHES. Vols. XX @ 10/ each .. 20 0
2. PROCEEDINGS of the Asiatic Society from 1875 to 1899 (1900 to 1904 are out of stock) @ /8/ per No.
3. JOURNAL of the Asiatic Society for 1875 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7), 1901 (7), 1902 (9), 1903 (8), 1904 (16), @ 1/8 per No. to Members and @ 2/ per No to Non-Members

*N. B.—The figures enclosed in brakets give the number of Nos in each Volume.*

4. Journal and Proceedings, N. S., 1905, to date, (Nos. 1-4 of 1905 are out of stock), @ 1-8 per No. to Members and Rs. 2 per No. to Non-Members.
5. Memoirs, 1905, to date. Price varies from number to number. Discount of 25% to Members
6. Centenary Review of the Researches of the Society from 1784-1883 ... 3 0
7. Catalogue of the Library of the Asiatic Society, Bengal, 1910, ... 8 0
8. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I-III, with 8 coloured Plates, 4to. @ 6/ each ... ... 18 0
9. Kaçmiraçabdāmrta, Parts I & II @ 1/8/ ... ... 3 0
10. Persian Translation of Haji Baba of Ispahan, by Haji Shaikh Ahmad-i-Kirmasi, and edited with notes by Major D. C. Phillott. ... 10 0

Notices of Sanskrit Manuscripts, Fasc. 1-34 @ 1/ each ... ... 34 0
Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... 5 0

*N.B.*—All Cheques, Money Orders, &c. must be made payable to the "Treasurer Asiatic Society," only.

BIBLIOTHECA INDICA:

# A COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE ASIATIC SOCIETY OF BENGAL.

NEW SERIES NO. 1364.




# न्यायवार्त्तिकतात्पर्यपरिशुद्धिः

श्रीमदुदयनाचार्यविरचिता ।

श्रीवर्द्धमानोपाध्यायविरचित-न्यायनिबन्धप्रकाशाभिध-व्याख्यासहिता ।

# NYĀYA-VĀRTTIKA-TĀTPARYA-PARIŚUDDHI

BY UDAYANĀCHĀRYA

With a gloss called Nyāya-nibandha-prakáśa by Varddhamānopādhyāya

EDITED BY

Pandit Vindhyeśvarí Prasád Dvivedin

*Librarian Govt. Sanskrit College, Benares.*

AND

Pandit Lakshamana Śástri Drávida

*Professor, Govt. Sanskrit College Calcutta.*

FASCICULUS IV.

CALCUTTA:

PRINTED BY UPENDRA NATHA CHAKRAVARTI, AT THE SANSKRIT PRESS,
No. 5, Nandakumar Chawdhury's 2nd Lane.
AND PUBLISHED BY THE
ASIATIC SOCIETY, 1 PARK STREET.

1914.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL.

No. 1, PARK STREET, CACUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MR. BERNARD QUARITCH, 11, GRAFTON STREET, NEW BOND STREET, LONDON, W., AND MR. OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

* *Complete copies of those works marked with an asterisk * cannot be supplied.—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

*Sanskrit Series*

| | | Rs. | |
|---|---|---|---|
| Advaitachintā Kaustubha, Fasc. 1-3 @ /10/ each ... | ... | 1 | 14 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5; Vol. II, Fasc 1-5; Vol. III, Fasc. 1-5, Vol. IV, Fasc. 1-8 @ /10/ each | ... | 14 | 6 |
| Aitereya Lochana. ... ... ... | ... | 2 | 0 |
| Amarkosha, Fasc 1 ... ... .. ... | . | 2 | 0 |
| *Aṇu Bhāṣhya, Fasc. 2-5 @ /10/ each ... | ... | 2 | 8 |
| Anumana Didhiti Prasarini, Fasc. 1 @ /10/- .. | ... | 1 | 4 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1-6 @ /10/ each ... | ... | 3 | 12 |
| Atmatattaviveka, Fasc I. ... ... ... | .. | 0 | 10 |
| Açvavaidyaka, Fasc. 1-5 @ /10/ each . ... | ... | 3 | 2 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 1-10; Vol II, Fasc. 1-10 @ 1/ each .. . | . | 20 | 0 |
| Bālam Bhaṭṭī, Vol. I, Fasc 1-2, Vol II, Fasc. 1 @ /10/ each | ... | 1 | 14 |
| Baudhāyana S'rauta Sūtra, Fasc. 1-3 Vol. II, Fasc 1-5 @ /10/ each | ... | 5 | 0 |
| Bhāsavritty ... | ... | 0 | 10 |
| Bhāṭṭa Dīpikā Vol. I, Fasc. 1-6: Vol. 2, Fasc. 1, @ /10 each | ... | 4 | 6 |
| Bauddhastotrasangraha ... ... ... | ... | 2 | 0 |
| Bṛhaddēvatā Fasc. 1-4 @ /10/ each . ... ... | ... | 2 | 8 |
| Bṛhaddharma Purāṇa Fasc 1-6 @ /10 each ... ... | ... | 3 | 12 |
| Bodhisaryāvatāra of Çāntideva, Fasc. 1-6 @ /10/ each ... | ... | 3 | 12 |
| Cri Cantinatha Charita, Fasc. 1-3 ... ... . | ... | 1 | 14 |
| Çatadūṣaṇī, Fasc. 1-2 @ /10/ each . | ... | 1 | 4 |
| Catalogue of Sanskrit Books and MSS, Fasc 1-4 @ 2 each .. | . | 8 | 0 |
| Çatapatha Brāhmaṇa, Vol I, Fasc. 1-7, Vol II, Fasc. 1-5, Vol. III, Fasc. 1-7 Vol. V, Fasc. 1-4 @ /10/ each .. | . | 14 | 6 |
| Ditto Vol. VI, Fasc. 1-3 @ 1/4/ each ... | ... | 3 | 2 |
| Ditto Vol. VII, Fasc. 1-5 @ /10/ . .. | ... | 3 | 2 |
| Ditto Vol. IX, Fasc 1-2 ... .. | ... | 1 | 4 |
| Çatasāhasrikā Prajñāpāramitā Part, I, Fasc 1-17 @ /10/ each .. | ... | 10 | 10 |
| *Caturvarga Chintāmaṇi, Vol. II, Fasc. 1-25; Vol. III. Part I, Fasc. 1-18. Part II, Fasc. 1-10 Vol. IV. Fasc 1-6 @ /10/ each | ... | 36 | 14 |
| Ditto Vol. IV, Fasc. 7-8, @ 1/4/ each .. | ... | 2 | 8 |
| Ditto Vol. IV, Fasc. 9-10 @ /10/ ... .. | ... | 1 | 4 |
| Çlockavartika, (English) Fasc 1-7 @ 1/4/ each . | ... | 8 | 12 |
| *Çrauta Sūtra of Çānkhāyana, Vol. I, Fasc 1-7; Vol. II, Fasc 1-4; Vol. III, Fasc. 1-4; Vol 4, Fasc. 1 @ /10/ each ... | ... | 10 | 0 |
| Çrī Bhāshyam, Fasc 1-3 @ /10/ each ... ... .. | ... | 1 | 14 |
| Dāna Kriyā Kaumudī, Fasc 1-2 @ /10/ each . .. | ... | 1 | 4 |
| Gadadhara Paddhati Kālasāra Vol. I, Fasc 1-7 @ /10/ each .. | ... | 4 | 6 |
| Ditto Āchārasārah Vol. II, Fasc. 1-4 @ /10/ each ... | ... | 3 | 2 |
| Gobhiliya Grihya Sutra, Vol I @ /10/ each ... .. | ... | 3 | 2 |
| Ditto Vol II. Fasc. 1-2 @ 1/4/ each ... .. | ... | 2 | 8 |
| Ditto (Appendix) Gobhila Parisista ... ... | ... | 2 | 0 |
| Ditto Grihya Sangraha ... ... ... | ... | 0 | 10 |
| Haralata ... .. ... ... | ... | 1 | 14 |
| Karmapradiph, Fasc. I ... ... ... | ... | 1 | 4 |
| Kāla Viveka, Fasc. 1-7 @ /10/ each ... ... ... | ... | 4 | 6 |
| Kātantra, Fasc 1-6 @ /12/ each ... ... .. | ... | 4 | 8 |
| *Kūrma Purāṇa, Fasc 1-9 @ /10/ each ... ... .. | ... | 5 | 10 |
| Kiranavali, Fasc. 1-2 @ /10/ each .. ... ... | ... | 1 | 4 |
| Madana Pārijāta, Fasc. 1-11 @ /10/ each .. ... | ... | 6 | 14 |
| Mahā-bhāṣya-pradīpōdyōta, Vol I, Fasc 1-9; Vol. II, Fasc. 1-12 Vol. III, Fasc. 1-10 @ /10/ each | | | |
| Ditto Vol. IV, fasc. 1 @ /4 ... ... ... | ... | 19 | 6 |
| Manutīkā Sangraha, Fasc. 1-3 @ /10/ each ... .. | ... | 2 | 8 |
| Mārkaṇḍēya Purāṇa, (English) Fasc. 1-9 @ 1/- each ... | ... | 1 | 14 |
| *Mīmāṃsā Darçana, Fasc. 10-19 @ /10/ each ... | ... | 9 | 0 |

जल्पौ सप्रयोजना"विति भाष्ये यद्यपि प्रयोजनमङ्ग-तया श्रूयते तथाप्यङ्गि प्रत्येतव्यं, तेनायमर्थो भाष्यस्य, प्रयोजनं तावद्वादजल्पौ व्याप्नोति वितण्डां तु व्याप्नोति न वेति चिन्त्यत इति विवरणार्थः।

ननु वादजल्पयोः प्रयोजनवत्त्वसिद्धौ वितण्डाया-स्तच्चिन्त्येतापि, तयोरेव तु प्रयोजनवत्त्वं केन भाष्येण प्रतिपाद्यत इत्यत आह। तत्रशब्दार्थमिति। [१४।६] वक्ष्यति हि "पृथगुपदिष्ट उपलक्षणार्थमुपलक्षितेन व्यवहारस्तत्त्वज्ञानार्थं भविष्यती"ति, स च व्यवहारो हेत्वाभासेभ्यो हेतोर्विवेचनलक्षणोऽवान्तरप्रयोजनमपि असाधारणतयेह तत्रशब्देन भाष्यकारस्य विवक्षित-मतस्तदेव वार्त्तिककृता व्याख्यातमित्यर्थः।

ननु तथापि तत्र-न्याये विवेचयितव्ये इति युक्तं

---

ननु "वादजल्पौ सप्रयोजना"विति भाष्यात्तयोरेव धर्मित्वं विचारे प्रतीयते तत्कुतो भ्रान्तत्वमाचेमुरित्यत आह। वादजल्पाविति।

अङ्ग-विशेषणमङ्गि-विशेष्यम्। ननु वितण्डायाः प्रयोजनवत्त्व-विचारे वादजल्पयोः प्रयोजनोपन्यासोऽसङ्गत इत्यत आह। नन्विति। तथापि भाष्यकृता तयोस्तत्त्वनिर्णयविजयफलत्वमुक्तं न न्यायतदाभासविवेचनफलत्वमिति, तदभिधानमसङ्गतमित्यत आह। भाष्यकार इति शेषः। अवान्तरेति। तत्त्वनिर्णय-

वक्तुं, न हि न्यायाभास एव विवेकप्रधानमित्यत आह । न्यायाभास इति तु सन्निधानादिति । [३४।८]

तदनेन विचारविषयो विविच्य दर्शितः । परीक्षा-पूर्वरूपं संशयं दर्शयितुं तत्कारणतया व्याख्यातृविप्रति-पत्तिमाह । प्रतिपत्तेति । [३४।१२] परीक्षायाः प्रयोजन-माह । तत्र यदीति । [३४।१६] पूर्वपक्षः "तत्र केचि"-दिति । [३४।१८] सिद्धान्तः-परपक्षसाधनेति । [३४।२४]

यद्यपि परपक्षदूषणेनापि प्रयोजनेन वितण्डायाः प्रयोजनवत्त्वं सिद्ध्यति "यमर्थमधिकृत्य प्रवर्त्तते तत्प्रयो-जन"मिति (१) वचनात् । यदि च परपक्षदूषणमपि नाधिकुर्य्यात् तदा वैतण्डिक एव न स्यात्, तथाप्येत-देव स्वयं किञ्चिदप्यनधिगच्छतो न स्यादित्यतः पारि-शेष्यादपि स्वपक्षसिद्धिमभिसन्दधानस्यैव प्रवृत्तिर्युक्ते-त्याशयः ।

---

विजयापेक्षयेत्यर्थः । सन्निधानादितीति । न्यायतदाभासयोरित्यत्र न्यायाभासस्यैव सन्निहितत्वादित्यर्थः । विचारस्य पञ्चाङ्गानि क्रमेण दर्शयति । तदनेनेति ।

अतः पारिशेष्यादपीति । यद्यपि स्वपक्षसिद्धिमुद्दिश्य प्रवृत्तौ

---

(१) गौ० सू० १अ० १आ० २४सू० ।

..ननु नास्त्येवासौ वादी यः किञ्चिदपि नाभ्युपगच्छेत् अन्ततो नञर्थस्यैवाभ्युपगमात्, तदनभ्युपगमे तु किञ्चिदपि नाभ्युपगच्छामीत्येतदपि न ब्रूयात्, तस्मात्किमनेनासदुद्भावनेनेत्यत आह। नास्तिको हीति। [१४।२७] नास्तिको-माध्यमिकादिः ॥

अनेन हि परपक्षो नाभ्युपगम्यते, न पुनः परपक्षप्रतिषेधोऽभ्युपगम्यत इत्यर्थः। तदिदमुक्तं परपक्षनिषेधमात्रप्रयुक्तः प्रवर्त्तत इति। [१४।२८]

तथाहि—नेदं जगदस्ति बाध्यमानत्वात्, नापि नास्ति प्रतीयमानत्त्वात्। नापि सदसद्रूपम् विरोधात्। नाप्यनुभयरूपं विरोधादेव, प्रतीतेश्चेति।

---

वैतण्डिकत्वव्याघातः स्वपक्षसिद्धिपरपक्षदूषणोद्देश्यकथाया जल्पत्वात्, तथापि परपक्षो ऽनेन दूषित इति मध्यस्थावगमस्यैव स्वपक्षस्योद्देश्यत्वमिति भावः। एतच्च प्रमाणाङ्गीकर्तृवैतण्डिकमधिकृत्योक्तं, माध्यमकादीन् प्रत्यग्रे वक्ष्यति।

ननु परपक्षानभ्युपगमप्रस्तावे प्रमेयमात्रदूषणो-द्भावनमसङ्गतमित्यत आह। नन्विति। नास्तिकोऽपि चार्वाकः स्वपक्षं भूतचैतन्याद्यभ्युपगच्छत्येवेत्यतो विशिनष्टि। माध्यमिकादिरिति। किमपि यो न मन्यते स नास्तिक उक्त इत्यर्थः।

दोषं निरस्यति। अनेन हीति। परपक्षनिषेधानभ्युपगमे ऽपि

ननु न हि यदेव प्रत्येति तदेवाभ्युपगच्छति तथा सति प्रतिवादिवचनार्थः प्रतीतश्चेदभ्युपगतः स्यादिति मतानुज्ञा निग्रहस्थानम्, अप्रतीतश्चेदज्ञानं निग्रहस्थानमित्यायातमित्यत आह। प्रतिपत्तिरभ्युपगमः। [३५।४] इह विवक्षित इति शेषः। तथाप्यभ्युपगमविषयत्वादेव न पक्षस्तस्य ज्ञाप्यत्वादित्यत आह। यद्यपीति। ३५।४] तन्नान्तरीयकत्वादिति। [३५।४] अभ्युपगमनान्तरीयकत्वात् ज्ञाप्यतायाः पक्षशब्देन सिद्धा-

---

तद्व्यवहारस्तज्ज्ञानमात्रात्, ज्ञानव्यवहारोऽपि तज्ज्ञानमात्रादिति, न किञ्चिदपि भक्त्वेनाभ्युपगम्यत इत्यर्थः॥

सामान्यस्य विशेषपरत्वे हेतुमाह। ननु न हीति।

मतानुज्ञेति। यद्यपि परस्यानिष्टप्रसिञ्जनिष्टापादनं मतानुज्ञा न परपक्षाभ्युपगममात्रम् अन्यथा सिद्धसाधनमपि मतानुज्ञैव स्यात्। तथापि स्वसाधने परेण यन्मतं दूषणमुद्भावितं तस्य याऽनुज्ञा स्वीकारः तया हेतुभूतया यन्निग्रहस्थानं विरोधः स एव दूषणमित्यर्थः। प्रतिपत्त्यभ्युपगमशब्दयोः पर्यायत्वभ्रमं निवारयति। इहेति। सामान्यशब्दोऽत्र विशेषपरतयोक्त इति भावः।

ननु ज्ञाप्यस्यैव पक्षत्वे प्रकृते किं दूषणमित्यत आह। तथापीति। तच्छब्देन ज्ञाप्यपरामर्शभ्रमं निराकरोति। तन्नान्तरीयकत्वादिति। तथापि पक्षशब्देन कथं चतुर्वर्ग इत्यत आह।

गोचरस्य दृष्टान्तत्वादित्यव्याप्तिः। ननु तथाप्यतिव्याप्ति-रेवेत्यत आह। अत्र चेति। [२५।२६]

सम्मुग्धवार्त्तिकं विवेचयति। यत्तेषु तेष्विति। [२६।१]

अथ लक्षणसूत्रव्याघात एव कस्मान्न भवति यावता तदपि प्रत्यक्षाप्रत्यक्षसाधारणमित्यत आह। न तूदा-हरणेति। [२६।२] साधारणं विशेषविषयतयापि शक्यं व्याख्यातुमित्यर्थः॥

तत्किमिदानीं भाष्यमलग्नकमेवेत्यत आह। तस्मा-दिति। [२६।४] ननु अनुमानात्को ऽपरो न्यायो येना-नुमानाश्रयतामुक्त्वापि न्यायाश्रयतां दृष्टान्तस्य पृथगाह भाष्यकारः, वार्त्तिककारोऽपि तथैवानुमन्यत इत्यत आह। न्यायस्य पञ्चावयवात्मकस्येति। [२६।६] तथा-प्याश्रयत्वं संयोगसमवायाभ्यां दृष्टान्तस्य न घटते वाक्यस्याऽऽकाशाश्रयत्वादित्यत उक्तं मूलमिति। [२६।७] तथाप्यनुमानाश्रयत्वं दृष्टान्तस्यासङ्गतं लिङ्गस्य पक्षाश्रय-त्वात् ज्ञानस्य चाऽऽत्माश्रयत्वात्, अत उक्तमनुमान-

---

रपि दृष्टान्तत्वादित्यर्थः। य एवं स दृष्टान्त इति पक्षे दोषमाह। नन्विति। मुख्यार्थत्यागे निमित्तमाह। तथापीति। अनुमान-निमित्तत्वमाहेतीति।

निमित्तत्वमाहेति। "पूर्वं प्रत्यक्षदृष्ट"मिति यथाश्रुतं व्याकुलयतीत्यत उक्तं दृष्टान्तेति। [२६।८]

एवं च सत्यनुमाननिमित्तत्वात्पक्षस्यापि पृथक् विधानं स्यादिति न चोद्यं, सिद्धान्ताभिधानेनैव गतार्थत्वादिति। ननु शब्दे दृष्टान्तापेक्षा नास्त्येव "अग्निष्टोमेन यजेत स्वर्गकाम" इत्यादौ तमन्तरेणैव वाक्यार्थप्रतीतेः इत्यत आह। सम्बन्धग्रहणविषय इति। [२६।१०] सम्बन्धग्रहणविषयतामात्रेण दृष्टान्तत्वं विवक्षित्वेदमुक्तं, न पुनर्व्याप्तिलक्षणसम्बन्धविशेषग्रहणविषयतये-

---

ननु लिङ्गपरामर्शस्यानुमितेर्वा न दृष्टान्तजन्यत्वमिति व्याप्तिग्राहकत्वेन दृष्टान्तस्यानुमितिजनकत्वं वाच्यम्। तच्चायुक्तम्। अनागतस्यापि दृष्टान्तत्वात्। उदाहरणवाक्यादेव व्याप्तिग्रहसम्भवे दृष्टान्तानुपयोगाच्च। न च दृष्टान्तज्ञानस्य तन्निमित्तत्वं शब्दोपदर्शितव्याप्तौ तदसम्भवात्।

अत्राहुः। अनुमित्यनुकूलव्यापकताज्ञानस्य साध्यसाधनसामानाधिकरण्याधिष्ठानज्ञानजन्यत्वम् उदाहरणवाक्यात् परार्थानुमाने तत्सम्भवेऽपि स्वार्थानुमाने तदसम्भव इति तद्द्वारा दृष्टान्तज्ञानस्योपयोगः। यद्वा प्रत्यक्षेण व्याप्तौ गृह्यमाणायां दृष्टान्तज्ञाने सत्येव व्याप्तिर्गृह्यते। सामान्यशब्दस्य विशेषपरत्वव्याख्याने हेतुमाह। पूर्वं प्रत्यक्षदृष्टमितीति। सिद्धान्ताभिधानेनेति।

त्यभिप्रायः। यत्तु तत्प्रामाण्ये तद्विषयगोचरानुमाना-भिप्रायेण दृष्टान्तापेक्षा आगमस्याप्यस्तीति कैश्चि-द्व्याख्यातं तत्पूर्वं ज्ञात्वाऽर्थं परस्मा आचष्ट इति वदता वार्त्तिककृतैवापास्तम्, अतस्तदुपेक्षितवानिति॥

( इति दृष्टान्तनिरूपणम्। )

---

ननु दृष्टान्तोऽपि सिद्धान्ताभिधानेनैव प्राप्त इति सोऽपि न वाच्यः। न च धर्मिलाभे ऽपि लक्षणालाभ इति वाच्यम्। पक्षस्यापि लक्षणा-लाभात्। न च प्रतिज्ञोपनयननिगमनलक्षणैरर्थतस्तल्लक्षणं प्राप्त-मिति वाच्यम्। उदाहरणलक्षणेन दृष्टान्तलक्षणस्याप्याक्षेप-लभ्यत्वात्। अत्र पक्षस्यानुमान एवोपयोगो दृष्टान्तस्य तु माना-न्तरे ऽपीति कथनाय पृथगभिधानं दृष्टान्तस्य तु तत एव शब्द-मूलकतापि दर्शितेत्येके। उक्तं प्रयोजनानुसरणं न तु प्रयोजन-मस्तीत्येवाभिधानमतिप्रसङ्गादित्यन्ये। पक्षत्वस्याव्यतिरेकितया लक्षणाभाव इत्यपरे।

तत्पूर्वमिति। शब्दप्रामाण्यानुमाने दृष्टान्तापेक्षायां शब्दे किमायातमित्यपि भावः।

( इति दृष्टान्तनिरूपणम्। )

अत्रार्थाभ्युपगमयोर्गुणप्रधानभावस्य विवक्षातन्त्रत्वादर्थाभ्युपगमोऽभ्युपगम्यमानो वाऽर्थः सिद्धान्तस्तेन सूत्रभाष्यवार्त्तिकटीकासु मिथो न विरोधः। इदमित्थम्भूतशब्दयोर्विशेषणविशेष्यभावभ्रमं निवारयति। इदमितीति। [३६।१५] न तु पुरुषविशेषे व्यवस्थापयतीति। [३६।२०] व्यवस्थाशब्दो न पुरुषविशेषाभ्युपगमनियममाह, किं तर्ह्यनभ्युपगमसमुच्चयं निराकुर्वन् स्वरूपनियममित्यर्थः। ननु वादादिप्रवृत्त्यर्थं प्रतितन्त्रसिद्धान्त एवोपयुज्यते तत् किमपरैरित्यत

---

अर्थाभ्युपगम इति। ननु वस्तुनि विकल्पाभाव एकस्य विरुद्धद्वयानात्मकत्वात्। अर्थस्याभ्युपगमानियतत्वादभ्युपगमस्य चार्थनियतत्वादभ्युपगमेनार्थोऽपि लभ्यत इत्यभ्युपगमस्यैव सिद्धान्तत्वाच्च। मैवम्। अभ्युपगमस्याप्यर्थनिरूप्यत्वाद्विनिगमकाभावात् द्वयोरपि तुल्यत्वाद्वाच्यतया सिद्धान्तपदं नानार्थम्। सूत्रं-सिद्धान्तलक्षणसूत्रम्, अत्र तथा सूत्राभावात्। ननु पुरुषविशेषेऽभ्युपगमव्यवस्थितिः किमभ्युपगमव्यवस्थितिरेव न भवति येन न पुरुषविशेषे व्यवस्थापयतीत्युक्तमित्यत आह। व्यवस्थाशब्द इति। स्वरूपनियममिति। इदमस्त्येवेत्येवम्भूतमेवेत्यर्थः। ननु वादादिप्रवृत्त्यर्थं सिद्धान्त इत्युक्त प्रतितन्त्रादिसिद्धान्तप्रवृत्त्यर्थं सर्वतन्त्रसिद्धान्त इति विरुद्धमित्यत आह। ननु वादादीति। नन्वेकसिद्धान्तपरि-

आह। तत्रेति। [३६।२६] ननु यत एव सर्वतन्त्रसिद्धान्तो न विप्रतिपत्तिविषयः अत एव न वादादिप्रवृत्तिहेतुरित्यत आह। तथा हीति। [३६।२७]

यद्यपि स्वरूपेण सर्वतन्त्रसिद्धान्तो न वादादिप्रवृत्त्यङ्गं तथापि प्रतितन्त्रादिसिद्धान्तोत्थापनद्वारा न्यायाश्रयतया चोपयुज्येत इत्यर्थः। एतेनैव प्रतितन्त्रसिद्धान्तप्रयोजनं कृलतः प्रकटीकृतम्। किमाश्रयश्च न्यायः स्यादसति सर्वतन्त्रसिद्धान्त इति शेषः। अधिकरणसिद्धान्तप्रयोजनमाह। तथेति। [३६।२८] साध्यसामान्यव्याप्तं साधनसामान्यमिति साधनविशेषात्साध्यविशेषः कथं गम्येतेति योजना।

अयमर्थः अधिकरणसिद्धान्तेन हि फलेन विषयेण वाऽपक्षधर्मता फलवती विषयवती वा स्यात् तदभावे

---

ग्रहे ऽपि वैयाकरणानामिव पुरुषशक्तिनिरूपणार्थमपि कथा भवत्येव। मैवम्। द्वयोरेकसिद्धान्तपरिग्रहे कथालक्षणाभावेन तात्कालिकविवक्षार्थाभिधानस्य तत्रापि सत्त्वात्॥

एतेनेति। सिद्धान्तस्य न्यायाश्रयत्वव्युत्पादनेनेत्यर्थः। ननु सर्वतन्त्रसिद्धान्तप्रयोजने वक्तव्ये तत्सिद्धस्य धर्मिणः प्रयोजनाभिधानमयुक्तमित्यत आह। असतीति। सर्वतन्त्रसिद्धान्तधर्मिप्रयो-

तु सा निष्फला निर्विषया वा, तथा च व्याप्तिः सामान्यविषया सती केवला सामान्यमात्रमुपनीय कथं पक्षे व्यवस्थापयेत् । अव्यवस्थाप्य च कथं कृतार्था स्यात् तथा चानुमानमात्रमुच्छिद्येत । एवं च क्व न्यायः क्व वादादय इति । तस्मादधिकरणसिद्धान्तोऽपि पक्ष-

---

जनाभिधानेन तत्साधकस्य तस्यैव प्रयोजनमुक्तमित्यर्थः । ननु सर्वतन्त्रसिद्धान्तसिद्धो धर्मो यदि न स्यात् तदा किमाश्रयो न्यायः स्यादिति पूर्वानुषङ्गेणैवोपपत्तौ शेषो न युक्तः अन्यथा कथं चेत्यादिपूर्वफक्किकायामपि शेषो देयः स्यात् । मैवम् । अनुवृत्ते-रुपस्थिताध्याहाररूपतयाऽध्याहारसामान्यविवक्षया शेषपदेनाध्या-हाराभिधानात् साधनविशेषात् पक्षवृत्तेः साध्यविशेषः पक्षवृत्ति-रित्यर्थः । फलेन अनुमितिरूपेणेत्यर्थः । विषयेण साध्यरूपेणेत्यर्थः । व्याप्तपक्षधर्मादि लिङ्गात्प्रसिद्धसाधसहकृतादनुमितिर्भवन्ती यावत् पक्षतावच्छेदकसमानाधिकरणमप्रसिद्धं साध्यं यदि विषयी कुर्यात् तदा अनुमितिसामग्र्येवापर्यवसन्ना सती निष्फला निर्विषया चानु-मितिः स्यात्पक्षसाध्यसंसर्गसमानसंवित्संवेद्यार्थस्यैवाधिकरणसिद्धा-न्तत्वादिति भावः ।

तथा चेति । व्यक्तिसाधकानुमानमात्रमित्यर्थः । गोत्वादिसाध-कानुमानेषु पक्षधर्मताबललभ्यविशेषाभावादधिकरणसिद्धान्तसिद्ध-साध्यविशेषसिद्धया व्याप्तेरपि फलवत्त्वमुपसंहरन्नाह । तस्मादिति ।

( इति सिद्धान्तनिरूपणम् । )

धर्मताफलविषयतया ऽवश्यं व्युत्पादनीयो येन व्याप्ति-रपि तत्सहाया सती फलवती स्यादिति ॥

( सिद्धान्तनिरूपणम् । )

---

मुख्यमर्थं गृहीत्वा शङ्कते । नन्विति । [२७।४]
भक्त्या च वृत्त्या परिहरति । अवयवा इवेति । [२७।७]

---

नन्वत्रावयवशब्दो न द्रव्यसमवायिकारणवचनः, किन्तु समु-दायिवचन इति पञ्चावयवसमुदाये प्रत्येकमस्त्येव समुदायित्वमिति शङ्कैवानुपपन्नेत्यत आह । मुख्यमिति । समुदायित्वं न तावदेक-कार्यारम्भकत्वं वाय्वादावेककार्याभावात् संयोगानां बहुत्वात् । बहुत्वसंख्यायामेकत्वे ऽपि तत्कार्यसन्देहे ऽपि समुदायित्वनिश्च-यात् । नाप्येकधर्मवत्त्वम् एकत्रापि घटे एकरूपवत्त्वेन समुदायि-व्यवहारापत्तेः । नाप्यनेकवृत्त्येकधर्मवत्त्वं घटत्वात्मकतादृशैकधर्म-वत्येकघटे तद्व्यवहारापत्तेः । न चापरघटापेक्षयैकघटे ऽपि तद्व्यव-हारो भवत्येवेति वाच्यम् । तत्र समुदायिव्यवहारे ऽप्यवयवा-वयविव्यवहाराभावात् । तस्मान्न समुदायित्वमेवावयवत्वमपि तु द्रव्यसमवायिकारणत्वं द्रव्यसमवायित्वं वा अवयवपदस्य मुख्यो-ऽर्थ इति तमादाय शङ्केत्यर्थः । टीकायां गगनगुणा इति गगनपदं स्वरूपमात्रकथनपरं प्रकृते गुणत्वस्यैव सामर्थ्यात् । नन्व-वयवा इत्यनेनापि प्रतिज्ञादिष्ववयवपदस्य न मुख्यार्थत्वमुपपा-दितमित्यत आह । भक्त्येति । तात्पर्यं हि वृत्तिमात्रनिर्वाह्यं भक्ति-

भक्तिमाह । यथा हीति । [२७।७] क्रियोदाहरणं सोमे-
नेति, सोमपदस्य कर्मनामधेयत्वात् । धात्वर्थमात्र-

---

रपि वृत्तिर्भवत्येवेति तयैव तन्निर्वाहः—इति भावः । एतावतैव
दूषणे निरस्ते किं यथा हीत्यादिनेत्यत आह ।

भक्तिमिति । उभाभ्यामुख्यगौणाभ्यां भज्यत इति भक्ति-
र्गौणी वृत्तिः । सा च मुख्यामुख्यसाधारणधर्मं विना न स्यादिति
तत्कथनमित्यर्थः । सोमपदस्येति । कर्म यागादिरूपक्रिया यथो-
द्भिदा यजेतेत्यत्रोद्भिदपदं यागविशेषस्य नाम, तथा सोमपद-
मपीति याग एवात्र विधीयत इति प्राधान्येन क्रियैव वाक्यार्थ
इत्यर्थः ।

ननु सोमपदं लताविशेषस्य वाचकं न तु यागरूपक्रियावाचकं
तथाहि—"ज्योतिष्टोमेन यजेत स्वर्गकाम" इत्यनेनाधिकारसम्बन्ध-
बोधने यागस्वरूपप्रतीतावप्युद्देश्यविशेषस्य नियोगसाधनीभूतभाव-
नाविषययागरूपस्यानुपस्थितेर्न सोमगुणविधिः अत एव विशेषो-
पस्थितौ वाक्यभेदापत्तिः यागसोमयोः प्रत्येकं विधानादिति
सोमेन यज्यर्थेन च प्रत्ययार्थौ नियोगसाधनीभूत भावन विशेष्यत
एव, विशिष्टविधिरेवायं, सोमस्य तु क्रियाद्वारा भावनान्वय इति
करणत्वं तस्माद्विशिष्टविधावपि करणस्योपसर्जनत्वात् क्रिया-
प्राधान्यं न तु सोमरूपक्रियाविधानात् ।

अत्राहुः । विशिष्टविधौ गौरवात् प्रत्येकविधौ वाक्यभेदादुद्भिदा
यजेजेतिवत् सोमपदस्य कर्मनामधेयत्वेनैवान्वयः । न च सोमस्य

*विवक्षया तु कारकपदात् पृथगभिधानम्।* वस्तुतस्तु सोमस्यापि कारकत्वमेव, गोदोहनेनेति कारकोदाहरणं प्रणयनस्य वाक्यान्तरप्राप्तत्वात्। प्रातिपदि-

स्वर्गसाधनत्वात् करणत्वमिति न कारकोदाहरणाद्भेद इत्यत आह। धात्वर्थेति। तेन कारकपदं धात्वर्थातिरिक्तकारकपरमित्यर्थः। यद्यपि सोमपदं न धातुस्तथापि सोमार्थवाचकयजिपदस्य धातुत्वमिति भावः।

प्रणयनस्येति। "चमसेनापः प्रणये"दिति वाक्यान्तरेणापां प्रणयनं प्राप्तमित्यर्थः। नन्वत्रापि क्रियैव वाक्यार्थः गोदोहनस्य सिद्धत्वेनाविधेयत्वात्। प्रणयनोपरागेण तद्विधिरिति चेत्। विभागस्तर्हि विधीयतां स च क्रियाविशेष एव गुणोपधानयोग्यः। अपि च न विधेयतया वाक्यार्थत्वमपि तु विशेष्यतया, अन्यथा सर्वत्रानुवादे वाक्यार्थलाभापत्तेः। मैवम्। सामान्यतः प्रणयनक्रियाविशेषस्यापि प्राप्तत्वात्। तथा च विशेषकापेक्षायां लोकसिद्ध एव गोदोहने तत्साधनत्वविधिर्लाघवात्। विधेयत्वे च विशेष्यत्वस्यैवोक्तत्वात्। यत्रापि गुणविधिर्दध्ना जुहोतीत्यादौ तत्रापि प्राप्तस्य होमस्य किं साधनमित्यपेक्षायां होमसाधनत्वेन दध्नो विशेष्यत्वात्। अन्यथा विशिष्टविधिसाङ्कर्यापत्तेः। विनिगमकाभावात्। सर्वेषामेव विशेषणत्वं विशेष्यत्वं च क्रिया वेत्यादिना च तात्पर्यविषयोऽभिहितः विशेष्यनानात्वेऽपि न वाक्यभेदः एकस्मिन्नेव तात्पर्यादित्यन्ये। प्रातिपदिकेति।

कार्थोदाहरणं यस्येति, त्वात्यशब्दस्यार्थवतोऽधातुप्रत्यय-रूपत्वात् । तथापि न समूहो व्युत्पादित इत्यत आह । तदनेनेति ।

ननु विशेषप्रत्ययहेतवोऽवाक्यभूता अपि सन्तीति अनेनाभिप्रायेण पृच्छति । क इति [२६।१७] प्रत्ययस्य

---

ननु भावनैव सर्वत्र वाक्यार्थः आख्यातजनयितव्ये तस्मिन् पदान्तराणां जनकत्वं न तु स्वातन्त्र्येण, तथैव व्युत्पत्तेः । यदाहुः "यत्रान्यत्क्रियापदं न श्रूयते तत्रास्तिर्भवन्तीपरः प्रयोक्तव्य" इति । मैवम् । काञ्च्यां त्रिभुवनतिलको राजेत्यादौ वाक्यार्थबुद्धेः प्रत्यक्षसिद्धत्वाद्व्युत्पत्तेरसिद्धेः क्रियाध्याहारे च मानाभावात् । अभिधानाभिधेयापर्यवसानात् तदभावेऽप्यध्याहारे वाक्यापरिसमाप्तिप्रसङ्गात् । श्रुतान्वयस्य निराकाङ्क्षत्वेनाक्षेपस्याभावात् अन्यथाऽतिप्रसङ्गात् । न च कार्यपराणामन्विते शक्तिकल्पनात्तथात्वमिति वाच्यम् । अन्वितमात्रशक्त्यैवोपपत्तौ कार्यांशेऽपि शक्त्यभावात् । कार्यान्वितबुद्धेश्च कार्यवाचकलिङादिपदसमभिव्याहारेणाप्युपपत्तेरन्यलभ्यत्वात् । न च प्रवृत्तिहेतुतया तस्मिन्नेवोपस्थिते तद्दानस्यानुचितत्वात्तत्रैव शक्तिरिति वाच्यम् । एवं प्रवृत्तिविशेषहेतुत्वेनोपस्थिते घटानयनकार्यतावुद्धावेव शक्तिकल्पनापत्तेः । प्रवृत्तिसामान्यस्य तद्विशेषं विनाऽनुपस्थितेः । अन्यलभ्यत्वात्तु तत्त्यागः प्रकृतेऽपि समान इत्यादि विस्तरो वक्ष्यते । प्रश्नपरत्वव्याख्यानबीजं लक्षणे ऽनुपपत्तिमाह । नन्विति । प्रत्यय इत्यस्य प्रत्ययमान

प्राधान्यं निराकुर्वन्नेव प्रत्ययपदोपादानप्रयोजनमाह । न च तदिति । [१७।१८] विशेषणासिद्धिं परिहरन्नाह । प्रतीतिश्चेति । १६।२०]

अथानुभव एव कस्मान्न भवति न ह्यन्यपदं नानुभूयत एव तथा सति स्मर्यतापि कथमित्यत आह । न हीति । [१६।२२] तथाप्येवम्भूतस्यापि पदस्य स्मृतिरनुभूतिमन्तरेण न स्यादित्यत आह । सम्भवन्ति त्विति ।

---

इति व्याख्याने हेतुमाह । प्रत्ययस्येति । पदानि प्रतीयमानानि वाक्यार्थबुद्धौ कारणानीत्येवं व्याख्यातमित्यर्थः । प्रत्ययपदेति । प्रत्ययपदेन विना प्रतीयमानत्वं पदानां न लभ्यत इति प्रत्ययपदं न व्यर्थमिति भावः । प्रतीत्युपपादनोपयोगमाह । विशेषणेति । प्रतीतिं विना प्रतीयमानत्वस्य विशेषणस्यासिद्धिरित्यर्थः ॥

अप्रसक्तप्रतिषेधमाशङ्क्याह । अथेति । अनुभव एवेति । तेनाग्रे स्मृत्यनुभवसमुच्चयः प्रतीत्यङ्गमिति शङ्का निरवकाशेति भावः । स्वकार्यसंस्कारविरोधिनीनामित्यत्र टीकायां बहुधा स्मृतेषु पटुतरस्मरणदर्शनात् स्मृत्यादिसंस्कारो जन्यते तेन स्मृतिर्नाश्यत इति तात्पर्यम् । अन्यत्र तु स्मृतेरुत्तरस्मृतिरेव नाशिकेति मन्तव्यम् ॥

ननु क्रमेणानुभूतेषु वर्णेषु क्रमेणैव स्मृतिर्न त्वेकदा, न चैकस्य स्मृत्यनुभवरूपत्वं शङ्कास्पदं, स्मृतित्वानुभूतित्वयोर्विरुद्धजात्योरेकत्राऽसमावेशादित्यत आह । कारणसमुच्चयेति । कारणयोः

अस्तु तर्हि तदनुभव एव प्रतीत्यङ्गमित्यत आह । न चैत इति । [१७।२२] तदनेनानुभव एवार्थप्रतीत्यङ्गमिति निरस्तम् । अनुभवस्मृतिसमुच्चयं निराकरोति । न च पूर्वेति । [१७।२२] स्मृत्यनुभवयोस्तु स्यात्सहभाव इत्यनुषञ्जनीयम् । एतच्च वर्णानुभवान्तरालस्मृत्यभ्युपगमेन द्रष्टव्यम् । यदि तु वर्णानां निरन्तरोत्पादवतां निरन्तरा एवानुभवास्तदा विनश्यदविनश्यदवस्थयोरुपान्त्यान्त्यानुभवयोरिव सहभावः शङ्कनीयो निराकरणीयश्चोक्तयुक्त्याऽतो न पृथगाशङ्कितष्टीकाकृता । कारणसमुच्चयवशाद्विषयसमुच्चयवतः प्रत्ययस्वरूपसमुच्चयं परस्वीकृतं शङ्कते । न च पूर्वेति । [१७।२५] निराकरोति । सम्बन्धेति ॥ [१७।२८]

---

श्रोत्रसंस्कारयोः समुच्चयात् । विषयसमुच्चयवतः—सदसद्वर्णविषयवतः, प्रत्ययस्य स्वरूपसमुच्चयः स्मृत्यनुभवरूपत्वं परेण शङ्कितमित्यर्थः । सम्बन्धसंवेदनेत्यत्र टीकायां सम्बन्धसंवेदनं—सङ्केतानुभवः । यदा विचित्रप्रत्ययात् संस्कारोत्पादस्तदैव सङ्केतविषयसंस्कारस्योद्बोधस्ततो यदैव सङ्केतस्मृतिस्तदैव स्वजनितसंस्कारेण विचित्रप्रत्ययनाशात् तदुत्तरक्षणे पदार्थस्मृतिर्न स्यात् विचित्रप्रत्ययस्य नष्टत्वादित्यर्थः । नन्विदमयुक्तं संस्कारे जन्यधर्माभावाद्विचित्र-

यद्यपि सहकारिलाभादपरः संस्कारस्योद्बोधो नाम नास्ति, तथापि नान्यः कश्चित्प्रत्ययः सहकारी सर्वसंस्कारोद्बोधे सर्वस्मृतिप्रसङ्गात्, नापि सङ्केतविशेषस्मरणे पदैकदेशवर्णानुभवस्तत्संस्कारस्य सहकारी, तथा सत्यतिप्रसङ्गात्। तस्मात्पदत्वेन प्रतिसन्धानमेव समयस्मृतिहेतुसंस्कारसहकारीत्युपगन्तव्यं, तथाचैक प्रघट्टकेनापि विचित्रज्ञानेन विषयीकृता वर्णाः

---

प्रत्ययरूपसहकारिलाभ एवोद्बोध इति तज्जन्यसंस्कारकाल एव सङ्केतस्मृतिस्तत्काले च विनश्यदवस्थौ विचित्रप्रत्ययोऽस्त्येवेति स एवाग्रिमक्षणे पदार्थस्मृतिं करिष्यतीत्युपपत्तेरित्यत आह। यद्यपीति।

तस्मादिति। ननु पदत्वं न तावदेककार्यत्वं यत्किञ्चिदेककार्यस्यातिप्रसञ्जकत्वात्। नापि पदार्थस्मृतिरूपैककार्यत्वं, अन्योन्याश्रयात्। सङ्केतग्रहे हि पदत्वग्रहः पदत्वग्रहे च सङ्केतग्रहः। नाप्येककालत्वैकदेशत्वाभ्याम्, अतिव्यापकत्वात्। नाप्येकधीमात्रगोचरत्वं नदीदीनादावतिव्याप्तिकत्वात्। नापि तत्तत्क्रमवद्वर्णत्वम्, एकवर्णके पदे तदभावात्। अत्राहुः। समयावच्छेदकरूपवत्त्वमेव पदत्वं, समयसामान्यग्रहश्च समयविशेषस्मृतिहेतुरिति नान्योन्याश्रयः। वस्तुत एकं ज्ञानं विचित्रं जातिसाङ्कर्यादेव न सम्भवतीति भावः। एकप्रघट्टकेनापीति। एकदेशेनापीत्यर्थः।

खण्डशः पदभावेन प्रतिसन्धेयाः अर्थसम्बन्धत्वेन स्मर्त्तव्या इति कुतो ऽनुभवावकाश इत्यर्थः ।

प्रक्रिया तु अन्त्यवर्णानुभवस्योत्पादः तत्संस्कारपदत्वप्रतिसन्धानयोरुत्पद्यमानतेत्येकः कालः । अथ तयोरुत्पादः स एव पदप्रतिसन्धानात्मा समयसंस्कारोद्बोधः सम्बन्धस्मरणस्योत्पद्यमानता संस्कारोद्बोधादिचित्रप्रत्ययस्य विनश्यत्तेत्येकः कालः । अथ सम्बन्धस्मरणोत्पादः विचित्रप्रत्ययस्य विनाशः पदत्वानुसन्धानस्य विनश्यत्तेत्येकः कालः । न चैतद्दृष्टं कल्पनमित्याह । अत एवेति । [१८।२]

---

खण्डश इति । देवदत्त ! गामानय दण्डेन शुक्लामिति वाक्ये तत्तत्पदे ज्ञाते ऽपि तत्तत्पदार्थस्मृतेरप्यन्तरितत्वादन्ते पुनस्तत्तत्पदानां सम्भूय स्मरणात्तत्तत्पदार्थस्मृतिरिति खण्डश उपस्थितिरित्यर्थः ।

ननु वर्णानुभवे ऽपि तत्तत्क्रमाननुभवात् कथं पदप्रतिसन्धानम् । न चान्त्यवर्णानुभवानन्तरं पूर्ववर्णप्रध्वंसरूपः क्रमोऽनुभूतस्ततः क्रमस्मरणमिति वाच्यम् । यथोक्तप्रक्रियाविरोधात् । अत्राहुः । पूर्ववर्णध्वंसविशिष्टोऽपरवर्णः स चापरवर्णानुभवकालेऽनुभूयते । न चान्त्यवर्णेन पूर्ववर्णविनाशादन्त्यवर्णानुभवकाले पूर्ववर्णध्वंसो नास्तीति वाच्यम् । अन्त्यवर्णस्य क्रमेणानेकस्योत्पादनात् । न चैत-

नन्वेकप्रघट्टकेन विचित्रप्रत्यय एवानुसन्धानात्मा भविष्यति, करिष्यति च समयस्मृतिं तथाविधाम्, अन्यथा पूर्वस्मृतिरशेषपदावगाहिन्येकैव स्वीकर्त्तव्येत्यत आह । एवञ्चेति । [३८।४] अनुभूतं हि प्रतिसन्धीयते न तु प्रथमत एव, तथा च पूर्ववर्णानामनुभूतत्वेन पदत्वानुसन्धानसम्भवे ऽपि अन्त्यवर्णस्याऽननुभूततया नान्त्यपदप्रतिसन्धानसम्भवः । न चानुभवानुसन्धानयोरेककालता कार्यकारणभावात् । तस्मात्तदनन्तरमेव पदत्वानुसन्धानमिति सुष्ठूक्तं पदार्थप्रत्यायन एव पदानुभवो न कारणमिति, तदौपयिकस्मृत्युत्पत्तौ तु कारणमेवेति ।

अवधारणादीत्यत्रादिशब्देन तेषां स्मरणं विवक्षितं, प्रकरणादयस्तु योग्यताविशेषत्वात्तत्रैवान्तर्भूता इति

---

दिति । अन्यत्र स्मरणात्मकस्यैव प्रतिसन्धानस्यान्वयबोधकत्वदर्शनादत्रापि तथैव कल्प्यत इत्यर्थः ।

अन्यथापीति । सिद्धान्ते ऽपीत्यर्थः । पदानुभवः पदार्थप्रत्यायने न कारणमिति सिद्धवदुक्तमुपपादयति । अनुभूतं हीति ।

तेषां-पदानाम् । प्रकरणादय इति । वक्तृश्रोतृबुद्धिस्थता-प्रकरणम् । तच्च यद्यपि सर्वत्र वाक्यार्थज्ञाने न हेतुस्तथापि नानार्थ-

तत एव वाक्यार्थप्रतीतेरुपपत्तेरनुपपत्तौ त्वसिद्धि-
र्लक्षणस्य दोष इत्याशयः ।

ननु क्रमानुभूतानामप्येकस्मृतिसमारोहो भवत्येव, किं तु पदानि क्रमेणापि नानुभूतानीत्यत उक्तम् । निरन्तरेति । [१८।६] निरन्तरस्मृतिभिर्विषयीकृतानि तत

---

पदानां नियतपदार्थोपस्थापने सहकारि, न तु वाक्यार्थज्ञाने । आदिपदेन ततत्र तात्पर्यग्राहकन्यायपरामर्षपरिग्रहः । यद्यपि संसर्गज्ञानप्रागभाव आकाङ्क्षा, अनन्वयनिश्चयविरहो योग्यता, अव्यवधानेनान्वयप्रतियोग्युपस्थितिरासत्तिस्ताश्च स्वरूपसत्यो हेतवो, न तु ज्ञातास्तथापि निराकाङ्क्षादावाकाङ्क्षादिभ्रमेणान्वयबोधात्तासां ज्ञानं हेतुः । ज्ञायमानकरणे ज्ञानोपयोग्यप्रमाणव्यावृत्तवैलक्षण्यरूपत्वात् व्याप्तिवच्छब्दशक्तिवच्चेति भावः ।

अनुपपत्ताविति । विशेषप्रत्ययहेतुत्वं वाक्यलक्षणमन्त्यपदस्य विशेषाप्रतिपादकत्वात् स्वरूपासिद्धं स्यादित्यर्थः । नन्वेकस्मृत्या सहानेकस्मृतीनां विषयीकरणे समुच्चयो न युक्तः अनेकस्मृतीनामेककालासत्त्वादिति पूर्वोपपादकतया व्याख्यातुमाह । नन्विति । निरन्तरेति । यद्यपि पदानामेकैकशोऽप्यननुभवान्न स्मृतिः सम्भवति तथापि प्रत्येकवर्णानुभवजनितसंस्कारात् समूहालम्बना स्मृतिर्नानावर्णात्मकपदगोचरा ततो नानापदगोचरस्मृतिभिः संस्कारद्वारा तावत्पदगोचरा समूहालम्बना एका स्मृतिर्जन्यत इत्येकस्मृतिसमारूढानि पदानि वाक्यार्थधियं जन-

*एकस्मृतिसङ्कलितानीत्यर्थः। नैरन्तर्यञ्च स्मृतीनां सन्नि-*

---

यन्ति। अनन्यगतिकतया तथैव कल्पनादिति भावः। ननु स्मृतीनां न नैरन्तर्यं मध्यमस्मृतिभिर्व्यवधानादित्यत आह। नैरन्तर्यं चेति। सन्निकर्षो मनसा संयुक्तसमवायलक्षणः संस्कारो वेत्यर्थः।

ननु विशेषणपदसहकृतविशेष्यपदं न वाक्यलक्षणं पचतीत्यादौ कुलायमित्याद्यर्थाध्याहाराऽव्यापनात्। न च शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्य्यत इति न्यायात् तत्र शब्दाध्याहार एव अन्यथा प्रत्यक्षदृष्टे ऽपि कुलाये पचतीत्यन्वयबोधापत्तिः न चेष्टापत्तिः पचतीत्युक्ते तेमनमोदनं वेति संशयाभावप्रसङ्गादिति वाच्यम्। अन्योदीरितेन स्वयं वा स्मृतेन कुलायमिति पदेनान्वयबोधापत्तौ संशयाभावापत्तेस्तुल्यत्वात्। अथ तत्पदोपस्थितावपि तस्या ऽन्वयबोधपरत्वं न ज्ञातमिति नान्वयबोधः, तर्ह्याकाङ्क्षादिमदन्वयबोधपरपदार्थोपस्थितिरेव लाघवादन्वयबोधाङ्गमस्तु तस्माद्विशिष्टार्थानुभवजनकपदत्वमेव वाक्यत्वमिति केचित्। तन्न। ओदनं पचतीत्यत्रैवोदनः कर्मत्वं पाकः कृतिरित्यत्रान्वयबोधाभावात्। तत्राकाङ्क्षैव नास्तीति चेत्? तर्हि साकाङ्क्षत्वेन पदार्थानां पदविशेषोपस्थापितत्वं तन्त्रमित्यायातं पदस्यान्वयबोधकत्वमतः पदाध्याहार एव नार्थाध्याहारः, कथं वा द्वारमित्यत्र क्रियावाचकपदसमभिव्याहारं विना कर्मविभक्तिः साधुः। यदि च क्रियापदार्थ एव सा साधुः स्यात्तदा द्वारं पिधानं कुर्वित्यत्रापि द्वितीया स्यादित्यन्यत्र विस्तरः।

कर्षे..वीक्षव्यम्। नन्वेतावताऽप्यसिद्धमेव लक्षणं, न ह्येवं भूतमप्यन्यपदं विशेषप्रतिपत्तिहेतुरित्याशयवानाह। स्यादेतदिति। [१८।११] ननु प्रत्येकं व्यभिचारे हि परस्परानुग्रहः स्यात्, न च पदकदम्बकप्रतिसन्धानवत्तदर्थस्मृतिरपि तथाविधां वाक्यार्थप्रत्ययोत्पत्तिं प्रति व्यभिचरतीत्यत आह। एतदुक्तं भवतीति [१८।१४] अयमाशयः—न तावत्पदार्था एव वाक्यार्थे प्रमाणं

---

ननु पदमाला चेत्यादिना लक्षणे काप्यनुपपत्तिर्न दर्शितेत्यत आह। नन्विति। अव्युत्पन्नानां पदज्ञाने ऽपि ततोऽन्वयबोधानुदयादित्यर्थः। ननु वाक्यलक्षणे पदार्थस्मृतीनामवान्तरव्यापारत्वकीर्त्तनमनुपयोगीत्यत आह। ननु प्रत्येकेति। अव्युत्पन्नानां यथा पदसमूहप्रतिसन्धाने ऽपि पदार्थोपस्थितेरभावात् पदसमूहज्ञानं न वाक्यार्थधियं जनयति तथा पदार्थोपस्थितौ सत्यां पदज्ञानाभावाद्वाक्यार्थबुद्धेर्नाभावः।

"पश्यतः श्वेतिमारूपं ह्रेषाशब्दं च शृण्वतः।
खुरनिक्षेपशब्दं च श्वेतो ऽश्वो धावतीति धीः(१)"

इत्यत्र कविकाव्यादौ वा चिन्तावशोपस्थितपदार्थेष्वन्वयबोधाच्च। तथा च पदार्थस्मृतिरेव वाक्यार्थबुद्धौ करणं पदानि तु तदुपस्थितावेवान्यथासिद्धानि न करणानीत्यर्थः। न तावदिति।

---

(१) श्लोकवार्त्तिके वाक्याधिकरणे ३५८ श्लोकः।

सर्वदा तत्प्रतीतिप्रसङ्गात्। नापि त एव स्मृताः प्रकारान्तरेणापि स्मृतानां तथाभावप्रसङ्गात्। नापि त एव पदैः स्मारिताः पदानां पदार्थस्मरण एवोपयोगे पूर्ववत्प्रतीतिप्रसङ्गात्। वाक्यार्थप्रतीत्युपयोगे तु तेषां कथं न तद्धेतुत्वम्। तथापि गुणप्रधानभावविनिगमनायां कोऽहेतुरिति चेत्। असाधारणकारणत्वं पदानां, तदर्थानां त्वतीतानागतादिरूपतया कारण-

---

पदं विनापि पदार्थसत्त्वादिति भावः। नापीति। ओदनः कर्मत्वं पाकः कृतिरित्यत्रापि पदार्थोपस्थितेरविशेषादन्वयबोधप्रसङ्गादिति भावः। पदैः स्मारित इत्यत्र पदानामुपलक्षणत्वं विशेषणत्वं वा। आद्यं निराकरोति। पदानामिति। पूर्ववदिति। प्रकारान्तरेणापि स्मृतात्पदार्थात् वाक्यार्थधीप्रसङ्गः पदानां पदार्थोपस्थित्यैवान्यथासिद्धत्वेनाकारणत्वादित्यर्थः। द्वितीयमाशङ्क्य निराकरोति। वाक्यार्थेति। पदजन्यपदार्थोपस्थितेः प्रयोजकत्वे पदकरणत्वस्यावश्यकत्वात् विशिष्टकारणताग्राहकमानेन विशेषणस्यापि विषयीकरणादित्यर्थः। तथापीति। पदानां प्रधानत्वं पदार्थानां गुणत्वमित्यत्र किं नियामकमित्यर्थः। असाधारणेति। ननु पदानामप्यतीतादिरूपतया कथं कारणत्वम्?, न च पदज्ञानकरणतावच्छेदकत्वेन कारणत्वं पदानामिति युक्तम्। पदार्थानामपि पदार्थज्ञानकरणतावच्छेदक-

त्वमेव नास्ति कुतोऽसाधारणत्वम्। अत एव न स्मृतिस्तेषां व्यापारः, किन्तु कारणीभूतानां पदानामेव। तथा च व्यापाराव्यभिचारमादाय निर्व्यापारा-

---

त्वेन करणत्वापत्तेः। मैवम्। असाधारणपदेनैवापास्तत्वात् पदार्थज्ञानस्य सकलप्रमासाधारण्येन संसर्गधीजनकत्वेनासाधारण्याभावात् अन्यप्रमाणजन्यसंसर्गज्ञाने पदानामकारणत्वेन वाक्यार्थबुद्धावसाधारण्यात् गौः कर्मानयनमित्यत्र गामानयेत्यतः पदार्थोपस्थितौ विशेषाभावे ऽप्यन्वयबुद्धेरभावेन पदविशेषजन्यपदार्थोपस्थितेस्तद्धेतुत्वे पदविशेषस्य विशेषकत्वात् प्रथमोपस्थितत्वाच्च प्रयोजकवाक्योच्चारणानन्तरं प्रयोज्यव्यापारदर्शनादन्वयज्ञाने पदानामेव प्राथमिकत्वात् व्यापाराभावादपि पदार्थानां न करणत्वमित्याह। अत एवेति। स्मृतेर्विषयाजन्यत्वेन स्वविषया स्मृतिर्न व्यापारो नापि व्यापारान्तरं सम्भवतीत्यर्थः।

अत एव पदार्थज्ञानानामपि करणत्वमपास्तम्। निर्व्यापारत्वात्। श्वेतोऽश्वो धावतीति धीश्च लिङ्गजा एकाश्रयत्वं च लाघवात्। अन्वयबोधे पदस्य हेतुत्वात्, काव्यस्थले च पदार्थज्ञानव्यापारकमुत्प्रेक्षादिसहकृतं मन एवान्वयानुभवे करणम्। उत्प्रेक्षादीनां च न प्रमाणान्तरत्वं निर्व्यापारत्वात्, लिङ्गादाविवानुगतानतिप्रसक्तप्रमाकरणतावच्छेदकरूपाभावाच्चेति भावः। किन्त्विति। पदार्थस्मृत्यैव व्यापारेण तेषां कारणत्वादित्यर्थः। पूर्वोक्तं पदानां व्यभिचारं निराकरोति। तथा चेति। पदार्थस्मृतिरूपव्यापारवतां

वस्थायां व्यभिचारवतामकारणत्वाभ्युपगमो बहु व्याकुलयतीति ।

प्रतिसन्धीयमान इति वार्त्तिकनिराकरणीयमतिव्यापकत्वं दर्शयति । यदीति [३८।१७] निष्पत्तेर्भेदं दर्शयितुं सिद्धिव्याख्यानमनुवदति । वास्तव इति । [३८।२६] न हि प्रतिज्ञावचनं निश्चायकं-विशिष्टस्येति शेषः । हेतुवचनादिवैयर्थ्यात्-वैयर्थ्यप्रसङ्गात् । साधनस्य न्यायः प्रवृत्तिप्रकारः । स च "नानुपलब्ध" इत्यादिभाष्येण दर्शितः । तस्यातिपातोऽभाव एव । तमेव व्युत्पादयेत्-प्रधानतयेति शेषः । तस्य च न्यायविशेषस्याऽऽत्मादिविषयस्येत्यर्थः ।

---

पदानां तद्विरहादन्वयबुद्धाजननमिन्द्रियादीनामपि सन्निकर्षाद्यभावे कार्याभाववतां कारणत्वं प्रत्यादिशतीत्यर्थः ॥

ननु हन्त दशदाड़िमित्यादिना लक्षणे किञ्चिद्दूषणमुक्तमित्यत आह । प्रतिसन्धीयमान इति । प्रतिज्ञायाः स्वार्थनिश्चायकत्वादव्याहरति । विशिष्टस्येतीति । अनागमोक्तत्वेन पक्षनिष्ठसाध्यस्येत्यर्थः । इत्यादिवैयर्थ्यसिद्धं न हेतुरिति प्रसङ्गपरतया व्याचष्टे । वैयर्थ्येति । नन्वात्मादिविषयकन्यायतुल्यतया ऽन्योऽपि न्यायो व्युत्पाद्यः शास्त्रस्यास्येवेत्यत आह । प्रधानतयेतीति ।

अलौकिकोपचारत्वात्प्रयोजनमाह । आगमोपचारस्येति [३६।८] अर्थसंवादेनेति करणे तृतीया । आगमविरोधशङ्कानिवृत्तिरनुग्रहः दृढभूमिश्च संस्कारः आगमैकविषयत्वात् । सप्रयोजनश्च भवति-निःश्रेयसेन प्रयोजनेन प्रयोजनवांश्च ज्ञातो भवतीत्यर्थः । कुतः । आगमार्थेति । [३६।१०] निरूढत्वात्-प्रसिद्धत्वादित्यर्थः ।

---

ननु न सर्वत्रोपचारे प्रयोजनमित्यत आह । अलौकिकेति । अनादावुपचारे तदभावे ऽपि स्वयं कृते तदस्त्येवेत्यर्थः । कर्तृभ्रमं निवारयति । करण इति । आगमविरोधेति । ननु प्रसिद्धानुमानादपि तच्छङ्कया कुतोऽनुमितिः । न च बाधकेन तदुद्दासः । तद्धि न तावत्प्रत्यक्षम्, आगमानामनन्तत्वात् । नाप्यनुमानं, तत्राप्यागमाविरोधावधारणार्थं बाधकानुमानानुसरणे ऽनवस्थापत्तेः । मैवम् । परोपदेशादुत्थितशङ्कानिवृत्तिदर्शनात् । अनिवृत्तौ चानुमितिनिवृत्तेरिष्टत्वात् । अन्यथा विरोध्यागमसन्देहात्समस्तवेदार्थानध्यवसाये वेदाप्रवृत्त्यभावापत्तेः । दृढभूमिश्च संस्कार इत्यत्रार्थग्रह इत्यनुषञ्जनीयम् । ननु न्यायस्य सप्रयोजनत्वं न न्यायेन जन्यते किन्तु तज्ज्ञानेनेत्यत आह । निःश्रेयसेनेति । हेत्वाकाङ्क्षामुत्थापयति । कुत इति । ननु तत् खल्वित्यनेन परामृश्यमाणलिङ्गस्य हेतुत्वमुक्ता न चेत्यादिना तन्निषेधः परस्परविरुद्ध इति तर्क-

तत् खलु हेतुवचनमनुमानप्रतिपादकं-परामृष्य-*माणलिङ्गप्रतिपादकं यदि स्यात् तदा विषयतयानु-*मानेन परामृश्यमानेन लिङ्गेनानुग्रहीतव्यं न च तस्य परामृश्यमानं लिङ्गं विषय इति भावः ।

ननु यदेव दृश्यमानं लिङ्गं हेतुवचनस्य विषयः तदेवानुमितिभावकमित्यत आह । न च लिङ्गदर्शन-मात्रमिति । [२८।१६] दृश्यमानलिङ्गमात्रम् । अपि तु सम्बन्धस्मृतिसहकारीति-परामृश्यमानं लिङ्गमित्यर्थः ।

---

परतया योजयति । यदि स्यादिति । न चेति । हेतुवचनेन व्याप्ति-रहितं लिङ्गमात्रं प्रतिपाद्यते न तु व्याप्तिविशिष्टमित्यर्थः । अप्रसक्तप्रतिषेधमाशङ्क्याह । नन्विति ।

ननु लिङ्गदर्शनं न हेतुवचनस्य विषय इत्यत आह । दृश्य-मानेति । दृश्यमानं-पक्षे धूमादिस्वरूपम् ।

ननु व्याप्तिस्मृतिसहकृतमपि द्वितीयं लिङ्गदर्शनं नानुमानं किन्तु तृतीयमित्यत आह । परामृश्यमाणमिति । द्वितीयलिङ्ग-दर्शनस्य विषयो व्याप्तिस्मृतिरहितं लिङ्गं तत्प्रतिपादकत्वाद्धेतुवचनं न तृतीयलिङ्गपरामर्शविषयलिङ्गस्यानुमानप्रतिपादकमिति कुत-स्तत्रानुमानत्वोपचार इत्यर्थः । शुद्धमप्यापातत इति टीकायां प्रथमं व्याप्तिस्मृतिरहितमपीत्यर्थः ॥

तदिदमुक्तम् । तस्मान्न लिङ्गवचनमनुमानप्रतिपादकमिति । [१६।१७] द्वितीयदर्शनविषयलिङ्गप्रतिपादकं न परामृश्यमाणलिङ्गप्रतिपादकमित्यर्थः । व्याख्यानं ग्रन्थानुरोधादस्फुटमित्याशयवानाह । एतदुक्तं भवतीति । [१६।२५] एवञ्च तत्प्रतिपादकस्य-विषयप्रतिपादकस्येत्यर्थः । लिङ्गपरामर्शस्तावदनुमानं तस्य च व्याप्तिस्मृतिसहकारिताऽनुमितौ, द्वितीयलिङ्गदर्शनस्यापि व्याप्तिस्मृतिसहकारिता परामर्शज्ञानजनन एवेत्युभयोरपि सम्बन्धस्मृतिसहकारितासाम्यादनुमानत्वं ततस्तद्विषयलिङ्गस्यापि ततस्तदनुगृहीतस्य वचनस्यापीत्यर्थः ।

---

ननु हेतुवचनं न द्वितीयलिङ्गदर्शनप्रतिपादकमित्यत आह । तद्विषयेति । तत्र सम्बन्धस्मृतिसहकारित्वं द्वितीयलिङ्गदर्शनस्य यत्र विषये तद्दर्शयति । लिङ्गपरामर्श इति । अनुमितौ तृतीयलिङ्गपरामर्शो व्याप्तिस्मरणस्य कारणस्यावान्तरव्यापारतया हेतुरिति भवति व्यापारव्यापारिणोः सहकारित्वं लिङ्गपरामर्शे अनुमितिजनकस्योत्पत्त्यर्थमेव व्याप्तिस्मरणापेक्षा व्याप्तिरूपविशेषणज्ञानं विना तद्विशिष्टज्ञानात्मकस्य तृतीयलिङ्गपरामर्शस्यानुत्पादादिति । न च लिङ्गमेवानुमितौ करणं तच्च हेतुपदवाच्यं

किमस्योपचारस्य फलमित्यत आह। एवञ्चेति। [३६।२८]।

ननु प्रत्यक्षविषयस्य स्मृतिः ततः पुनरुपदर्शनादिति वक्तव्ये कुतो विपरीतमित्यत आह। यच्चेति। [४०।३] यद्यपि पूर्वप्रत्यक्षविषयो दृष्टान्तस्तथाप्युदाहरणकाले तथा स्मृत्यारूढ एव व्याप्रियते इत्येतावता तथैवोक्तमित्यर्थः। न केवलं प्रत्यक्षेण सहैकविषयत्वमुपचारे बीजमपि तु समानव्यापारत्वमपीत्याह। पुनरुपदर्शनात्-पुनः स्मरणात्। प्रत्यक्षमपि हि विप्रतिपत्तिं परिभूय व्याप्तिविषयतया दृष्टान्तं स्मारयति। तद्वचनमपीति। अपरमपि बीजमाह। मूलभूतेति। [४०।५]

---

भवत्येवेति क्व लक्षणेति वाच्यम्। लिङ्गस्यातीतानागतसाधारण्येनाजनकतया तत्परामर्शस्यानुमितिजनकत्वादिति वक्ष्यमाणत्वात्। परामृश्यमाणलिङ्गकारणतावादिमते तादृशस्य लिङ्गस्य हेतुवचनाप्रतिपाद्यत्वात् केवललिङ्गस्यैव तत्प्रतिपाद्यत्वात् विशिष्टाच्च विशेष्यस्यान्यत्वादिति भावः।

उत्तरग्रन्थोपयोगार्थमाह। किमस्येति। न्यायस्य शब्दप्रयोगे प्रयोजनं विनोपचारस्यान्याय्यत्वादित्यर्थः।

यत्र प्रत्यक्षे विषय इत्यादिव्याख्याननिरस्यां शङ्कामाह। नन्विति। उदाहरणस्य यथाशब्दार्थापेक्षाया हेतुमाह। ननु

ननु यथाशब्दतदर्थयोरुपनये वार्त्तापि नास्ति तत्कथमाह यथा तथेत्यत आह । उपनयो हीति ।[४०।१८] यद्यपि निगमनेऽपि प्रमाणविशेषसमावेशोऽस्त्येव तथापि जात्यभिप्रायेणायं विवक्षितो न च तत्र चतुष्टयविजातीयं प्रमाणमस्तीत्यतस्तद्व्याख्यानात्पूर्वमेव परमत्वोपपादनाय समस्तप्रमाणविनिवेशनमाह । सोऽयमिति । [४०।१९]

मूलसमवायादौपचारिकः समवायो भविष्यती-

---

यथेति । ननु निगमनव्याख्यानात् पूर्वमेव प्रमाणविनिवेशनस्योक्तत्वादवयवचतुष्टयस्यैव प्रमाणमूलकत्वमतो न निगमनस्य तथात्वमित्यत आह । यद्यपीति ।

जात्यभिप्रायेणेति । अवयवानां प्रमाणसन्निवेशोऽवयवजातीयमात्राभिप्रायेण न त्ववयवचतुष्टयमात्रनैयत्येन विवक्षित इत्यर्थः । निगमनव्याख्यानात् प्रागेवावयवानां प्रमाणविनिवेशेऽभिप्रायान्तरमाह । न चेति । प्रत्यक्षादिचतुष्टयमेव प्रमाणं तस्य प्रतिज्ञादिचतुष्टये ऽभिहितत्वान्निगमने ऽपि तद्बोद्धव्यमित्यर्थः । नन्ववयवानां वाक्यसमवायनिराकरणावसरे प्रमाणानां तन्निराकरणमर्थान्तरमित्यत आह । मूलेति । अवयवानां वाक्यासमवाये ऽपि तन्मूलप्रमाणानां तत्र समवाय इति मूलिनामवयवानां तत्र समवाय औपचारिकः स्यादिति शङ्कानिरा-

त्यत उक्तम्। प्रमाणानां वेति। [४०।१७] अध्यारोपो विनिवेशनं भ्रान्तिर्वा न सम्भवतीत्यत आह। अध्यारोप इति। [४०।१८] सामर्थ्ये सति सहकारितयाऽन्यदपेक्षते न त्वपेक्षैव सामर्थ्यमित्यभिप्रायवानाह। सामर्थ्यं हीति। [४०।१९]

धर्मः-कारणत्वलक्षणः। तदनेन "किं पुन. सामर्थ्यं"-मिति पृच्छतोऽभिसन्धिर्दर्शितः। उत्तराभिसन्धिमाह। इह त्विति। [४०।१९] सामर्थ्याकाङ्क्षयोः परस्परव्याप्तेराकाङ्क्षैव सामर्थ्यशब्देन विवक्षितेत्यर्थः।

तदेवंरूपयोः समवायसामर्थ्ययोः प्रदर्शने फलं दर्शयति। तदवेति। [४०।२०] प्रयोजनाभेदेऽप्याकाङ्क्षाविरहितत्वात् वाक्यैकवाक्यत्वं न भवति। यथा—

---

करणायेदमुक्तमित्यर्थः। सामान्यशब्दस्य विशेषपरत्वे हेतुमाह। अध्यारोप इति। ननु सामर्थ्यं कारणत्वं न तु साकाङ्क्षत्वमतः साकाङ्क्षत्वमेव तदित्ययुक्तम्। न चापृच्छतो विप्रतिपत्तिबीजमुक्तमित्यभिप्रेत्य सामर्थ्यं हीत्याद्याक्षेपपरतया व्याचष्टे। सामर्थ्ये सतीति॥

ननु साकाङ्क्षत्वमपि धर्मः सामर्थ्यं स्यादित्यत आह। धर्म इति। विरोधं निरस्यति। सामर्थ्येति।

"भगो वां विभजतु पूषा वां विभजतु अर्यमा वां विभज"त्वित्यादि, अत उक्तं विभज्यमानेति ।[४०।२२]
आकाङ्क्षायामपि प्रयोजनानेकत्वे वाक्यैकवाक्यत्वं न भवति यथा—

"स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि"।

इत्यत उक्तं प्रयोजनमिति। तदेतेन—

"अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्"।
इति जैमिनीयं (१) वाक्यैकवाक्यतालक्षणमभिहितम्।

---

यथेति। विभागात्मकस्यार्थस्यैक्ये ऽपि परस्परनिराकाङ्क्षत्वात् "भगो वां विभजतु पूषा वां विभज"त्वित्यनयोर्नैकवाक्यतेत्यर्थः।

यथा स्योनं ते इति। स्योनं ते इत्यादि कल्पयामीत्यन्तं सदनप्रकाशकं, "तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेधे"ति सादनप्रकाशकम्। तदस्य सदनसादनरूपप्रकाश्यार्थभेदात् साकाङ्क्षत्वे ऽपि नैकवाक्यत्वमित्यर्थः। वाक्यैकवाक्यता चैवं न पदैकवाक्यता अपरिपूर्णे पूर्ववाक्यार्थे, तस्मादिति निगमनवर्त्तिसर्वनाम्ना परामर्शाभावप्रसङ्गादिति सम्प्रदायविदः। यद्यपीत्यादिना प्रकृते यद्दूषण-

---

(१) जैमिनि सू० ४६। अ० २ पा० १।

ननु विप्रतिपन्नो यदि ? वाक्येनैव प्रतिबोधयितुं शक्यते, अथ वाक्ये तदर्थे वा विप्रतिपद्यमानः ? केनोपायेन बोधनीयः, वाक्यान्तरेण चेदनवस्थेत्यत आह। यद्यपीति। [४०।२८] अनन्यथासिद्धप्रत्यक्षागमागोचराभिप्रायमेतदित्यर्थः। विकल्पो—ऽनुवादविशेषः। तस्य प्रयोजनं-विधिः प्रतिषेधो वा। अत्र चाक्षेपावसरे प्रतिषेध एव विशेषप्रतिपादकत्वमिति वदता तत्त्वव्यवस्थाश्रयत्वं विवृतम्। तत्र तत्त्वं विशेषः, तस्य प्रतिपत्तिर्व्यवस्था तद्धेतुत्वमाश्रयत्वम्। तत्र विशेषः क

---

मुक्तं तदाह। नन्विति। तथा च प्रत्यक्षाद्यन्यतमस्यापि विप्रतिपन्नपुरुषप्रतिपादकत्वमिति न तदेव पञ्चावयववाक्यस्य परमत्वमिति भावः। प्रत्यक्षाद्यविषयवेदप्रामाण्यादिबोधनस्य पञ्चावयववाक्यैकसाध्यत्वमाह। अनन्यथासिद्धेति। विषयान्तरेऽपि प्रमाणान्तराणां कथायामनुमानस्यार्थवोपयोगात् पञ्चावयवस्यैवोपयोग इत्यपि द्रष्टव्यम्! ननु यदि विकल्पप्रयोजनप्रश्नोऽयं तदा "यदि प्रमाणान्तर"मित्यादिना प्रत्येकमनूद्य दूषणमयुक्तमित्यत आह। विकल्प इति। "यदि प्रमाणान्तरम्" "अथ तेष्वन्तर्भवतीति" विकल्पोपस्थितैकैकानुवादरूप इत्यर्थः स चैकैकप्रतिषेधार्थ इति भावः। ननु वार्त्तिककृता विशेषप्रतिपादकत्वमाश्रयपदार्थ उक्तः तत्कथं तस्यार्थः तत्त्वव्यवस्थाश्रयत्वमुच्यत इत्यत आह। विशेषेति। यद्या-

इत्यत उक्तम्। धर्मविशिष्टो धर्मीति। [४।१।६] वाक्याद्धि साधनधर्मविशिष्टो धर्मी साक्षात्प्रतीयते, साध्यरूपधर्मविशिष्टस्तु तद्द्वारेत्युभयमपि विवक्षित्वा सम्मुग्धमुक्तमिति॥

( इति अवयवनिरूपणम्। )

---

ननु प्रमाणान्तरत्वेऽपि तर्कस्य प्रमाणपदेन सङ्ग्रह एव, सामान्येन विशेषस्य सङ्कलनात् तत्किमित्याह "न प्रमाणान्तर"मत आह। प्रमाणपदेन हीति। [४।१।१२]

दृष्टं(१) हि सामान्यशब्देनापि कस्य चित्सङ्ग्रहः

---

अयशब्दस्यैव विशेषप्रतिपादकत्वमर्थः स्यात् तदा तत्त्वव्यवस्थापदार्थो नातिरिक्तः स्यादिति वार्त्तिककृता तत्त्वव्यवस्थामादायैवाऽऽश्रयार्थ उक्त इति टीकाकृतोऽभिसन्धिरित्यर्थः। तथापि सिषाधयिषितधर्मविशिष्टधर्मिप्रतीतिर्न पञ्चावयवसाध्या, किन्त्वनुमितिसामग्रीसाध्येति धर्मशब्दस्य साधनसाध्यपरत्वमाह। वाक्याद्धीति॥

( इति अवयवनिरूपणम्। )

---

ननु प्रमाणपदं तत्सामान्यवाचि तत्विशेषपरतया कुतो व्याख्यातमित्यत आह। नन्विति। सामान्येनेति। सामान्यस्य यावद्विशेषव्यापकत्वादित्यर्थः।

---

(१) दृष्टो हि इति २ पु० पा०।

कुतश्चित्कारणादित्यभिसन्धिः। अत एव प्रमाणान्तरत्व-शङ्कायां सङ्गृहीतेभ्यो विशेषेभ्योऽन्यत्वमुक्त्वा प्रमेयं दृष्टान्तत्वेनोपात्तम्। अनिश्चायकत्वात्—स्वातन्त्र्येणेति शेषः। किन्तु प्रमाणविषयविभागहेतुतयेति। ४१।२०]
तस्य (१) प्रमाणस्येयमितिकर्तव्यता तदीयविषये तद-पेक्षत्वादित्यर्थः।

---

दृष्टं हीति। सामान्यशब्दस्यापि विशेषपदसमभिव्याहाराद्वि-शेषपरत्वं दृष्टं तद्वदिहापि प्रमाणान्तरसमभिव्याहृतं प्रमाणपदं चत्वार्य्येव प्रमाणानि ब्रूत इति तथैव व्याख्यातमित्यर्थः। अत एवेति। यथा प्रमाविषयत्वमात्रेणान्येषामपि सङ्ग्रहसम्भवे प्रमेय-विशेषस्यैवात्मादेः प्रमेयपदेन सङ्ग्रहः कृतस्तथा प्रमाणपदेनापि विशेषस्यैव सङ्ग्रहे तर्कस्य प्रमाणान्तरत्वशङ्का स्यादित्यर्थः। संशया-दय इत्यत्र टीकायामतद्गुणसंविज्ञानो बहुव्रीहिः संशयस्य बुद्धि-त्वेन सङ्ग्रहात्। ननु तर्कः प्रमाणव्यापारत्वात् निश्चायक एवेत्यत आह। स्वातन्त्र्येणेति। यत्प्रमाणविषये तर्कः प्रवर्त्तते तत्सापेक्ष-तया तदनपेक्ष्यानिश्चायकत्वादित्यर्थः। गुणत्वेनेति टीका। गुणत्व-मात्रस्याऽऽत्मन्यलिङ्गत्वे ऽपि प्रसिद्धवाचकसहकृतस्य तथात्वमिति भावः। ननु प्रमाणविषयविभागहेतुतयाऽपि तर्कस्य निश्चायकत्वमेव स्यादित्यत आह। तस्येति। साध्यतदभावकोटिकसंशये तत्कोटि-कतज्जन्यनिश्चयजिज्ञासायां सत्यां विरोधिरूपोपस्थितौ सतोऽपि

(१) यस्य इति २ पु० पा०।

एतदुक्तं भवति-तर्को हि प्रमारूपं प्रमाणं स्यात् लिङ्गदर्शनवत्, अप्रमारूपं वा इन्द्रियादिवत्, न तावदाद्यः तस्याहार्यारोपरूपत्वात्, अत एव न तत्करण-

---

लिङ्गपरामर्शस्यानुमित्यजनकत्वादन्यथा सत्प्रतिपक्षदोषाभावापातादित्यनभिमतकोटावनिष्टप्रसङ्गेनानियतकोटिसंशयादिनिवृत्ति-रूपोऽनुमितिविषयविभागस्तर्केण क्रियते। यद्यपि विरोधिशङ्काया असार्वत्रिकत्वात् व्यभिचारिणायं तर्कव्यापारस्तथापि यत्र शङ्का तत्र मा निवर्त्यत इत्येव व्यापारार्थः। अयं च व्यापारो न सार्वत्रिकः किन्तु यत्र पुरुषप्रयत्नसाध्यानुमानप्रवृत्तिस्तत्रैव द्रष्टव्यः। न च तर्कस्य साधकबाधकप्रमाणान्तरत्वेन कथमत्र शङ्कानिवर्त्तकत्वमिति वाच्यम्। तर्कस्यापि सिद्धिप्रयोजकत्वेन साधकत्वात्। प्रमाणस्यापि साधकादित्वे शङ्कानिवृत्तौ वैषयिकविरोधस्य तन्त्रत्वात्। तस्य च तर्कसाधारणत्वात्। न च विरोधिविषयनिश्चयस्यैव प्रतिबन्धकत्वान्न शङ्कायास्तज्जन्यनियत-जिज्ञासायाश्च प्रतिबन्धकत्वमिति किं तदुत्साधारणेनेति वाच्यम्। विरोधिविषयत्वस्यैव प्रयोजकत्वे निश्चयत्वस्य व्यर्थत्वाद्विरोधि-निवृत्तिरूपसहकारिसम्पादकत्वमेवास्येतिकर्त्तव्यतार्थमित्यर्थः।

नन्वत्र ग्राह्यप्रमाणनिरपेक्ष एव तर्कः किं निश्चायकः स्यादित्यत आह। एतदुक्तमिति। तस्याऽऽहार्येति। आपाद्यापादकांशयोराहार्यरूपत्वादित्यर्थः।

ननु नायमारोपः आपाद्यापादकत्वरूपे तस्य तात्विकत्वात्,

स्यापि प्रामाण्यमप्रमाफलत्वात्। नापि द्वितीयः स्ववि-

---

नापि तयोः संसर्गे, तस्याप्यबाधनात्. न हि यदि निर्वह्निरयं तदा निर्धूम इति बुद्धिः कदापि बाध्या तथात्वे तर्काभासादविशेषप्रसङ्गः। विलक्षणगृहे यद्यतिथिरागतः स्याद्भोजितः स्यादित्यचातिथिरायाति भोज्यते, तत्र न तर्कस्याहार्यारोपरूपत्वम्। मैवम्। तर्को हि निर्वह्निरयं निर्धूम इति निर्वह्नित्वादिना सहेदंत्वस्य सामानाधिकरण्यमुल्लिखति। एतन्मूलकमभिधानमपि तत्सामानाधिकरण्यविषयं न च तदस्ति वास्तवम्। अथ निर्वह्निरयं निर्धूम इत्यतो विलक्षणविषयकस्तर्कोऽनुभूयते यद्य(प्य)र्थस्यादर्थयोरत्र विषयत्वादिति मतम्। तन्न। तथापि तर्कस्यारोपिताव्यवस्थितसत्त्वौपाधिकसत्त्वविषयत्वेनानिश्चायकतया प्रमारूपत्वाऽभावात्। तथा च संशयात्प्रच्युतो निर्णयं चाप्राप्तः तर्क इत्याहुः अन्यतराचार्याः। संशयो हि दोलायितानेककोटिकः। तर्कस्तु नियतां कोटिमालम्बते। तर्के समीचीनज्ञानं व्यवहारस्तु तर्कप्रवृत्तिहेतुव्याप्त्यादिज्ञानसम्यक्ज्ञानत्वात्। अत एव तर्काभासादविशेषः। सम्भावनात्मा च प्रसङ्गो न तर्कस्तस्यानिष्टप्रसञ्जनात्मकत्वादिति भावः।

तत्करणस्यापि-तर्ककरणस्यापीत्यर्थः। तर्को हीन्द्रियाद्यजन्यां प्रमां जनयेत्तज्जन्यां वा। नाद्यः तस्यासिद्धेः। नान्त्य इन्द्रियादिनिरपेक्षं हि तज्जनकं तत्सापेक्षं वा, नाद्यो व्याघातात्। नान्त्यो ऽपेक्षणीयप्रमाणान्तरसहायत्वे तस्यैव प्रमाणतया तस्येतिकर्त्तव्यतामात्रत्वे पर्य्यवसानादिति दूषणे सत्येव दूषणान्तरमाह।

षयव्याप्यविपर्यये ह्यस्य प्रामाण्यमाशङ्कितं, तेन च नास्य नियामकः सम्बन्धः, असम्बद्धस्य गमकत्वे ऽतिप्रसङ्गः, तद्विषयविपर्ययस्य तु तेन सह स्वाभाविकः सम्बन्धोऽस्ति, तेन तत्संवलितस्य प्रवृत्तेस्तदितिकर्त्तव्यतात्वमेव, नहि विपर्ययाऽपर्यवसितं क्वचिदपि कृतार्थं

---

स्वविषयेति। यदि निर्वह्निः स्यात् निर्धूमः स्यादिति तर्कविषयो निर्धूमत्वं तस्य व्याप्यं निर्वह्नित्वं तद्विपर्ययो वह्निमत्त्वं तदित्यर्थः। तेन चेति। तेन वह्निमत्त्वेन निर्धूमः स्यादिति तर्कस्य सम्बन्धो नियामको नास्ति। अन्यस्यान्यत्र गमकत्वमित्यतिप्रसङ्गे सम्बन्धस्यैव नियामकत्वादित्यर्थः। तद्विषयेति। तर्कविषयनिर्धूमत्वाभावस्य धूमस्याग्निना व्याप्तिरेव सम्बन्धो ऽस्तीति नातिप्रसङ्ग इत्यर्थः। ननु तर्कानुग्राह्यत्वाभिमतप्रमाणविषयो वह्निमत्त्वादिस्तदभावव्यापकीभूतधूमाद्यभावविषयकत्वमेव नियामकः सम्बन्धो भविष्यति परम्परासम्बन्धस्यापि नियामकत्वादित्यत आह। तेनेति।

तथात्वे व्याप्यविपर्ययपर्यवसानं विनापि तर्कः साधकः स्यात्। तदपि सहकारीति चेत्? एवं तर्हि विपर्ययानुमानादेव साध्यानुमित्युपपत्तौ तर्कस्य प्रमाणत्वे मानाभावात्तदितिकर्तव्यतैव तर्कः। न च तर्कः प्रमाणं लिङ्गपरामर्शस्तु तदितिकर्तव्यतेति वैपरीत्यमस्त्विति वाच्यम्। तर्कः प्रमाणसहायो न प्रमाणमिति प्रत्यक्षसिद्धत्वात्। न हि तर्कस्तत्र प्रमाणं तं विनापि प्रत्यक्ष-

प्रसङ्गमीचामहे। नन्वेवं तर्हि प्रमाणस्यापि केवलस्य न क्वचिदपि कृतार्थत्वं तथा सति प्रसङ्गतद्विपर्ययपिण्ड एव प्रामाण्यं पर्यवस्येत्।

एवमेतत्-सेतिकर्त्तव्यताकस्यैव सर्वत्र करणत्वात्, *इतिकर्तव्यतातद्भावकल्पनायां त्वयं विभागः*, तदिदं वक्ष्यति, तस्य प्रसङ्गरूपतया पारतन्त्र्येण स्वयमसाधनत्वात्। प्रसञ्जनीयस्य प्रमाणविरुद्धत्वेनाऽनिष्टत्वमयुक्तत्वं

---

प्रवृत्तेः। न चैवं सहायोऽपि न स्यादिति वाच्यम्। विरोधिशङ्कायां सत्यां तस्यापेक्षणीयत्वादित्युक्तत्वात्। तथापि शङ्कानिवृत्तौ परं स हेतुः स्यात् न तु फले ऽपि व्यभिचारादिति चेत्। न। तर्कप्रवृत्तौ सत्यां फले ऽपि वैलक्षण्यात्। केवलात्प्रत्यक्षादितो होदमित्थमिति प्रतीतिस्तर्कसहकारिणस्तु इदमित्थमेवेति। अत्रापि न तर्कः कारणं तं विनापि शब्दात्ताद्दृशप्रत्ययादिति चेत्। न। एवं सतीन्द्रियादेरप्यकारणतापत्तेः। जातिभेदे तदपेक्षानियम इति चेत्। तर्हि यत्प्रमाणं यमर्थं बोधयति तत्तर्कसहकृतं तमर्थमित्थमेवेत्यवधारयतीति भावः। नन्वेवमिति। तर्कावताराद्विपक्षाकवलितत्वेन तर्कानुमानयोर्मिलितयोरेव प्रमाकरणत्वं स्यादित्यर्थः।

तद्भावेति। इतिकर्त्तव्यतावत्त्वं प्रसञ्जनीयस्यापाद्यस्य निर्धूमत्वस्य प्रमाणविरुद्धत्वेनेति पक्षे धूमवत्त्वस्य प्रमितत्वादित्यर्थः। भवतीत्यस्य सम्भवतीत्यर्थव्याख्याननिराकार्यां शङ्कामाह। नन्विति।

साधनीयस्य प्रमाणाविरुद्धत्वेनेष्टत्वं युक्तत्वम्। तेनायमर्थो वार्त्तिकस्य यद्येवं नाभविष्यत् तदैवं युक्तत्वमहास्यत् इद-स्त्वायुक्तत्वमुपादास्यतेत्यत आह। इति कारेणेति। [४१।२२]

*ततः प्रसङ्गरूपव्युत्पादनस्य वार्त्तिकेनाऽविरोधः। भाष्यन्तु प्रसङ्गे स्फुटमेव। ननु भवतीति प्रमाण-*व्यापारात्प्रागेव यदि निश्चितं तदा तर्कः प्रमाणमेव स्यादत आह। सम्भवतीति। [४१।२४] सम्भावना चेहा-ऽविरोधमात्रं, न तु संशयः अयुक्तांशस्यापि संशयास्पद-त्वात्, अनुज्ञा चेयमेव यत्प्रवर्त्तमानप्रमाणानुकूलत्वे-नावस्थानं, तदाह। एतदुक्तं भवतीति। [४१।२५]

अनुजानन्--विरुद्धधर्मव्युदासरूपेणाविरोधयन्नि-त्यर्थः। अनुगृह्णाति-सव्यापारीकरोतीत्यर्थः। तद्विषय-

---

ननु सम्भावना संशयः तदर्थस्य युक्तायुक्तात्मकत्वेनायुक्तांशस्या-प्यनुज्ञापत्तिरित्यत आह। सम्भावना चेति। अविरोधमात्रम्—अनुमेयकोटावित्यर्थः। नन्वनुज्ञाने च तद्धर्मः कथं तर्कधर्म इत्यत आह। अनुज्ञा चेति। अनुमेयविरोधिकोटिशङ्कानिवर्त्तनद्वारा सहकारित्वेनेत्यर्थः। सतोऽपि लिङ्गपरामर्शस्य विरोध्युपस्थिति-प्रतिबन्धेनाजनकत्वात्तर्केण तु साध्याभावकोटावनिष्टप्रसङ्गात्मना तन्निवर्त्तनादिति भावः।

एतदेव टीकामुखेन स्फुटयति। तदाहेति।

प्रामाण्यानुकूल्येन तर्कस्यापि तद्विषयत्वमिति भ्रान्तिमाशङ्क्य निराकरोति। न चेति। [४१।२८] पारतन्त्र्येण-विपर्ययपरतन्त्रतयेत्यर्थः।

*आरोपरूपतामुपदर्शयन्नेव स्वविषयद्वाराऽप्यस्य प्रामाण्यं निराचष्टे। अस्ति हीति।* [४२।२] न प्रसङ्गो हेतुर्न प्रसज्यमानो हेतुर्लिङ्गमसिद्धत्वादित्यर्थः। ननु न हि यदेव विद्यते तदेव दृश्यत इत्यस्ति नियम इत्यत आह। तेन सहेति। [४२।४]

"तस्मान्नास्तीति" फलद्वारेण तर्कस्यानुग्राह्यं प्रमाणं दर्शितम्। तेनानुज्ञायमानं प्रवर्त्तते-फलं साधयति। फलमाह। केवलमेवेदमिति। [४२।६]

---

विपर्ययेति। विपर्ययानुमानमूलभूतव्याप्तिनिश्चयोपजीवनेनेत्यर्थः।

ननु तर्कस्यासाधनत्वं साधितमेवेति किं तत्र युक्त्यन्तरेणेत्यत आह। आरोपरूपतामिति। विषयो-निर्धूमत्वम्। कर्मधारयसमासमाश्रित्य व्याचष्टे। न प्रसङ्गेति। प्रसज्यत इति प्रसङ्गः प्रसङ्गविषयो निर्धूमत्वं स न हेतुर्लिङ्गम्। अत्र हेतुमाह। असिद्धत्वादिति। पक्षे धूमस्यैव प्रामाणिकत्वादित्यर्थः। तेन सहेत्यस्योपयोगार्थमाह। नन्विति।

ननु तस्मान्नास्तीति न तर्कशरीरं, नापि फलं, तस्यापि

कैवल्यस्वरूपविप्रतिपत्तेस्तद्विवृणोति । नेहेति ।[४२।६]

तदेवमभावविषये प्रत्यक्षे ऽपि तर्कं दर्शयता अनुपलब्धिलिङ्गकानुमानसाध्योऽभाव इति सौगतमतमपास्तम् । अनुपलब्धेरपि निषेधरूपतया ऽनुमानान्तरसाध्यतायामनवस्थानात्, असिद्धायाश्चाऽगमकत्वात्, प्रत्यक्षतस्तत्सिद्धौ त्वनुमानानवकाशात्, व्यवहारस्यापि विकल्पानुगतव्यापारात्प्रत्यक्षत एव सिद्धत्वात् । अन्यथा विधिव्यवहारार्थमप्युपलब्धिलिङ्गकानुमानमास्थेयम् । एवं च पुनरप्यनवस्थैव, न हि लिङ्ग-

---

केवलमिवेत्यनेन दर्शितत्वादित्यत आह । तस्मादिति । प्रवृत्तिः प्रयत्नो न प्रामाण्यस्य सम्भवतीति व्याचष्टे । फलमिति ।

ननु कैवल्यमभाव एवेति नेहेति पुनरुक्तमित्यत आह । कैवल्येति । कैवल्यमधिकरणस्वरूपविशेष इति मतनिराकरणार्थमित्यर्थः ।

प्रसङ्गादाह । तदेवमिति । अलिङ्गत्वे हेतुमाह । अनुपलब्धेरपीति । लिङ्गस्य ज्ञायमानस्यैवानुमापकत्वादिति भावः । तर्ह्यभावव्यवहारो ऽनुपलब्धिलिङ्गकानुमानजन्योऽस्त्वित्यत आह । व्यवहारस्यापीति । विकल्पेन सविकल्पकेनानुगतो व्यापारः-साक्षात्कारलक्षणो यस्य तादृशात् प्रत्यक्षत एव विविकल्पकात् सिद्धेरित्यर्थः । ननूपलब्धिः स्वरूपसत्येव विधिव्यवहारे लिङ्गं

मप्यव्यवह्रियमाणामेवानुमितिं भावयेत्। तस्माद्विधि-व्यवहारवन्निषेधव्यवहारोऽपि प्रत्यक्षसिद्ध एव। विप्रतिपन्नं प्रति तु परीक्षकैस्तर्कः सहायत्वेनोपनेय इति रमणीयम्।

आगमसहायं तर्कमाह। एवं स्वर्गेति। [४२।६] यजेतेत्यत्र समानपदोपात्तत्त्वाद्भाव्यत्वाच्च धात्वर्थः साध्यो भवतु, भवतु वा पुरुषार्थत्वात्स्वर्ग इति संशये तर्कस्यावतारः—यदि साध्यो धात्वर्थः स्यात् तदोपदेष्टुराप्तत्वं विधेश्चेष्टोपायत्वं वाक्यस्य तदभिधायकत्वं प्रेक्षावतां च

---

स्यादिति नानवस्थेत्यत आह। न ह्रीति। ननु प्रत्यक्षे न तर्कः सहकारी तर्कं विनापि प्रत्यक्षोदयादित्यत आह। विप्रतिपन्नमिति। यो ह्यत्र भूतले घटाभावे विप्रतिपद्यते तं प्रतीत्यर्थः। तथा च विरोधिज्ञानपूर्वके साधारणे प्रत्यक्षविशेषे तर्कः सहकारीति भावः।

समानेति। यजेतेतिपदाद्भावनापि प्रतीयते धात्वर्थोऽपीत्यर्थः। भाव्यत्वात् साध्यत्वादित्यर्थः। साध्यं-फलमित्यर्थः। धात्वर्थसाध्यत्वपक्षे स्वर्गकाम इति ब्राह्मणत्वादिवदधिकारिविशेषणमात्रमिति भावः। उपदेष्टुरिति। धात्वर्थस्यैव फलत्वे कर्मणश्च कष्टत्वादृक्तुराप्तत्वं न स्यादित्यर्थः। वाक्यस्येति। इष्ट-

प्रवृत्तिर्न स्यात्, अस्ति चैतत् सर्वं प्रमाणतः सिद्ध-मित्यर्थः।

अनुज्ञायमानं प्रमाणमाह। समानपदेति। [४२।८] न हि यागभावनायाः स्वर्गफलत्वे धात्वर्थस्यातत्फलत्वे समानपदोपात्तत्वधात्वर्थयोः कश्चिद्विरोधः। तस्मात्तद-विरोधेन स्वर्गफलत्वं युक्तं धात्वर्थस्य च साध्यत्वं विरुद्ध-तया ऽयुक्तमित्यर्थः।

ननु प्रमाणानुग्रहाय युक्तत्वायुक्तत्वे विवेचयति तर्को न तु निश्चिनोति इति कुतो विशेषादित्यत आह। न चेति। [४२।१०] क्रियातिपत्तिरिति। [४२।११] क्रियातिपत्तिः-प्रत्ययोपस्थापिते घटसत्त्वधात्वर्थसाध्यत्वे क्रियातिपत्तिशब्देन विवक्षिते न ह्येवम्भूतप्रत्ययविषयो घटो वा साध्यतया धात्वर्थो वास्तीत्यर्थः।

किमतो यद्येवमित्यत आह। यदाश्रयेति। [४२।११]

---

साधनत्वस्य लिङ्पदार्थत्वे यागस्य स्वर्गसाधनत्वं वाक्यार्थ एवे-त्यर्थः। न हीति। भावनाविषयस्य यागस्यैव स्वर्गफलत्वे विरोधो नास्तीत्यर्थः।

ननु घटसत्त्वधात्वर्थसाध्यत्वे एव न क्रियातिपत्तौ तस्याः क्रिया-व्यतिरेकरूपत्वादित्यत आह। क्रियातिपत्तौति।

यस्मिन्नाश्रये तुल्योपलम्भनयोग्यत्वेन दुःखत्वेन वा ऽनिष्टप्रसञ्जकेन हेतुना उपपन्नस्तर्को युक्तायुक्तविषयनिश्चयसाधनं भविष्यति स एव नास्तीत्यर्थः ।

तदनेन प्रसज्यमानस्याश्रयासिद्धिसाधनासिद्धी दर्शिते, पूर्वं तु स्वरूपासिद्धिर्दर्शिता । तस्मादारोपत्वान्न स्वविषये प्रमाणं स्वविषयव्याप्यविपर्यये नियामका-

---

नन्वनिष्टप्रसङ्गो घटोपलब्धिरूपो न चानेनायुक्तत्वं निश्चीयते एतस्यैवायुक्तरूपत्वादित्यत आह । यस्मिन्निति । यद्यत्र घटः स्यात्तदा तुल्योपलम्भयोग्यत्वेन दृश्येत यदि च धात्वर्थः साध्यः स्यात्तदा दुःखत्वेन प्रवृत्तिविषयो न स्यादित्यात्मकस्तर्कस्तत्रैकदेशस्य समुदाये प्रयोजकत्वमस्तीति विवक्षित्वाऽनिष्टप्रसञ्जकेन हेतुनेत्युक्तम् ।

तदनेनेति । तद्भूतलवर्त्तिघटनिष्ठतुल्योपलम्भयोग्यत्वस्य धात्वर्थसाध्यत्वनिष्ठदुःखत्वस्य चानिष्टापादकत्वम् । तत्र भूतलवर्त्तिघटादिराश्रयो ऽसिद्धः तुल्योपलम्भयोग्यत्वादिकं च साधनमसिद्धम् । यदा तु भूतल एव धात्वर्थ एव वाश्रये तुल्योपलम्भनयोग्यत्वादिविशिष्टो घटादिः साधनं तदा स्वरूपासिद्धत्वं पूर्वमुक्तमित्यर्थः । तस्मान्न प्रमाणमित्यत्र टीकाकृदुक्तं सङ्गत्योपपत्तिमाह । तस्मादिति । आरोपितव्याप्यसमुत्थत्वेनारोपत्वान्न तर्को निर्धूमत्वे प्रमाणमित्यर्थः । नाप्यग्निमत्त्व एव तत्प्रामाण्यमित्याह । स्वविष-

भावाच्च । नियतसम्बन्धस्वविषयविपर्ययापेक्षित्वे तु पार-तन्त्र्यान्न प्रमाणमित्यर्थः ।

तर्हि शास्त्रोपयोग इत्यत आह । निश्चयाय त्विति । [४२।१२]

ननु तर्कप्रमाणयोरभिमतभेदमीमांसया वेदाद-भेदवादो विरुध्यतीत्यत आह । प्रमाणेति । [४२।१६]

अथ यथाश्रुत एव वार्त्तिकार्थः कस्मान्न भवती-त्यत आह । इतिकर्त्तव्यतात्वं चेत्यादिना । [४२।१७]
निकायविशिष्टाभिरित्यस्य व्याख्यानस्य शरीरेन्द्रियाणां शुक्रशोणिताहारादिभूतकार्यत्वात् तत्कार्यत्वाच्च बुद्धि-वेदनयोर्निमित्तान्तरे प्रमाणं नास्तीति तात्पर्यम् । विचित्रनिमित्तत्वे साध्ये भेदवत्त्वादिति हेतुः स्वरूपा-भिप्रायेणानैकान्तः स्यात् स्वरूपभेदवतामपि घटादी-

---

येति । वार्त्तिकार्थो-भट्टवार्त्तिकार्थः । तत्र रुमा (१) लवणाकरस्त-त्पतितं काष्ठादि लवणात्मतां यथा यातीत्यर्थः ।

ननु जन्मनः कर्मनिमित्तत्वे को विरोधो येन विप्रतिपन्नः पृच्छतीत्यतो विप्रतिपत्तिबीजमाह । निकायेति । स्वरूपेति । यद्यपि स्वरूपभेदवतां घटादीनां निमित्तभेदोऽस्त्येव, अन्यथा कार्यैक्यापत्तिरिति नानैकान्तिकं तथापि परस्परविजातीयानि

(१) रुमा इति पु० पा० ।

नामविचित्रनिमित्तत्वादतः प्रकाराभिप्रायेण व्याचष्टे। विचित्रत्वादित्यर्थ इति। [४२।२२] वैचित्र्येणोत्पादादित्यर्थः।

ननु निमित्तवैचित्र्यमात्रप्रसाधने सिद्धसाधनं, न हि निमित्तं किञ्चिद्विचित्रमस्तीत्येतावतैव धर्माधर्मसिद्धिः धर्माधर्मलक्षणविचित्रनिमित्तसाधनेनान्वयो न व्यतिरेक इत्यत आह। प्रमाणमुक्तेति। [४२।२४] निमित्तस्य वैचित्र्ये जन्मनो वैचित्र्यप्रसङ्गः, निमित्तस्यावैचित्र्ये जन्मनोऽवैचित्र्यप्रसङ्गः, यागादीनामेव निमित्तत्वे निरन्वयध्वस्तात्कार्योत्पत्तिप्रसङ्गः, निमित्तस्य

---

कार्याणि परस्परविजातीयनिमित्तकानीति साध्ये ऽनैकान्तिकत्वम्। न हि यो यद्भिन्नः स तद्भिन्ननिमित्तकोऽप्यवश्यं तद्विजातीयनिमित्तक इति भावः। विचित्रप्रकारवतामपि नित्यानामविचित्रनिमित्तकत्वादनैकान्तिकत्व माभूदित्यत आह। वैचित्र्येणेति।

तर्कोपयोगार्थमाह। नन्विति। सिद्धसाधनमेवाह। न हीति। धर्माधर्मेऽनि। व्याप्तिग्राहकमानविषयीकृते दृष्टान्ते सिषाधयिषितसाध्यविपरीतसहचारावसायेन विशेषाविरोधश्चेति भावः। निरन्वयेति। यद्यपि योनिर्व्यापारविशिष्टायाः क्रियायाः कालान्तरीयफलजनकत्वमुपैति नियतपूर्वसत्त्वस्य विनष्टे ऽप्यविरोधात् तं

**नित्यत्वे कार्यस्य सदातनत्वप्रसङ्गः, अनेकद्रव्यत्वे ऽभ्युदयसाधारणत्वप्रसङ्गः साधारणैकद्रव्यत्वे ऽपि स एव दोषः एभिस्तर्कैः पक्षधर्मतामुपजीव्य प्रवृत्तैरनुगृह्यमाणं**

---

प्रति नायमनिष्टप्रसङ्गः, तथापि कालान्तरफलजनकत्वस्य कार्याव्यवहितपूर्वसत्त्वकार्याव्यवहितपूर्ववर्त्तिव्यापारवत्त्वान्यतरव्याप्यत्वनिश्चयाद्यागादिर्यदि निर्व्यापारत्वे सति कालान्तरभाविफलासमानकालः स्यादाशुविनाशित्वे सति कालान्तरभाविकार्यजनको न स्यादित्यापादनार्थः। निमित्तस्येति। ननु यन्नित्यनिमित्तकं तत्सदातनमिति क्वापि न प्रसिद्धं, विपर्ययोऽप्यस्य यदनित्यकार्यं न तन्नित्यनिमित्तकमिति वा अनित्यनिमित्तकमिति वा? नाद्यः अनित्यकार्यस्यापि नित्यहेतुकत्वेन व्यभिचारात्। नान्त्यः सिद्धसाधनात्। न। यदीदमनित्यात्मविशेषगुणजन्यं न तज्जन्यं न स्यादित्यापादनार्थत्वात्। अनेकेति।

ननु यथाऽपेक्षाबुद्धिरन्यत्र समवेताऽप्यन्यत्र घटादौ द्वित्वं जनयति तथा ऽदृष्टस्यैकात्मसमवायेऽपि कथं नान्यत्र फलोत्पादकत्वम्। अत्राहुः। यद्येतच्छरीरं जन्यत्वे सत्येतदसाधारणविशेषगुणजन्यं न स्यादेतदीयभोगजनकं न स्यात्। यद्वा कर्त्तृनिष्ठफलदर्शनेन कर्त्तरि तन्निष्ठावन्यत्र तत्कल्पने मानाभाव एवाभ्युदयसाधारण्यमित्यर्थः।

ननु विचित्रकारणकत्वमात्रे साध्ये सिद्धसाधनं, अदृष्टकारणकत्वे च साध्ये विशेषविरोधस्तदवस्थ एवेत्यत आह। एभिरिति।

सामान्यव्याप्तिबलप्रवृत्तं वैचित्र्यानुमानं विशेषविरोधं परिभूयाभिमतविशेषं साधयतीत्यर्थः ।

( इति तर्कनिरूपणम् । )

---

ननु ज्ञात्वा (१) किं फलं निर्णयो नास्त्येव येन

---

तर्कसहकारात्पक्षधर्मताबललभ्यो विशेषः साध्यतयाभिमतस्तत्र न सिद्धसाधनं तत्साधकं च तर्कसहकृतं सामान्यतो दृष्टमेव । विशेषविरोधश्च चतुर्थे ऽध्याये निराकरिष्यत इत्यर्थः । वस्तुतः संस्कारा-जन्यं देवदत्ताद्यशरीरं तद्विशेषगुणजन्यं जन्यत्वे सति तद्भोगसाधन-त्वात् तन्निर्मितस्रग्वदित्यतो ज्ञानादिजन्यत्वे बाधकसहकृतादृ-दृष्टजन्यत्वं सिद्ध्यतीति भावः । इन्द्रियेति टीका । संशयतर्कौ विना स्वसामग्रीप्रभवमित्यर्थः । ननु निर्णयः प्रमाणानां फलमित्य-सिद्धं एकैकप्रमाणजन्यत्वात्तस्येत्यत आह टीकाकारः । अनेनेति । कथाभिप्रायेण प्रमाणानां फलमित्युक्तमिति भावः । तथाऽप्यव्याप्तिः स्यादेवेत्यत आह टीकाकारः । परमार्थत इति । निर्णयपदं निश्चयमात्रपरं न तु विमृश्येत्यादिविशेषपरमित्यर्थः ।

( इति तर्कनिरूपणम् । )

---

यथाश्रुते ऽनुपपत्तिमाशयवर्णनौपयिकीमाह । नन्विति । जात्वा-

---

(१) जात्वा इति क्वचित् पाठः ।

कालविशेषं पृच्छति कदा पुनरित्यतोऽभिप्रायमाह। स्यादेतदिति । [४।१।२०]

ननु निर्णयोपादानप्रयोजने वक्तव्ये निर्णीत-प्रयोजनस्य तर्कस्य पुनरावृत्तौ किं प्रयोजनमित्यत आह । सङ्कलय्येति । [४।१।२२] सङ्कलनया उभयोर-विनाभावो विवक्षित इत्यर्थः ।

( इति निर्णयनिरूपणम् । )

---

"स्वसिद्धान्तानुरूपं साधनं दूषणं चाऽऽहतु"रिति

---

अध्मना । उत्पत्त्यनन्तरमेव निर्णयः प्रमाणफलमिति कालविशेष-सम्बन्धेन प्रमाणफलत्वाभावात् कालविशेषप्रश्नो ऽसङ्गत इत्यर्थः ।

ननु निर्णयोपादानप्रयोजनं नात्र सङ्कलय्योच्यत इत्यत आह । नन्विति । परीक्षकोऽत्रेति टीका । यद्यप्यपरीक्षकाणामपि तर्क-व्याख्यादिप्रतिसन्धानवतामेवानुमित्युदयो विविच्य परं वक्तुं न ते समर्थाः तथापि यस्यैव सतर्कात्प्रमाणान्निश्चयः स एवात्र परी-क्षकोऽभिमत इति भावः ।

( इति निर्णयनिरूपणम् । )

---

एकत्रैव साधनं दूषणं चाऽऽहतुरिति भ्रमनिरासायाह ।

स्वसाध्यपरसाध्ययोर्यथासङ्ख्यम्। ननु यद्यपि सर्वत्र जल्पे निर्णयावसानत्वमेव नास्ति, क्वचिदनिर्णये ऽपि पुरुषापराधतः कथाविच्छेदात् तथापि यत्र निर्णयावसानत्वमस्ति न ततो जल्पादन्यतराधिकरणनिर्णयावसानत्वेन वादो व्यवच्छेत्तुं शक्यते, न च सर्ववादव्याप्तिः निर्णयस्य वादफलत्वात्, फलस्य चोपायाऽव्यापकत्वादित्यत आह। वादे हीति। [४४।११] निर्णयावसानता हि तद्योग्यताऽभिप्रेता, सा च विवदमानयोः तत्त्वबुभुत्सुतया तमुद्दिश्य प्रवृत्तिः तदिदमुक्तं तत्त्वबुभुत्सोर्वादे(१) ऽधिकारादिति। [४४।१२] तदयमर्थः- तत्त्वनिर्णयमुद्दिश्य तयोः साधनदूषणवचनसन्दर्भो वाद इति, एवञ्च नाव्याप्तिर्न वाऽतिप्रसङ्गः।

---

स्वसाध्येति। स्वसाध्ये साधनं परसाध्ये दूषणं च अन्योन्यमाहतुरित्यर्थः।

न सर्वत्र जल्पे ऽतिव्याप्तिः किन्तु क्वचिदेवेति दर्शयितुमाह नन्विति। तथापि निर्णयावसाने जल्पे ऽतिव्याप्तिरव्याप्तिश्च वादे तदवस्थेत्यत आह। निर्णयेति। नाव्याप्तिरिति। वादे कदाचित्तत्त्वनिर्णयाभावे ऽपि तदुद्देश्यत्वानपायादित्यर्थः। नातिप्रसङ्ग

---

(१) तत्त्वबुभुत्सोरनधिकारात् इति २पु० पा०।

जल्पः पुनः कीदृश इत्यत आह । जल्पे त्विति । [४३।१२] पुरुषशक्तीत्युद्देश्यमाह ।

तदयमर्थः-भवतु नाम क्वचिज्जल्पतोऽपि तत्त्वनिर्णयः तथापि नासावुद्देश्यो, न वा श्रद्धेयः, स्वशक्तिपरशक्तिख्यापनमात्रमुद्देश्यमिति । तस्मादन्यतरनिर्णयावसानत्वेनेति । [४४।१४] निर्णयावसानत्वाभिप्रायेणेत्यर्थः ।

( इति वादनिरूपणम् । )

---

इति । जल्पे कदाचित्तत्त्वनिर्णये ऽपि तदुद्देश्यत्वाभावादित्यर्थः ।

ननु विचित्राभिसन्धित्वात् पुंसां स्वशक्तिपराशक्तितत्त्वनिर्णयानुद्दिश्य या कथाऽऽरभ्यते नासौ वादः विजिगीषुकथात्वात् । नापि जल्पः तत्त्वनिर्णयोद्देशेन प्रवृत्तत्वात् । स्वपक्षस्थापनावत्त्वेन च न वितण्डा । तस्माल्लाभपूजाख्यातीरनुद्दिश्य प्रवर्त्तितं वादलक्षणमिति रत्नकोषकारः । तन्न । तत्त्वनिर्णयविजययोर्व्याहतोपायसाध्यत्वेन सम्भूयोद्देश्यत्वासम्भवात् विजयोद्देश्यतायामप्रतिभाद्युद्भावनं तत्त्वनिर्णयोद्देश्यत्वे च तदनुद्भावनमिति विरोधापत्तेः सम्भवे ऽपि निर्णयोद्देश्यत्वे च तदनुद्भावनमिति विरोधापत्तेः सम्भवेऽपि निर्णयोद्देशेन प्रवर्त्तिततयैव वादत्वात् अभियुक्तैस्तथैव तत्त्व-

ननु जल्पवितण्डयोर्वादविशेषत्वे कथं सामान्यविशेषयोः परिसङ्ख्यासमभिव्याहारः कथं च परस्परविरुद्धयोः सामान्यविशेषभावोऽपीत्यत आह। विशिष्येते इति। [४४।१६] "अपरमपि भेदहेतुमाह"। वादाज्जल्पवितण्डयोरिति शेषः। पूर्वं वादव्याख्यानावसरे भेदे हेतुरुद्देश्यविशेषाभिसम्बिरुक्तः तदपेक्षयाऽपरम-

---

निर्णयावसानत्वेन वादव्यवहारात्। अव्याप्तिपरीहाराय व्याचष्टे। निर्णयेति।

( इति वादनिरूपणम्। )

---

ननु तद्विशेषौ तत्प्रभेदावित्येव कुतो न व्याख्यातमित्यत आह। नन्विति। परिसङ्ख्येति। प्रथमसूत्रेण परिसङ्ख्यापदार्थविभागस्तत्र वादेन समं जल्पवितण्डयोः कथं समभिव्याहार इत्यर्थः। प्रमेयान्तर्भूतस्य संशयादेरिव नास्य पृथग्वचनं सम्भवतीत्याह। कथं चेति। वार्त्तिककृता जल्पादिवितण्डामात्रे भेद उक्तः सन्निधानात्, अतस्तदपेक्षया ऽपरमपीति भ्रमनिरासाय शेषमाह। वादादिति। ननु मिलितयोर्जल्पवितण्डयोर्न कश्चिद्वादात् भेदहेतुरुक्तो यदपेक्षया ऽपरमपीति स्यात्, जल्पे वितण्डायां चाङ्गाधिक्याङ्गह्रास्योरेकैकत्वैव वादाद्भेदहेतुत्वादित्यत आह। पूर्वमिति। ननूद्देश्यविशेषाभिसन्धिर्वादजल्पयोरेव भेदहेतुरुक्तो न तु वितण्डाया इत्यत आह।

पीति । [४४।२५] यौ तौ वादजल्पयोः प्रयोक्तारौ तावेकत्राविजिगीषुतया अन्यत्र विजिगीषुतया विशेषितौ वादजल्पौ परस्परतो व्यवच्छिन्दत इत्यर्थः ।

( इति जल्पवितण्डयोर्निरूपणम् । )

---

दूषयितुमेकदेशिव्याख्यानं तन्मतेन व्याचष्ट इति

---

यौ ताविति । जल्पे यो भेदहेतुरुक्तः स वितण्डायामपि समान इति तत्रापि तत्तात्पर्यमिति भावः । यद्यप्यङ्गाधिक्यमपि जल्पवितण्डयोस्तुल्यमिति तदपेक्षयाप्यपरमिति सम्भवति तथापि न सर्वत्र विजयेऽङ्गाधिक्यं, परपराजयोद्देश्यकत्वं तु जल्पवितराऽसोस्तुल्यमिति तदपेक्षयैवाऽपरमपीत्युक्तम् । स्वपक्षस्थापनपरपक्षखण्डनविषयशक्त्यशक्तिख्यापनप्रवृत्तो जल्पः तदन्या विजिगीषुकथा वितण्डेति सङ्क्षेपः ।

( इति जल्पवितण्डयोर्निरूपणम् । )

---

भाष्यमेव दूषयितुमेकदेशिमतेन व्याचष्टे इत्यन्वयो न युक्तः एकदेशिमतदूषणे ऽपि भाष्यस्यादूषणात् तस्यातदर्थकत्वादित्यत आह । दूषयितुमिति । यद्यपि योजनं यथाश्रुतपदानामेव भवति । न चात्रैकदेशि व्याख्यानपदं श्रुतमस्ति तथापि दूषयितुं व्याचष्टे इत्यत्र दूषणकर्म व्याख्यानमित्येवं परोऽयं ग्रन्थः ।

योज्यम्। उभयथाऽप्यनैकान्तिकत्वादिति। [४५।७] यद्यपि व्यभिचारादर्शनेऽपि अविनाभावो न सिद्ध्यति पृथगभिधानस्य पुरुषेच्छाधीनत्वात्, वादे चोद्भावनीयत्वस्यानुद्भावने तत्त्वप्रतिपत्तिव्याघातहेतुत्वप्रयुक्तत्वात् तथापि व्यभिचारस्य स्फुटत्वात् स एव दर्शितः। तस्मात् "वादे चोदनीया भविष्यन्ती"त्यनेन पृथगभिधानप्रयोजनमात्रं प्रतिपादितं हेतुत्वं पुनरविवक्षितमेव तार्किकम्मन्येनैकदेशिनाऽऽरोपितमित्यर्थः।

---

यद्यपीति। यद्यपि हेत्वाभासा वादे देशनीयाः पृथगभिहितत्वादित्यत्र पृथगभिधानस्य साधनस्य पुरुषेच्छाधीनत्वं व्यापकमिति नोपाधिः, हेत्वाभासाः पृथगभिहिताः वादे देशनीयत्वादित्युद्भावने तत्त्वप्रतिपत्तिव्याघातकत्वमपि वादादेशनीयत्वस्य साधनस्य व्यापकमिति नोपाधिः, तथापि विपक्षबाधकाभावमात्रमनेन विवक्षितमिति सम्प्रदायविदः।

तथापीति। उपाधेरपि व्यभिचारोन्नायकतया दूषकत्वे स्फुटे व्यभिचारे उपाध्यनुस्मरणस्य व्यर्थत्वादित्याशयः। तस्मादिति। व्याप्त्यभावाद्धेतुत्वमेकदेश्यभिमतमविवक्षितमेव, किन्तु हेत्वाभासानां वादे देशनीयत्वे मानान्तरसिद्ध एव तात्पर्य्यं सूत्रकारस्य पृथग्वचनेनोन्नीयत इत्यर्थः।

नन्वेवंरूपप्रयोजनलाभोऽपि कथं? न हि पृथगभिधानमात्रमत्र प्रमाणयितुं शक्यमित्यत आह । सामान्येति । [४५।१४] सामान्यतोऽभिहितं विशेषतोऽभिदधता सूत्रकृता प्रयोजनविशेषः सूचितः स एव भाष्यकृता दर्शित इत्यर्थः ।

अथ यद्येतदेव विवक्षितमस्य सूत्रकृतस्तदा किमिति न क्वचिच्छास्त्रप्रदेशे स्वयमेव दर्शितवानित्यत आह । एतावानेवेति । [४५।१५]

अथ भाष्यकारेण कथमिदमुन्नीयत इत्यत आह । तत्रेति । [४५।१६] किमेवमपीति । [४५।२०] किमनेन प्रतिपादितेन फलमित्यर्थः ।

नन्वग्रे वादे चोदनीयत्वमेव प्रतिपादयति इह तु विद्याप्रस्थानभेदज्ञापनार्थत्वं वर्णयति तत्कुतो न विरोध इत्यत आह । वादजल्पवितण्डा इत्यादि । [४५।२१] अत्रैवार्थे सूचकं वार्त्तिकमाह । अत एवेति । [४५।२२] अयमर्थः—यदि विद्याशब्देनास्य वादादयो न विव-

---

उत्तरग्रन्थोपयोगार्थमाह । नन्वेवमिति । नह्यीति । व्यभिचारस्योक्तत्वादित्यर्थः ।

तत्रेतीति । यद्यप्ययं परिशेषो न युक्तः आत्मतत्त्वावबोधक-

चिताः कथमग्रे वादव्यापारं दर्शयित्वा जल्पवितण्डयोः सर्वाण्येव निग्रहस्थानानि व्यापारत्वेनाह तद्यदयमेवं ब्रूते नूनमयमस्यार्थो विवक्षित इति ।

तदयं तात्पर्यसङ्क्षेपः—न तावदज्ञातस्वरूपवदज्ञातव्यापारफलभेदा वादादयश्चेतनेनाधिष्ठातुं शक्यन्ते न चानधिष्ठितेभ्यः फलसिद्धिः । तस्मात् स्वरूपवद्व्यापारफलभेदा अप्यमीषां प्रतिपादनीया भवन्ति । अत एव चतुर्थे फलमपि दर्शयिष्यति सूत्रकारः ।

( हेत्वाभासानां पृथगुपदेशोपपादनम् । )

---

स्वार्थानुमाने ऽपि हेत्वाभासोद्धारद्वारा हेत्वाभासज्ञानस्योपयोगात् तथापि तत्प्रयोजने सत्यस्य प्रयोजनस्याविरोध एवेति भावः ।

न तावदिति । यथाधिष्ठानस्य ज्ञानसाध्यत्वादधिष्ठेयस्वरूपत्वमुपदर्श्यते तथा व्यापारतोऽपीत्यर्थः ।

( हेत्वाभासानां पृथगुपदेशोपपादनम् । )

प्रयुज्येरन्(१)-सम्भाव्येरन्निति। न तु तेषामस्ति-सम्भवति प्रयोग इति।

ननु लक्षणेन पदार्थस्वरूपं न व्यवस्थाप्यते, अपि तु व्यवस्थितं ज्ञाप्यते तत्कुतो लक्षणतन्त्रत्वमित्यत आह। लक्ष्यत इति लक्षणमिति। [४६।४]

ननु यदि पृथगभिधानेनैव वादे चोदनीयत्वं प्रतिपाद्यते कथं न्यूनाधिकापसिद्धान्तानां पृथगनभि-धाने तत्र चोदनीयत्वप्रतिपत्तिः। अथान्यथापि तेषां तद्गम्यत एव, तदा हेत्वाभासेष्वपि स एव प्रकारो ऽस्तु कृतं पृथगभिधानेनेत्यत आह। हेत्वाभासाना-ञ्चेति। [४६।१४]

---

ननु वादे हेत्वाभासप्रयोगो नायुक्तः पुरुषेच्छामात्राधीन-त्वात्तस्येत्यत आह। सम्भाव्येरन्निति। वादे हेत्वाभासानजानतः प्रयुञ्जानस्तत्त्वबुभुत्सुतामेव व्याहन्तीति न तत्र तत्सम्भव इत्यर्थः। एवमस्ति सम्भवतीत्यादिशङ्कापरिहारो ऽयमेव चेति।

'यदनुद्भावने तत्त्वप्रतिपत्तिव्याघातः स सर्वो वादे देशनीय इति सूचितमेकदेशस्य पृथग्ग्रहणेनेत्यर्थः। अत्र यदनुद्भावने तत्त्वप्रतिपत्तिव्याघातस्तदेवोद्भावनीयं न तु हेत्वाभासन्यूना-

(१) प्रसज्येरन् इति २पु पा.।

अयमाशयः—नहि हेत्वाभासाः पृथगभिहिता इत्येव वादे चोदनीयत्वं तेषां गम्यते, अपि तु वादस्य तत्त्वप्रतिपित्सुकथात्वात् हेत्वाभासानां चानुद्भावने तत्त्वप्रतिपत्तिव्याघातात्तत्त्वबुभुत्सुनाऽवश्यमुद्भावनीयास्ते, अन्यथा वादो वादत्वं जह्यात्। हेत्वाभासानां चानुद्भावनं तत्त्वप्रतिपत्तिव्याघातकमिति, अयमेव च न्यायो विशेषतः पृथगभिधानेन सूचितः सूत्रकारेण स च न्यूनादिषु समान इति।

एवञ्च व्यवस्थिते वार्त्तिककृतोपि प्रश्नो नाप्रस्ताविक इत्याह। तत्र पृच्छतीति। [४६।१७]

---

धिकापसिद्धान्तपरिगणनं कर्त्तव्यम्, असाधारणे सत्प्रतिपक्षे च हेत्वाभासानुद्भावने ऽपि तत्त्वप्रतिपत्तेः सम्भवात्। निग्रहस्थानान्तरस्याप्यनुद्भावने तत्त्वप्रतिपत्तिव्याघातस्य वक्ष्यमाणत्वादित्ययमेवार्थः सूत्रकृता सूचित इति केचित्। तन्न। वादसाध्ये तत्त्वनिर्णये साधनद्वयोपस्थितावेकत्र हेत्वाभासोद्भावनस्यावश्यकत्वात्, अन्यथा वस्तुनो विरुद्धद्विरूपतापत्तेः। सर्वहेत्वाभासानुद्भावनस्य तत्त्वप्रतिपत्तिप्रतिघातकत्वे ऽपि किञ्चिद्धेत्वाभासानुद्भावनस्य तथात्वमस्त्येवेत्येतावन्मात्रमेव प्रयोजकं न्यूनाधिकापसिद्धान्तानुद्भावनमपि तत्त्वप्रतिं व्याहन्त्येव।

ननु यदि जल्पवितण्डयोस्तत्त्वप्रतिपादनार्थमवतारः किमप्रतिभाद्युद्भावनेन ! अथ न तदर्थत्वं तयोः किं तदवतारेण । न चान्यार्थत्वे तयोरेतच्छास्त्रव्युत्पाद्यत्वमित्यत आह । साहङ्कारो हीति । [४६।१८]
अहङ्कृतस्य तस्य तत्त्वप्रतिपत्तेरयोगादहङ्कारशातनेनानयोस्तत्त्वप्रतिपादनार्थत्वं तच्चाप्रतिभाद्युद्भावनं विना न स्यादिति तत्त्वं प्रतिपिपादयिषता कर्त्तव्यमित्यर्थः ।

( वादे निग्रहस्थानोद्भावनविचारः । )

---

ननु छलादीनां ज्ञानं न साक्षान्निःश्रेयस उपयुज्यते आत्मादिवत्, नापि तद्व्यवस्थापनद्वारा प्रमाणवत्,

---

ननु साहङ्कारोऽपि विजिगीषुरप्रतिभादिना तिरस्कृत्य पश्चाद्वादेन व्युत्पाद्यत इति किमर्थमुक्तमित्यत आह । नन्विति । न चान्येति । तत्त्वज्ञानप्रयोजके शास्त्रे तदुपयोगिन एव व्युत्पाद्यत्वादित्यर्थः ।

अहङ्कारेति । तथा च परम्परया जल्पवितण्डयोरपि तत्त्वज्ञानोपयोगित्वादेतच्छास्त्रव्युत्पाद्यत्वमित्यर्थः ।

( इति वादे निग्रहस्थानोद्भावनविचारः । )

---

परिज्ञानफलप्रदर्शनोपयोगार्थमाह । नन्विति । नन्वतावता

नापि न्यायाङ्गतया संशयादिवत्, न च परिज्ञानमेव फलमपुरुषार्थत्वादित्यत आह। परिज्ञानस्य च फलमुक्तमिति। [४६।२१] तत्त्वप्रतिपत्त्युपायभूतकथान्वय-परिकरशुद्धिद्वारा तत्परिज्ञानं निःश्रेयसोपयोगीत्यर्थः।

"स्वयं च सुकरः प्रयोग" इति ग्रन्थस्य प्रत्यक्ष-सिद्धत्वात् "किमुक्तं भवती"ति स्वरूपप्रश्नो ऽसङ्गत इत्यतः पूरयति। अनेन भाष्येणेति। [४६।२८]

( छलजातिनिग्रहस्थानानां प्रयोजननिरूपणम्। )

---

भाष्ये प्रयोजनान्तराभिधानं न सूत्रकृदभिहित-प्रयोजनविरोधि, किन्तु तदनुगुणमेवेत्याशयवान् सूत्र-प्रयोजनमनुवदति। सूत्रकारेणेति। [४७।६] अनुगुणत्वं तु व्याप्तिप्रदर्शनेन, न ह्यस्ति सम्भवः पुरुषार्थस्या-प्रमाणहेतुकस्येति, तेनायमर्थो भाष्यस्य, यतः सर्वं प्रेक्षा-

---

प्येतच्छास्त्रसाध्ये फले तदुपयोगो नोक्त इत्यत आह। तत्त्वेति। ग्रन्थस्येति। इतिना शब्दस्वरूपस्योपस्थापितत्वादिति भावः।

( इति छलजातिनिग्रहस्थानानां प्रयोजननिरूपणम्। )

---

ननु भाष्योक्तप्रयोजनव्याख्यावसरे सूत्रकारोक्तप्रयोजनानुवादो व्यर्थ इत्यत आह। भाष्येति। अनुगुणत्वमेवाह। यत इति।

वत्प्रयोजनमान्वीक्षिकीव्युत्पाद्यप्रमाणमूलमतो निःश्रेयसस्य परमपुरुषार्थस्य तन्मूलतायां विपर्ययशङ्कैव नास्ति अतन्मूलत्वे पुरुषार्थत्वहानिप्रसङ्गादिति तदिदमुक्तं नास्त्येव तदिति । [४७।७]

ननु न तावदितरासु प्रमाणव्यवहारो नास्त्येव तदितरव्यवहारस्याप्युच्छेदप्रसङ्गात्, प्रमाणव्यवहारसद्भावे तु किमान्वीक्षिक्या तत्र प्रकाशयितव्यं ? तत्प्रमाणैरेव प्रकाशितत्वादित्यत आह। यद्यपीति। [४७।८]
व्युत्पादितेन प्रमाणादिना तत्र व्यवहारस्तद्व्युत्पत्तिस्त्वित एव न तत इत्यर्थः ।

ननु प्रणेतृप्रमाणोपजीवनमान्वीक्षिक्यामपि समान-

---

निःश्रेयसमेतच्छास्त्रप्रतिपाद्यप्रमाणमूलं पुरुषार्थत्वात् इतरविद्यासाध्यपुरुषार्थवदिति मानमित्यर्थः। नन्वितरविद्यानां प्रामाणिकार्थविषयत्वेऽपि प्रमाणादिव्यवहारो नास्तीत्येतावतैव विद्यान्तरादान्वीक्षिकीभेदः स्यादित्यत आह । नन्वनेनेति(१) । दूषणं निरस्यति व्युत्पादितेनेति। इतरत्र प्रमाणादिव्यवहारे सत्यपि प्रमाणानां गमकत्वनिरूपणमत्रैवेत्यर्थः। एतावतैव दूषणे निरस्ते किमुत्तरग्रन्थेनेत्यत आह । नन्विति । यथाश्रुतो दृष्टान्तो विषम इति

---

(१) नन्विति इति प्रतीकपाठो युक्त इति ध्येयम् ।

मतो न विद्यान्तराद्विशेष इत्यत आह । न तु प्रमाणा-दीति । [४७।११] प्रमाणोपजीवने समाने ऽपि यथैतद्व्युत्पाद्यमुपजीवन्ति ताः, नैवं तद्व्युत्पाद्यमियमपीत्यर्थः ।

ननु उपजीवकतासाम्ये ऽपि परस्परोपजीव्योपजीवकभावः क्व नाम दृष्ट इत्यत आह । यथेति । [४७।११] प्रत्यक्षाद्यपि हि स्वप्रामाण्यव्यवस्थितये प्रमाणान्तरमपेक्षते, अनुमानमपि स्वोत्पत्तये, तथापि प्रत्यक्षाद्येवापेक्ष्यानुमानं स्वविषये प्रवर्त्तते न तूपजीवकानुमानमपेक्ष्य प्रत्यक्षादि, अनुमानान्तरं तु स्वप्रामाण्यव्युत्पादकमपेक्षते, तदपि न तदैव, किन्तु प्रागेवेत्यभिप्रायेण व्युत्पाद्यसजातीयापेक्षानिराकरणायोक्तं न प्रत्यक्षादिविषयमपि तदानीमेवेति । [४७।१२] प्रत्यक्षादिरूपो विषयः प्रत्यक्षादिविषय इति । विद्योपकरणं-प्रमा-

---

यवार्थं दृष्टान्तस्तमाह । स्वोत्पत्तय इति । अत्र प्रमाणान्तरमपेक्षत इत्यनुषञ्जनीयम् ।

अनुमानान्तरमिति । कर्मपदमपेक्ष्यत इत्यत्र प्रत्यक्षादीति कर्तृपदमनुषञ्जनीयम् । किन्त्विति । प्रत्यक्षप्रवृत्त्युत्तरं तत्प्रामाण्यनिश्चयात् पूर्वं प्रामाण्यग्राहकप्रमाणापेक्षेत्यर्थः । ननु पूर्वं प्रमाणविषयापेक्षेति कुतः प्रमाणविषयापेक्षा निषिध्यत इत्यत आह । प्रत्यक्षादिरूप इति । ग्रहणक्रियायां कर्त्तारं पूरयति । इति

णादि। तस्य ग्रहणं "प्रमाणादिप्रकाशितमर्थमितरा विद्याः प्रतिपद्यन्त" इति वार्त्तिकेन।

एतदुक्तं भवति—वार्त्तिके प्रमाणादिग्रहणं भाष्योक्तविद्याप्रकाशकत्वनिर्वाहाय, न तु स्वातन्त्र्येणातो न विरोधः। तदेवं स्वरूपेणापेक्षां दर्शयित्वा विषयगताऽपेक्षा भाष्यकृता दर्शिता "उपाय" इति। तद्वार्त्तिकं योजयतुं व्याचष्टे। संप्रतीति। [४७।१३]

ननु विद्यान्तराणां शब्दात्मकतया प्रमाणत्वात् तस्य च स्वप्रतिपाद्यानपेक्षितत्वात् किं तत्रान्वीक्षिकी करिष्यतीत्यत आह। न हीति [४७।१४] प्रमाणस्य सतः

---

वार्त्तिकेनेति। स्वरूपेणेति। आन्वीक्षिकीव्युत्पादितैः प्रमाणैरर्थं निश्चित्य विद्यान्तरप्रणयनादिति भावः। विषयगतेति। विद्यान्तरजन्यार्थनिश्चये ऽप्यान्वीक्षिक्यपेक्षणादित्यर्थः। तद्वार्त्तिकमिति। "उपायः सर्वकर्मणा"मिति वार्त्तिकं योजयितुं तद्भाष्यं व्याचष्ट इत्यर्थः। अप्रसक्तप्रतिषेधमाशङ्क्याह। नन्विति।

प्रमाणस्येति। एकस्य प्रमाणस्य स्वविषयप्रमितौ प्रमाणान्तरापेक्षायां जातिसङ्करप्रसङ्गादिति भावः। नत्वित्यत्रापि नास्तीत्यनुषञ्जनीयम्। तेन तर्कापेक्षाऽस्त्येवेत्यर्थः। उपलक्षणञ्चैतत्। तात्पर्यग्राहकन्यायस्याप्यपेक्षणात्। इत्यादीत्यादिग्रहणेनावघातस्य

स्वप्रतिपाद्ये प्रमाणान्तरापेक्षा नास्ति न तु स्वेतिकर्त्तव्यताभूततर्कापेक्षापि, स चान्वीक्षिकीलभ्य इत्यर्थः ।

अथ तर्कमनपेक्षमाणस्य किं स्यादित्यत आह । मा भूदिति । [४७।१७] आदिग्रहणेन "यजमानः प्रस्तर" इत्यादि ग्राह्यम् । तर्कश्च संशयमन्तरेण नावतरतीत्युपसंहारे सोऽपि दर्शितः । यद्यपि सतर्कप्रमाणप्रवृत्तिरेव परीक्षा तथापीह गोबलीवर्दन्यायेन प्रमाणस्य स्वपदोपात्तत्वात् प्रयोजनजिज्ञासातर्का एव विवक्षिताः । प्रमाणस्य निवेशः-प्रवृत्तिः तस्य द्वारमविरोधः अर्थतत्त्वं-पदार्थतत्त्वं वाक्यार्थतत्त्वं वा । अवधार्य

---

यवनीवारादिसाधारण्यं, संमार्गस्य (१) च ग्रहसाधारण्यमान्वीक्षिक्या विना नावस्थाप्यत इत्यादि द्रष्टव्यं ।

तर्कश्चेति । प्रमाणेतिकर्त्तव्यताभूतस्य तर्कस्य संशये सत्येव भावादिति भावः । तेन शब्दानित्यत्व द्रष्टव्यते । यदि नित्यः स्यात्कृतको न स्यादिति तर्कस्य संशयं विनापि सम्भवे व्यभिचाराभावः । विवक्षिता इति । परीक्षापदेनेत्यर्थः । प्रयोजनेति । सतर्कप्रमाणस्यैव परीक्षापदवाच्यत्वात् प्रयोजनजिज्ञासयोस्तत्रानन्तर्भावेऽपि तर्को न जिज्ञासां विना, सा च न प्रयोजनं विना, इत्यविनाभावात्ते अप्युक्ते । वाक्यार्थतत्त्वमिति । वाक्यार्थे यत्तत्वं

---

(१) संवमर्गस्येति क्वचित् पाठः ।

प्रमाणान्तरादर्थवादादेव वा। तत्र त्रयी-विधिनिषेध-रूपा निवेशनीयेत्यर्थः।

एवं च दण्डनीत्यां यमो राजा कुबेरो वा राजे-त्यादि, वार्तायां माघे परिकर्षिता भूमिः स्वर्णमयं फल-माधत्त इत्यादि, तर्कानपेक्षायां विफलायते। तस्मा-त्तत्रापि तदपेक्षाऽस्तीत्यतिदिशति। एवमिति। [४७।१८] "विषयमिति शेष" इत्यत्रापि विधेयतया निषेध्य-तयेतिशेषः।

इदानीं व्यापारगतामपेक्षामाह भाष्यमतेन। अपिचेति। [४७।१८] द्रव्यस्य यथा "दध्ना जुहोती"-त्यादि, गुणस्य यथा "ऽरुणया सोमं क्रीणाती"त्यादि,

---

तात्पर्यं तदवधार्येत्यर्थः। तेन मानान्तरात् तद्वाक्यार्थतत्त्वावधारणे शब्दस्यानानुवादकत्वं दोषः। अर्थवादादिति। यववराहादिपदा-र्थावधारणे अनुवादापेक्षणादित्यर्थः।

• विफलायत इति। तर्कावतारं विनोपचारस्याज्ञानादि-त्यर्थः। विषयत्वे ऽपि प्रकाराकाङ्क्षायामाह। विधेयतयेति। गुणस्येति। यद्यपि गुणपदस्य वैशेषिकगुणपरत्वे सामदानादि-ष्वेषणाद्यव्याप्तिः विशेषणमात्रपरत्वे द्रव्यकर्मणोरपि तथात्वाच्च ततो भेदः स्यात् एवं कर्मपदस्य चलनाद्यर्थत्वे ऽभिमन्त्रणाद्याप्तिः

*कर्मणो यथा व्रीहीनवहन्तीत्यादि, दण्डनीत्यामपि* यथा "द्रव्यस्य स्वाम्यमात्ये"त्यादि, गुणस्य यथा सामभेदेत्यादि, कर्मणो यथा "शस्त्रशिक्षागजवाजिवाहन" मिति, वार्त्तायामपि "द्रव्यस्य यथायथर्त्तु बीजं संगृह्णीया"दित्यादि, गुणस्य यथा "भूमिं लावयेच्छोषये"दित्यादि, कर्मणो यथा "स्थानान्तरं निनीषन्ननोकहमभिमन्त्रये"दित्यादि, विषयं दर्शयित्वा संशयमाह । तत्र किमिति । [४७।२०]

संशयकारणं च विधिपदसमभिव्याहारस्तत्पदस्य, विधिपदसमभिव्याहृतस्वपदो ह्यधिकारी न विधिविषयस्तथाभूतमेव च अग्निहोत्रं तद्विषयः अतः साध्ये संशयः किं विधिपदसमभिव्याहृतपदत्वात् अग्निहोत्र-

धात्वर्थमात्रार्थत्वे तु सर्वमेव कर्मेति न भेदः तथापि साम सान्त्वनं राज्ञां दण्डादिसाध्या प्रतीतिः दानं सङ्कल्पविशेषो भेदश्च परशिष्टादेः स्वपक्षेऽनुरागः एवं रूपान्तरपरावृत्तिः स्नेहः शोषश्च जलविभाग इति वैशेषिकगुणा एव विवक्षिताः । अभिमन्त्रणं च मन्त्रकरणकर्मिकानुकूलचेष्टाविशेष इत्येके । गोवृषन्यायमाश्रित्य भेदोपन्यास इत्यन्ये ।

संशयहेतुमाह । संशयेति । कोटिद्वयसाधारणमस्याह ।

*वद्विषयो भवतु स्वर्गोऽधिकारिवद्वा नेति पूर्वपक्ष-मादर्शयं स्तद्वानाय तत्रानिष्टप्रसङ्गमाह । तत्र यद्दीति ।* [४७।२२]

न च श्येनादिसाध्याया हिंसाया विहितत्वेनार्थ-त्वमेव भवतु का क्षतिरिति वाच्यम्। विधिर्हि प्रवर्त्तकः स्वज्ञानेनेच्छामन्तरा कृत्वा प्रयत्नोत्पादक इति यावत् । स च प्रयत्नो न साध्यविषयः कर्त्तुं शक्यते उपायो हि प्रयत्नविषयो न तु फलं, तस्मात्प्रयत्नविषयत्वात् साधनेतिकर्तव्यते एव विधीयेते न तु साध्यं तद-विषयत्वात् । न हि ज्ञापकत्वमात्रं विधित्वं अपि

---

विधिपदेति । विधिसमभिव्याहृतस्तदप्रतिपाद्यः (१) स्वर्गकामः पुरुषो न विधेय इत्यर्थः । विधिर्हीति ।

ननु फलस्य प्रयत्नागोचरत्वं साध्यतयाऽनुपायतया वा । नाद्यः यागादेरपि प्रयत्नविषयत्वानापत्तेः । न च शरीरादिकमेव प्रयत्न-गोचरो न तु यागादिः तस्योद्देश्यमात्रत्वादिति वाच्यम् । साधनेतिकर्त्तव्यतयोरपि तथा सति प्रवर्त्तकं शास्त्रमाभासः स्यादिति स्वोद्देश्यहानिप्रसङ्गात् । नान्त्यः स्वर्गादेरपि भोगाद्यु-पायत्वमप्रतिसन्धाय तत्साधनगोचराया अपि प्रवृत्तेरभावात् । न च यदुद्देशेन या प्रवृत्तिस्तदुपाय एव तद्गोचरः स्वर्गोद्देशेन

---

(१) विधिसमभिव्याहृतस्तत्पदप्रतिपाद्य इति युक्तं भाति ।

त्विच्छाविषयज्ञापकत्वमिति। तस्माच्छ्येनादिसाध्या हिंसाऽनर्थभूतैवार्थः स्याद्यदि विधिविषयः स्यादिति साधूक्तम्। सिद्धान्ते प्रमाणमादर्शयन्नेव साध्यपदसमभिव्याहारस्तर्हि क्वोपयुज्यते इत्याशङ्कामपनयति। अथ साध्यांशमिति। [४७।२२] इष्टाभ्युपायता हि नेष्टमप्रतीत्य प्रत्येतुं शक्या, न चाप्रतीतैव सा प्रवर्त्तयति अतस्तां विशेष्टुमिष्टस्यानुवादोऽयमित्यर्थः।

मण्डलीकरणगोचरज्ञत्युत्पत्तेः। अत्राहुः—विधिवाक्यं न यागादेः साक्षात्प्रवृत्तिविषयतां बोधयति येनोद्देश्यहानिः स्यात् अपि तूपायतां, तथा च तदसिद्धिदशायां सिद्धे तदुपाये प्रवृत्तिः तत्सिद्धौ च तत्र प्रवृत्तिः। न चैवं फले ऽपि तत् सम्भवः प्रवर्त्तकेष्टसाधनताज्ञानाभावात्। यद्वा स्वर्गस्यापि भोगसाधनत्वज्ञानं न यागादौ प्रवृत्तिप्रयोजकं किन्तु भोगविषयत्वज्ञानम्। तथाच फलस्यानुपादेयत्वेन ज्ञानाद्यथा स्वर्गो न प्रवृत्तिविषयस्तथाऽभिचारस्याप्यनुपायत्वेन ज्ञानाच्च प्रवृत्तिविषयत्वमिति।

साध्यांशस्यानुवादप्रयोजनमाह। इष्टाभ्युपायता हीति। नन्विष्टसाधनत्वबोधकादेवेष्टज्ञानमपि स्यात् किं तदर्थेनानुवादेनेत्यत आह(१)इति। सामान्यत इष्टज्ञानतत्साधनत्वज्ञानसम्भवे ऽपि विशिष्येष्टज्ञानं विना न प्रवृत्तिः। बलवदनिष्टाननुबन्धित्वज्ञानस्य

(१) न च इत्यादिग्रन्थमिति भाति।

तत्किमिदानीमविहितमित्येतावताऽनर्थो ? नेत्याह । न हिंस्यादिति । [४७।२७]

ननु भवत्वेवं तावत्तथाप्यान्वीक्षिक्याः किमायातमित्यत आह । तदिहेति । [४७।२७] विषयान्तरमाह । एवमिति । [४७।२८]

---

प्रवर्त्तकत्वात् । तच्चेष्टतावच्छेदकज्ञानसाध्यमिति तदर्थमिष्टस्य विशिष्यानुवाद इत्यर्थः ।

तत्किमिति । तथा सति स्वर्गोप्यविधेयतयाऽनर्थः स्यादिति भावः । न च निषेधादेव हिंसाया अनर्थत्वस्य सिद्धत्वादविहितत्वेनेति व्यर्थमिति वाच्यम् । यदि हिंसा विहिता स्यात्तदा निषेधे सत्यपि सर्वभूताहिंसाश्रुतिश्वेतच्छागालम्भनश्रुत्योरिव सामान्यविशेषन्यायावतारः स्यादित्यविहितत्वस्यापि सप्रयोजनत्वात् । अथ विरोधे सति तदवतारः यथा "पदे जुहोति अप्सु जुहोती-" त्यादौ, भिन्नप्रकरणाम्नातस्य होमविशेषस्य सन्निधिश्रुतप्रकरणान्वितत्वान्नाधिकरणाकाङ्क्षा "अत आहवनीये जुहोती"त्यत्र होमत्वेन तदन्यहोमस्याधिकरणाकाङ्क्षायामाहवनीयान्वयः । श्वेतच्छागालम्भने तु पुरुषस्य प्रत्यवाये ऽपि क्रतोरुपकारो भविष्यतीति न विरोधः । ननु बलवदनिष्टाननुबन्धीष्टसाधनत्वस्य विध्यर्थत्वे तत्र नञोऽन्वये विशेषणाभावाद्बलवदनिष्टानुबन्धित्वपर्यवसाने विधिनिषेधयोर्विरोधात् ।

यथा आमिक्षायाः प्रयोजकत्वं क्षीरहोमस्थाने तद्विनिवेशनाद्रसादिसाम्यात् वाजिनस्याप्रयोजकत्वं अवर्जनीयमात्रोत्पत्तिकत्वात्। आदिग्रहणेन शेषभागहोमविलोपादयो गृह्यन्ते। सर्वा विद्या इति विद्याशब्देन तद्धर्मान् लक्षयतीति न भाष्यव्याख्याविरोधः। वार्त्तिककारस्तु—धर्माणां विद्यापारतन्त्र्यं विवक्षन्निति शेषः। सङ्करप्रसङ्ग इति [४८।६] फलस्य। तथाच विद्यान्तरफलेनैवास्याः फलवत्त्वं न पुनरसाधारणं

---

यथेति। "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिन"मित्यत्र दध्यानयनप्रयोजकत्वमामिक्षाया न तु वाजिनस्य, पाठात् प्रथमोपस्थितेः वैश्वदेवीत्यत्र "सास्य देवते"तिविहित-तद्धितस्य देवतासम्बन्धोपस्थापकत्वेनामिक्षायागस्य प्रतीतेश्च। तत्रामिक्षाया दुग्धरससाम्याद्रसतस्तत्रेति जैमिनीयसूत्रात्तत्राभिनिवेशो वाजिनस्यामिक्षाजलस्य अन्यार्थप्रवृत्त्यैवोत्पादनात्। तदपवादे वाजिनहोमलोप एवेत्यर्थः। ननु सर्वधर्माश्रयत्वे ऽपि न सर्वविद्याश्रयत्वमान्वीक्षिक्या इत्यत आह। विद्याशब्देनेति।

वार्त्तिककारीयव्याख्यानबीजमाह। धर्माणामिति। तथा च विवक्षा परं भिद्यते फलतस्त्वविरोध इत्यर्थः। निःश्रेयसेनोपायसङ्करभ्रमं निवारयति। फलस्येति। ततः किमित्यत आह। तथा

फलमस्या अस्तीत्यर्थः । असाङ्कर्यं दर्शयितुं तासामेव तावदसाधारणं फलमाह । विद्यान्तराणीति । [४८।१०]
एतस्या असाधारणं फलमाह । इह त्विति । [४८।१२]
अन्यत्रास्याः प्रतिपादितोपयोगविरोधो माभूदित्याशयवतोक्तं प्रमाणादि यद्यपि साधारणमिति । [४८।१२]
एतेनैतदुक्तं भवति—विद्यान्तरफलान्यपि यदान्वीक्षिक्यामायतन्ते सेयमुपास्तिसिद्धिरस्याः । यत्तु प्रधानमस्याः फलं तदसङ्कीर्णमेव विद्यान्तरेष्वसम्भवादिति ।

( इति आन्वीक्षिकीप्रयोजनकथनम् । )

---

चेति । तासामिति । विद्यान्तरासाधारणफलबोधे आन्वीक्षिक्या असाधारणफलासाङ्कर्यस्याभ्युपगमादित्यर्थः । आयतन्ते—आयत्तानि भवन्तीत्यर्थः । उपासिद्धिः—अन्योद्देशप्रवृत्तादपि तत्सिद्धिरित्यर्थः ।

( इत्यान्वीक्षिकीप्रयोजनकथनम् । )

वादादीनामिति अतद्गुणसंविज्ञानो बहुव्रीहिः वादस्य पराभिभवार्थमप्रवृत्तेः, जल्पादयो हि मदादिहेतवः पराभिभवोपायत्वात् द्रव्यसंपत्तिवदिति प्रयोगः। तत्रास्य विरुद्धत्वं तावदाह। तत्र जल्पादीनामिति। [४८।१६]

अयमाशयः—न तावत्प्रतिपाद्यस्य जल्पवितण्डयोरधिकारः, किन्तु प्रतिपन्नस्य तत्त्वप्रतिपत्तिपालनार्थं दुरवलिप्तप्रतिपादनार्थञ्च तयोरधिकारः, पराहङ्कारशातनञ्च मदमानादिविरुद्धमेव तेषां दोषविशेषत्वात्, अहङ्कारशातनस्य तन्निरोधरूपत्वात्। न च पराभिभवोपायभूतशब्दवाच्यतामात्रेणानुमानं, वागादीनामपि विषाग्नित्वप्रसङ्गात्।

---

ननु तत्र जल्पादीनामित्यनेन न कश्चिद्धेतुदोष उक्तः किन्तु हेतोः सिद्धिरेवोक्तेत्यत आह। तत्रेति। ननु यस्याहङ्कारशातनं तस्य मदाद्यहेतुत्वे ऽपि शातयितुस्तद्धेतुत ऽस्त्येवेत्यत आह। अयमिति। तस्यापि पराहङ्कारशातनं न द्वेषप्रयुक्तं किन्तु करुणया तत्त्वप्रतिपादनप्रयुक्तं, जिगीषापि तदर्थैवेत्यर्थः।

अत पक्षे पराहङ्कारशातनं पराभिभवः दृष्टान्ते तु चपेटादिरित्यर्थभेदे ऽपि यदि पराभिभवोपायशब्दवाच्यत्वमात्रेणानुमानं

स्यादेतत् पराभिभवोपायत्वेन हेतुना मदमानादिहेतुत्वं मासैत्सीत्, अन्वयव्यतिरेकाभ्यामेव सिद्धत्वित्यत आह। मदमानादिहेतुत्वञ्च हेतुरसिद्ध इति। [४८।२२] "सति च तत्त्वविदां न सम्भवती"ति वदता यथाश्रुतस्य पराभिभवोपायत्वस्यानैकान्तिकत्वमपि सूचितम्। अतो जल्पादितत्त्वज्ञानवतामपि यदि मानादयो दृश्यन्ते न ते तद्धेतुकाः, किन्तु बलवन्मिथ्याज्ञानहेतुका एवेति सनकाद्युदाहरणफलमिति। एतच्च स्फुटमित्यभिप्रायेणाह। उपसंहरतीति। [४८।२२]

( इति वादादिज्ञानस्य मदादिहेतुत्वनिरासः। )

( प्रथमसूत्रव्याख्यानं समाप्तम्। )

---

तदा वाग्विषाणिनी गोत्वात्खरभिवदित्यनुमानं स्यादित्यत आह न चेति। हेतोर्दूषणान्तरे तात्पर्यमाह। पराभिभवेति। दूषणान्तरसम्भवं तदनुद्भावनबीजं चाह। सति चेति। मदादिप्रधानोदासविशेषः—सनकः।

( इति वादादिज्ञानस्य मदादिहेतुत्वनिरासः। )

( इति प्रथमसूत्रव्याख्यानं सम्पूर्णम्। )

**अप्रतीतस्वरूपस्य प्रयोजनाभिसम्बन्धस्य परीक्षा न युज्यते निराश्रयत्वात् प्रथमसूत्रमुद्देशपरमेवेत्यत आह, तदेवमिति । [४८।२५] अभिधेयसम्बन्धप्रयोजनपरादेव तस्मादुद्देशोऽप्यवगतः स चापेक्षितत्वात् गृहीत**

---

ननु प्रमाणादिपदार्थानामुद्देशकथनं व्यर्थं तेषामत्रापरीक्षणीयत्वादित्यत आह । अप्रतीतेति । आद्यसूत्रस्य प्रयोजनाभिसम्बन्धपरत्वे प्रमाणादीनामुद्देशाभावात्तल्लक्षणपरीक्षयोरनवसरः प्रमाणाद्युद्देशपरत्वे प्रयोजनसम्बन्धपरीक्षानुपपत्तिः तस्यानभिधानात् उभयपरत्वे च वाक्यभेदापत्तिरित्यर्थः । अभिधेयेति । प्रवर्त्तनीयप्रवृत्त्यर्थं प्रमाणादितत्त्वज्ञानस्य निःश्रेयसहेतुतायामाद्यसूत्रस्य तात्पर्ये ऽवधृते तत्त्वज्ञानविषयाः प्रमाणादयो ऽपि धर्मिण उपस्थिता इत्येकोपस्थित्यैवोभयनिर्वाहान्न वाक्यभेद इत्यर्थः ।

ननु धर्म्युपस्थितावपि तस्य न्यूनाधिकसङ्ख्याव्यवच्छेदपरत्वे मानाभावः तस्यापदार्थत्वात् । तत्र तात्पर्यज्ञापकस्य चाभावात् । न ह्यत्र प्रथमं पदार्थसामान्योपस्थापकमस्ति येन सामान्योपस्थितौ सत्यां विशेषाभिधानस्य न्यूनाधिकसंख्याव्यवच्छेदपरत्वमवगम्येत । अत्राहुः—तत्त्वज्ञानादित्यत्र तत्त्वपदादेव पदार्थसामान्ये लब्धे यत्प्रमाणादिरूपविशेषोपादानं तदितरव्यवच्छेदतात्पर्यज्ञापकं, व्यवच्छेद्यं च यद्यपि युक्तिशास्त्रतया नैतत्सूत्रं शब्दविधया बोधयति, किन्तु युक्तिद्वारा, युक्तिश्च परीक्षैकवाक्यतालभ्येति

इत्यर्थः। एतेन परीक्षाविषयो दर्शितः। उचितं दर्शयन्नेव तदतिक्रमे हेतुमाह। तेषामिति। [४८।२१] एतेन फलतः सम्बन्धपरीक्षायाः प्रयोजनमपि दर्शितम्। अभिधानद्वैविध्य-मुभयकोटिसंस्पर्शः। समीचीनमित्या-द्यनुरोधेन यथा वार्तिकादौत्यादावार्थः क्रमो ग्राह्यः। तस्मादभिधानसामान्यात्—अभिधानसाधर्म्यमात्रात्

---

परीक्षायां तत्तात्पर्याविषयकतयोद्देशस्यापि तत्र तात्पर्यकल्पने मानाभावः अनन्यलभ्य एव तत्र तात्पर्यकल्पनात्, तथापि परीक्षावाक्यद्वारैवोद्देशस्य व्यवच्छेदे तात्पर्यमित्येवम्परोऽयं ग्रन्थः।

ननूद्देशानन्तरं लक्षणपरीक्षयोरत्राभावात् किं तत्कीर्त्तनेनेत्यत आह। उचितमिति। उद्देशानन्तरमेव लक्षणपरीक्षयोरौचित्य-मित्यर्थः। एतेनेति। निःश्रेयसार्थिनां तज्जनकप्रमाणादिलक्षण-परीक्षाविषया प्रवृत्तिः प्रयोजनम्। न ह्यपरीक्षिते प्रयोजनसम्बन्धे तत्र तेषां निष्कम्पा प्रवृत्तिः सम्भवतीति भावः।

नन्वभिधानस्य द्वैविध्यं समीचीनासमीचीनत्वरूपमत्र विव-क्षितं न च क्विमप्यभिधानमुभयरूपं दृष्टमित्यत आह। उभयेति। तथा चाभिधानत्वमुभयकोटिसहचरितं दृष्टमतस्तस्मा-दत्र संशय इत्यर्थः। यथासङ्ख्यमन्वये विरोधादन्यथा व्याचष्टे। समीचीनमिति। ननु साधारणधर्ममात्रं न संशायकं तस्य

**निर्णायकरहितात्, दृश्यमानादिति यावत्। उभयथा दर्शनाच्चेति। [४८।४[ तत्सहचरितोभयकोटिदर्शनजसंस्कारभुवः स्मरणादिति यावत्। एतच्च सूत्रकारस्याऽऽप्तत्वावधारणात् प्रागिति मन्तव्यम्। यद्यपि चाऽऽप्तवचन एव साक्षात्संशयं दर्शयति तथापि**

---

विशेषदर्शने ऽपि सति भावात् न च तदप्यज्ञायमानं तथेत्यत आह। निर्णायकेति।

ननूभयथादर्शनं चिरातीतं न संशयहेतुरित्यत आह। तत्सहचरितेति। न चोभयकोटिसंस्कारादेव संशयोत्पत्तौ किं स्मरणेनेति वाच्यम्। संस्कारजन्यत्वे तस्य स्मृतित्वापत्तेः। स्मृतित्वे तस्यैव तन्त्रत्वात्। अत एव प्रत्यभिज्ञाने ऽपि तत्तास्मृतेर्हेतुत्वं वक्ष्यति द्वितीये ऽध्याये टीकाकारः। न च व्यवहितविशेषणज्ञानजन्यं विशिष्टज्ञानमिति न तस्य संस्कारजन्यत्वमिति परीहारो गौरवात्। एतच्चेति। एतत्संशयस्वरूपमित्यर्थः। अभ्युपगमवादश्चायम्। सूत्राणामाप्तोपदेशतया प्रामाण्ये युक्तिशास्त्रत्वव्याघातात्। ननु भाष्ये निःश्रेयसं परीक्ष्यतया प्रतिज्ञातं टीकायामभिधाने संशय उक्तः सम्बन्धश्च परीक्षित इति विरोध इत्यत आह। यद्यपीति। अभिधानसंशयस्याप्यभिधेयसंशयपर्यवसानादर्थनिश्चयादेव तदर्थिप्रवृत्तेरर्थ एवात्र परीक्ष्य इत्यर्थः। ननु सम्बन्धस्य कार्यकारणभावस्य प्रतीत्यप्रतीतिभ्यां व्याघातान्न परीक्षेत्यत आह।

तद्वाराऽर्थं एव द्रष्टव्य इति। सम्बन्धिनि च प्रयोजने तत्त्वज्ञानकार्यतया परीक्ष्यमाणे सम्बन्ध एव कार्यकारणभावलक्षणः परीक्षितो भवतीति तदेव परीक्ष्यतया निर्दिश्यते "तच्च खलु वै निःश्रेयसमिति। वस्तुतस्तु सम्बन्धपरीक्षेयमित्यतो न प्रतिज्ञासंशयपरीक्षाणां वैयधिकरण्यमिति। तत्रेति—सूत्रे व्याख्यातव्ये। उत्सूत्रेणेति। [४८।४] पूर्वपक्षं विना सिद्धान्तसूत्रस्यावताराभाव इत्याशयः।

ननु जीवन्मुक्तिपक्षे "तद्गतामवस्थानं न स्या"दिति चोद्यमनवकाशमित्यत आह। तदत्यन्तेति। [४८।६]

---

सम्बन्धिनि चेति। तथा च प्रयोजनस्य तत्त्वज्ञानकार्य्यतया या परीक्षा तस्य एव सम्बन्धपरीक्षारूपत्वं संशयोपि निःश्रेयसं तत्त्वज्ञानकार्य्यं न वेति परीक्षाङ्गमित्यर्थः।

वस्तुतस्त्विति। उक्तरीत्या भाष्यकारस्यापि सम्बन्धपरीक्षायामेव तात्पर्यमित्यर्थः। ननु तत्रेत्यनेन सन्निधानात् संशयपरामर्शे संशयस्य टीकाकृदुक्तत्वात्तस्मिन् सति भाष्यमित्यसङ्गतिः, न वा टीकाकृदुक्तो वाक्यविषयः संशयोऽत्र परीक्षाङ्गमित्यत आह। सूत्र इति। ननु पूर्वपक्षभाष्यमित्ययुक्तं भाष्ये जिज्ञासामात्रश्रवणादित्यत आह। पूर्वपक्षमिति। विप्रतिपन्नस्य पूर्वपक्षं मनसि कृत्यैव जिज्ञासेत्यर्थः।

ननु माभूत्तत्त्वज्ञानानन्तरमेव निःश्रेयसं का नो हानिः न ह्येवं प्रतिज्ञातमस्माभिरित्यत आह। तथा *सतीति। [४६।८] यद्यपि साक्षादेवं न प्रतिज्ञातं तथापि तत्त्वज्ञाननिःश्रेयसयोः कार्यकारणभावः सूत्रकृता* दर्शितः स चानन्तर्यनियम एव स्यान्नातोऽन्यथेति पूर्वपक्षी मन्यत इत्यर्थः। तदिदमुक्तं मिथ्येति। [४६।६]

ननु तथापि "तदत्यन्तविमोक्षोपवर्ग" इत्येतावदेव निःश्रेयसमिति केन प्रतिज्ञातं यावता जीवन्मुक्तिरपि निःश्रेयसं भवत्येवेत्यत आह। न चान्यदिति। [४६।६]

अभिसन्धौ बीजं तत्त्वज्ञानस्योत्पन्नस्यापवर्गे कर्त्तव्ये

---

नन्वत्रापवर्गलक्षणमनवसरपराहतमिति किं तत्कीर्त्तनेनेत्यत आह। नन्विति। तद्वतां-तत्त्वज्ञानवताम्।

"तथा सती"त्यपि टीकाया"स्तस्मा"दित्यादिपूर्वटीकया पौनरुक्त्यं निराकर्त्तुमाह। नन्विति।

ननु तथापि तदनन्तरमेवेति न प्रतिज्ञातमत आह। यद्यपीति। स चेति। तत्त्वज्ञाने सत्यपि यदपेक्षया कार्याभावस्तदेव कारणमतस्तेनान्यथासिद्धं तत्त्वज्ञानमकारणमेव। व्यापारव्यापारिभावे च मानाभाव इत्यभिमानः परस्येत्यर्थः।

अभिसन्धाविति। तत्त्वज्ञानस्यात्यन्तदुःखविमोक्षरूपापवर्गे

ऽपेक्षणीयाभावः भावे वा 'तदेवापवर्गसाधनं न तत्त्व-ज्ञानमिति ।

तदिदमुक्तं वार्त्तिककृता "सत्यपि तत्त्वज्ञाने यस्याभावान्नापवृज्यते सोऽन्योऽर्थः" इति । स्फुटं वार्त्तिक-मिति टीकार्थः ।

सूत्रसमुत्थतां सिद्धान्तवार्त्तिकस्य दर्शयितुं सूत्र-मवतारयति । अत्रेदमिति । [४६।६]

यथाश्रुतं वार्त्तिकं न पूर्वपक्षाच्छादकं न ह्यपरमपि निःश्रेयसं शास्त्रीयात्तत्त्वज्ञानात्साक्षाद्भवतीति यस्माच्च साक्षाद्भवति न तच्छास्त्रीयमिति भूमिमारचयति । चतस्रो हीति । [४६।११]

सा चान्वीक्षिक्यामायतते-आयत्ता भवति । तत्-परिकरोपयोगमाह । आन्वीक्षिकी चेति । [४६।१४]

---

कर्त्तव्ये ऽपेक्षणीयान्तराभावेन तदनन्तरमेवेति प्रष्टुमुक्त्युपपत्तौ (?) जीवन्मुक्तेः काल एव नेत्यर्थः ।

ननु सूत्रमग्रे वार्त्तिककृतैवावतार्यमित्यन्तरा किं तदव-तारणीत्यत आह । सूत्रेति ।

प्रतिपत्त्यन्तरकथनस्यार्थान्तरत्वं निराकर्त्तुमाह । यथाश्रुत-मिति । शास्त्रीयादिति । एतच्छास्त्रसाध्यमननरूपादित्यर्थः । यस्मादिति । निदिध्यासनजन्याऽऽत्मसाक्षात्कारादित्यर्थः ।

ननु श्रवणस्य तावदाकाङ्क्षोत्थापनेनोपयोगः मननस्याप्येवमेवेत्यवधारणेन, तत्किमपरमवशिष्यते यदर्थं प्रतिपत्त्यन्तरोपासनं, नहि निश्चयातिरिक्तं कस्यचित् प्रमाणस्य फलमित्यत आह। न चायमिति। [४६।१७]

अयमाशयः—नहि निश्चयो निश्चयत्वेन मोक्ष उपयुज्यते, किं नाम ? (१) मिथ्याज्ञाननिवृत्तिद्वारा। न चापरोक्षविषयो मोह औपदेशिकेनाऽऽनुमानिकेन वा तत्त्वनिश्चयेन निराकर्त्तुं पार्यते, तदुपायानुष्ठानेन तु

निषेध्यस्य परिशेषस्य सम्भवमाह। नन्विति। आकाङ्क्षेति। धर्मिज्ञानं विना तत्प्रकारविशेषजिज्ञासानुत्पत्तेर्न मनने प्रवृत्तिरित्यर्थः। मननस्यापीति। श्रुतावेवात्मनि विरुद्धनिरञ्जनत्वकर्त्तृत्वादिकथनात्तत्र तात्पर्यसंशये एतत्प्रकारक एवायमित्यवधारणेन मननस्योपयोग इत्यर्थः। किं नामेति। मिथ्याज्ञानप्रागभावाऽसहकृतमिथ्याज्ञानध्वंसद्वारेत्यर्थः। मिथ्याज्ञानध्वंसमात्रस्य तत्त्वज्ञानं विनापि विरोधिगुणादुत्पत्तेस्तद्द्वारापारत्वायोगात्। न चेति। शरीरादिभिन्नात्मानुमितावपि पुनर्गौरोऽहमिति भ्रमदर्शनादित्यर्थः।

न चैवं श्रवणमननयोरनुपयोग एवेत्याह। तदुपायेति।

(१) किन्तु इति २पु० पा०।

तयोरुपयोगः। तस्माद् ये वेदान्तिनो वाक्यार्थज्ञानादेव मुक्तिमिच्छन्ति ते प्रष्टव्याः किं भवतां वस्तुसत्त्वमुपायोपेयभावसम्बन्धमभ्युपगम्य प्रवृत्तिः संवृतिसत्त्वं वा, आद्ये अद्वैतसिद्धान्तक्षतिः, कार्यकारणभावस्य भेदाधिष्ठानतया तयोः पारमार्थिकत्वे भेदस्यापि पारमार्थिकत्वप्रसङ्गात्। द्वितीये तु किमविशेषेण प्रवृत्तिर्यथासंवृतिव्यवस्थं वा। आद्ये भोगिनोऽप्यपवृज्येरन्। द्वितीये तु न शाब्दादानुमानिकाद्वा तत्त्वज्ञानादैन्द्रियकव्यामोहविगमः। किं तर्हि ? साक्षात्कारादेव दृष्ट इति तथैव तदर्थिनः प्रवृत्तिर्युक्ता। न च वाच्यं वाक्यादेवात्मसाक्षात्कारोदय इति, तस्य केवलस्य सामर्थ्यानुपलम्भात्। यदि तु

---

उपपत्तिं विना विवेकाभावात् सन्दिग्धस्य न निदिध्यासने प्रवृत्तिर्न वा धर्मिज्ञानं विनोपपत्तौ मनने प्रवृत्तिः स्यादित्यस्तूपयोगस्तयोरित्यर्थः। वाक्यार्थेति। आत्मप्रतिपादकवेदवाक्यार्थज्ञानादित्यर्थः। संवृत्तिमत्त्वं—वैज्ञानिकम्। यथेति। संवृतिसिद्धेऽपि जगति यस्माद्यदृष्टश्यते तत्रैव तदर्थिनः प्रवृत्तिरित्यर्थः। तस्येति। वाक्यार्थविषयसाक्षात्कारोऽपीन्द्रियजन्यो वाक्यन्तु परम्परयोपयोगीत्यर्थः।

यदि त्विति। आत्मनो ज्ञानरूपत्वात्तस्य च स्वप्रकाशतया आत्मनि साक्षात्काररूपत्वात्तत्र किं साक्षात्कारान्तरेणेत्यर्थः।

स्वसंविदितस्वरूपतया किं तत्र ध्यानादिकमपूर्वमाधास्यतीत्युच्यते? तदा श्रुतेरपि वैफल्यमनेन न्यायेन। यदपि भीतदर्शकनदीसन्तरणमुदाहरणं। तत्रापि न केवलेनैव वाक्येन साक्षात्कारः किन्तु चक्षुरादिनैव। अत्रापि मनसा सहकृतेन भविष्यतीति चेत्। न। अनेकधा श्रुतश्रुतेरपि सत्यपि च पटीयसि मनसि ब्रह्मसाक्षात्काराभावात्। तत्कस्य हेतोः? भीतानामिव स्वशरीरे चाक्षुषस्य दृढतराभ्यासस्य मुमुक्षोर्मानसस्याऽऽत्मन्यभावात्। तस्मात्तदर्थमभ्यास एव शरणम्। तदिदमुक्तं लोकसिद्धमिति। [४६।२०]

---

यदपीति। वर्वरदेशगतये नदीं सन्तीर्णं सर्वः स्वं स्वमनन्तर्भाव्य नवैव गणयन् यदाऽन्येन बोध्यते त्वं दशम इति, तदा शब्दादेवास्य स्वशरीरसाक्षात्कारः तथाऽऽत्मनोपि स्यादित्यर्थः। तत्रापीति। तत्रापि परवाक्यादुत्पन्नजिज्ञासश्चक्षुरादिनैव स्वदेहं साक्षात्करोति न तु वाक्येन्द्रियाभ्यामेकः साक्षात्कारस्तत्रोत्पाद्यते, शब्दं विनापि केवलेन्द्रियात् साक्षात्कारोदयेन व्यभिचाराज्जातिसङ्करप्रसङ्गाच्चेति भावः। अनेकधेति। श्रुतेः शरीरभिन्नात्मज्ञाने ऽप्यहं गौर इत्यादिमतेरुत्पत्तेरित्यर्थः। भीतानामिवेति। यथा भीतानां स्वदेहे चाक्षुषो दृढतरस्तत्त्वाभ्यासस्तथा न मुमुक्षोरात्मनि मानसः सोऽस्तीति नात्मनः सकृच्छ्रवणात् साक्षात्कारसम्भव इत्यर्थः।

लोकसिद्धः कार्यकारणभावस्तात्त्विको भवतु मा वा भवतु, सर्वस्य पुरुषार्थप्रवृत्तस्य तावत् स एव शरणं, तदनादरे तु पुरुषार्थोऽप्यनादरणीयस्तुल्ययोगक्षेमत्वादिति ।

यदि नाम चतस्रः प्रतिपत्तयः आत्मादौ प्रमेये, प्रकृते तु किमायातमित्यत आह । अथेति । [४८।२१] एतदुक्तं भवति -- यदि श्रौतमानुमानिकं वा तत्त्वज्ञानमादाय पूर्वपक्षः तदाऽनभ्युपगम एवोत्तरं, न हि तस्य साक्षान्निःश्रेयसहेतुत्वमाचक्ष्महे । किं तर्हि ? परंपरया, सैव "चतस्रो ह्री"त्यादिना दर्शिता । तस्मात्त्वा-

"तज्जनिता च वासने"ति टीका । अत्र दिङ्मोहादौ विशेषदर्शने सत्युत्तरकालं प्राच्यां सा प्रतीचीति न स्मरणं किन्तु प्रतीचीत्वेन मया प्राच्येव ज्ञातेति स्मृतिः अतस्तत्र संस्कारनाशः कल्प्यत इति मानमाहुः । न च विशेषविस्मरणे सति तथा स्मृतिर्भवत्येवेति वाच्यम् । योगिनस्तत्त्वसाक्षात्काररूपविशेषदर्शनसन्ततेः सत्त्वात् ।

जीवन्मुक्तवर्णनस्यार्थान्तरत्वमाशङ्क्याह । यदि नामेति । जीवन्मुक्तवर्णनस्याऽऽत्मसाक्षात्कारात् साक्षादेवापरनिःश्रेयसं सिद्ध्यतीति प्रकृतोपपादनमेव प्रयोजनमिति परिहारार्थः ।

ननु तथापि शास्त्रीयात्तत्त्वज्ञानात्तद्भवतीति न साधितमित्यत आह । एतदुक्तमिति । किं तर्हीति । न च मननस्य

क्षात्कारमादाय पूर्वपक्षः तस्य हि साक्षादेव निःश्रेयस-हेतुताऽभ्युपगम्यते, तत्रोभयपरिहारार्थं निःश्रेयसद्वैविध्यप्रतिपादनमुपस्थाप्यत इति भावः।

अथेत्याद्युच्यत इत्यन्तेन (१) पूर्वः पूर्वो हेतुरुत्तरोत्तरस्तद्वानिति।

ननु साक्षात्कारवांश्च देहवांश्चेति दुर्घटमिदं, न हि श्रवणादेरिव परे निःश्रेयसे कर्त्तव्ये साक्षात्कारस्यापि किञ्चित्कर्त्तव्यान्तरमस्तीत्यत आह। न चैवमिति। [४८।२६] चोद्यसम्भावनाय दृष्टान्तः न च प्राय-

---

परम्पराहेतुत्वे मानाभावः अवश्यापेक्षणीयसाक्षात्कारेणान्यथासिद्धत्वादिति वाच्यम्। "श्रोतव्य मन्तव्य" इति श्रुतेर्मननस्य निःश्रेयसहेतुत्वे सिद्धे तत एव तस्य तद्व्यापारत्वादिति भावः। उभयेति। सम्प्रदायविच्छेदो वातपुत्रीयता च शास्त्रस्येत्युभयमित्यर्थः।

तद्वानिति। हेतुमानित्यर्थः। तेन कारणाभावे कार्याभावो दर्शित इति भावः। टीकायां क्लेशा मोहरागद्वेषाः। हेतुशून्यं दृष्टान्तमात्रमसाधकमित्याशङ्क्याह। चोद्येति। अनिर्जनभोगस्य कर्मणः क्षयो न दृष्ट इति देश्यसम्भावनैव नास्तीति निराकरणार्थमित्यर्थः।

---

(१) पूर्वपक्ष इति २पु० अधिकम्।

श्चित्तेनैवेति । [५०।१] न तावत्प्रायश्चित्तस्याधिकारापत्तिः फलं, आगममन्तरेणाऽदृष्टकर्मणां फलविशेषकल्पनायां प्रमाणाभावात् श्रूयमाणफलत्यागप्रसङ्गाच्च । बलवति बाधके सति नेदमनिष्टमिति चेत् । न । अनन्यथासिद्धस्यागमस्य बाधकसहस्रेणाप्यपनेतुमशक्यत्वात्, शक्यत्वे वा सुरापेयत्वानुमानमपि दुर्निवारमिति हैतुकानां दत्तः स्वहस्तः स्यात् । अत एव न प्रायश्चित्ताचरणदुःखमेव ब्रह्महत्यादीनां फलं तत्फल-

---

दृष्टान्तासिद्धिं निराकर्तुमाह । न तावदिति । एतच्च महापातकप्रायश्चित्तमभिप्रेत्योक्तं तदन्यपापे सत्यनधिकाराभावात् । प्राणान्तिकप्रायश्चित्ते ऽधिकारापत्तेरसम्भवाच्चेति मन्तव्यम् । श्रूयमाणेति । पापध्वंसस्य फलत्वेन श्रवणादित्यर्थः । बलवतीति । विमतिपदं कर्म भोगनाश्यं कर्मत्वादिति बाधकबलाच्छ्रूयमाणफलत्यागे ऽपि न दोष इत्यर्थः । अनन्यथेति । अनन्यथासिद्धतयाऽऽगमस्यैव बलवत्त्वेनैव बाधितमनुमानमित्यर्थः ।

अत एवेति । यद्यपि विष्णुस्मरणादौ प्रायश्चित्ते न दुःखं किन्त्वानन्द एव तथापि यत्र दुःखमुत्पद्यते तत्परोऽयं ग्रन्थः । तत्फलत्वेनाश्रुतेरिति अत एव प्रायश्चित्तस्य नैमित्तिकत्वमपि निरस्तं नैमित्तिकत्वे फलान्तरकल्पनापत्तेरिति भावः । प्रायश्चित्तेति । प्रकरणे ऽनिष्टाभावादित्यर्थः । ननु तत्फलत्वेनाश्रुता-

*त्वेनाश्रुतेः प्रायश्चित्तविधिवैफल्यप्रसङ्गात्, अविशेषा-*धानाच्च। अनिच्छतोऽपि कर्मवशादेव तत्सिद्धेश्च। तस्माददत्तफलान्येव कर्माणि प्रायश्चित्तेन क्षीयन्त इत्येव साधु। तथा च तद्वदेव तत्त्वसाक्षात्कारोऽपि करिष्यतीत्यर्थः।

अत्र चाऽऽगमबलप्रवृत्ता आगमेनैव बोधयितुं युज्यन्त इत्याशयवानाह। नाभुक्तं क्षीयत इति। [५०।२]

---

वपि तदेव फलं कल्प्यतामित्यत आह। अविशेषविधानादिति। यद्यविशेषेण दुःखमात्रं ब्रह्महत्यादिकर्मणां फलं विहितं स्यात्तदा प्रायश्चित्ताचरणदुःखमेव तत्फलं कल्प्येत, न त्वेवं, किन्तु विशिष्य घोरनरकस्यैव तत्फलत्वेन विधानादित्यर्थः। अविशेषाधानादिति क्वचित्पाठस्तत्र प्रायश्चित्तविधिवैफल्यानापादको विशेषो न कश्चि-त्प्रायश्चित्तेनाधीयत इत्यर्थः। अनिच्छतोऽपीति। ननु प्रायश्चि-त्ताचरणदुःखं ब्रह्महत्यादिफलमिति ज्ञानजनन एव प्रायश्चित्त-विधेरुपयोगः अन्यथा तज्जन्यदुःखाज्ञाने तत्र निवृत्तिर्न स्यात्। मैवम्। ब्राह्मणं न हन्यादिति निषेधविधेरेव निवृत्तेः सिद्धा-वात्। प्रायश्चित्तविधिना तादृशदुःखरूपस्या ऽफलत्वेनाबोधनात्। विष्णुस्मरणादिरूपप्रायश्चित्ते दुःखानुत्पत्तेश्चेति भावः। ननु वक्ष्य-माणमनुमानमप्यकृतप्रायश्चित्तानां कर्मणां भोगैकनाश्यत्वे मान-मस्ति तदुपेक्ष्य किमित्यागम उपन्यस्त इत्यत आह। अत्रेति।

ननु—

"ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते" (१)

इति विपक्षेऽपि स्मृतिरस्ति तत्कथं निर्णयो भविष्यतीत्यत आह। अन्यमुखेति। [५०।२] स्यादप्येवं "यदि-नाभुक्त"मित्यादिस्मृतेरनुग्राहको न्यायो न स्यात्। अस्ति च तथा। तथा च प्रयोगः विवादाध्यासितानि कर्माणि भोगादेव क्षीयन्ते अक्षीणप्रायश्चित्तकर्मत्वात् आरब्धशरीरकर्मवत्। न चास्याऽऽगमविरोधः तस्यागमान्तरविरोधेनानिर्णायकत्वादित्यर्थः।

न चोत्सर्गसिद्धायाः स्मृतेरसति बाधके ऽन्यथाभावो युज्यत इत्याशयवानाह। औत्सर्गिकस्येति। [५०।३]

---

"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा"

इत्यागमो भोगं विनैव ज्ञानस्य कर्मनाशकत्वबोधकोऽस्तीत्यर्थः। ननु "नाभुक्त"मिति स्मृतित एव कर्मणां भोगैकनाश्यत्वे ऽवधृते किं विरोधवर्णनेनेत्यत आह। नन्विति। विवादाध्यासितानीति यथाश्रुतस्यागमकत्वादाह। स्यादेवमिति। विवादाध्यासितानीति। अत्रैवकारःस्पष्टार्थ इत्येके। भोगासमवहितकारणान्तरव्यावृत्तिपर इत्यन्ये। नन्वौत्सर्गिकत्ववचनं प्रकृतविरोधि औत्सर्गिकत्वस्यैव बाध्यत्वप्रयोजकत्वादित्यत आह। न

(१) भगवद्गीता अ० ४ श्लो० ३७।

ननु—

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।

क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" (१)

इति श्रुतौ परिपन्थिन्यां कथमुच्यते ऽसति बाधक इति, कथञ्च तद्विरोधेन स्मृतेर्निर्णायकत्वं अनुमानानुग्राहकोऽपीत्यत आह । क्षीयन्त इति । [५०।४]

---

चेति । कथं चेति । श्रुतेः स्मृत्युपजीव्यतया बलवत्त्वात्तद्विरोधेन स्मृत्यप्रामाण्यादितिभावः ।

नन्वेकेनागमेनागमान्तरप्रतिरोधवदनुमानस्यापि प्रतिरोधी-ऽस्तु, एकेनैव भूयसामपि प्रतिबन्धात् गमकतौपयिकरूपस्यैव बलतया भूयस्त्वस्याऽबलवत्त्वात् । नैशमिनो व्यपोहतीत्यादिस्मृतेः सन्ध्योपासननाश्यकर्मभिः कीर्त्तननाश्यकर्मभिश्च व्यभिचारः ज्ञानस्य प्रायश्चित्ततुल्यत्वेनाप्रयोजकत्वं शब्दबोधितनाशकानाश्यत्वं चोपाधिः प्रायश्चित्तपदस्य भोगान्याददृष्टनाशकपरत्वे च तत्त्वज्ञानस्यापि भोगान्याददृष्टनाशकत्वेन इतरासिद्धिः । अथ कायव्यूहादिना दृष्टभोगेनैव कर्मक्षयस्य कथञ्चिदुपपत्तौ न तत्त्वज्ञानस्य साक्षान्नाशकत्वमत्यन्तादृष्टं कल्प्यते । न । आगमिकत्वेन तस्याकल्पनात् । तत्रागमस्य तात्पर्यं न कल्प्यत इति चेत् सत्यं योग्यसाकाङ्क्षसन्निहितान्वितार्थपरत्वस्य व्युत्पत्तिकाल एव क्लृप्त-

(१) मुण्डकोपनिषत् । २ । २ । ८ ।

न हीयं श्रुतिरदृष्टफलानामेव कर्मणां तत्वज्ञानात् क्षयमाह, किन्तु क्षयमात्रं, तच्चोपभोगेनापि भवन्न किञ्चिद्विरुणद्धीति भावः।

---

त्वात्। भोगव्यापारद्वारैव कर्मनाशकत्वं ज्ञानस्यास्त्विति चेत्। न। तद्धर्मिभाविनेव सामग्रीत्वे क्लृप्ते तदधिकप्रवेशस्य तद्ग्राहकमानविरुद्धत्वात्। न च तावदेवास्य चिरमिति श्रुतिबलादवान्तरजात्यादिकल्पनया तदुपपादनीयम्। श्रुतेः कर्मणां भोगैकनाश्यत्वप्रतिपादकत्वाभावात्। शेषादिना च पूरणे तत्प्रतिपादकत्वे मानाभावात्। अथ ज्ञानाग्निः सर्वकर्माणीति सर्वपदस्याकृतप्रधानाङ्गापूर्वपरत्वं अन्यथापि तस्य कर्ममात्रपरत्वे कार्त्स्न्यपरत्वाभावादिति भिन्नविषयत्वादागमस्य न बाधकत्वम्। न हि तेषां प्रायश्चित्तं नाशकं विहितैकदेशत्वात्। न फलं तदजननात्। नापि न नश्यन्त्येव उत्पत्तिविरोधात्। अनिर्मोक्षापाताच्च। नाशकान्तरस्य चाक्लृप्तत्वादिति। तन्न। प्रधानापूर्वार्थतया क्लृप्तानां तेषां तदनुत्पादे तत्सामग्र्यसिद्धेः। सामान्यतस्तत्कल्पने ऽपि विशेषस्यासिद्धौ तदसिद्धिरेव। अथ भस्मसात्पदस्य लाक्षणिकत्वेन यथा वह्नेः परम्परया भस्म तथा ज्ञानात् परम्परया कर्मक्षयः प्रतीयते। एवं च परम्पराघटको भोग एवान्यत्र कर्मनाशकत्वे ज्ञानस्यानाशकत्वेन क्लृप्तत्वादित्यबाधे सम्भवति न बाधकल्पना प्रायश्चित्तविधेरनन्यथासिद्धत्वात्तदबाधोऽस्त्विति मतम्। तन्न। कर्मणो भोगनाश्यत्वे ज्ञानस्यानाशकत्वापत्तेः। न हि

देहेषूपभोगो—देहोपभोगः। अपि च विपरीताऽपि श्रुतिर्विद्यत इत्याह। तावदेवेति। [५०५] अस्य-तत्त्वसाक्षात्कारवतः। तावदेव चिरं-विलम्बः। यावन्न विमोक्ष-उपात्तकर्मराशेः सकाशात्फलोपभोगेन। अथ-तस्मिन् सति। सम्पत्स्यते-कैवल्येनेत्यर्थः। "भोगेन त्वितरे क्षपयित्वा" इतिवाक्यशेषात्।

ननु भोगेन प्रक्षयो ऽनुपपन्न एव, कर्मराशेरनन्त-तयाऽनियतविपाकसमयतया चेत्यत आह। योग-

---

भोगस्तत्त्वज्ञानव्यापारः भोगमात्रस्यैव कर्मनाशकत्वे सामर्थ्यान्न नाशककोटौ ज्ञानस्यात्मभावः व्यभिचारात्। तस्मात्कर्मप्राग-भावासहवृत्तिकर्मनाशे युगपद्भोगे वा न व्यभिचार इत्यबाधार्थं भोग एव तद्व्यापारः कल्प्यते। अत एवानुमाने ऽपि नागमबाधा-प्रयोजकत्वेनाप्युपाधिः श्रुतिवाक्यशेषे च न मानाभावः। उत्पन्न-तत्त्वज्ञानस्यापवर्गो विलम्बस्योक्तस्योपपादनार्थमुक्तरीत्या भोगस्यै-वाक्षेपात्। उपनिषदि श्रूयत एव वाक्यशेषः टीकाकृता ऽनभि-धानमात्रान्न तदभाव इत्यभिप्रायकोऽयं ग्रन्थः॥

श्रुताविति। "श्रुतिस्मृतिविरोधे हि श्रुतिरेव बलीयसी" श्रुति-स्तदुपजीव्यत्वादित्यर्थः। देहस्यैवोपभोक्तृत्वमिति भ्रमनिरासायाह देहेष्विति। सति सप्तमी।

ननु तत्त्वज्ञानवत्त्वं तादृशत्वं तच्च स्वपदोपात्तमेवेति तादृश

क्षीति। [५०।६] उक्तं-आदिवाक्ये। शङ्कते। न चेति। [५०।८]

अयमाशयः—यदि तावत्कर्मणामेवायं महिमा, यदेकदैव नानाविधदेहाद्यनेकव्यापारैस्तैस्तैरुपभोगः साध्यः? किं योगप्रभावपरिकल्पनया। अथ नैष महिमा तेषां? तथापि क्व योगप्रभावस्योपयोगः नह्यीश्वरोऽपि कर्मणां स्वभावं विपर्यासयितुमर्हति। तस्मात् स्वप्रतिभया कल्पनीयमेतत्। एवं चेदद्रम-दत्तफलान्येव योगप्रभावात् क्षीयन्त इति कल्प्यतां लाघवायेति। परिहरति। दृष्टानुसारिणेति। [५०।१०]

प्रमाणानुसारिण यथाह्युपभोगादेव कर्मणां क्षयः देहादिषु सत्स्वेव भोगो लब्धवृत्तिभिरेव कर्मभिर्देहादि-सम्भवः, सहकारिलाभ एव तेषां वृत्तिलाभः, ते च सहकारिणः क्वचित्फलोन्नेयाः यथा युगपदनेकेन्द्रिय-ग्रहे, क्वचिदागमगम्या यथा वासुदेवसौभरिप्रभृतीनां कायर्यौगपद्य इति सर्वत्र प्रमाणमस्ति, नैवमनुपभुक्त-कर्मक्षये। यथा च महाप्रलये सर्वकर्मणामेकदैव वृत्तिनिरोध आगमप्रामाण्यादास्थीयते तथा योगर्द्धि-कालेऽपि सर्वेषां वृत्तिलाभ आस्थेय आगमप्रामाण्या-

देवेति न किञ्चित् स्वप्रतिभामात्रेण कल्पितमित्यर्थः। तादृशश्च मुनिरपरनिःश्रेयसवानित्यर्थः। किमतो यद्येवमित्यत आह। इति न वातपुत्रीयमिति। [५०।१३]

अथ परं निःश्रेयसं कीदृशमित्यत आह। परन्त्विति। [५०।१३] इत्युपपन्नं निःश्रेयसद्वैविध्यमिति [५०।१५] पूर्वपक्षनिराकरणायेतिशेषः। न सुखदुःखतया मनुते रागद्वेषप्रसवहेतुत्वाभावादित्यर्थः।

न ह्यस्ति सम्भवो न तत्र तृप्यति तच्च तस्य सुखं यादृशमज्ञानिनस्तृष्णाजनकं, न यद्द्वेष्टि तच्च तस्य दुःखमिति यादृशमज्ञानिनो द्वेषजनकमित्यर्थः। उक्तं तात्पर्यमक्षरार्थीकर्तुं समर्थितमेव शङ्कते। स्यादेतदिति। [५०।१८]

---

इति व्यर्थमित्यत आह। अपरेति। ननु निःश्रेयसद्वैविध्यं नात्र सूत्रार्थ इति तदुपपादनमनुपयुक्तमित्यत आह। पूर्वपक्षेति। ननु सर्वज्ञः सुखदुःखे न तु तत्तया जानातीति विरोध इत्यत आह रागेति। स्वरागाद्युत्पादकतया न मनुत इत्यर्थः। ननु तृष्णाया अभावेऽपि सुखं सुखं सुखमेवेत्यत आह। यादृशमिति।

उक्तमिति। तादृशश्च मुनिः शास्त्रस्य प्रणेतेत्यनेन।

ननु कर्मसामर्थ्यादेव भोगमङ्गावात् किं तदर्थकेन यत्नेनेत्यत

उपभोगप्रयत्न आस्थेयो मोक्षाय त्वरमाणेनापि कायव्यूहादाविति शेषः । यस्तु न त्वरते यदा भविता कर्मक्षयस्तदा भविता मोक्षः किन्त्वरया ? प्राप्ता तावन्निरपाया भूमिरिति समर्थितहृदयस्तस्य तु निःश्रेयसद्वययौगपद्यशङ्कापि नास्तीतिभावः ।

( इति परापरयोर्निःश्रेयसयोः साक्षात्परम्परया च तत्त्वज्ञानस्य हेतुत्वकथनम् । )

---

नन्वेतावतैव सर्वं सुस्थं किमुत्तरप्रबन्धेनेत्यत आह । तदेवमर्थंगतिमिति । [५।१।३]

मिथ्याज्ञानदोषप्रवृत्तीनां-प्रवाहरूपाणामिति बोद्ध-

आह । मोक्षायेति । यद्यपि त्वरमाणस्यापि कायव्यूहवतो भोगात्कर्मक्षये सत्येव मोक्ष इति न ततो विशेष उक्तः तथापि क्रमिकभोगात्कर्मक्षयमभिप्रेत्योक्तम् । यस्त्विति ।

( इति परापरनिःश्रेयसयोः साक्षात्परम्परया च तत्त्वज्ञानस्य हेतुत्वकथनम् । )

---

ननु संसारे ऽपि मिथ्याज्ञानाद्युच्छेदेन ततो जीवन्मुक्तौ विशेषः स्यादित्यत आह । प्रवाहरूपाणामिति । कारणरूपा-धर्माधर्म-

*व्यम्। प्रवृत्तिश्चात्र कारणरूपा ग्राह्या, कार्यरूपाया* अनुच्छेदात्। जन्मदुःखयोः प्रवाहरूपयोरुच्छेदक्रमो नास्ति। कुतः? पूर्वोपात्तस्येति। [५।१।५] मूलानुच्छेदा दित्यर्थः।

आगामिवार्त्तिकविरोधं परिहरन्नाह। इदञ्चेति।[५।१।७]।

यद्यपि दुःखादीनामेकार्थसमवायलक्षणो ऽपि योगः सम्भवति, तथापि शरीरादेर्जन्मनः स नास्ति, कार्यकारणभावस्तु तस्यापीति स एव ग्राह्य इत्याह। योग्यत-

---

हेतुप्रयत्नरूपा। कार्यरूपा-धर्माधर्मात्मिका। ननु जन्मदुःखो-च्छेदक्रमो नास्तीति साध्ये यथोक्तो हेतुरपक्षधर्म इत्यत आह। कुत इति। तथा च योगी तत्त्वसाक्षात्कारकाले जन्मादिप्रागभाववान् धर्माधर्मवत्त्वात् इत्यर्थः।

स नास्तीति। एकनिवृत्तावन्यानिवृत्त्युपयोगीति शेषः, कार्यकारणभावस्यैव तथात्वात्। वस्तुतस्त्वात्मनो जन्म निषिध्यते तच्चात्मनो मनसा संयोग इति तस्याप्येकार्थसमवायोऽस्त्येवेति भावः। योग्यतयेति। इतरेतरयोगद्वन्द्वे पदार्थानां साहित्यमेकधर्मान्वयरूपं प्रतीयते तच्चैकनिवृत्तावन्यनिवृत्त्युपयोगी कार्यकारणभाव एवेत्यर्थः। यद्यपि व्याप्यव्यापकभावोऽपि सम्बन्धस्तादृशो भवत्येव न च कार्यकारणभाव एव तस्याप्युपजीव्य इति स एवोक्त इति वाच्यम्। तदभावेऽपि रूपरसयोर्व्याप्तेः। तथापि प्रकृते दुःखादीनां

*Nirukta, (2nd Edition) Vol. I. Fasc. 1 @ Rs. 1-4 ... ... ... Rs. 1 4
*Nyāyavārtika, Fasc. 2-6 @ /10/ each ... ... ... 3 2
Nityācārapaddhatiḥ, Fasc. 1-7 @ /10/ each ... ... ... 4 6
Nityācārapradipa Vol. I. Fasc. 1-8; Vol. II, Fasc. 1-4. @ /10/ each ... 7 8
Nyayabinduṭikā, Fasc. 1 @ /10/ each ... ... ... 0 10
*Nyāya Kusumāñjali Prakaraṇa Vol. II, Fasc. 1-3 @ /10/ each ... ... 1 14
*Nyaya Vartika Tatparya Parisudhi, Fasc. 1-2 @ /10/ each* ... ... 1 4
*Nyayasarah* ... ... ... ... ... ... 2 0
*Padumawati, Fasc. 1-6 @ 2' each* ... ... ... ... 10 0
*Prākrita-Paiṅgalam, Fasc. 1-7 @ /10/ each* ... ... ... 4 6
Parāçara Smṛti, *Vol. I, Fasc. 2-8; Vol. II, Fasc 1-6; Vol III,* Fasc. 1-6 @ /10/ each ... ... ... ... 13 14
Parāçara, Institutes of (English) @ 1/- each ... ... ... 1 0
Pariksamukha Sutram .. ... ... ... 1 0
...bandhacintāmaṇi (English) Fasc. 1-3 @ 1/4/ each ... ... 3 12
...rnavam, Fasc. 1-3 ... .. ... ... 3 12
...siddhanta Manjari, Fasc 1 ... ... ... ... 0 10
...darsana-Samuccaya, Fasc. 1-2 @ /10/ each ... ... ... 1 4
...amaraicca Kaha Fasc. 1-5, @ /10/ each ... ... ... 3 2
Saṅkhya Sūtra Vṛtti, Fasc 1-4 @ /10/ each ... ... ... 2 8
Ditto (English) Fasc. 1-3 @ 1/- each ... ... 3 0
Six Buddhist Nyaya Tracts ... ... ... ... .. 0 10
Srāddha Kriyā Kaumudī, Fasc. 1-6 @ /10/ each ... ... ... 3 12
Suçruta Saṁhita, (Eng) Fasc. 1 @ 1/- each ... ... ... 1 0
Suddhikaumudī, Fasc 1-4 @ /10/ each ... ... ... ... 2 8
Sundaranandam Kavyam .. ... ... ... ... 1 0
Suryya Siddhanta Fasc. 1-2 @ 1-4 each ... ... ... 2 8
Syainika Sastra .. ... ... ... ... 1 0
*Taittreya Brahmana, Fasc 11-25 @ /10/ each ... ... 9 6
*Taitteriya Saṁhitā, Fasc 27-45 @ /10/ each ... ... ... 11 14
Tāṇḍya Brāhmaṇa, Fasc 10-19 @ /10/ each ... ... ... 6 4
Tantra Vārteka (English) Fasc. 1-10 @ 1/4/ each . ... 12 8
*Tattva Cintāmaṇi, Vol I, Fasc 1-9, Vol II, Fasc. 2 10, Vol. III, Fasc 1-2, Vol. IV, Fasc. 1, Vol. V, Fasc 1-5, Part IV, Vol II, Fasc. 1-12 @ /10/ each 23 12
Tattva Cintamani Didhiti Vivriti, Vol. I, Fasc. 1-6: Vol. I, Fc, 1, @ /10/ each 4 6
Tattva Cintamani Didhiti Prakas, Fasc 1-5, @ /10/ each .. ... 3 2
Tattvārthadhigama Sutram, Fasc 1-3 @ /10/ each ... ... ... 1 14
Tirthacintamoni, Fasc, 1-3, @ /10/ each ... ... ... 1 14
Trikāṇḍa-Maṇḍanam, Fasc. 1-3 @ /10/ each ... ... ... 1 14
Tul'si Satsai, Fasc. 1-5 @ /10/ each ... ... ... ... 3 2
*Upamita-bhava-prapañca kathā, Fasc. 1-2, 5 13 @ /10/ each ... ... 6 14
Uvāsagadasāo, (Text and English) Fasc. 1-6 @ 1/- each ... ... 6 0
Vallāla Carita, Fasc 1 @ /10/ ... ... ... 0 10
Varṣa Kriyā Kaumudī, Fasc 1-6 @ /10/ each ... ... ... 3 12
*Vāyu Purāṇa, Vol. I, Fasc. 3-6; Vol II, Fasc 1-7, @ /10/ each ... 6 14
Vidhāna Pārijata, Fasc. 1-8 Vol- II Fasc. I @ /10/ each ... ... 5 10
Ditto Vol. II, Fasc. 2-5 @ 1/4/ ... ... ... 5 0
Vivādaratnākara, Fasc 1-7 @ /10/ each ... ... ... 4 6
Vṛhat Svayambhū Purāṇa, Fasc. 1-6 @ /10/ each . ... ... 3 12
Yogasāstra Fasc. 1-3 .. ... ... ... ... 3 12

*Tibetan Series.*

Amarkosha ... ... ... ... ... ... 2 0
...audhastotrasangraha, Vol. I ... ... ... 2 0
...Lower Ladakhi version of Kesarsaga, Fasc. 1-4 @ 1/- each ... ... 4 0
...yayabindu of Dharmakirti. Fasc. 1 ... ... ... ... 1 0
...ag-sam S'hi Tiñ, Fasc. 1-4 @ 1/- each ... ... ... 4 0
Rtogs brjod dpag hkhri S'iñ (Tib. & Sans Avadāña Kalpalatā Vol. I, Fasc. 1-10: Vol. II. Fasc. 1-10 @ 1/- each . ... 20 0
Sher-Phyin, Vol. I, Fasc 1-5; Vol. II, Fasc. 1-3; Vol III, Fasc 1-6, @ 1/ each 14 0

*Arabic and Persian Series.*

...aal-i-Salih, or Shah Jahan Namah ... ... ... ... 2 0
...Muqaddasi (English) Vol I, Fasc 1-4 @ 1/- each ... ... 4 0
Ain-i-Akbari, Fasc. 1-22 @ 1/8/ each .. .. .. ... 33 0
Ditto (English) Vol. II, Fasc. 1-5 Vol. III, Fasc 1-5, Index to Vol. II, @ 2/- each ... ... ... 22 0
Akbarnāmah, with Index, Fasc 1-37 @ 1/8/ each .. . ... 55 8
Akbarnāmah, English Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-7, Vol. III, Fasc. 1-2 @ 1/4/ each ... ... ... ... ... 21 4
Arabic Bibliography, by Dr. A. Sprenger, @ /10/ ... ... ... 0 10
Conquest of Syria, Fasc. 1-9 @ /10/ each ... ... ... 5 10
Catalogue of Arabic Books and Manuscripts, 1-2 @ 1/- each ... ... 2 0

*The other Fasciculi of these works are out of stock and complete

| | | |
|---|---|---|
| Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1–3 @ 1/ each ... ... | Rs. 3 | 0 |
| Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1-21 @ 1/8/ each | 31 | 8 |
| Faras Nama, of Hashimi ... ... ... ... ... | 1 | 0 |
| Ditto of Zabardast Khan ... ... ... ... | 1 | 0 |
| Farhang-i-Rashidi, Fasc. 1–14 @ 1/8/ each ... ... ... | 21 | 0 |
| Fihrist-i-Tusi. or, Tusy's list of Shy'ah Books, Fasc. 1–4 @ 1/- each ... | 4 | 0 |
| Gulriz ... ... ... ... ... ... | 2 | 0 |
| Hadiqatu'L. Haqiqat, (Text & Eng ) ... ... ... ... | 3 | 8 |
| History of Gujarat ... ... ... ... ... | 1 | 0 |
| Haft Asman, History of the Persian Masnawi. Fasc. 1 @ /12/ each ... | 0 | 12 |
| History of the Caliphs, (English) Fasc. 1–6 @ 1/4/ each ... ... | 7 | 8 |
| Iqbalnamah-i-Jahangiri, Fasc. 1–3 @ /10/ each ... ... ... | 1 | 14 |
| Isabah, with Supplement, 51 Fasc. @ 1/- each ... ... ... | 51 | 0 |
| Ma'asir-i-Rahimi, Part I, Fasc 1–8 @ 2/ each ... ... | 6 | 0 |
| Maa'asir-ul-Umara, Vol. I, Fasc. 1–9, Vol. II, Fasc. 1–9; Vol III, 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. II, Fasc. 10-12; Index to Vol. III, Fasc. 11-12 @ /1/ each ... ... ... | 35 | 0 |
| Ditto (Eng ) Vol. I, Fasc. 1–2, @ 1/4/ each ... ... | 2 | 8 |
| Memoirs of Tahmasp ... ... .. .. ... | 1 | 0 |
| Marhamu 'L Ilali 'L-Mu'Dila Fasc. 1–2 ... ... ... ... | 2 | 0 |
| Muntakhabu-t-Tawarikh, Fasc 1–15 @ /10/ each ... ... | 9 | 6 |
| Ditto ( English ) Vol. I, Fasc. 1–7; Vol II. Fasc. 1–5 and 3 Indexes; Vol III, Fasc 1 @ 1/ each ... | 16 | 0 |
| Muntakhabu-l-Lubab, Fasc. 1- 19 @ /10/ each ... ... ... | 11 | 14 |
| Ditto Part 3, Fasc. 1–2 @ 1/- each ... ... ... | 1 | 0 |
| Nukhbatu-l-Fikr, Fasc. 1 @ /10/ . ... ... ... | 0 | 10 |
| Nizami's Khiradnamah-i-Iskandari, Fasc 1–2 @ /12/ each ... ... | 1 | 8 |
| Persian and Turki Divans of Bayram Khan, Khan Khanan ... ... | 1 | 0 |
| Qawaninu 's-Sayyad of Khuda Yar Khan 'Abbasi, edited in the original Persian with English notes by Lieut. Col. D. C. Phillott ... ... | 5 | 0 |
| Riyazu-s-Salatin, Fasc 1–5 @ /10/ each .. ... ... ... | 3 | 2 |
| Ditto (English) Fasc. 1–5 @ 1/ ... ... ... | 5 | 0 |
| Shah Alam Nama ... ... ... ... ... | 1 | 14 |
| Tadhkira-i-khushnavisan ... ... ... .. ... | 1 | 0 |
| Tabaquat-i-Nasiri, ( English ), Fasc. 1-14 @ 1/- each ... ... | 14 | 0 |
| Ditto Index ... ... .. ... | 1 | 0 |
| Tarikh-i-Firuz Shahi of Ziyau-d-din Barni Fasc 1–7 @ /10/ each . | 4 | 6 |
| Tarikh-i-Firuzshahi, of Shams-i-Sirai Aif. Fasc. 1–6 @ /10/ each ... | 3 | 12 |
| Ten Ancient Arabic Poems, Fasc. 1–2 @ 1/8/ each .. ... | 3 | 0 |
| The Mabani 'L Lughat: A Grammar of the Turki Language in Persian | 1 | 8 |
| Tuzuk-i-Jahangiri, ( Eng ) Fasc. 1 @ 1/ ... ... ... ... | 1 | 0 |
| Wis-o-Ramin, Fasc. 1–5 @ /10/ each ... ... ... ... | 3 | 2 |
| Zafarnamah, Vol. I, Fasc. 1–9, Vol. II, Fasc. 1–8 @ /10/ each ... ... | 10 | 10 |

## ASIATIC SOCIETY'S PUBLICATIONS.

1. ASIATIC RESEARCHES. Vols. XX @ 10/ each ... ... 20 0
2. PROCEEDINGS of the Asiatic Society from 1875 to 1899 (1900 to 1904 are out of stock) @ /8/ per No
3. JOURNAL of the Asiatic Society for 1875 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10, 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7), 1901 (7), 1902 (9), 1903 (8), 1904 (16), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members

*N. B.—The figures enclosed in brakets give the number of Nos in each Volume.*

4. Journal and Proceedings, N. S., 1905, to date, (Nos. 1-4 of 1905 are out of stock), @ 1-8 per No. to Members and Rs. 2 per No. to Non-Members.
5. Memoirs, 1905, to date. Price varies from number to number. Discount of 25% to Members
6. Centenary Review of the Researches of the Society from 1784-1883 ... 3 0
7. Catalogue of the Library of the Asiatic Society, Bengal, 1910, ... 3 0
8. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I–III, with 8 coloured Plates, 4to. @ 6/ each ... ... 18 0
9. Kaçmiraçabdamrta, Parts I & II @ 1/8/ ... . ... 3 0
10. Persian Translation of Haji Baba of Ispahan, by Haji Shaikh Ahmad-i-Kirmasi, and edited with notes by Major D. C. Phillott. ... 10 0

---

Notices of Sanskrit Manuscripts, Fasc. 1-34 @ 1/ each ... ... 34 0
Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... 5 0

*N.B.*—All Cheques, Money Orders, &c. must be made payable to the "Treasurer

येति। [५।१।१२] कारणस्य* पूर्ववर्त्तित्वं युज्यत इत्यत आह। अत्र चेति। [५।१।१५]

उत्तरस्यानन्तरं च पूर्वमेव स्यान्न च पूर्वं कार्यमित्यत आह। तदनन्तरत्वं चेति। [५।१।१६]

अव्यवहित-मव्यवधानं, तेनादौ पाठो ऽव्यवहितादि-पाठः। मिथ्याज्ञाने कारणे तत्कार्या दोषा-अव्यवधाने-नैवादौ पठिता इति शेषः।

कार्यकारणभावेनैव विपक्षबाधकेन व्याप्तिर्गृह्यत इति स एवोक्तः। अर्थापेक्षयोत्तरत्वपरित्यागे हेतुमाह। कारणस्य हीति। कारणस्य कार्यापेक्षया पूर्वत्वान्नोत्तरत्वमित्यर्थः।

उत्तरस्येति। अर्थापेक्षयोत्तरस्यानन्तरं पूर्वं स्यान्नच कारणात्पूर्वं कार्यमित्यर्थः।

अव्यवहितस्यादिपाठ इति षष्ठीसमासे मिथ्याज्ञानस्यात्मन्यव्यवहिता तत्कार्या प्रवृत्तिरपि तथा, तत्कार्यं जन्मापि, आदौ च तत्पाठोऽप्यस्तीति नापेक्षितार्थप्राप्तिरित्यन्यथा व्याचष्टे। अव्यवहितमिति। तेनेति। अव्यवधानस्य पाठान्वयेनार्थानन्वयादिति भावः। षष्ठीसमासनिषेधमात्रे तात्पर्यादव्यवहितश्चासावादिपाठश्चेतिकर्मधारयोऽप्यत्राभिप्रेत इति सम्प्रदायविदः। ननु दुःखमिथ्याज्ञानादीनां कार्यकारणभावस्यानादित्वेन न तेषामागन्तुकपाठापेक्षयाऽनन्तरत्वमित्यत आह। अव्यवधानेनेति।

* टीकानुसारेण कारणस्य हीति पाठो युक्तः।

यथैतत्तथाऽन्यत्रापीत्यत आह। एवमिति। [५।१।१७]

तेनायमर्थः—दुःखादीनां कार्यकारणभावात्तेषामेवोत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति।

दूषयति। न हीति। [५।१।१८] अपवर्ग एकोऽर्थः। उत्तरोत्तरापाये तदनन्तराभावादिति च पदद्वयं केषामिति, दुःखादीनामिति च पदं किं भवतीति साकाङ्क्षं, तस्मादेकवाक्यत्वलक्षणयोगादेकमेवेदं वाक्यमित्यर्थः।

यदपि वाक्यभेदेन प्रयोजनाधिक्यमभिहितं तदपि नास्तीत्याह। एकनिवृत्त्येति। ५ । १ । १

( सूत्रस्य क्रमप्रतिपादकत्वं योगविभागनिरासश्च । )

ननु सूत्रे मिथ्याज्ञानस्यैव शेषे पाठात्तत्र च विशेष्याभिधानान्नातिदेशो युक्त इत्यत आह। यथैतदिति। तथाच न पाठापेक्षया शेषत्वमपि तूक्तान्यत्वं तदिति भावः। योगविभागे मिथ्याज्ञानानामिति षष्ठ्यनन्वयमाशङ्क्य योगविभागलभ्यमर्थं सङ्कलय्याह। तेनेति। तथा च समासतात्पर्यगोचरसम्बन्धाभिव्यक्त्यर्थमियं षष्ठीति भावः। एकवाक्यत्वलक्षणं प्रकृते योजयति। अपवर्ग इति।

नन्वेकवाक्यत्वसिद्धौव योगविभागे निरस्ते किमधिकेनेत्यत आह। यदपीति। न केवलं बाधकं तत्रापि तु साधकमपि नास्तीत्येतत्प्रदर्शनार्थमिति भावः।

( सूत्रस्य क्रमप्रतिपादकत्वं योगविभागनिरासश्च । )

सू॰ दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरा[1]भावादपवर्गः ॥ २ ॥

विश्वतोमुखत्वेऽप्यसन्दिग्धत्वं प्रकरणानुवृत्त्यादिभिरित्यविरोधः। सारवत्-प्रयोजनवत्। अनवद्यं-शिष्टानामदुष्प्रतीतिकरम्। प्रकृतत्वेनास्तोभमिति व्याचष्टे। अस्तोभमिति। [५।१।२२]

यथाव्याख्याते विप्रतिपद्यमानं लक्षणान्तरेण बोधयति। तथा ह्याहुरिति। [५।१।२४]

लाघवं वाक्येषु पदकृतं, पदेषु स्वल्पत्वमक्षरकृतमित्यपौनरुक्त्यम्। एतच्च कार्यकारणभावस्य योगविभागेनाभिधीयमानत्वमभ्युपगम्योक्तम्। वस्तुतस्तु तेनाऽप्यसौ सूचनीय एव, न हि योगविभागस्यैतत्सामर्थ्यम्, अपि

सूत्रलक्षणान्तरप्रदर्शनतात्पर्यमाह। यथेति। विप्रतिपत्तिबीजं तु यत्सारवदुपपादकवत्त्वादस्तोभमनधिकं तदुपपादकतयाऽधिकस्यापि वाच्यत्वादित्यभिमानः। वस्तुतस्तु इतरेतरयुक्तमितरेतरं यदि द्वन्द्वपदमभिधत्ते तदा धवखदिरावित्यत्र धवयुक्तौ खदिराविति प्रतीतिः स्यादित्येकधर्मवत्त्वं द्वन्द्वपदात्प्रत्येतव्यं, स चैको धर्मो यदि कार्यकारणभावोऽपि स्यात् तदापि दुःखादि कार्यं जन्मादि कारणमिति न द्वन्द्वपदात् प्रत्येतुं शक्यमिति सूचनीयमेवेतिभावः।

( सूत्रलक्षणकथनं तात्पर्यव्याख्यानं च। )

(१) पायादिति पा॰ २ पु॰।

त्वर्थाधिक्यसूचनमात्रम्, एतच्च विभागेऽपि लभ्यत इत्याह। इतरेतरेत्यादि। [५।१।२५]

( सूत्रलक्षणकथनं तात्पर्य्यव्याख्यानं च। )

---

ननु सूत्रे मिथ्याज्ञानमात्रमेव श्रूयते, तत्कथमाह 'तत्रात्मादा'विति, अत आह। यद्यपि सामेति। [५।२।१]

भाष्यविषयतां वार्त्तिकस्य दर्शयति। तदनेनेति। [५।२।६] न खलु यथा कुण्डे बदरं संयोगेन, पटे वा शौक्ल्यं समवायेनेत्यर्थः।

ननु न तावत्सत्तामात्रेण सारूप्यं भ्रान्तावुपयुज्यते

---

ननु यद्यपीत्यादिशङ्का निर्बीजा, ज्ञानस्य विषयनिरूप्यतया यत्किञ्चिद्विषयप्रदर्शनपरत्वात् वार्त्तिकस्येत्यत आह। नन्विति। ज्ञानस्य विषयनिरूप्यतया विषयसामान्यप्राप्तौ विषयविशेषाभिधानस्य विषयान्तरव्यवच्छेदफलकतया व्युत्पत्तिसिद्धत्वात्तद्व्यवच्छेदप्रदर्शनार्थमियं टीकेतिभावः। ननु 'अनेकप्रकारक'मित्यादिवार्त्तिकं स्वतन्त्रमेवास्तु, कृतमस्य भाष्यावतारपरतयेत्यत आह। भाष्येति। स्वतन्त्रत्वे कथमिति स्वोक्ता एवानुपपत्तिरसङ्गता स्यादिति भाष्यानुपपत्तिः कृतेत्यर्थः।

दृष्टान्तद्वयं समर्थयति। संयोगेनेति। सम्बन्धप्रकारभेदात् दृष्टान्तभेद एवेत्यर्थः।

जपा(वा)कुसुमसन्निधानपरिभूतसितिम्नि[1] स्फटिकादावनुपलभ्यमानविशेषस्मरणेऽपि रजतादिविपर्यासाभावात्, तस्मादुपलभ्यमानमेव सारूप्यं तद्धेतुरित्यास्थेयम्, तदप्यसङ्गतं सारूप्यस्य भेदाधिष्ठानतया तत्प्रतिभासने भेदस्यापि प्रतिभानादभेदारोपानवकाशात्, तस्मात्सदसतोः सारूप्याभावादित्याशङ्कैवेयमनुपपन्नेत्यत आह। सर्वथा हीति। [५२।१४] न हीदमनेन सदृशमिति ज्ञात्वा सारूप्यग्रहणमिति ब्रूमः, किं तर्हि? रजतादौ योधर्म्मश्चाकचिक्यादिरुपलब्धः पूर्वं, स एव तज्जातीयो वा पुरोवर्त्तिन्युपलभ्यते यदि, तदा भ्रान्तिर्नातोऽन्यथेत्यर्थः।

अन्वयं दर्शयित्वा व्यतिरेकमाह। नहीति। [५२।१५]

यद्यपि हस्तिमशकादावपि यथाकथञ्चित्सारूप्यमस्त्येव, तथापि व्यवच्छेदकधर्म्मैरनभिभूतं सारूप्यमिहाभिप्रेतं, व्यवच्छेदकानभिभूतत्वं च तत्र नास्तीत्यतः सर्वात्मना वा सारूप्यमेकदेशेन वेत्यादि परास्तं वेदितव्यम्।

---

• अनुपलभ्यमानेति। विशेषस्याननुभवेऽपि स्मरणमस्त्येवेत्यर्थः।

सारूप्यस्येति। तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं हि तत्सारूप्यमतस्तत्सरूपोऽयमिति प्रत्यये तद्भेदस्य विषयत्वात् क्वाभेदारोप इत्यर्थः।

व्यवच्छेदकानभिभूत इति। व्यावर्त्तकधर्मग्रहणासहकृतइत्यर्थः।

---

(१) श्वेतिम्नि इति १ पु० पा०।

शङ्कते। असदृशेऽपीति। [५१।११]

इदमत्र विवक्षितं-सारूप्यं ह्यारोप्यस्यारोपविषयेण चिन्त्यते? अन्यथा वा? अनन्तरेऽतिप्रसङ्गः, प्रथमे तु न तावत्पीतगुणो शुक्लगुणिनि शङ्खे आरोप्यते पीतं चिरबिल्वमिदमिति प्रत्ययानुदयात्, नापि शुक्लगुणे पीत-

सारूप्यव्यभिचारार्थमारोप्यारोपविषयौ पीतगुणशङ्खाविति साधयति। न तावदिति। पीतं चिरबिल्वमिति शङ्खद्रव्ये पीतचिरबिल्वद्रव्याभेदारोपे पीतं चिरबिल्वं शङ्ख इति प्रत्ययः स्यान्न चैवमित्यर्थः। नयनरश्मिगतपीतपित्तस्यानुभूयमानस्यारोपे पीतं पित्तं शङ्ख इति प्रत्ययः स्यात्। वस्तुतो नयनरश्मिगतं पित्तमेव नास्ति। पुरुषान्तरेणापि तद्ग्रहप्रसङ्गात्। गोलके च सतोऽपि पित्तस्य ग्रहणमेव न सम्भवतीति शङ्खे पीतं पीतचिरबिल्वं वा स्मर्यमाणमारोप्यत इति तथा प्रत्ययः स्यात्। ननु दोषवशात्पित्तत्वेन चिरबिल्वत्वेन चानुपस्थितं पीतत्वेनैवोपस्थितं तद्द्रव्यमारोप्यत इति तथा प्रत्ययो न स्यात्। अत्राहुः—द्रव्यारोपपक्षेऽपि न निर्गुणस्य तस्यारोपः, किन्तु पीतगुणविशिष्टस्येति नागृहीतविशेषणान्यायाद्गुणारोप एव युक्तः, अपि च द्रव्यारोपपक्षे किं पीतद्रव्यतादात्म्यारोपस्तत्संसर्गारोपो वा? नाद्यः शङ्खत्वविशेषदर्शने तदसम्भवात्। अथायमारोपो विशेषदर्शने सत्येव भवति? तर्हि पीतचिरबिल्वोपस्थितौ कदाचित् पीतं चिरबिल्वं शङ्ख इति प्रतीतिः स्यात्, द्वितीये तु पीतं चिरबिल्वं

गुणः शुक्लगुणस्याप्रतिभासनात्, नापि शुक्लत्वसामान्याधिकरणे रूपे स्वलक्षणे पीतगुण, श्चाक्षुषप्रतीतौ शुक्लत्वसामान्याऽनवभासे तदाधारस्य रूपस्वलक्षणस्य भासनायोगात्, भासनेऽपि द्रव्यत्वसामानाधिकरण्यं न

---

शङ्खेऽस्तीति प्रतीतिः स्यादिति भावः। शुक्लगुणो ह्यारोपविषयः शुक्लत्वेन प्रतीयते? स्वरूपमात्रेण वा? आद्यं निराकरोति। शुक्लगुणस्येति। भासमाने वा शुक्लः पीत इति प्रत्ययः स्यात्। विशेषदर्शनाच्चेत्यपि द्रष्टव्यम्। द्वितीयमाशङ्क्य निराकरोति। नापीति।

चाक्षुषेति। आरोपविषयाभाने च नारोप इत्यर्थः। ननु दोषवशाच्छुक्लत्वसामान्याऽभानेऽपि शुक्लरूपव्यक्तिर्भासते, अन्यथा द्रव्यसाक्षात्कारो न स्यात् द्रव्यविषयकचाक्षुषसाक्षात्कारस्य तद्रूपविषयत्वनियमात् पीतरूपः शङ्ख इति भ्रमे पीतत्वमात्रे बाधात्तद्रूपमात्रभानस्यावश्यकत्वात्। नैवम्। दोषस्याऽऽवश्यकतया तत्प्रयुक्तशुक्लत्वाग्रहे ऽन्यत्र दृष्टव्यत्ययग्रहण एव तद्व्यापारः कल्प्यते। द्रव्यविषयकचाक्षुषज्ञानस्य तद्रूपाविषयत्वे नाव्याप्तिः तद्रूपाग्रहेऽपि योग्यरूपवत्तयैव द्रव्यसाक्षात्कारोपपत्तेः, रूपत्वेनापि प्रकारेण पीतरूपमेव भासत इति तद्बाधाभावस्यासिद्धेरित्यर्थः। भासनेऽपीति। रूपस्वलक्षणभानेऽपि शङ्खे पीतं रूपमिति धीः स्यान्न तु पीतः शङ्ख इत्यर्थः। न च शुक्लरूपे पीतत्वं प्रथममारोप्य पश्चादेभिव्यारोपात्पीतः शङ्ख इति द्रव्यविशेष्यक आरोपः स्यादिति

स्यात्, नापि पीतत्वसामान्यं शुक्लत्वसामान्याधिकरणे, तद्धि[1] तदात्मतया वाऽऽरोप्येत ? तत्संसर्गितया वा ? आद्ये शुक्लत्वसामान्याधारो व्यक्तिः पीतत्वसामान्यात्मना प्रथमाना न देशकालनियता स्यात्, व्यक्तिर्हि देशकालनियता न सामान्यं, सा चाप्रथितैव । न च पीतत्वसामान्यमेव शुक्लगुणव्यक्तिरूपेणारोप्यत इति साम्प्रतम्, तथा सति पीतत्वं न प्रतीयेत, न हि तस्यान्यत् किञ्चिद्रूपमस्ति, येन प्रतीतिपथमवतरेत् । सर्वथा

---

वाच्यम् । द्रव्य एव पीतगुणारोपादुपपत्तावान्तरालिकारोपे मानाभावात् गौरवाच्चेति भावः ।

आद्य इति । शुक्ल इति गुणे पीतत्वसामान्यतादात्म्यारोपे शुक्लगुणव्यक्तेर्देशकालनियमो न स्यात् जातेरनियतदेशकालत्वात् शुक्लगुणव्यक्तेश्च नियतदेशकालतया भानादिशेषदर्शने सति जातितादात्म्यारोपो न स्यादित्यर्थः । अथ न व्यक्तिर्देशकालनियततया भासते ? तत्राह । सा चेति । देशकालान्तरव्यवच्छिन्नरूपाभाने व्यक्तिरेव न भासेतेत्यारोपविषयाभानादारोप एव न स्यादित्यर्थः । तर्हि देशादिनियतभानानुरोधात्पीतत्वसामान्य एव शुक्लगुणव्यक्तितादात्म्यमारोप्यत इत्यस्त्वित्यत आह । न च पीतत्वसामान्यमेवेति । न हीति । जातेरनुगतस्वरूपादन्यत् रूपं नास्त्येव, येन भासमाना

---

(१) तदेतद्धि इति पु. पा. ।

ऽप्रतीतं च नारोपविषय इत्यसङ्गतिरेवास्य कल्पस्य। संसर्गितया तु सामान्य आरोप्यमाणे शुक्लगुणस्य शुक्लत्वेनैव प्रतीतिः स्यात्, न च पीतिमप्रतीतेर्विषयतारतम्यं स्यात् सामान्यस्यैकरूपत्वात्, तस्मात्पीतगुणः शुक्ले आरोप्यत इति वाच्यं, तथा च गुणगुणिनोः क्व साहश्यवार्त्तापीत्यर्थः।

---

जातिरारोपविषयः स्यादित्यर्थः। अनुगतरूपात्मना च जातेर्भाने अननुगतव्यक्त्यात्मतारोपो न स्याद्विशेषदर्शनादिति भावः। संसर्गितया त्विति। शुक्लगुणव्यक्तौ पीतत्वसामान्यसंसर्गारोपे शुक्लगुणव्यक्तेः शुक्लत्वेनैव प्रतीतौ विशेषदर्शनाच्च तत्र पीतत्वसामान्यसंसर्गारोपः। शुक्ले पीतत्वमिति प्रत्ययाभावाच्चेत्यर्थः। अथ शुक्लत्वेन सा भासते। तत्राह। न चेति। गुणकर्मणोरेव तारतम्यं न जाताविति तत्र जात्यारोपे न तारतम्यप्रतीतिः स्यादित्यर्थः। न च तारतम्यं जातिविशेषः सोऽपि शुक्लगुणव्यक्तावारोप्यत इति वाच्यम्। तथा सति रूपविशेष्यकप्रत्ययापत्तेः। द्रव्यविशेष्यकारोपान्तरकल्पने च गौरवमितिभावः। तस्मादिति। न च पीतद्रव्यतादात्म्यारोप एव किं न स्यादिति वाच्यम्। विशेषदर्शनस्यारोपविरोधित्वात्। नापि साक्षात्कारिविशेषदर्शनस्यैवारोपविरोधित्वमत्र च शुक्लरूपव्याप्यतया न शुक्लसाक्षात्कार इति कथं नारोप इति वाच्यम्। आरोप्यविरोधिज्ञानमात्रस्यैवारोपविरोधित्वात्। दिङ्मोहादौ च संसृष्टत्वारोपस्य वक्ष्यमाणत्वात्।

समाधत्ते। न तत्रापीति [५२।१७] न ह्यत्र पीतगुण आरोप्योऽपि तु पीतगुणस्य शङ्खस्यारोपविषयैा, संसृष्टस्वभावत्वं चारोप्यं, तथा च संसृष्टस्वभावाभ्यां गुणगुणिभ्यामनयोरसंसृष्टस्वभावयोः सारूप्यमिह प्रयोजकं, उपदर्शितं च तदिति किमप्रयोजकेन गुणिसारूप्येण गुणसारूप्येण वा सता ऽसता वेत्यर्थः।

---

यत्र विशेषादर्शनमेव दोषः तत्र तथा, अत्र च विशेषादर्शनसत्वेऽपि पित्तमेव दोषः। न च विशेषादर्शनेन तदन्यथासिद्धं, तस्य तद्व्यापारत्वादित्यप्याहुः।

न ह्यत्रेति। न चात्र मानाभावः पीतगुणारोपे विशेषदर्शनस्य विरोधित्वात्। संसृष्टस्वभावत्वस्य चाऽऽरोपे तस्य केवलान्वयित्वेन तत्र विशेषदर्शनाभावात्। न चैवं शङ्खपीतगुणौ संसृष्टाविति धीः स्यादिति वाच्यम्। संसर्गस्य ससम्बन्धिकतया तन्निरूप्यत्वेनोपस्थितपदार्थेनैव निरूपणात्। अथ संसर्गमात्रं वाऽऽरोप्यं? समवायो वा? आद्ये क्वारोपः संयुक्तसमवायादेः सत्वात्, नान्त्यः शङ्खपीतिमानौ न मिथः समवायिनाविति विशेषदर्शनादिति चेत्। न। सम्बन्ध्यन्तरानिरूपितसंसर्गस्यैवारोप्यत्वात्। उपदर्शितं चेति।

ननु चासंसर्गाग्रहः स्वरूपसन्नेवाऽऽरोपप्रयोजकः सारूप्यं च ज्ञातं तच्चारोपप्रयोजकम्। अत्राहुः—यत्र तादात्म्यारोपः तत्र सारूप्यं ज्ञातमुपयुज्यते, संसर्गारोपे तु स्वरूपसदेव प्रयोजकमिति भवत्यसंसर्गाग्रहे ऽपि प्रकृते सारूप्यं, असम्बन्धस्य ग्रहो यत्र नास्ति तद-

असम्बन्धाग्रहो-वैयधिकरण्याग्रहो विषयिणा विषय मुपलक्षयति। तेन व्यधिकरणग्रहणाविषयीकृतत्वं सारूप्यं तयोः, यथा पीतिमचिरबिल्वयोः तथैव पीतिमशङ्खयोरित्युक्तं भवति। एकेन्द्रियोपनीतसम्बन्धिद्वयविषयं सारूप्यमुपपाद्येन्द्रियद्वयोपनीतसम्बन्धिद्वयविषयं सारूप्यमुपपादयति। एवं त्वगिन्द्रियेति। [प्र॰।२।११]

न चैवं सति तादात्म्यभ्रमे ऽपि भेदाग्रह एव सारूप्यमस्तु कृतं चाकचिक्यादिनेति वाच्यम्। तदन्तरेण संस्कारानुद्बोधात् तेन च विना रजतारोपनियमानुपपत्तेः, इह तु संसृष्टत्वानुभवजनितसंस्कारोद्बोधो यावन्मात्रेण तावदेवोपयुक्तं, संसर्गस्य च संसृज्यमानावेव

---

गृहीतासम्बन्धं गुणगुणिस्वरूपमेवोक्तमिति। गुणत्वद्रव्यत्वादिकमेव सारूप्यं ज्ञातमत्रविवक्षितमित्यप्याहुः। सम्बन्धाग्रहणे नञ्जोऽन्वयं व्यावर्त्तयति। वैयधिकरण्येति। ननु ग्रहणाभावो न शङ्खादौ वर्त्तत इत्यत आह। विषयिणेति। इन्द्रियद्वयेति। न च भिन्नेन्द्रियग्राह्ययोस्तिक्तगुडयोः कथमुभयविशेष्यकः प्रत्यय इति वाच्यम्। यावद्विशेष्यसंसर्गस्याप्रयोजकत्वात्। अन्यथैकविशेष्यकप्रत्ययानुदयप्रसङ्गात् यावदर्थाभावात्। तावदेवेति। तच्चासंसर्गाग्रहः पीतिमशङ्खोपस्थितिश्चेति द्वयमित्यर्थः।

ननु पीतिमशङ्खयोः प्रत्येकं संसर्गोऽस्त्येवेति प्रतीतिरियं न भ्रमः स्यादित्यत आह। संसर्गस्येति। संसर्गस्य ससम्बन्धिकत्वेनोप-

विषयः, तौ चानुभूयमानावेवेति किं तदुपनायक-सादृश्यान्तरापेक्षयेति सर्वमवदातम्।

नन्वयमनुभवक्रमोऽनुभवबाधित एवेत्यत आह। अतिशीघ्रतयेति। [१।१।४]

ननु सादृश्यं चेद्भ्रान्तिबीजमुपपादितं तर्हि सर्वं सर्व-त्रारोप्येत, अस्ति हि केन चित्कस्य चित्कथञ्चित्सारूप्य-मित्यत आह। नेति। [१।१।४] एवं द्विचन्द्रेति [१।१।४] तथाविधाऽपेक्षाबुद्धिविषयत्वं द्विचन्द्रभ्रमे, भेदमात्रारोपे

---

स्थितपरस्परसाकाङ्क्षयोरन्योन्यसंसर्गस्तज्ज्ञानविषय इति नोक्तदोष इत्यर्थः।

ननु सारूप्यं न तावद्भ्रमे स्वरूपेणैवोपयुज्यते आरोप्योपस्थित्या-ऽन्यथासिद्धत्वात्, प्रतिबिम्बादौ व्यभिचारसंशयाच्च। न आरोप्य-स्मारकतया, मायराग्निस्तम्भनीमायादावनुभूयमानारोपे स्मरणानुप-योगात् आरोप्यस्य प्रत्यक्षत एवोपस्थितेः, अदृष्टादिना संस्कारो-द्बोधेनारोप्योपस्थितेश्च। न च यत्र शुक्तिनिष्ठसारूप्येण रजतं स्मार्यते रूपान्तरेण च रङ्गं, तत्र शुक्तौ रजतमेवारोप्यते न रङ्ग-मतस्तत्र सारूप्यमुपयुक्तमिति वाच्यम्। तत्र रङ्गव्यावर्त्तकधर्मग्रहा-देव तद्नारोपोपपत्तेः। तदग्रहे तु रङ्गरजतसंशयस्यैव भावात्।

अत्राहुः यत्र साक्षात्कारिभ्रमे आरोपविषयस्यारोप्यस्मारकत्वं तत्र सारूप्यमेव आरोपप्रयोजकः। यद्वा सर्वतादात्म्यारोपे सारूप्य-मेव एवं कोट्युपस्थापकः, सा च कोट्युपस्थितिः इदं रजतमित्या-

तु नानादिग्देशावयवसम्बन्धः, प्राच्यां प्रतीचीभ्रमे दक्षिणोत्तरान्यत्वे सति दिक्त्वमेव, एवमन्यत्रापि अलातचक्रभ्रमे मध्यासम्बन्धे सति सर्वदिक्सम्बन्धः । आदिग्रहणादगच्छति गतिभ्रमे, वैपरीत्ये च विभागवैपरीत्ये, अस्थूलेषु केशेषु स्थूलविभ्रमे तावद्देशाच्छादकत्व, मप्सु

---

दिभ्रमे स्मृतिरूपा ; माषराशिप्रविष्टमषीमाषारोपे च माषनिष्ठसारूप्यग्रहजन्यसारूप्यविशिष्टमाषग्रहस्यानुभवरूपस्य कारणत्वम् ।

अन्ये तु यत्र सारूप्यमेव दोषस्तत्रारोप्योपस्थापकतया तदुपयोगः । यत्र च पित्तादिर्दोषस्तत्रारोप्योपस्थितिः प्रत्यक्षादेवेति न तदुपयोग इत्यपि वदन्ति ।

आदिग्रहणादिति । गतिभ्रमस्य विषयद्वारा वैपरीत्यं गतिभ्रमवैपरीत्यम्, तेन विपरीतो गतिभ्रम इत्यर्थः । अस्ति हि नरादावुत्तराभिमुखं गच्छति समीपस्थेषु वृक्षेषु अमी दक्षिणाभिमुखं गच्छन्तीति भ्रमः । क्वचिद् गतिवैपरीत्यभ्रम इति पाठः स तु सुगम एव । अत्र सारूप्यमाह । उत्तरस्थितद्रव्यविभागवत्त्वं तस्य यो दक्षिणाभिमुखं गच्छति तस्यापीत्यर्थः । यद्यप्युत्तराभिमुखं गच्छता पुरुषेण सह संयोगाभावाद्दक्षिणदिग्वर्त्तिना सह विभागो नास्तीति न विभागवत्त्वं साधर्म्यं, तथापि दक्षिणाभिमुखगामिपुरुषविभागवद्देशस्थितत्वमेव साधर्म्यमनेनोक्तम् । स्वकीयोत्तरदेशसंयोगजनकविभागवत्त्वमेव च विभागवैपरीत्यम् । क्वचिद्गच्छति गतिभ्रमे वैपरीत्ये च विभागवैपरीत्ये इति पाठः तत्रा-

दण्डस्य (च) वक्रताभ्रमे तरङ्ग(च)वक्रिमदण्डयोरसंसर्गाग्रह इत्येवं नेयम्'। सर्वत्र च तत्त्वाग्रहः सम्भवत इति।
(इति भ्रमेषु साङ्ख्यस्य नियतत्त्वोपपादनपूर्वकमात्मनि नास्तितारोपसाधनम्)

इहात्मनो दुःखहेतुत्वेन शरीरेन्द्रियादिवद्धेयत्वमेव बौद्धैरापादितं—यथा हीन्द्रियादिना विना नात्मा दुःखं जनयितुमलं तथेन्द्रियादिकमपि तमन्तरेण इति, न हि निराश्रयं दुःखं नाम, अत आत्मापि हेयस्तदुक्तम्,—

"न तैर्विना दुःखहेतुरात्मा चेत्तेऽपि तादृशाः।
निर्दोषं द्वयमप्येवं वैराग्यं चेत् द्वयोस्तत"

इति। तच्चैतदसाधीयः तथा हि-न तावदात्मनो हानं रोगादिवद्विनाशलक्षणं नित्यत्वात्, नापि दन्द-

गच्छति द्रव्ये गतिभ्रमो वैपरीत्यं च गच्छत्येवागतिभ्रमस्तत्वेत्यर्थः। साङ्ख्यमाह विभागवैपरीत्ये इति प्रथमादिवचनान्तम्। विभागो वैपरीत्यं च विभागाभाव इत्यर्थः। यद्यपि गच्छत्यवश्यं विभागस्तथापि यस्यागतिभ्रमस्तेन समं विभागाभावो द्रष्टव्यः।
(इति भ्रमेषु साङ्ख्यस्य नियतत्त्वोपपादनपूर्वकमात्मनि नास्ति तारोपसाधनम्)

हेयत्वमेवेति। आत्मा हेयः दुःखहेतुत्वाच्छरीरादिवदित्यर्थः। तैर्विनेति। शरीरादिकं विनेत्यर्थः। तादृशा इति आत्मना विना न दुःखहेतव इत्यर्थः। निर्दोषमिति। द्वयमपि दुःखसाधनं निर्दोषम्। स एव न दुःखहेतुरित्यर्थः। ततो-दुःखहेतुत्वा(भावा)त्

मूकदष्टाङ्गवद्विप्रयोगादिलक्षणं व्यापकत्वात्, नापि सुतमरणादिवत्प्रतिपत्तिनिरोधलक्षणं स्वसंवेदनत्वादिति वेदान्तिनः। वयं तु ब्रूमः-तद्धि तदा स्याद्यदि ज्ञातस्य सतोदुःखं प्रत्यात्मनो हेतुत्वं सुतमरणादेरिव। न त्वेतदस्ति, किन्नाम! सत्तामात्रेण। तस्मादात्मनो हेयत्वव्युत्पादनं वैय्यात्यमात्रविजृम्भितमेतत्। आत्मद्दष्टेस्तु हेयत्वव्युत्पादनं मनाक् स(र)दलमित्याशङ्क्य निराकरोति नन्विति। [५३।७]

अभ्यर्हिततमम्-उपकार्यतमम्। सत्त्वम्-आत्मा। 'यद्यपि रागादिनिवृत्तिहेतुर्नैरात्म्यनिदर्शन'मिति गुडजिह्विका। वस्तुतस्तु न तावन्नित्यात्माभावदर्शनमात्रं रागादिनिवृत्तिहेतुः चार्वाकादीनामेव वीतरागत्वप्रसङ्गात्। अहङ्कारनिवृत्तिहेतुर्नैरात्म्यदर्शनं तत एव रागादिनिवृत्तिरिति चेत्? सापि किं शरीरादौ? चेतने वा? आद्ये सिद्धसाधनं शरीरादावहङ्कारस्य मिथ्यात्वात्,

---

द्वयोः-शरीरात्मनोर्वैराग्यं-रागाभाव इत्यर्थः। व्यापकत्वादिति। व्यापकस्य विभागसत्त्वेऽपि संयोगान्तरनैयत्यान्न विप्रयोग इत्यर्थः। अत्र नैरात्म्यसाक्षात्कार एव संसारबीजमित्यात्मदर्शनविरोधी निरोध इति न विकल्पितम्। अस्याग्रे निरस्यत्वात्।

चार्वाकादीनामिति। अत्र वादिनां बौद्धादीनां चार्वाकवीत-

तन्मूलत्वाच्च रागद्वेषयोः, तन्निवृत्तौ तयोरपि निवृत्तिरिति को नाम नाभ्युपैति। न च शरीरादावहङ्कारनिवृत्तेर्नित्यात्मदर्शनं विरोधि, किं त्वनुकूलमेव, न हि शुक्तिकातो रजतं भेदेनाव्यवस्थापयतस्तस्या रजतबुद्धिर्निवर्त्तते।

अथ चेतनविषयैवाहङ्कारनिवृत्तौ रागादीनपनयतीति विवक्षितम्? हन्तैवं स्वाकारेऽपीदन्ताव्यवहारिणां पृथग्जनानां वीतरागत्वप्रसङ्गः न हि ते शरीरादिविविक्तमहमिति प्रतियन्ति।

अथ बाह्याभ्यन्तरविषयतयाऽहङ्कारनिवृत्तिरभिमता? सापि किं सर्वथा ज्ञानाभावादेव? चेतनस्यापीदन्तास्पदत्वादेव वा? तस्मिन्नेव नास्तिताध्यारोपाद्वा? न तावदाद्यः अदृष्टित्वप्रसङ्गात्। न चैतत्प्रयत्नशतेनापि

---

रागत्वं न सम्प्रतिपन्नमिति भावः। न च शरीरादाविति। नित्यात्मनिश्चयेऽपि शरीरादावनित्ये अहन्त्वबुद्धिनिवृत्तेर्नित्यात्मदर्शनं निराकृत्य नैरात्म्यदर्शनादरो न युक्त इत्यर्थः। स्वाकारेऽपीति। स्वाकारे-आत्मनि। इदन्ता-शरीरादित्वम्, तद्व्यवहारिणां-शरीरादिकमेवाहमिति व्यवहरतामित्यर्थः।

अथेति। बाह्यं-शरीरादि। आभ्यन्तरं-आत्मा तच्चोभयचेत्यर्थः। इदन्तास्पदत्वमिति। अचेतनत्वमित्यर्थः।

तस्मिन्-चेतने। अदृष्टित्वेति। सर्वथा ज्ञानाभावे नैरात्म्य-

सिद्ध्यति, यथा यथा दृष्टिनिरोधाय यत्नस्तथा तथा दृष्टेः प्रत्यापत्तेः । न चादृष्टेरेव रागादयो निवर्त्तन्ते, युगसहस्रमपि सुप्तस्य पुनर्जागरावस्थायां रागादिदर्शनात् ।

नापि द्वितीयः, अहमभावे सतीदमोऽप्यभावात्, आत्मनि सति परसंज्ञेति त्वयैवोक्तं यतः ।

नापि तृतीयः, ग्रहणाग्रहणयोरुभयोरप्यसम्भवात् । यद्यहमास्पदं चेतनो गृहीतः ! कथं नास्तिताध्यारोपः ? न गृहीतश्चेत्कुत्र नास्तिताध्यारोपः ? ।

न च प्रथमं ग्रहः पश्चादारोप इति त्वया वक्तुं शक्यते । न चास्फुरति निषेध्ये निषेधसम्भवः । स्वप्रतिष्ठज्ञानमात्रेणेति चेत् ! न, ज्ञानस्य स्वप्रतिष्ठता-

---

दृष्टेरप्यभावे दृश्याभाव एव स्यादिति भावः । यथायथेति । स्वात्मदृष्टिज्ञानं विना तन्निवृत्त्यर्थं प्रयत्नाभावादित्यर्थः । न चादृष्टावपि रागादिनिवृत्तिरिति किं दृष्टिनिवृत्त्येत्यत आह । न चेति । अहमभाव इति । चेतनाभावे तदितरात्मकस्येदन्त्वस्याप्यभावः स्यादित्यर्थः ।

त्वया वक्तुमिति । तव त्वन्मते क्षणिकत्वादिति भावः । स्वप्रतिष्ठेति । स्वप्रतिष्ठं-स्वमात्रविषयकम् । तथा च निषेध्यास्फुरणेऽपि ज्ञानस्य यत्स्वमात्रविषयत्वं तदेव नास्तितारोप उच्यत इत्यर्थः । ज्ञानस्येति । त्वयाऽऽलयविज्ञानस्य संसारदशायामपि

ध्रौव्येऽपि रागादिदर्शनात्। तत्तद्बहिरुपप्लवविरहे सतीति चेत्? तर्हि बहिरुपप्लवविरहे स्वात्मप्रतिष्ठं ज्ञानं रागादिनिवृत्तिहेतुरित्येवं भूतात्मदृष्ट्या किमपराद्धं? येन तां निरस्य नैरात्म्यदृष्टिरुपादीयते। औदासीन्यदृष्टिरेव नैरात्म्यदृष्टिरिति चेत्? किमौदासीन्यम्? शून्यत्वमिति चेत्? एवं तर्हि स्वात्मदृष्टिरपि दृष्टिर्न स्यादित्यदृष्टित्वप्रसङ्गः। अनालम्बनतया निःसम्बन्धित्वमौदासीन्यमिति चेत्! तर्हि निरात्मीयतादृष्टिं[1] वद? कुतो नैरात्म्यदृष्टिं सुप्त इव

स्वमात्रविषयकत्वस्वीकारादित्यर्थः। तत्तदिति। रूपादिविषयकं ज्ञानं बहिरुपप्लवः तदभावो न संसारितादशायामित्यर्थः।

तर्हीति। बहिर्विषयकज्ञाननिवृत्तावात्मविषयकज्ञानादपि रागादिनिवृत्तिसम्भवे त्वन्मतेऽपि तदेवोपादीयतां, किं तदर्थं नैराम्यदृष्ट्येत्यर्थः। स्वात्मप्रतिष्ठं-स्वात्माश्रयं तद्विषयमित्यर्थः। शून्यत्वं यदि विषयस्योच्यते तदाऽसिप्रसङ्ग इति बुद्धेः तदाद्यं, तत्राह। एवं तर्हीति। अनालम्बनतया निर्विषयतयेत्यर्थः। तर्हीति। दृष्टेर्निर्विषयत्वे तस्या आत्मविषयत्वाभावः परं स्यान्न त्वात्माभावविषयकत्वमित्यात्माभावविषया दृष्टिः नैरात्म्यदृष्टिर्न स्यादित्यर्थः। न च निरात्मीयतादृष्टिरेव नैरात्म्यदृष्टिरस्त्विति वाच्यम्। तस्या मोक्षोपायत्वे मानाभावात्। निर्विषयत्वे तु बुद्धित्वव्याघाताच्च। न च

(१) निरात्मताद्दष्टिम् इति २ पु॰ पा॰।

प्रलपसीति । "एवं प्रेत्यभावाभावज्ञानस्ये"ति परमं निदानमित्यनुषज्यते । "तथा चे"त्यपि गुडजिह्विका । वस्तुतस्तु नास्ति कर्म, नास्ति कर्मफलं, नास्ति प्रेत्यभाव, इति—

"यावज्जीवेत्सुखं जीवेन्नास्ति मृत्योरगोचर"

इति न्यायमालम्बमानेन प्राणिवधादत्तादानादावेव घटितव्यं साधीयश्चैवमस्य कैवल्यमिति । न च सन्तानमादाय प्रेत्यभावादिदृष्टिरुपपत्स्यत इति वाच्यम् । तदा हि तमादाय सोपपद्येत, यदि तद्दृष्टिरनर्थान्निवर्त्तयेत् अर्थे प्रवर्त्तयेत् । प्रवृत्तिनिवृत्तौ च सैव दृष्टिः करोति या रागद्वेषौ प्रसूते, तन्मूलत्वात्तयोः, तथा च तादृशी

क्षणिकात्मसाक्षात्कार एव नैरात्म्यदृष्टिरिति वाच्यम् । आत्मानमप्रतिसन्दधतो न क्वापि प्रवृत्तिसम्भव इति स्वानुपकार्यत्वज्ञानामोक्षोपाये तत्त्वज्ञानेऽप्यप्रवृत्तिप्रसङ्गात् । क्षणिकत्वस्य निषेत्स्यमानत्वाच्चेति भावः ।

यावज्जीवेदिति । न च क्षणिकात्मसाक्षात्कारे प्राणिवधादिसाध्यसुखादिना आत्मन उपकार्यत्वाप्रतिसन्धानादप्रवृत्तिरुपपाद्या, आत्मनः क्षणिकत्वनिश्चये स्वानुपकार्यताप्रतिसन्धानादपवर्गार्थप्रवृत्त्यनुपपत्तेरुक्तत्वादिति भावः ।

तादृशीति । रागद्वेषप्रयोजिका सन्तानदृष्टिरित्यर्थः । नास्तिकत्वम्-आमुष्मिकफलायाप्रवर्त्तकत्वम् । नन्वभ्यर्हिततमता सुखाना-

सन्तानदृष्टिरपि हेयैव । न तादृशी चेन्नास्तिकत्वमेव निर्वाहयेत् ।

तदिदमुक्तम्— "सोऽयं दृश्चिकभियेति । [५१'१९] तस्माद्यः परलोकार्थी तस्य परलोकिनमात्मानमङ्गीकृत्यैव स्वर्गे ऽपवर्गे वा प्रयत्नः । यस्तु नित्यमात्मानं नाभ्युपैति तस्य चार्वाकस्येव स्वर्गापवर्गावेव नस्तः, कुतस्तदर्था प्रवृत्तिरित्याशयवानाह । सेयमिति [५२।१७]

यत्तूक्तमात्मानमभ्यर्हितं पश्यन्निति ! सोऽयं कस्य प्रसङ्गः ? किं सर्वदुःखोपशममुपकारमपश्यतः ? पश्यतो वा ? आद्यश्चेदेवमेतत् । नह्येवम्भूतस्य नैरात्म्यदृष्टिरप्युपपद्यते । न ह्यात्मोच्छेदमेव कश्चिदुपकारत्वेन मनुते, अपि तु दुःखं जिहासमान आत्मानं जहाति, आत्मानमनपहाय दुःखस्य हातुमशक्यत्वादिति मन्यमानः, तस्माद् दुःखं[1]जिहासोः सुखं चोपादातुमिच्छतो नैरात्म्यदृष्टेरप्यसम्भव एव, तथा च तथाभूतस्य

---

मपि स्यादेवात आह । यत्तूक्तमिति । कस्येति । कस्य क्षतेत्यर्थः । न ह्येवमिति । सर्वदुःखोच्छेदमुपकारमपश्यतस्तत्साधननैरात्म्यदृष्टेरप्यनुपादेयत्वादित्यर्थः । अथात्मोच्छेदरूपोपकारहेतुतया नैरात्म्यस्य दृष्टिरुपादेया ? तत्राह । न ह्यात्मेति । आत्मानं जह्यामितीच्छया

---

(१) दुःखमजिहासोरिति पु० पा० ।

नैरात्म्यदर्शिनो नित्यात्मदर्शिनो वा तुल्यः संसारः। द्वितीयस्तु कल्पोऽसङ्गत एव, न हि सर्वदुःखोच्छेदमेवोपकारं पश्यति सुखाय तदुपकाराय च घटत इति। सर्वदुःखोच्छेदश्च सुखं चेति विप्रतिषिद्धमेतत्। एवं (च) सर्वदुःखोच्छेदमिच्छति परं चापकरोतीत्येतदप्यसङ्गतम्, न हि परापकारः सर्वदुःखोच्छेदनिदानमिति हृदि निधायाह। अभ्यर्हितता चेति। [५२।१७]

( नैरात्म्यदृष्टेर्मिथ्याज्ञानत्वानुपादेयत्वकथनम् । )

---

सामान्यधर्मोऽहङ्कारास्पदत्वम्- अहमिति कर्तृपद-विषयत्वं, अनेन तत्प्रवृत्तिनिमित्तस्य कर्तृत्वस्यैकदेश-

---

प्रवृत्तेरभावादित्यर्थः। सर्वदुःखोच्छेदश्चेति। सुखस्य दुःखानुषङ्गनियमात्सुखेपि दुःखावश्यम्भावादित्यर्थः।

( नैरात्म्यदृष्टेर्मिथ्याज्ञानत्वानुपादेयत्वकथनम् । )

---

नन्वहङ्कारास्पदत्वं यद्यहन्त्वाश्रयत्वम् ?, तदाऽऽत्मन एव तदिति न शरीरसाधर्म्यम्, अथाहम्बुद्धिविषयत्वम् ?, तदा तस्या भ्रमत्वेन तदर्थमेवं साधर्म्यानुसरणात्तत्त्वोक्तं स्यादित्यत आह। अहमितीति। अत्राहंशब्दार्थः कर्तृपदेन दर्शितः। कारार्थ इति पदेन। शेषेण चास्मदर्थ उक्तः। एतस्यापि शरीरसाधारण्यं नास्तीत्यभिप्रेत्याह। अनेनेति। यद्यपि कारकान्तरप्रयोक्तृत्वे सति

सुपलक्षयति। तेनायमर्थः— इतरकारकप्रयोक्तृत्वं बाह्यकारकाप्रयोज्यत्वञ्च दृष्ट्वा भेदाग्रहे सति शरीरादौ कर्त्तृत्वमारोप्यात्मत्वेन विपर्यस्यतीति तदिदमुक्तम्। तां खल्विति। [५१ २५]

( इत्यनात्मनि अनेकविधमिथ्याज्ञानोपपादनम्। )

---

एवं सिद्धं कृत्वा विपर्ययमन्यथाख्यातिरूपमिति शेषः। सम्प्रति सन्दिहानो विशेषत इति शेषः।

---

कारकाप्रयोज्यत्वं न शरीरे, आत्मनैव कारकेण प्रयोज्यमानत्वात्, तथापि बाह्यकारकाप्रयोज्यत्वं शरीरेऽप्यस्ति कारकसामान्यस्य बाह्यपदेन सङ्कोचितत्वादेकदेशं साधर्म्यमुपलक्षयतीत्यर्थः। किमतो यद्येवमित्यत आह। तेनेति। यद्यपि कर्त्तृत्वारोपपूर्वकमात्मत्वेन विपर्य्येतीत्यत्र न मानं तथाप्येवमपि कदाचित्सम्भवतीत्येतत्प्रदर्शनपरोऽयं ग्रन्थः।

ननु टीकाकृता इच्छाद्याधारतामारोप्येत्युक्तमिति तद्विरोध इत्यत आह। तदिदमिति। ज्ञानेच्छाकृतिमत्त्वं कर्त्तृत्वमितीच्छाद्यारोपः कर्त्तृत्वारोप एवेति न तद्विरोध इत्यर्थः।

( इत्यनात्मनि अनेकविधमिथ्याज्ञानोपपादनम्। )

---

ननु विपर्य्यये धर्म्मिण्येव न विवादः, प्रकार एव तद्विवादादित्यत आह। अन्यथाख्यातीति। तथापि विपर्ययरूप एव सन्देह इत्यत आह। विशेषत इति।

# ननु स्थाणावेवायं मम चोरप्रत्ययोऽवृत्त इत्याशोपा-

परीक्षकविप्रतिपत्तिपदनिराकार्यां शङ्कामाह । नन्विति । साकारख्यातौ संशयः-शुक्तिगतत्वेन भासमानो रजतत्वादिज्ञान-वृत्तिर्न वा ?, असत्ख्यातौ संशयः-भ्रमस्य तादात्म्यांशे असद्विषयत्व-पक्षे असद्विषयकमिदं रजतमिति ज्ञानं स्वातिरिक्तप्रमेयविषयकं न वा ? न चेत् विषयके (?) घटादौ प्रसिद्धम् । भ्रमस्य सन्मात्रविषय-कत्वपक्षे नित्यद्रव्याविषयकोऽयं भ्रमो विशेषणान्यकेवलान्वय्यत्यन्ता-भावाप्रतियोगिमात्रविषयको न वा ? अत्र सत्त्वपि भासतामित्यर्था-न्तरत्ववारणाय मात्रपदम् । एवं चाकाशज्ञानेऽप्याकाशत्वादेः केव-लान्वय्यत्यन्ताभावाप्रतियोगिनो भानान्मात्रार्थस्यासिद्धिः स्यादिति विशेषणान्येति विशेषणम् । तत्र केवलान्वय्यत्यन्ताभावाप्रतियोगिनो विशेषणस्यैवाकाशत्वस्य भानात् । यद्वा नित्यद्रव्याविषयमिदं रजतमिति ज्ञानं विशेषणान्यव्यासज्यप्रतियोगिकात्यन्ताभावान्यात्य-न्ताभावाप्रतियोग्यत्यन्ताभावप्रतियोगिमात्रस्वातिरिक्तप्रमेयातिरिक्त-विषयकं न वा । इदमेव च केवलान्वय्यत्यन्ताभावत्वेनोच्यते । अत्र पटे घटाकाशात्यन्ताभावो नेति प्रतीतेराकाशात्यन्ताभावस्यापि व्यासज्यप्रतियोगिकात्यन्ताभावप्रतियोगित्वाद्द्वितीयं विशेषणम् । तदनभ्युपगमे त्वदेयमेव । अत्र नित्यद्रव्यविषयकभ्रमाव्याप्तिर्न दोषः एकदेशविप्रतिपत्तावपि तत्रासत्ख्यातिसिद्धौ भ्रमान्तरेण सदस-द्विषयकत्वसंशयोदयात् । यद्वा नित्यद्रव्यभ्रमसाधारणः संशयः-भ्रम-विषयत्वं प्रमाविषयत्वव्याप्यं न वा ? न चेत्याकाशादौ प्रसिद्धं

त्वाकृतं प्रसिद्धमिति तदेव संशय एव नास्तीत्यत आह। परीक्षकाणामिति। [४।१।२७]

( इति विपर्यये विप्रतिपत्तिनिरूपणम्।)

आकाशस्यानधिकरणत्वेन नियतसामानाधिकरण्यरूपव्याप्यत्वस्य तत्राभानात्। अनिर्वचनीयख्यातौ संशयः-भ्रमज्ञानं दृष्टमात्रनिर्वचनविषयविषयकं न वा? तत्र ख्यातिनिर्वचनानि सन्त्यपि न वा? अख्यात्यन्यथाख्यात्योः संशयः-ज्ञानत्वं विशेष्यावृत्तिप्रकारावच्छिन्नवृत्ति न वेति सामान्यतः, न चाप्रसिद्धिः भेदाग्रहकारितायां रजतत्वेन पुरोवर्त्तिनमिच्छामीत्यत्रेच्छायां विशेष्यावृत्तिना रजतत्वेनावच्छेदात्। विशिष्य तु रजतेच्छाजन्यशुक्तिविषयकप्रवृत्तिजनकं रजतज्ञानं शुक्तिविषयकं न वा? तादृशमिदं ज्ञानं वा रजतत्वप्रकारकं न वा? न चाद्ये स्मरणविशिष्टज्ञानयोः पक्षत्वे बाधाश्रयासिद्धी, तादृशरजतज्ञानत्वेनोभयसाधारणेनोभयसिद्धेन पक्षत्वात्। सवह्निनिर्वह्निसाधारणोभयसिद्धेन पर्वतत्वेनैव पर्वतस्य। अन्यथा साध्यतदभाववादाय पक्षापक्षविकल्पेऽनुमानमात्रोच्छेदापत्तेरिति सङ्क्षेपः।

( इति विपर्यये विप्रतिपत्तिनिरूपणम्।)

प्रतिपत्तुः प्रत्ययात्-प्रत्येतव्यात् । अव्यतिरेकात्-अभेदादित्यर्थः ।

नन्विदं रजतमित्यत्र द्वयं प्रतिभाति ज्ञानस्यात्मा पुरोवर्त्ति द्रव्यञ्च, तत्र पुरोवर्तिनो रजतत्वे प्रतिषिद्धे ऽर्थादापद्यते ज्ञानस्येति, तदन्येषां तु प्रतिपक्षनारोहादेव नावकाशः, तत्किमुच्यते तन्निषेधो वणिग्वीथ्यादावित्यत आह । भ्रान्तत्त्वं त्वस्याऽनुपलब्धचरं कुतस्त्यम् । [५।१।१४]

यद्धि यस्य कदाचिदवगतं तदन्यत्र प्रतिषेधे पारि-

---

ननु न्यायदर्शने प्रत्ययस्याहंप्रत्ययविषयत्वाभावात् प्रतिपत्तुः प्रत्येतव्यादव्यतिरेकाभावादहमिति प्रत्ययो न स्यादित्यत आह । प्रत्येतव्यादिति । प्रत्येतव्यत्वमुभयसाधारणं तन्मते स्वप्रकाशत्वेन प्रत्ययस्यैव प्रत्येतव्यत्वादिति भावः । व्यतिरेकः संसर्गाभाव इति भ्रमनिवारणायाह । अभेदादिति । टीकायां 'ज्ञानाकारता पुनरस्य' इति बाधकप्रत्ययोवेतिपक्षः शङ्कितः । तत्र 'ज्ञानाकारते'ति टीकानेदं रजतमिति बाधकप्रत्ययः पुरोवर्त्तिनो रजताकारतामात्रं निषेधति, न तु ज्ञानस्य रजताकारतां दर्शयतीत्यर्थः । टीकायां पुरोवर्त्तित्वनिषेधादित्यनेनानुमानेनेति पक्षः शङ्कितः । नन्वनुपलब्धचरं इति व्यर्थम्, उपलब्धचरत्वेऽपि तस्य ज्ञानस्य रजताकारत्वासिद्धेः, परोक्षार्थापत्तावन्यथासिद्धेरुक्तत्वादित्यत आह नन्विदमिति । तत्रेति । यत्र तत्कदाचिदवगतमित्यर्थः । न त्विति ।

शेष्यात्तच गम्यते, न तु प्रतीतिपथमवतीर्णयोरन्यतरस्य प्रतिषेधे पारिशेष्यादितरस्यासम्भावितमपि, तथा सति नेदं रजतमिति शुक्तिकायां रजतत्वप्रतिषेधः तदेकज्ञानसंसर्गिणो भूतलादेरपि रजतत्वं विदध्यात्, न चैवम्, तत्कस्य हेतोः ! तस्य रजतत्वं कदाचिदपि नोपलब्धं यतः, तथा स्वात्मनोपि रजतात्मत्वं न कस्य चिदुपलब्धिगोचरः कदाचित्स्वप्ने ऽपि। अथ दृष्टमेव सत्यरजतज्ञाने रजताकारत्वमात्मन इत्याशयः ?, सोऽयं स्वप्नायते-तत्रापि पुरोवर्त्तिनि रजते ऽनुभूयमाने स्वात्मनो रजताकारत्वं कस्य प्रमाणस्य गोचर इति। तदनेन स्वाकारस्य बाह्यत्वे साधकप्रमाणाभावोद्भिर्शितोबाधकमपि सूचितम्-यथाहि नेदं रजतमिति बाधकबलेन पुरोवर्त्तिनो रजतत्व प्रतिषेधः-तथा नाहं रजतमित्यपि बाधकं स्फुटमेव। अयमेव भ्रम इति चेत् ?

---

यत्रापि तदसम्भावितं तत्रापि तन्न गम्यत इत्यर्थः। अन्यत्रापि यदनुपलब्धचरं तत्राप्येकज्ञानविषयीकृते परिशेषात्तत्प्रतीयते तत्राह। तथा सतीति।

ननु साधकबाधकमानाभावात्तत्र संशयः स्यादित्यत आह। तदनेनेति। उपलब्धिगोचर इति प्रमाणसादृश्यगोचरत्वेऽपि दृष्टेनैव तदुपपत्तौ न तत्कल्पनमित्याशयः। अयमेवेति। इदं रजत-

एवं तर्हि न रजतत्वमारोप्यते बाह्ये, किंतु तस्मि-न्नेवाहमास्पदे बाह्यत्वमारोप्यत इत्याशयः ? तथासति बाधकप्रत्ययेन तदेवापनेयं, तस्मिंश्चापनीतेऽहं रजत-मिति स्यात्, एवं च सतीदं रजतमिति कोऽर्थः ? नाहं रजतमिति। नेदं रजतमिति कोर्थः? अहं रजतमिति। ततश्च यथेदं नेदमहं नाहमित्यनयोर्विरोधात् समु-च्चयाभिमानोपि नास्ति, तथा नेदं रजतं नाहं रजत-मित्यनयोरपि विरोधात् समुच्चयाभिमानोपि न स्यात्,

---

मिति भ्रमोऽहमास्पदे रजताकारे इदमित्यनहमास्पदाभिन्नत्वं विषयीकुर्वन् नहि रजतमित्येव विषयीकरोतीत्यर्थः। तस्मिन्ने-वेति। रजताकारे बाह्यत्वमिदन्त्वरूपम्। तदेव-बाह्यत्वमेवेत्यर्थः। तस्मिंश्चेति, बाह्यत्वाभावे गृहीत इत्यर्थः। अहं रजतमिति। ज्ञानं रजतमिति स्यादित्यर्थः। एवं चेति। इदं रजतमिति भ्रमस्य यथा नाहं रजतमित्यर्थः तथा नेदं रजतमिति बाधकप्रत्ययस्याहं रजतमित्यर्थः स्यादित्यर्थः।

किमतो यद्येवमित्यत आह। ततश्चेति। समुच्चयाभिमानः-एकत्वाभिमान इत्यर्थः। उभयोः-पुरोवर्त्यहमास्पदयोरित्यर्थः। अन्यस्य-(बाह्य)वणिग्वीथ्यादिगतस्य रजतस्येत्यर्थः। ननु स्वाकार एव सर्ववृत्तीनां विषयः-तत्कादाचित्कत्वान्यथानुपपत्त्या बाह्यसिद्धिरिह तु बाधकवशाद्बाह्यार्थेन सादृश्यनिषेधात्त्वायमर्थाहित आकारः किन्तु समनन्तरप्रत्ययोपाधिरिति निश्चीयते इत्येव परिशेषः स्यात्।

अस्ति च, तस्मादुभयोरपि रजतत्वप्रतिषेधोऽन्यस्य रजतत्वं व्यवस्थापयतीति पाषाणरेखेयं न दुरुत्तरपांसुपूरणेनापनेतुं शक्यते।

( इत्यात्मख्यातिनिराकरणम्। )

---

सामर्थ्यातिशयः-स्वभावातिशयः। अतिशयस्तु विषयजन्यज्ञानापेक्षया। सत्त्वमिवेति सत्यज्ञानाभिप्रायं

---

मैवम्। सत्यरजतज्ञानेऽप्याकारकादाचित्कत्वस्य वासनावशादेवोपपत्तौ बाह्याऽसिद्धेर्वक्ष्यमाणत्वात्। न च बाधकप्रत्ययाभावे बाह्याहितत्वमेवाकारस्य व्यवस्थाप्यते न तु बाधकसद्भाव इति वाच्यम्। वासनापरिपाके जागरूके तुल्यन्यायेन बाधकप्रत्ययस्यापि स्वाकारमात्रनिष्ठतया बाह्यार्थव्यवस्थापकत्वापत्तेः। स्वाकारतादात्म्याऽतिरिक्तस्य विषयस्य वक्ष्यमाणत्वाच्चेति भावः।

( इत्यात्मख्यातिनिराकरणम्। )

---

नन्वसद्गोचरस्य ज्ञानस्य सामर्थ्यं कारणत्वमेव न स्यादित्यत आह। स्वभावेति। त्रिलक्षणसामग्रीतोधर्म्मैव तथोत्पन्न इत्यर्थः। ननु चासत्ख्यातिवादिमते सद्विषयत्वमसद्विषयस्य नास्त्येवेत्यत आह। ज्ञानेति। यथा सत्यज्ञानं स्वभावात्सद्विषयं तथैव तदपि स्वभावादेवासद्गोचरं यथा वाऽऽत्मन्नते स्वप्रकाशत्वात् सन्तं स्वविषयीकरोति तद्वदसन्तमपीत्यर्थः। पूर्ववच्चापि न सामर्थ्यं स्वभाव

स्वरूपाभिप्रायं वा । विषयसामर्थ्यमिति-सामर्थ्यं-कारणत्वम् । तद्भावसिद्धेः-विषयभावसिद्धेः । अतएव-इति-कृत्वा वेदान्त्येकदेशिनोपि निराकारबौद्धमतानुमति-र्दर्शिता । सदसत्त्वेन गृह्णातीति न विकल्पितमतिनि-र्देशत्वात् । प्रवृत्त्यौपयिकोह्यर्थः प्रकृते प्रकाशते, न तु सदसत्वेन गृहीत्वा प्रवृत्तिरुपपद्यते । असदेव रजतं प्रकाशते पुरोवर्त्तिभेदाग्रहाच्च शुक्तौ प्रवृत्तिर्नान्यथेति नाशङ्कितं प्राभाकरपक्षेण तुल्ययोगक्षेमत्वादपोहे निराकरिष्यमाणत्वाच्च ।

(इत्यसत्ख्यातिनिराकरणम् ।)

---

इत्यत आह । कारणत्वमिति । ननु सामर्थ्यं भाव एवेति तच्छब्देन तत्परामर्शे भावपदार्थासङ्गतिरिति व्याचष्टे । विषयभावेति । असत्ख्यातौ च मानम्-शुक्त्यतिरिक्तो देशो रजतत्वात्यन्ताभाववान् देशत्वात् शुक्तिवत् । शुक्तौ च रजतत्वं बाधितमेवेति । अपि च भ्रान्तिरियं पुरोवर्त्तिनि वा ? रजते वा ? तयोस्तादात्म्ये वा ? नाद्यौ तयोर्विद्यमानत्वात् । तृतीयेऽत्यन्तासदुल्लेखित्वेन असत्-ख्यातिरेव । अथ पुरोवर्त्तिरजतत्वसंसर्गाः स्वरूपेणैव भासन्ते भ्रमे, न तु धर्मधर्मिभावेन, ते च सन्त एवेति चेत् ? न । तत्समूहालम्बनस्याप्येवं भ्रमत्वापत्तेः । तेषाञ्च सत्त्वाद्बाधोदयानुपपत्तिरिति भ्रमत्वान्यथानुपपत्त्यैवासत्ख्यातिः सिद्ध्यति ।

अपोह इति । सविकल्पकस्यालीकव्यावृत्तिविषयत्वेपि स्वलक्ष-

अनिर्वचनीयख्यातिमनुभवविरोधेन निराकरोति। न चेति। [१।१।४]'

तथाहि किमिदमनिर्वचनीयत्वम्? किं निरुक्तिविरह एव? आहोस्विन्निरुक्तिनिमित्तविरह एव? न तावदाद्यः, इदं रजतमिति नेदं रजतमिति निरुक्तेर्विद्यमानत्वात्। नापि द्वितीयः, निरुक्तिनिमित्तं ज्ञानं वा स्यात्? विषयोवा? न तावदाद्यस्य विरहः,

---

णभेदाग्रहात्तच प्रवृत्तिरित्यपोहनिरासेनैव निरस्तमित्यर्थः। तत्रानुभवेति टीका। सदुपरक्तमसदपि भासते, नतखण्डमेवासद्भासे भासते कारणाभावात्, इन्द्रियाणां विषयाधिपत्येनैव जनकत्वात्, लिङ्गादेरुपस्थितार्थसंसर्गबोधकत्वात्, अन्यथाऽतिप्रसङ्गात्, व्याप्तिग्रहयोरसदर्थे विरहाच्च। वासनैव कारणमिति चेत्? न, तस्या निरपेक्षत्वे सर्वदा भ्रमापत्तेः। सापेक्षत्वे त्वपेक्षणीयैरेवान्यथासिद्धेः। न च कारणानुपपत्तिस्तुल्या, निराकरिष्यमाणत्वादित्यर्थः। सम्प्रदायविदस्तु सन्मात्रविषय एव भ्रमः रजतपुरोवर्त्तिनोः सत्त्वात्। न च तदुभयतादात्म्यं चेत्यतोधिकस्य तस्याऽभावात् तयोश्च सत्त्वात्। संसर्गारोपेप्येवम्, भ्रमत्वं च तदभाववति तत्प्रकारकज्ञानत्वादिकमित्याहुः।

( इत्यसत्ख्यातिनिराकरणम्। )

ख्यातेः स्वयमेवाभ्युपगमात्। नापि द्वितीयः, विषयोऽपि किंभावरूपोऽभावरूपो वा? आद्ये असत्ख्यात्यभ्युपगमप्रसङ्गः, द्वितीये तु सत्ख्यातिरेव। उभौ नस्त इति चेत्?

अथ भावाभावशब्देन लोकप्रसिद्धावेवोभावभिप्रेतौ? विपरीतौ वा? आद्ये तावद्यथोभयोर्विधिर्नास्ति तथा निषेधोपि, परस्परविधिनिषेधयोर्विधिनिषेधनान्तरीयकत्वात्। द्वितीये तु न काचित् क्षतिः। न ह्यलौकिकविषयशब्दनिवृत्तावपि सत्यज्ञानविषयनिवृत्तिस्तन्निरुक्तिनिवृत्तिर्वेति। अथापि निःस्वभावत्वमनिर्वचनीयत्वम्? अत्रापि निरः प्रतिषेधार्थत्वेन स्वभावशब्दस्यापि भावाभावयोरन्यतरार्थत्वे पूर्ववत् प्रसङ्गः। प्रतीत्यगोचरत्वं निःस्वभावत्वमिति चेत्?

---

असत्ख्यातीति अभावख्यात्यभ्युपगमप्रसङ्ग इत्यर्थः। आद्ये तावदिति। यद्यप्युभयविधेः उभयनिषेधस्य च न क्वापि प्रसिद्धिः तथापि भावविधिरेवाभावनिषेधः तद्विधिरेव भावनिषेध इत्युभयनिषेधे व्याघातादित्येवंपरोऽयं ग्रन्थः। न ह्यलौकिकेति। न चालौकिकविषयाप्रसिद्ध्या तन्निषेधाप्रसिद्धिः। अलौकिकविषयं पदं यदि द्रव्यादिविषयकं न स्यादवाचकं स्यादिति निरर्थकनिग्रहापत्तिरित्यर्थात्।

अत्र स्ववचनविरोधः-प्रतीत्यगोचरश्च प्रतीयते चेति। यद्यथा प्रतीयते तत्तथा नेति चेत्? अत्र न विप्रतिपद्यामहे, तस्मादाकारासदनिर्वचनीयख्यातिवादिभिरप्यन्यथाख्यातिरवश्याभ्युपगन्तव्येति।

ननु यद्यसत्प्रकाशते प्रपञ्चोऽपि तर्हि तथैवास्तु जात्यादिकं चेत्यत आह। यः पुनरिति। [५५।८] असच्चेदसत्तयैव प्रकाशेत, न प्रवृत्तिगोचरः स्यात्। सत्तया चेत्? नूनं सादृश्यमप्यपेक्ष्य। न च तदस्ति। असदृशस्यापि सत्तया प्रकाशने चातिप्रसङ्ग इत्यर्थः।

(इत्यनिर्वचनीयख्यातिनिराकरणम्।)

---

ननु 'स्यादेतत् अन्यथे'त्यादिकमयुक्तं पूर्वमन्यथाख्यातेरुपसंहाराभावादित्यन्यथाख्यातिमुपसंहरति। तस्मादिति। अभ्युपगमयोग्यतामात्रप्रदर्शनपरोऽयं ग्रन्थः। स्वपक्षप्रतिषेधमात्रेण परस्याङ्गीकाराभावात्। असत्ख्यातेः प्रागेव दूषितत्वात्।

प्रसक्तप्रसक्तिमाह नन्विति। बुद्धिर्वा इति टीका-सामान्यादिर्न बुद्धिर्न च बाह्यमित्यर्थः। यद्यप्यलीकस्यासत्तया प्रकाशो न सम्भवत्येव, तस्य निःस्वभावत्वेनैवोपस्थितेः, तथाप्यभ्युपेत्याह, सत्तया चेदिति। अलीकानलीकयोः सादृश्याभावादित्यर्थः।

(इत्यनिर्वचनीयख्यातिनिराकरणम्।)

संविद्विरुद्धम्— [५५ । १४] विचार्य संविद्विरुद्धम् । सर्वसर्वज्ञतापत्तिरतीतानागताभिज्ञतापत्तिश्चेत्यपि द्रष्टव्यम् । प्रतिभासमानं [५५ । १८] यदुल्लिखद्विज्ञानं जायत इत्यर्थः । औत्सर्गिककार्यानुकूलसहकार्यभिप्रायेण श्यामाकबीजमुदाहृतम् । तत्प्रतिरोधिकारणान्तरसाहित्याभिप्रायेण कुटजबीजमिति ।

विवादाध्यासिते विभ्रमे प्रवृत्तिकारणमग्रहो वा ? इदमिति ज्ञानं वा ? रजतमिति ज्ञानसहितं वा ?

---

ननु रजतज्ञानं शुक्तिविषयकं न भवतीति नावयोः सिद्धं येन संविदि विरोधः स्यादित्यत आह । विचार्य्येति । अग्रे वक्ष्यमाणविचार्य्यायाः संविद इति इदं रजतमिति ज्ञानं शुक्तिविषयकमिति विरुद्धमित्यर्थः । यद्वा विचार्य्य-विचारं कृत्वेत्यर्थः । नन्वालम्बनत्वेप्रतिभासमानत्वं हेतुः साध्याविशिष्ट इत्यत आह । यदुल्लिखदिति । यद्विषयताप्रयोजकरूपवद्यज्ज्ञानं जायते तत्तद्विषयकम् । न च रजतज्ञानस्य शुक्तिविषयत्वप्रयोजकं रूपमस्तीत्यर्थः । दृष्टान्ताधिक्यमाशङ्क्याह । औत्सर्गिकेति । टीकायां धाना-अङ्कुरः । 'गुणरचित' टीकायां अष्टप्रमाणरूप इत्यर्थः । 'सर्वं यथार्थ' इति टीका । यद्यपि रजतस्मरणेदमनुभवयोः पक्षत्वे सिद्धसाधनं, विशिष्टज्ञानपक्षत्वे चाश्रयाऽसिद्धिः, धर्म्म्यंशे भ्रमस्यापि यथार्थत्वमन्यथाख्यातिवादिभिरप्यभ्युपगम्यत इति सिद्धसाधनं च । तथापि ज्ञानत्वं न व्यधिकरणप्रकारकवृत्ति ज्ञानमात्रवृत्तिधर्मत्वात्प्रमात्वव-

भेदाग्रहसहितं[1] वा उभयमपि ? तत्राद्ये न तावदि-
त्यादि दूषणम्। [५६।१३] द्वितीये तु हन्तभो इत्यादि। [५६।१८]
तृतीये तु ननु रजतविज्ञानमित्यादि। [५६।२२] चतुर्थे
तु साम्यापादने सति ज्ञानधर्मो वाऽग्रहो[2] विशेषणं ?
वस्तुधर्मो वा ? आद्ये साम्यं नास्ति, उभयज्ञानस्या-

---

दिति प्रयोक्तव्यम्। प्रतियोगिप्रसिद्धेरुक्तत्वात्। न च चक्षुः चाक्षुष-
सत्यज्ञानातिरिक्तज्ञानजनकमिन्द्रियत्वाद्रसनवदिति सत्प्रतिपक्षः, चा-
क्षुषज्ञानातिरिक्तज्ञानजनकत्वस्योपाधित्वेनाप्रयोजकत्वादिति भावः।

ननु चाज्ञायमानो धर्म आत्ममनोयोगादिः प्रवृत्तिहेतुर्भव-
तीत्यत आह। साम्यापादन इति। यथा प्रवृत्तिनिवृत्त्योरापादनं
तथा भेदज्ञानाभेदज्ञानयोर्द्वयोरापादनं साम्यापादनम्। ज्ञानधर्मो
इति। अगृहीतभेदं ज्ञानं वेत्यर्थः। वस्तुधर्मो वेति। अगृहीत-
भेदोविषय एव वेत्यर्थः। क्वचिदग्रहे विशेषणमिति पाठस्तत्र
भेदो ग्रहं विशिंषं स्तदभावमग्रहं विशिनष्टि। भेदस्य व्यावर्त्तको-
धर्मः स ज्ञाननिष्ठो विषयनिष्ठो वेत्यर्थः। तथा चागृहीतो
ज्ञानधर्मो वा भेदरूपः प्रवर्त्तको विषयधर्मो वेत्यर्थः सम्पद्यते।
आद्य इति। उभयज्ञानमगृहीतभेदमङ्गीकृत्य यदि साम्यमापाद्यते
तदा न साम्यम्, न ह्युभयज्ञानमगृहीतभेदं भ्रमहेतुरित्यर्थः।

---

(१) भेदाग्रहेण सहितमिति १ पु० पा०।
(२) वाऽग्रहे विशेषणमिति २ पु० पा०।

गृहीतभेदस्य भ्रान्तिहेतुत्वेनानभ्युपगमात् । द्वितीये तु विषयधर्माणामज्ञातानां प्रवृत्तावकिञ्चित्करत्वं, ज्ञप्तौ पुनरस्त्येव, तत्र दृष्टान्तमाह । मैवम् । ज्ञानहेतूना-मित्येवमादि । [५७।१०]

अथवा दृश्यकारणसाम्येऽप्यदृश्यहेतुविशेषवशात् भ्रान्तिसम्भवः, कार्योन्नेयत्वात्सामग्र्याः । तदिदमुक्तं मैवमित्यादि । [५७।११]

ममाप्येवमिति चेत् ? न, तस्य कारणविशेषस्य स्वातन्त्र्येणाप्रवर्त्तकत्वात् । तदिदमुक्तं चेतनेति । [५७।१०]
ज्ञानद्वारेणेति चेत् ? न, तस्य प्रवृत्तिसाधारण्यात् ।

---

द्वितीये त्विति । विषयद्वयमगृहीतभेदं स्वीकृत्य साम्यमेव नास्ति विषयधर्मस्य ज्ञातस्यैव प्रवृत्तिहेतुत्वात् । आत्ममनोयोगादिषु न विषयधर्मः ज्ञानोत्पत्तौ च स्वरूपसतोपि विषयधर्मस्य प्रवृत्तिहेतुत्वादित्यर्थः ।

अथवेति । विपर्ययसमीचीनयोर्दृश्यं कारणं भेदाग्रहाभेदाग्रह-रूपं,तत्साम्येऽप्यग्रे विपर्ययदर्शनात् तत्सामग्र्येव कल्प्यत इत्यर्थः ।

ममापीति । प्रवृत्तिरूपकार्यदर्शनादग्रहविशेषसमवहिता प्रवृ-त्तिसामग्री कल्प्यते न निवृत्तिसामग्रीति ममापि तुल्यमित्यर्थः । तस्येति । घटादौ विषयधर्मस्य प्रवृत्तिहेतोर्ज्ञातस्यैव प्रवृत्तिहेतु-त्वज्ञानविशेषोत्पत्तावेव तत्प्रयोजकत्वावधारणादारोप एवापह्नोप-

तदिदमुक्तं बुद्धिपूर्वकत्वे त्विति [५७।११] अतो न साम्यम्। तत्सिद्धमित्यादिप्रयोगो विप्रतिपन्नं प्रति। नियमेन निश्चयेनेति सामान्यज्ञानस्य विशेषप्रवर्त्तकत्वव्युदासद्योतनार्थम्। न च फलज्ञानेनानैकान्तिकत्वं तस्याप्रवर्त्तकत्वादेव, तत्साधनज्ञानं च प्रवर्त्तकं तच्च तद्विषयमेव, कार्यत्वबोधस्तु प्रवर्त्तक इति निराकरिष्यते।

अनवभासमानत्वादिति हेतुपक्षेऽसिद्धत्वं सिद्धसाधनं वा दूषणम्। प्रत्यक्षोपवर्णने तु शुक्तिकात्वेनानाल-

---

योगो न प्रवृत्तावित्यर्थः। ननु पुरोवर्त्तिनं रजततया प्रत्येमीत्यनुव्यवसायादेव शुक्ते रजतज्ञानविषयत्वं सिद्धमिति किमनुमानेनेत्यत आह। विप्रतिपन्नमिति। शुक्ते रजतज्ञानविषयत्वे कारणबाधात् सोऽपि शुक्तौ रजतज्ञानविषयत्वासंसर्गाग्रह इति यो विप्रतिपद्यते तं प्रतीत्यर्थः। ननु प्रवृत्तिहेतुत्वेनैव नियमे लब्धे नियमेनेति व्यर्थम् आत्मादिभिरविषयकैरनैकान्तिकं चेत्यत आह। निश्चयेनेति। भावप्रधानो निर्देशः। लक्षणे तृतीया। तेन निश्चयत्वे सतीत्यर्थान्नोक्तदोष इत्यर्थः। न चेति। सुखदुःखाभावज्ञानं रजतार्थिप्रवृत्तिहेतुः न च पुरोवर्त्तिविषयमिति न व्यभिचारः तस्य फलसाधनताज्ञानेनान्यथासिद्धतया प्रवृत्तावहेतुत्वादित्यर्थः।

असिद्धत्वमिति। इदन्त्वेन शुक्तेरवभासनादित्यर्थः। अथ शुक्तित्वेनानवभासमानत्वमुच्यते तत्राह। सिद्धसाधनं वेति।

म्बनत्वमस्माकमप्यनुमतम्, सितभास्वरतया त्वनवभासमानत्वमनुभवविरुद्धमिति परमार्थः। 'दोषवत्त्वादिति हेतुपक्षेऽनैकान्तिकोद्भावनम्। दृष्टान्तमात्रोद्भावने तु वेणुबीजादिः प्रतिदृष्टान्तः। नेदं रजतमित्युपलक्षणं शुक्तिरियमित्याद्यपि द्रष्टव्यम्।

अनाश्वासस्तु यथार्थत्वाज्ञानं वा स्यात्? यथार्थत्वायथार्थत्वसन्देहो वा? आद्यः प्रामाण्यज्ञानोपायकथनेनैव निरस्तः? द्वितीयस्तु विशेषोपलब्धेः प्रागिष्यत एवेत्याह। यथा चेति। [५७।२१]

( इत्यख्यातिनिराकरणपूर्वकमन्यथाख्यातिव्यवस्थापनम्। )

---

अथ प्राभाकराः-नन्वनुमानाद्यप्रयोजकमारोपहेतुत्वाद्‌वग्राभ्युपगन्तव्यादिष्टानिष्टभेदाग्रहादेव प्रवृत्तिनिवृत्त्योरुपपत्तेः। न च प्रवृत्तिनिवृत्तियौगपद्यापत्तिः इष्टानिष्टयोः स्वातन्त्र्येणोपस्थितत्वेन विशेषणात्। अभावाप्रतियोगित्वेनोपस्थितिश्च स्वातन्त्र्यमत इदं रजतं न शुक्तिरित्यत्रानिष्टं रजत एव नेदं रजतमित्यत्रेष्टं च अभावप्रतियोगित्वेनोपस्थितमिति तदुभयभेदाग्रहे सत्यपि न निवृत्तिप्रवृत्ती। ननु संवादिप्रवृत्तौ विशिष्टज्ञानस्य हेतुत्वाद्विसंवादिप्रवृत्तावपि तदेव हेतुः?, सत्यरजतस्थले रजतपुरोवर्त्तिविशिष्टज्ञाने सत्यपि तस्य भेदाग्रहे सति रजतपुरोवर्त्तिज्ञानत्वेन

कारणत्वात्, न तु तद्विशिष्टज्ञानत्वेन, गौरवात्। एवं च तत्र तादृशज्ञानत्वमेकत्र ज्ञाने, अत्र तु ज्ञानद्वये इति न कश्चिद्विशेषः। न च संवादिप्रवृत्तिस्थले इष्टपुरोवर्त्तिभेदस्याप्रसिद्धा तदभावासिद्धिरिति वाच्यम्। पुरोवर्त्तिनीष्टभिन्नत्वप्रकारकज्ञानविषयत्वाभावस्य पुरोवर्त्तिनिष्ठे भेदे रजतत्वप्रतियोगिकज्ञानविषयत्वाभावस्य वा हेतुत्वात्। अथैवं विशिष्टं ज्ञानं क्वापि न सिद्ध्येत् प्रवृत्तेर्भेदाग्रहादेवोपपत्तेः। न चेदं रजततया जानामीत्यनुव्यवसायस्तत्र मानम्, शुक्तावपि तस्य तुल्यत्वात्। न च शुक्तौ रजतत्वबाधात् सोऽपि रजतज्ञानविषयत्वासंसर्गाग्रह इति वाच्यम्। तस्यापि विपरीतप्रमात्मकस्य विशिष्टज्ञानत्वे मानाभावात्। मैवम्। सामग्र्यास्तत्र मानत्वात्। पूर्वं रजतत्वाननुभवात् तदस्मरणे योग्यरजतधर्मिसंयुक्तसमवायाद्रजतत्वानुभवो भवन् रजतविषय एव भवेत्। धर्मिज्ञानहेतुसंयोगान्तर्भावेनैव संयुक्तसमवायस्य तत्र भावादित्यर्थाद्धर्मधर्मिविषयकमेकं ज्ञानं सिद्धं, तदेव च विशिष्टज्ञानं, प्रकृते तु रजतत्वस्य शुक्त्यनुभवविषयत्वे कारणानुपपत्तेर्वक्ष्यमाणत्वात्। अथ पर्वते वह्निसंशयानन्तरं धूलीपटले धूमभ्रमादग्न्यर्थिप्रवृत्तिर्दृश्यते तत्र यदि धूमभ्रमस्य स्वातन्त्र्योपस्थितवह्न्यसंसर्गाग्रहो व्यापारः स्यात्तदा धूमज्ञानमनुपयुक्तं स्यात्ततः प्रागपि तस्य सत्त्वात्। न च धूमभ्रमात्प्राक् तत्र वह्न्यसंसर्गाग्रह एव, तथा सति प्राक् तत्र संशयानुपपत्तेः। एकत्र धर्मिण्येकदा स्वतन्त्रोपस्थितविरुद्धानेकासंसर्गाग्रहस्य संशयत्वात्। तस्माद्वह्न्यनुमितिरेव तद्व्यापार इति सिद्धा निर्वह्नौ वह्न्यनुमितिः। अपि च पर्वतस्य प्रत्यक्षत्वे वह्नेश्च स्मरणे

प्रत्यक्षभ्रमास्तु विशेष इति वह्निं साक्षात्करोमीत्यनुव्यवसायः स्यात् त्वनुमिनोमीति तत्रावश्यमनुमितिर्मन्तव्येति । तन्न । लिङ्गभ्रमस्य स्वातन्त्र्येण निर्वह्नित्वोपस्थितिप्रतिबन्धनियतस्वतन्त्रवह्निस्मृत्योर्द्वारत्वात् । पूर्वं चोभयमपि स्वतन्त्रमुपस्थितमिति धूमभ्रमस्योपयोगात् । अनुव्यवसायनियमस्यापि लिङ्गज्ञानानन्तरभावित्वप्रतिसन्धानादेवोपपत्तेः । अपि च रजतं विनैव रजताकारं ज्ञानमिति साकारमतप्रवेशः संविद्विरोधश्च, न हि रजताकारा शुक्तिः शुक्तिश्च विषय इति सम्भवति, भासमानस्यैव विषयत्वात् । किञ्चायथार्थविशिष्टज्ञाने कारणाभावः रजतरजतत्वप्रत्यक्षयोः तत्संयोगसंयुक्तसमवायकारणकत्वात् । तौ चात्र न स्तः । न च लिङ्गाभासात् तत्सिद्धिः पक्षविषयकलिङ्गविशिष्टज्ञानस्यानुमितिहेतुत्वात् । धूलीपटलवति धूमज्ञानस्यापि कारणबाधेन धूमासंसर्गाग्रहरूपतया तद्विशिष्टज्ञानासिद्धेः । एतेनानाप्तोदीरितशब्दादाकाङ्क्षायोग्यतासत्तिमत्तया प्रतिसंहितादन्यथाख्यातिसिद्धिरिति निरस्तम् । तत्रापि योग्यताविशिष्टज्ञानस्य शाब्दज्ञानहेतोरभावात् । तत्रायोग्ये योग्यताया असंसर्गाग्रहात् । व्यवहारमात्रस्य भेदाग्रहजन्यत्वेऽपि संवादविसंवादाभ्यां ज्ञाने यथार्थत्वायथार्थत्वव्यपदेशः । तस्माद्विसंवादिप्रवृत्तिजनकं ज्ञानं न व्यधिकरणप्रकारकं ज्ञानत्वात् सम्प्रतिपन्नवदिति प्राप्तम् ।

अत्रोच्यते । सत्यरजतस्थले रजतपुरोवर्त्तिज्ञाने प्रवृत्तिकारणतयोपस्थितेऽतिप्रसङ्गवारणार्थं रजतपुरोवर्त्तिवत् किं वैशिष्ट्यं विषयतया कारणतावच्छेदकमात्रं कल्प्यमाहो अभावः कारणं स्वातन्त्र्यो-

*पस्थितभेदग्रहाणां प्रतियोगितया प्रतियोगिविशेषणतया च तदव-*
च्छेदकत्वमिति संशये कारणताग्रहसमये ज्ञानवित्तिवेद्यतयाऽवश्यं
शीघ्रोपस्थितत्वाल्लाघवाच्च वैशिष्ट्यं कारणतावच्छेदकं क्लृप्तमिति न
भेदाग्रहः कारणं स्वातन्त्र्यादीनां च तदवच्छेदकत्वं कल्प्यते, गौर-
वात् कल्पनीयोपस्थितिकत्वाच्च। न च विशिष्टज्ञानेऽपि भेदाग्रहस्य
कारणत्वात् सोऽप्यावश्यक इति युक्तम्। विशिष्टज्ञाने तद्धेतुत्वस्य
तत्कल्पनोत्तरकल्प्यत्वेन प्रवृत्तिकारणताग्रहकाले तदनुपस्थितेः। न
चैवं विसंवादिप्रवृत्तिस्थले भ्रमकल्पनायां गौरवं प्रमाणप्रवृत्तिसमये
सिद्धसिद्धिपराहतत्वेन फलमुखगौरवस्यादोषत्वात् प्रामाणिक-
त्वाच्च। अपि च न भेदाग्रहात्प्रवृत्त्युपपत्तिः तथा हि इदं रजत-
मित्यत्र पुरोवर्त्तिना सममभेदग्रहेऽन्यथाख्यातिस्तदग्रहे चानिष्ट-
भेदाग्रहान्निवृत्तिः स्यात्। अथानिष्टतावच्छेदकरूपेणोपस्थितानिष्ट-
भेदाग्रहान्निवृत्तिः न चेदन्त्वमनिष्टतावच्छेदकमिति चेत्। तर्हीदं
रजतं न शुक्तिरित्यनिष्टतावच्छेदकेन शुक्तित्वेनोपस्थितभेदाग्रहात्
निवर्त्तेत। तत्र न स्वातन्त्र्येणानिष्टमुपस्थितमिति चेत्? न, अभाव-
विशेषणत्वेनानिष्टस्योपस्थितावपि प्रतियोगिनः पूर्वं स्वातन्त्र्येणोप-
स्थितेः सम्भवात्। शुक्तौ वणिग्वीथीस्थाभावप्रतियोगीदं रजत-
मिति ज्ञानादप्रवृत्त्यापत्तेश्च। अथानिष्टभेदासंसर्गग्रहः स्वातन्त्र्यं न
शुक्तिरित्यत्र शुक्तिभेदस्यासंसर्गाग्रहो नकारस्यार्थ इति चेत्। न,
भेदग्रहस्याभावः कारणमनिष्टभेदस्य योऽसंसर्गस्तस्याभावः कारण-
तावच्छेदक इत्यत्र गौरवात्। किं चेमे रङ्गरजते इत्यत्रेष्टानिष्ट-
तावच्छेदकरूपेणोपस्थितस्वतन्त्रोभयभेदाग्रहे प्रवृत्तिनिवृत्तिसाङ्कर्य-

*प्रसङ्गः। अथैवंविधभ्रमे मानाभावः, कार्योन्नेयधर्माणां यथा कार्य-*
मुन्नयनात्; क्रमोत्पन्नज्ञानयोर्भेदाग्रहाच्चैकत्वाभिमानः, अन्यथा
स्वतन्त्रोभयभेदाग्रहाद्रज्जुं रजतं वेति संशयापत्तिरिति मतम्।
तन्न। यथेमे रज्जुरजते इति सत्यज्ञानद्वयसामग्रीसमाजादेकं
समूहालम्बनं सत्यज्ञानं तथा प्रत्येकभ्रमसामग्र्योरेकदा सत्त्वेन
तादृशभ्रमोत्पत्तेरनुभवसिद्धत्वात्। तदपलापे समूहालम्बनोच्छे-
दाद्वित्वाद्यप्रत्यक्षतापत्तिः। इमे रज्जुरजते इति भ्रान्तवाक्यादेवं-
विधभ्रमसम्भवाच्च। न च संशयापत्तिः, दोषवशाद्रजतरज्ज्वो रजत-
रज्जुभेदाग्रहात्प्रत्युत तत्रैकदैकत्र स्वतन्त्रोभयभेदाग्रहात्प्रत्येकं संशया-
पत्तेः। अथ रज्जुरजतयोरजतरज्जुभेदग्रहान्न युगपत्प्रवृत्तिनिवृत्ती, न
चान्यथाख्यातिः दोषवशात्पुरोवर्त्तिनं विहाय स्वतरजतरज्जुभ्यां
पुरोवर्त्तिनि भेदग्रहादिति चेत्, न, एकरजतरज्जुमात्रज्ञानानन्तरं
तयोरेव यमजयोर्वा विपरीतभ्रमेऽन्यथाख्यातेरतिप्रसङ्गाच्च। अथ
रज्जुरजतवृत्तितयोपस्थिते भेदे रजतरज्जुभेदेन सह भेदाग्रहो
रजतरज्ज्वोः प्रवृत्तिनिवृत्तिप्रतिबन्धक इति चेत् न। शब्दाभास
जनितैवंविधभ्रमाद्युगपत्प्रवृत्तिनिवृत्त्यापत्तेः प्रवृत्तिनिवृत्तिविषय-
रजतरज्जुभेदयोः शब्दादनुपस्थितौ तयोः प्रतिबन्धकत्वाभावात्,
अथ यद्वृत्तिधर्मज्ञानाद्यदुपस्थितं तद्भेदाग्रहात् प्रवृत्तिनिवृत्ती।
अवश्यं हि तथाविधभ्रमेऽपि किञ्चिन्नियामकं वाच्यं तत्प्रवृत्तावे-
वास्तु, रजतरज्जुवृत्तिधर्मज्ञानाच्च रज्जुरजते स्मारिते न रजतरज्जू
इति तद्भेदाग्रहोऽप्यकिञ्चित्करः, माषराशिप्रविष्टमषीगुडकविषय-
माषार्थिप्रवृत्तिश्च मषीनीलिमस्मारितमाषभेदाग्रहादनुभूयमाना-

रोपस्य तत्रासिद्धेरिति चेत् न। शब्दाभावादुभयोपस्थितौ तदभावात्, शब्दात्तद्धर्मसितभास्वरत्वाद्यनुपस्थितेः। अथेष्टवृत्तितया गृह्यमाणोऽनिष्टनिवृत्तितया चागृह्यमाणो धर्मः स्वाश्रये प्रवर्त्तयति, तादृशश्च धर्मो रजते रजतत्वं शुक्तौ च सितभास्वरत्वं रजतेतरवृत्त्यपि तत्त्वेनागृह्यमाणमिष्टनिवृत्तितया च गृह्यमाणं प्रवृत्तिहेतुः, एवं निवृत्तावपीष्टवृत्तित्वेनागृह्यमाणोऽनिष्टवृत्तितया च गृह्यमाणो धर्मो हेतुरिति नोक्तदोष इति चेत्, न। रजतेतरवृत्तितया तस्य धर्मस्याज्ञाने इष्टसाधनतानुमानापत्तेः। रजतत्वस्य रजतमात्रवृत्तित्वेन तदितरेष्टावृत्त्याऽसाधारणत्वात्। शब्दाभावाद्रजतरङ्गयोरुपस्थितावुक्तदोषाच्च। रजतवृत्तिधर्मस्य रङ्गे रङ्गवृत्तिधर्मस्य रजते शब्दादनुपस्थितेः। अथ संवादिविसंवादिप्रवृत्त्योर्वैचित्र्येण विशिष्टज्ञानभेदाग्रहौ हेतू क्लृप्तत्वात्, न तु विशिष्टज्ञानसत्यत्वासत्यत्वे गौरवादसिद्धेश्च, प्रवृत्तिनिवृत्तिमात्रे(च) चेष्टानिष्टपुरोवर्त्तिज्ञानं कारणम्। न च भेदग्रहेऽपि तत्प्रसङ्गः। विशिष्टज्ञानं भेदाग्रहं च विशेषद्वयहेतुं विना सामान्यहेतोः कार्यानुदयात्। न हि निर्विशेषं सामान्यं नाम प्रवृत्तेरिष्टविषयत्वं निवृत्तेश्चानिष्टविषयत्वं संवादः तथाचानिष्टविषयप्रवृत्ताविष्टविषयनिवृत्तौ च विसंवादिन्यां भेदाग्रहो हेतुरिति कथं तदिष्टानिष्टविषयप्रवृत्तिनिवृत्ती संवादिन्यौ स्यातामिति। तन्न।

लाघवादुपस्थितत्वाच्च ज्ञानं स्वविषये प्रवर्त्तकमित्याद्यप्रवृत्तौ संवादिप्रवृत्तौ च सर्वैरवधारितमिति शुक्तौ रजतज्ञानस्य प्रवर्त्तकत्वमतः शुक्तिविषयत्वं स्वविषयप्रवृत्तौ तस्या हेतुत्वात्। अथ भेदाग्रहा-

ग्रहणस्मरणाभ्यामवश्यकादिसंवादिप्रवृत्त्युपपत्तेर्विशिष्टज्ञानकल्पने गौरवाच्च सर्वैः प्रथममवधृतमपि त्यज्यत इति चेत्, न। प्रथमप्रवृत्तप्रमाणबलेन तत्रापि विशिष्टज्ञानकल्पनात्। तथापि विसंवादिप्रवृत्ताविदं ज्ञानमेव प्रवर्त्तकं, इष्टरजतज्ञानं तु दण्डत्ववदन्यथासिद्धं ज्ञायमानेष्टभेदाग्रहे कारणावच्छेदकत्वादिति चेत्, न। स्वतन्त्रान्वयव्यतिरेकाभ्यामुभयोरपि हेतुत्वात्। इष्टज्ञानं प्रवर्त्तकमवच्छेदको भेदाग्रह इत्यस्यापि सुवचत्वादिति। ज्ञाने रजतत्वानभ्युपगमाद्विशेषणविशेष्यविषयत्वाच्च न साकारवादः। नापि संविद्विरोधो विशिष्टज्ञानस्य सर्वत्र विशेषणविशेष्यविषयकत्वनियमेनायथार्थस्यापि तस्य तद्विषयकत्वात्। नापि कारणबाधो विशेषणज्ञानं विशेष्यसन्निकर्षोऽसंसर्गाग्रहश्चेति विशिष्टप्रत्यक्षहेतोर्भ्रमेऽपि सत्त्वात्। रजतसाक्षात्कारे रजतसंयोगस्य हेतुत्वेऽपि तस्य विशेष्यसन्निकर्षत्वेन हेतुत्वात्। यत्सामान्ये यत्सामान्यं हेतुस्तद्विशेषे तद्विशेषस्य हेतुत्वनियमात्। संयोगस्य विशेष्यभानसामग्र्यन्तर्गतत्वेन विशेषसामग्र्यन्तराकल्पनात्। विशिष्टज्ञानस्य सामग्रीसत्त्वे तद्विलम्बेन तद्विलम्बात्। प्रत्यभिज्ञानवत्संस्कारेन्द्रियाभ्यां विशिष्टज्ञानसम्भवाच्च। तस्य ग्रहणस्मरणात्मकज्ञानद्वयरूपत्वे चाभेदोच्छेदापत्तिः, तस्य तदेकमानकत्वात्। न चैकविषयत्वेन तयोः सहकारित्वं तत्त्वांशे तदभावात् गौरवाच्च। न चातिप्रसङ्गः, भेदाग्रहस्यापि तद्धेतुत्वात्। एवं चान्यथाख्यातौ प्रत्यक्षमेव मानं कारणबाधाभावात्, पुरोवर्त्तिनं रजततया जानामीत्यनुव्यवसायस्याऽऽनुभविकत्वात् विषयत्वस्य चानुव्यवसायैकमानकत्वात्। न च शुक्तौ रजतत्वप्रकारकज्ञान-

विषयत्वासंसर्गाग्रहः सोऽपीति वाच्यम् । न हीदं जानामि रजतं जानामि किञ्चिदं रजततया जानामीति । तथा च शुक्तिविषयकरजतत्वप्रकारकज्ञानासंसर्गाग्रहस्यात्मन्यसम्भव एव, तादृशज्ञानाप्रसिद्धेः । एवं सत्यनुमानमप्युच्यते—ज्ञानत्वं विशेष्यावृत्तिप्रकारावच्छिन्नवृत्ति प्रवृत्तिहेतुप्रत्यचान्यविशेषगुणवृत्तिधर्मत्वात् । दुःखत्ववत् । साध्यप्रसिद्धिरत्रैव । न च द्वेषत्वे व्यभिचारः, शत्रावेव शत्रुर्द्वेष्मीत्यनुभवात्तत्रापि तत्सिद्धेः । यद्वा न द्वेषः प्रवृत्तिहेतुः, न हि दुःखहेतौ शत्रौर्वधे द्वेषमात्रात्प्रवृत्तिसम्भवः, अपि तु दुःखसाधनाभावं तत्साध्यदुःखानुत्पादं वोद्दिश्य प्रवृत्तिः, तथा च तत्रेच्छाऽस्त्येवेतीष्टसाधनताज्ञानादेव प्रवृत्तिः । विशिष्य तु रजतेच्छाजन्यशुक्तिविषयकप्रवृत्तिजनकं रजतत्वप्रकारकं ज्ञानं शुक्तिविषयकं शुक्तिविषयकप्रवृत्तिहेतुज्ञानत्वात् । शुक्त्यर्थिशुक्तिज्ञानवत् । शुक्तिरजते इति समूहालम्बनेनार्थान्तरवारणायाद्यं विशेषणम् । पञ्चविकल्पस्य विप्रतिपत्तावेव निरस्तत्वात् । तथाविधमिदं ज्ञानं वा रजतत्वप्रकारकं रजतेच्छाजन्यप्रवृत्तिहेतुज्ञानत्वात् रजते इदं ज्ञानवत् । न विसंवादिप्रवृत्तिजनकत्वमुपाधिः त्वन्मते रजतेदंज्ञानयोर्विसंवादिप्रवृत्तिजनकयोः साध्याव्यापकत्वात् । नापि दोषाजन्यत्वमुपाधिः, तव दर्शने ज्ञानमात्रस्य तथात्वेन साधनव्यापकत्वात् । नाप्यप्रयोजकत्वम्, भेदाग्रहस्य प्रवृत्त्यहेतुत्वेनेष्टपुरोवर्त्तिविशिष्टज्ञानस्य प्रवृत्तिहेतुत्वादित्यस्माकं पैतृकी सिद्धान्तसरणिरित्यवधेयम् ।

( इत्यख्यातिनिराकरणपूर्वकमन्यथाख्यातिव्यवस्थापनम् ।)

ननु क्रमव्यतिक्रमोऽनादितां प्रतिपादयितुमुक्तः[1], अनादिताप्रतिपादनं पुनः किमर्थमित्यत आह। अनादित्वाच्चेति। [५८।२४] तस्यापि बाध्यत्वप्रसङ्गादिति। [५९।२] तथा च सत्यमिथ्याज्ञानयोरविशेषप्रसङ्ग इति भावः। पूर्वज्ञानस्य मिथ्यात्वमादर्शयत् इति। [५९।८] [2]तदुपदर्शितप्रकारासहनतया जायमानमित्यर्थः। तज्जनितां प्रवृत्तिं विघटयदिति [५९।९] तदुचितव्यपदेशाभिप्रायम्, विपरीतमभिप्रायं कुर्वदित्यर्थः। फलमस्यापहरतीति। [५९।९] विषयादारभ्य[3] फलपर्यन्तमित्यर्थः। अयमेव विषयापहारो यत्तद्विषयाधिक्षेपस्य स्वभावस्य समुत्पादः स च तत्फलप्रवाहप्रतिक्षेपपर्यन्त इति समु-

ननु नेदं रजतमिति ज्ञानमिदं रजतमिति ज्ञानस्य मिथ्यात्वमादर्शयतीत्युक्तं बाधकज्ञानस्य बाध्यज्ञानाविषयकत्वेन तन्मिथ्यात्वविषयीकरणस्य दूरनिरस्तत्वादित्यत आह। तदुपदर्शितेति।

ननु प्रवृत्तेर्वृत्तत्वान्न तेन तद्विघटनमित्यत आह। तदुचितेति। तस्य मिथ्याज्ञानस्योचितो यो व्यपदेशस्तत्कारणीभूतो योऽभिप्रायस्तद्विपरीतमभिप्रायमित्यर्थः। तद्विपरीतमभिप्रायं कुर्वदित्येतावतैवोपयोगे तत्कार्येण व्यपदेशेन तदुन्नयनाद्व्यपदेशोऽप्युक्तः। बाधकज्ञानाद्रजतेच्छया प्रवृत्तिर्न भवति किन्तु निवृत्तिरेवेति भावः। ननु फलापहारमात्रेण न विषयापहारः कृतो भवतीत्यत आह। विषयादिति।

(१) प्रतिपादयतु २ पु॰ पा॰।
(२) यदुप इति २ पु॰ पा॰।
(३) विषयादिरूपफल इति २ पु॰ पा॰।

दायार्थः। परस्पराभावधर्मिणोरिति। [५।१।१४] ययो-धर्मिणौ[1] परस्पराभावधर्माणावुपलब्धौ तयोरित्यर्थः।

बाध्यत्वे हेतुरिति [१०।१२] हेतुर्व्यतिरेकि लिङ्गं लक्षण-मिति यावत्। तत्त्वविषयबुद्धिधारामिति [१०।१४] ध्यान-मित्यर्थः। अनुगतमेकं[2] स्वरूपम् [११।५] समानासमान-जातीयव्यवच्छेदको धर्मो लक्षणमिति यावदिति॥२॥

( इति द्वितीयसूत्रं समाप्तम्। )

( इति सप्रयोजनाभिधेयप्रतिपादकं प्रथमं प्रकरणम्। )

---

तद्विषयाधिक्षेपः मिथ्याज्ञानविरुद्धयथार्थविषयताधर्मस्य प्रस्तुतत्वात् तदभिप्रायेण व्याचष्टे। परस्परेति।

ननु मिथ्याज्ञानानि तत्त्वज्ञानबाध्यानि उपजातविरोधिना तत्त्वज्ञानेन समुपजातविरोधिज्ञानत्वादित्यत्र दृष्टान्ताभावः सर्वस्यैव मिथ्याज्ञानस्य पक्षत्वादित्यत आह। हेतुरिति। तथा च केवल-व्यतिरेकितया व्यतिरेके दृष्टान्त इत्यर्थः। साध्याविशिष्टत्वं निराकर्तु-माह। लक्षणमिति। व्यवहारः साध्य इत्यर्थः। प्रत्याहारमिति टीकायामिन्द्रियान्तरात्मनसो व्यावर्त्तनमित्यर्थः। भूतमर्थमिति टीकायां भूतं—सत्यम्। वशितयेति टीकायां वशी—क्षीणमोहः। अनुगतधर्म्मकथनोपयोगार्थमाह। समानेति। तत्त्वज्ञानत्वमेव तदित्यर्थः।

( इति द्वितीयसूत्रं समाप्तम्। )

---

(१) धर्मिणोः इति २ पु० पा०। (२) अनुगतमेवमिति २ पु० पा०।

प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि ॥ ३ ॥

सर्वंच तस्य सुलभत्वादिति। [१३।९] स्वाभाविकन्तु शास्त्रस्य त्रैविध्यं नास्त्येव तस्य पुरुषायत्तत्वादित्यपि द्रष्टव्यम्। प्रयोजनस्येति [१३।४] अवान्तरस्येत्यर्थः[1]।

ननु स्वाभाविकमेव शास्त्रस्य त्रैविध्यं कुतो नोक्तमित्यत आह। स्वाभाविकं त्विति। न च पुरुषायत्तत्वेऽपि शास्त्रस्य स्वाभाविकमेव त्रैविध्यमितिवाच्यम्। पुरुषस्यापि त्रिविधप्रवृत्तिकशास्त्रप्रणयने हेत्वनुयोगादितिभावः। तत्त्वज्ञानस्य मुख्यप्रयोजनत्वाभावादाह। अवान्तरस्येति। ननु परीक्षातः प्रागपि केवलव्यतिरेकिणस्सत्। रूपत्वमस्त्येवेत्यत आह। प्रतीति। लक्षणत्वाविषयलक्षणाभिधानानुकूलजिज्ञासाजनकपदार्थाभिधानमुद्देशः। सजातीयविजातीयव्यावर्त्तको धर्मो लक्षणम्। तदनुपपत्तिनिराकरणं परीक्षा। न च विभाग इति टीका। प्रमाणत्वं प्रत्यक्षाद्यतिरिक्ते न वर्त्तत इति नियमो न प्रमाणत्वमेकमुपसङ्ग्राहकं विनेत्यर्थः। न चेदमलक्षितमिति टीका। यद्यपि प्रमाणत्वलक्षणं न प्रमाणविभागोपयोगि, तथापीदं प्रमाणत्वमनेनैव रूपेण लक्षितं प्रमाणानि नोपसंख्यातीनि प्रमाणलक्षणपरमित्यर्थः। न चैतावतैवोपसङ्ग्राहकसिद्धावपि तस्य लक्षणपरत्वे न मानमिति वाच्यम्। विभागे विभजनीयमात्रवृत्तेरेव धर्मस्योपसङ्ग्राहकत्वात् तादृशस्य च लक्षणत्व एव पर्यवसानादिति भावः। लक्षणालक्षणमात्रेति टीका। यद्यपि

(१) अवान्तरव्यापारस्येत्यर्थ इति १ पु० पा०।

**चतूरूपो भवतीति [१।१।१०] प्रतीतिविषय इति शेषः। अर्थविपर्ययकीर्त्तनेन व्याघातादिति [१।१।१२] प्रत्यक्षप्रमाणानुवादः, अतो न साध्याविशिष्टत्वं वैय्यधिकरण्यं वा। अविद्यमाने शशविषाणादावलक्षणं विद्यमानेऽप्यनुपयोगिनि गङ्गावालुकादावलक्षणमतः समानधर्मदर्शनादसति विभागे संशयः तन्निवृत्त्यर्थं विभागारम्भः।**

---

प्रमाणादिष्वपि सामान्यलक्षणस्य कृतत्वात्तदपेक्षया नालक्षितस्येति युक्तं, तथापि शब्दतः सामान्यलक्षणमनुक्तार्थं तद्विवक्षिता यद्विशेषलक्षणकरणं तदभिप्रेत्य प्रमाणादावलक्षितस्येत्युक्तं, तथापि शब्दतः सामान्यलक्षणमनुक्तार्थं तद्विवक्षिता यद्विशेषलक्षणकरणं तदभिप्रेत्य प्रमाणादावलक्षितस्येत्युक्तम्। शाब्दमेव सामान्यलक्षणमुक्त्वा विभागवचनमित्याशयेन कृते लक्षितस्येत्युक्तम्। ननु विभागो न निरर्थको नियमार्थत्वादित्यत आह टीकाकारः। अनर्थमर्थविपर्ययमिति।

ननु विभागवचनं न त्रिविधप्रवृत्तिप्रतिरोधकं व्याघातादिति व्यधिकरणं व्याघातस्यार्थवृत्तित्वात्। अथ व्याहतार्थबोधकत्वादिति हेत्वर्थः? तदा साध्यावैशिष्ट्यं, विभागः प्रतिज्ञातप्रवृत्तिविपरीतव्यापारात्मकः व्याहतत्वादित्यपि साध्याविशिष्टो हेतुरित्यत आह। अर्थविपर्ययेति। व्याहतत्वेन प्रतीयमानत्वादित्ययं न हेतुः किन्तु प्रत्यक्षसिद्धो व्याघात एवानेनोक्त इत्यर्थः। अविद्यमान इति। प्रमाणत्वं प्रत्यक्षादिचतुष्टयातिरिक्ते किमसत् यथा रोमादौ शशसम्बन्धिनि विषाणत्वं, सदपि वाचानुपयुक्तं यथा गङ्गावालुकेति

ननु सदनुपयोगिसंशयोच्छेदे किं स्यात् ? कथमनुप-युक्तं तदिति जिज्ञासायाः निवृत्तिः, अपि चार्था-पत्त्यादीनामुपयोगिनामपि परैरुद्वाराद्दूष्यमाणानामपि लक्षणाकरणे स्यात्सन्देहः-किं लक्षणाकरणादसन्ति ? अनुपयोगीनि वेति ? तत्रैवान्तर्भूतानि वा ? अथ पर-मताप्रतिषेधादुपात्तानीति ? अतस्तदपनुत्तये विभागः।

तथा बौद्धापेक्षया मीमांसकानामधिकप्रमाणलक्ष-णाभिधानं विनैव प्रमाणाधिक्यात्, साङ्ख्यस्य तदपेक्ष-यैव अधिकप्रमाणलक्षणाभिधानं सत्याधिक्ये, तदिहापि

---

संशयाच्च धर्म्यप्रसिद्धिः। न च सर्वेषां लिङ्गतयाऽनुमानत्वात् प्रत्यक्षाद्व्यतिरेकोऽसिद्धः परामर्शस्यैव करणत्वात् । लिङ्गकरणत्वपक्षेऽपि प्रत्यक्षादिकरणत्वघटकप्रकारचतुष्टयविभागात् । ननु विभागेऽपि सति प्रमाणान्तरसत्त्वेऽप्युपयोगिप्रमाणविभागोऽयं, यथा प्रमेयान्तरसत्त्वेऽप्युपयोगिनामेव प्रमेयाणां विभाग इति शङ्का तदवस्थैव। मैवम् । प्रमाणसामान्यविभागपरत्वे सम्भवति तद्विशेषपरत्वे माना-भावात् । असन्तीति । सन्त्यपि प्रमाणत्वानधिकरणानीत्यर्थः। अनुपयोगीनि वेति। प्रमाणत्वेऽपि मोक्षहेतुतत्त्वज्ञानाविषया इत्यर्थः।

तत्रैवेति । विभक्तप्रमाणेष्वेवेत्यर्थः । विनैवेति । अर्थापत्तेरनु-मानानधिकाया एव पृथग्लक्षणं युक्तमित्यर्थः।

तदपेक्षयैवेति । बौद्धापेक्षया साङ्ख्यैः शब्दस्य प्रमाणत्वस्वीकारादित्यर्थः। इहेति । अत्र शास्त्रे अधिकमुपमानमुक्तमित्यर्थः।

**साङ्ख्यापेक्षयाऽधिकाभिधाने भवति संशयः किं सत्याधिक्ये यथासन्तीति। तदपनोदाय विभागवचनम्।**

---

नन्वधिकलक्षणाकरणादेव शङ्का न स्यात्। न च ततो शङ्कानिवृत्तिर्मीमांसकस्याधिकार्थापत्तिलक्षणादिति वाच्यम्। विभागस्यापि बौद्धमते सत्त्वात् ततोऽपि तदभावानापत्तेः। चतुष्टप्रकरणे प्रमाणविभागस्य परीक्षितत्वात्ततः संशयो निवर्त्येत इति चेत्। तर्ह्यधिक(र)लक्षणविषय एव संशयचतुष्टपरीक्षया निवर्त्यताम्। न च चतुष्टपरीक्षाया विभागाश्रयतया तदभावे आश्रयासिद्धिः स्यादिति वाच्यम्। तस्या लक्षणाश्रयत्वेनाप्युपपत्तेः। अपि च विभागेनापि न्यूनाधिकशङ्काव्यवच्छेदबोधनद्वारा निरस्या, तत्र च विभागतात्पर्यकल्पने मानाभावः, लक्षणवाक्यादेव तदवगमात् अनन्यलभ्य एव तात्पर्यकल्पनात्। तथा हि प्रमाणत्वस्य प्रत्यक्षादिचतुष्टयातिरिक्तावृत्तित्वमधिकसङ्ख्याव्यवच्छेदः। स च चतुष्टयप्रमाणसामान्यलक्षणेन प्रमेयादिभेदसाधकेनैव इतरभेदसाधनेन सिद्धः, न्यूनसङ्ख्याव्यवच्छेदोऽपि प्रत्यक्षादिविशेषलक्षणेनैव परस्परावृत्तिभिः सिद्धः। भावाभावविभागात् अधिकसंख्याव्यवच्छेदासिद्धेश्च तदुभयाभिमतस्य व्यवच्छेद्यस्यासिद्धेः।

अत्राहुः। तत्तच्छास्त्रे न्यूनाधिकप्रमाणाभिधानदर्शनात् कतिविधानि तानीति नियतसङ्ख्यप्रमाणजिज्ञासायां तन्निवृत्त्यर्थं विभागः, विभागादेव तन्निवृत्तेः। अत एव विभागस्य न्यूनाधिकसङ्ख्याव्यवच्छेदपरत्वं सिध्यति, तादृशजिज्ञासयैव तस्योत्थानात्।

**अत एवाधिक्यमाशङ्क्य विभागपरीक्षामवर्त्तयत्सूत्रकारः। पूर्वापरग्रन्थसङ्गतिश्चात्र(१) स्फुटेत्येतदपि मन्तव्यम्।**

( विभागस्य युक्तत्वनिरूपणम् )

यद्वा लक्षणपरीक्षाद्वारैव विभागस्य न्यूनाधिकसङ्ख्याव्यवच्छेदे तात्पर्यं कल्प्यते। न हि विभागवचनं शब्दविधयैव तद्बोधकं युक्तिशास्त्रत्व-व्याघातात्। न चात्र युक्त्यन्तरमुक्तम्। यद्वा सामान्यतः प्राप्तौ सत्या-मासस्य विशेषवचनं न्यूनाधिकसङ्ख्याव्यवच्छेदपरमिति व्याप्तिः। अथवा प्रमाणमुद्दिश्यात्र चतुष्टं विहितम् उद्देश्यत्वं च व्याप्यत्वेन विधेयत्वं च व्यापकत्वेन प्रतीयते, व्याप्तेरेव तदुभयान्वयप्रकार-त्वात्। भावाभावविभागे तु तदितराप्रसिद्धावपि भावातिरिक्ते अभावान्यत्वं न वर्त्तत इत्यत्र तद्व्यवच्छेदः भावाभावोद्देशो विभाग एव न भवति। लक्षणपूर्विका हि विभागाकाङ्क्षा प्रमेयत्वादिकं च तयोरवच्छेदकं न लक्षणमित्यप्याहुः।

किं च यद्यत्राधिकसङ्ख्यावच्छेदे तात्पर्यं न स्यात् तदा चतुष्ट-परीक्षायामाश्रयासिद्धिः स्यादिति विभागस्य प्रयोजनान्तरमाह। पूर्वापरेति। उद्देशसूत्रात्प्रमाणस्वरूपावगतौ कति तानीति जिज्ञा-सायां विभागवचनादिविशेषावगतौ तल्लक्षणजिज्ञासायां प्रत्यक्षादि-विशेषलक्षणावतार इत्यपि विभागप्रयोजनमित्यर्थः। क्वचिद-स्फुटेति पाठस्तत्रासति विभागे पूर्वापरग्रन्थसङ्गतिरस्फुटा स्याद्वि-शेषाऽज्ञाने तल्लक्षणजिज्ञासाया अनुत्थितेरित्यर्थः।

अक्षस्येति-षष्ठीति टीका। अक्षं प्रतीति विषयविग्रहवाक्ये

(१) सङ्गतिश्च अस्फुटा इति २ पु० पा०।

प्रतिशब्दयोगे षष्ठीविधायकसूत्राभावादित्यर्थः। यद्वा सन्निकर्षो व्यापार इति टीका-शब्दतदभावसाक्षात्कारेऽपि कर्णशष्कुल्या मनसा वा श्रोत्रसंयोग एव श्रोत्रव्यापार इति न व्यभिचार इति भावः। टीकायामालोचनं निर्विकल्पकम्। ननु सविकल्पकम् नेन्द्रियफलं निर्विकल्पकेनान्यथासिद्धत्वात् अत आह टीकाकारः न चेति। अनागतत्वादिति टीका अनागतफलोपहितत्वादित्यर्थः।

(विभागोद्देशस्य युक्तत्वनिरूपणम्)

शक्तौ संशयः। कारणतावच्छेदकधर्मत्वमतीन्द्रियत्वव्याप्यं न वेति सामान्यतो, विशिष्य तु वह्नेर्दाहानुकूलत्वादिष्टातीन्द्रियधर्मसमवायी न वेति। यद्यनुकूलत्वं जनकत्वं तदा मीमांसकानामप्रसिद्धिः तैः शक्तेस्तदवच्छेदकत्वस्वीकारात्। तदवच्छेदकत्वे त्वनुकूलत्वे नैयायिकाप्रसिद्धिः। तथापि कार्य्याभावव्याप्याभावप्रतियोगित्वमनुकूलत्वं कारणतदवच्छेदकसाधारणम्। अतीन्द्रियत्वं च षोढाप्रत्यासत्त्यन्यतमप्रत्यासत्त्यनाश्रयत्वमित्युष्णस्पर्शव्यवच्छेदः। अदिष्टमिति अदृष्टवदात्मसंयोगव्यावर्त्तनाय। न च तज्जनकत्वे मानाभावः। दाहस्यादृष्टजन्यतया व्यधिकरणगुणजन्यत्वात्। व्यधिकरणगुणजन्यकार्यस्य च स्पर्शवद्वेगवद्द्रव्याभिघातादौ व्यधिकरणगुणसमानाधिकरणगुणजन्यत्वदर्शनाददृष्टवदात्मसंयोगस्य दाहजनकत्वात्। तत्र यादृशादेव करतलानलसंयोगादेकदा दाहो दृष्टस्तादृशादेव मन्त्रादिप्रयोगे दाहो न जायते अतो यदभावात्कार्याभावस्तदग्नौदावभ्युपेयन्तेन विना तदभावायत्ततदभावानुपपत्तेरित्यर्थापत्त्या व्यतिरेकमुखेन शक्तिसिद्धिः। न चादृष्टविलम्बात् तद्विलम्बः दृष्टसाद्गुण्ये

**शक्तेरनभ्युपगमे प्रमाणाभावोमूलं असत्प्रतिपक्षेभ्यो दृष्टकारणेभ्य एव कार्योत्पत्तावर्थापत्तेः क्षीणत्वात्**

तदभावात्, तस्य तदर्थत्वात्। अदृष्टविलम्बस्य न तन्नाशानुत्पादौ। मण्याद्युपमारणानुपदं दाहाभावप्रसङ्गात्। अदृष्टान्तरोत्पादकस्य चाभावात्। न च प्रतिबन्धकेन दाहप्रतिकूलमेवादृष्टं जन्यते प्रथमोपस्थितत्वादुपजीव्यत्वाच्च प्रतिबन्धकाभावस्यैव हेतुत्वापत्तेः। अदृष्टस्यापि प्रतिबन्धकत्वेन तदभावहेतुत्वस्य तत्रापि स्वीकारात् दृष्टोत्पत्तौ च शौचाचमनादेस्तदुत्पादकस्यात्राप्यन्वयापत्तेः। अशौचस्यैव तदुत्पादकत्वे शौचे सति तदभावापत्तेः। न च प्रतिबन्धकाभावो हेतुः कारणीभूताभावप्रतियोगिनः प्रतिबन्धकतया ऽन्योन्याश्रयापत्तेः। नापि मण्याद्यभावकूटस्य हेतुत्वं उत्तेजके सत्यपि प्रतिबन्धकसत्त्वे दाहाभावापत्तेरित्यर्थापत्त्या शक्तिसिद्धौ कथमतीन्द्रिया शक्तिर्नाभ्युपगम्यत इत्यत आह। शक्तेरिति। उत्तेजकाभावविशिष्टप्रतिबन्धकाभावेन दृष्टेनैवोपपत्तौ नार्थापत्त्या शक्तिसिद्धिः। ननु प्रतिबन्धकाभावो न दाहकारणं प्रतिबन्धके सत्यपि उत्तेजकप्रयोगे दाहदर्शनेन व्यभिचारादत आह। असदिति। उत्तेजकाभावविशिष्टो यः प्रतिबन्धकस्तदभावो हेतुः तथा च विशिष्टाभावस्योत्तेजकप्रतिबन्धकसद्भावे विशेषणाभावप्रयुक्तस्योभयाभावे विशेष्याभावप्रयुक्तस्य केवलोत्तम्भकसद्भावे चोभयाभावप्रयुक्तस्य सर्वत्र भावादित्यर्थः।

ननु न विशिष्टं विशेषणविशेष्यतत्सम्बन्धेभ्योऽधिकमिति विशेषणादिप्रत्येकाभावस्य हेतुत्वेऽननुगमः। अथ विशिष्टस्यानतिरेके-

**प्रतिपक्षता च मण्यादीनां सहकारिविरहरूपत्वात् तद्विरहस्य च व्यतिरेकमुखेन सहकारित्वावधारणात्**

---

ऽपि विशेष्याभाव एव रूपभेदावच्छिन्नविशेष्यप्रतियोगिको विशेषणाद्यभावव्यापकोऽतिरिक्तः प्रतियोगिभेदादिव प्रतियोगितावच्छेदकधर्मभेदादपि अभावभेदात्, यथा नीलो घटो नास्तीत्यभावो रक्तपटवत्यपि सत्त्वाद्घटमात्राभावाद्भिन्नः सिद्धः तथोत्तेजकाभावावच्छिन्नप्रतिबन्धकाभावोऽपि केवलप्रतिबन्धकाभावाद्भिन्नः कारणम्। तन्न। यदि ह्यतीतविशेषणावच्छेदेन विद्यमानस्यैव विशेषणस्याभावः स्यात्तदा क्षणरूपातीतविशेषणावच्छिन्नत्वेन घटादेः प्रतिक्षणं विनाशात् क्षणभङ्गापत्तिः। स च विशिष्टाभावो न ध्वंस उत्तेजकापनयेपि दाहापत्तेः। ध्वंसस्यानन्तत्वात्। विद्यमानस्य विनष्टत्वेन प्रतीतेश्च। श्यामोऽयमासीद्घट इत्यत्र विशेष्यवति श्यामध्वंसस्यैव प्रतीतेः। ध्वंसस्य ध्वंसानुपपत्तेश्च। नापि प्रागभावः अस्य जन्याभावत्वात्। न चात्यन्ताभाव एव सः कदाचित्कार्यानुदयस्य प्रत्यासत्तिकादाचित्कत्वात् प्रत्यासत्तिश्च विशेषणाद्यभाव इति वाच्यम्। विशेषणविशेष्याभावयोः प्रत्यासत्तित्वावच्छेदकानुगतरूपाभावात्। न च विशिष्टविरोधित्वमेव तयोरनुगतं तेनानुगतरूपेण तयोरेव दाहादिगतत्वापत्तेः। न चेष्टापत्तिः। विरोधो हि सहानवस्थाननियमलक्षणो न परस्परविरहरूपतया विशेषणविशेष्याभावस्य प्रत्येकं विशिष्टाभावतया तत्प्रत्येकाभावाभावस्य विशिष्टत्वापत्तेः। तदभावाभावस्य तत्त्वात्।

त्रयो हि भावा भवन्ति कार्यानुकूलाः तत्प्रतिकूलास्तदु-दासीनाश्च । तत्रानुकूला दहनादेः पवनादयः, तत्प्रति-

---

नाप्युभयाभावाभावः तदुभयवैशिष्ट्यं प्रत्येकाभावादिविशिष्टाभावव्यवहारानापत्तेः । नापि परस्परविरहव्याप्यत्वं तदाक्षेपकत्वं वा विरोधः । विशेषणविशेष्याभावस्य विशिष्टाभावत्वेन तद्व्याप्यत्वात्तदनाक्षेपत्वाच्च । अभेदेन तयोरभावात् ।

अत्रास्मत्पितृचरणाः । विशेषणविशेष्ययोः सम्बन्धादिविशिष्टव्यवहार इति तयोः सम्बन्धाभावादिविशिष्टाभावव्यवहारः घटतदभावव्यवहाराविव घटसत्त्वासत्त्वाभ्यां न हि न तयोः सम्बन्धे विशिष्टव्यवहारो न वा तदभावे सति न विशिष्टाभावव्यवहारः सर्वत्र यस्य यत्र यः सम्बन्धः स एव तस्य तत्र वैशिष्ट्यं, स च सम्बन्धाभावो विशेषणाभावात् विशेष्याभावादुभयाभावात्सर्वत्राविशिष्टोऽनुगतो दाहादिकारणं सर्वत्र प्रतिबन्धकोत्तेजकाभावयोः सम्बन्धो नास्तीति प्रतीतेः । प्रतिबन्धकोत्तेजकाभावयोरप्यतिरिक्तसम्बन्धाभावेऽपि स्वरूपसम्बन्धस्य सत्त्वात् सर्वत्र स्वरूपसम्बन्धादेवाधिकरणाभावयोर्वैशिष्ट्यप्रतीतेः । एतेन प्रतिबन्धकाभावस्य हेतुत्वे मणिसद्भावे मन्त्राद्यभावमादाय दाहः स्यात् एकप्रतिबन्धकसत्त्वेऽपि प्रतिबन्धकान्तराभावसत्त्वात् । न हि यावत्कारणावच्छिन्नं तावदन्वये कार्यमित्यपास्तम् । न हि प्रतिबन्धकाभावत्वेन हेतुत्वमन्योन्याश्रयात्, कारणीभूताभावप्रतियोगित्वस्य प्रतिबन्धकत्वात् । किन्तु मण्याद्यभावत्वेन इत्युक्तत्वात् प्रतिबन्धकसामान्याभावस्य हेतुत्वाद्वा । तस्य यावद्विशेषाभावव्याप्य-

त्वात्। प्रतिबन्धकसंसर्गाभावस्य हेतुत्वान्न तदन्योन्याभावेऽपि कार्यम् न च तयोर्भेदासिद्धिः। प्रतियोग्यधिकरणयोः संसर्गारोपपूर्वकनिषेधस्य संसर्गाभावत्वात्। अन्योन्याभावस्य च तादात्म्यपूर्वकत्वादित्यादिविस्तरो द्वितीयाध्याये वक्ष्यते। प्रहरं मादहेत्यत्रोद्देश्यत्वज्ञानाहितसंस्कारविषयस्य कालस्य प्रतिबन्धकत्वमिति नार्थापत्तिः शक्तौ मानम्। अस्त्वनुमानं तथा हि जनकदशाविशिष्टो वह्निरजनकदशाव्यावृत्तभावभूतधर्मवान् जनकत्वात् कुण्ठकुठाराव्यावृत्तकुठारवत्, प्रतिबन्धकसत्त्वे संयोगादेरजनकदशावर्त्तित्वेन तदतिरिक्तातीन्द्रियभावभूतधर्मसिद्धिः, शक्तेश्च भावहेतुजतया अजनकदशाव्यावृत्तत्वाभावेऽपि उद्भवत्वविशिष्टायां तथात्वम्। यद्वा वह्निः कार्यानुकूलादिष्टातीन्द्रियधर्मसमवायी जनकत्वादात्मवत्। न चात्मत्वं नित्यत्वं वोपाधिः स्पर्शकत्वादिमति द्व्यणुके साध्याव्यापकत्वात्। करतलानलसंयोग एव वा पक्षः। नैवम्। अनुमानानां साध्यं विनाप्युभयसिद्धत्वात्, प्रतिबन्धकाभावादेरजनकत्वहेतुसम्भवाद्विपक्षबाधकाभावेनाप्रयोजकत्वात्, तुल्यन्यायतया व्यापकेऽपि व्यर्थविशेषणत्वात्, अन्यथा शक्त्यतिरिक्तेतिविशेषणस्यापि प्रक्षेपापत्तौ धर्मान्तरसिद्धिप्रसङ्गात्। अपि च जनकत्वस्य केवलान्वयित्वेन व्यतिरेकाप्रसिद्धिः। न च पक्षापूर्वपराद्धक्षयोस्तत्प्रसिद्धिः अप्रत्यक्षयोस्तयोः प्रत्यक्षेण साध्यसाधनयोर्व्यतिरेकग्रहस्याशक्यत्वात्। द्वितीयानुमाने मीमांसकानां कर्मणोऽतीन्द्रियत्वेनैवार्थान्तरं संयोगद्वारा तस्य दाहानुकूलत्वादिति संक्षेपः।

(इति शक्तिनिरासः)

कूला अपि द्विविधाः सहकारितः स्वरूपतश्च, स्वरूपतो जलावसेकादयः, सहकारितो मन्त्रप्रयोक्तारः, ते हि मन्त्रादीन् प्रयुञ्जानास्तद्विरुद्धलक्षणं सहकारिणं विरुन्धन्ति, उदासीनास्तु तत्रैव रासभादयः, तथाऽनुकूलत्वमन्वयव्यतिरेकगम्यं, प्रतिकूलत्वञ्च तदन्वये कार्यव्यतिरेकगम्यम्। तच्च तद्विपर्ययान्वये पर्यवस्यति। उदासीनत्वञ्च व्यभिचारगम्यम्। एवञ्च यत्र यदा यस्य यथानुकूलत्वे प्रतिकूलत्वे वा प्रमाणमस्ति तत्र तदा तस्य तथैव स्वीकर्त्तव्यम्, किमधिकसामर्थ्यकल्पनया। सर्वश्च परेषां विमर्षनमभवोऽतीन्द्रियसामर्थ्येऽपि समान इत्यर्थापत्तिमुपेक्ष्यान्यदेवातीन्द्रियशक्तिस्वीकारबीजमाशङ्क्य विमृशति। स्यादेतदिति। [११।११]

स्वरूपस्य प्रत्यक्षत्वे साकल्यस्य कार्यैकव्यङ्ग्यत्वेऽनुमेयमतीन्द्रियं सामर्थ्यमवशिष्यत इति पूर्वपक्षार्थः। कार्यसम्बन्धितां-कार्योपलक्षिततामित्यर्थः।

स्वरूपत इति। जलसेकादयो भावभूतं कारणमग्न्यादिकं विनाशयन्तीत्यर्थः। ननु च किञ्चित्कुर्वतां प्रतिबन्धकत्वात्तैर्न कार्यानुत्पादः कर्त्तव्यः। प्रागभावस्याजन्यत्वादिति।

प्रतिबन्धकत्वान्यथानुपपत्तिरेव शक्तौ मानमित्यत आह। सर्व-

यदाह। कार्योपहितं रूपमिति। [११।२४] नन्वन्यकार्येणोपधानं तत्कार्येणैव वा? आद्ये अहेतुरेव हेतुः स्यात्। द्वितीये त्वितरेतराश्रयत्वं, तस्य तत्कारणत्वे सिद्धे सति तत्कार्यत्वं सिद्धं स्यात्तत्कार्यत्वे सति तदुपलक्षितं कारणत्वं भवेदित्यत आह। इदमेव चास्य तदुपधानं यत्तत्कार्योत्पादात्पूर्वमवश्यम्भावः। [११।२५]

---

स्येति। प्रतिबन्धकेन शक्तिर्यदि नाश्यते तदोत्तेजके सत्यपि कार्यानुत्पत्तिः पुनरुत्तेजकेन शक्तिजनने अनियतहेतुकत्वं पूर्वं भावहेतुना तज्जननादित्यादिरित्यर्थः :

स्वरूपस्येति। इदं जलं पिपासोपशमनसमर्थं जलत्वादित्यत्र न तावत्सामर्थ्यं कार्योपधानमनुमेयं, अपीयमानतोये व्यभिचारात्। नापि तद्योग्यता, सा हि स्वरूपयोग्यता सहकारियोग्यता वा?। नाद्या तस्या जनकतावच्छेदकरूपात्मिकाया जलत्वादिरूपत्वात्। तस्य च प्रत्यक्षसिद्धत्वात्। नान्या। तत्रैव व्यभिचारादिति परिशेषादतीन्द्रियसामर्थ्यानुमेयत्वासिद्धिरित्यर्थः।

ननु चापीयमानतोये कार्याभावात् कार्यसम्बन्धित्वं नास्तीति तदवस्थो व्यभिचार इत्यत आह कार्येति। उपलक्षणत्वमसतोऽपीति न व्यभिचार इत्यर्थः। उपधानशब्दस्य विशेषपरत्वे हेतुमाह। नन्विति।

यत्कार्योत्पादादिति। अनन्यथासिद्धनियतपूर्ववर्त्तित्वमित्यर्थः।

यदुत्पादात्पूर्वं यस्यावश्यम्भावः तत् कारणमितरत्कार्यमित्यर्थः।

नन्वेवंरूपं कारणत्वं तज्जातीयस्य सामान्यतोऽनुमीयते प्रतिव्यक्ति वा? न तावत्प्रतिव्यक्ति, तदुत्तरकार्याभावेऽपि कासाञ्चिद्विनाशदर्शनात् तज्जातीयस्य तु प्रागेव सामान्यतोऽवधारितं तदिह स्मार्यत इत्याशङ्क्याह। न च तज्जातीयस्येति। ।१।३।१४। यथा योयोधूमः

---

अन्यथासिद्धिस्तु पञ्चधा। यद्भावेन यस्यान्वयव्यतिरेकौ तत्तेनान्यथासिद्धं। यथा दण्डेन तद्रूपम्। यमादायैव यस्यान्वयव्यतिरेकौ तदपि तेनान्यथासिद्धं यथा दण्डेन दण्डत्वम्। यत्र अन्यनियतपूर्ववर्त्तित्वज्ञानानन्तरं जनकस्य तदवगमस्तत्र अन्येन जनकमन्यथासिद्धं यथा कुम्भकारेण तत्पिता। अन्यं प्रति पूर्ववर्त्तित्वे ज्ञात एव यं प्रति यस्य पूर्ववर्त्तित्वमवगम्यते तत्तं प्रत्यन्यथासिद्धं यथा घटं प्रत्याकाशः, शब्दं प्रति तस्य पूर्ववर्त्तित्वे ज्ञात एव तं प्रति तस्य तज्ज्ञानात्। यत्र चान्यत्र क्लृप्तकारणभावादेव कार्योत्पत्तिसम्भवस्तत्र तदन्यत्पूर्ववर्त्त्यपि तेनान्यथासिद्धं। यथा पाकजरूपोत्पत्तौ स्पर्शादिप्रागभावः। एतदन्यथासिद्धिपञ्चकव्यतिरेकोऽनुगत एवेति भावः। टीकाकृदुक्तं स्मरणमुपपादयति। नन्विति। यथेति। विशिष्टस्य पूर्वं नानुभवो येन तत्स्मर्य्येत अन्यथाऽनुमानमपि मानान्तरं न स्यादित्यर्थः।

सोऽग्निमानिति सामान्यतोऽवधारणेऽपि अयं धूमोऽग्निमानिति नावधारितं तथेदमुदकं पिपासोपशमननिमित्तमित्यनवधृतमेवावधार्यत इत्यर्थः ।

न च क्वचित्कार्यमकृत्वैव नष्टे व्यभिचारः सति, सहकारिसाहित्ये कुर्यादिति साध्यत्वात् तस्य च सहकार्यसाकल्यप्रयुक्तकार्याभाववत्स्वरूपस्य तत्रापि भावादिति। तस्माद्या नोभयप्रयत्नप्रसवहेतुः सोपेक्षाबुद्धिः तृतीयेति विषयभेदाद्बुद्धिभेदः, स च सुखहेतुर्दुःखहेतुरतद्धेतुरिति त्रिविध इति व्यक्त इत्यर्थः ।

अनुमानपदं व्युत्पादयता भाष्यकृता प्रसङ्गात् लक्षणमप्यभिहितमिति टीकाकृदपि स्मृत्यादि व्यवच्छेत्तुं दर्शयति । तथा चेत्यादिना [१०।८] यतो भाष्ये लक्षणमप्युक्तं अतो वार्त्तिके तदाक्षेपो नानुक्तोपालम्भ इत्याह । तदेतद्भाष्यमनुभाष्येति । [१०।१४]

---

तस्य चेति । इतराभावावच्छिन्नकार्य्याभाववत्त्वं जलजातीये सर्वत्रास्तीति न व्यभिचार इत्यर्थः । अत्र जनकतावच्छेदकरूपवत्त्वस्य जलत्वादिरूपस्य सिद्धत्वेऽपि तस्य जनकतावच्छेदकरूपत्वात्मकत्वं नावगतमिति तदनुमेयत्वेऽपि न दोष इति सम्प्रदायविदः । प्रकृते यो विषयभेदः स टीकाकृतानोक्त इति तमाह । स चेति ।

फलवतः प्रमाणत्वात् तद्विशेषत्वाच्चानुमानस्य नाफलत्वं युज्यते, कथञ्चित् फलान्तरसम्भवेऽप्येतत् प्रत्यक्षफलं लिङ्गपरामर्शस्तु प्रसिद्धमनुमानमनेन लक्षणेन व्याप्यत इत्यपि पूर्वपक्षे द्रष्टव्यम् । एवं सति तत्रेत्यादिनोभयसमाधानसङ्गतिः । समाधानान्तरमाहेति कस्मिन्नाक्षेप इत्यत आह । पूर्वोक्तमिति । [१०।१९]

ननु हानादिविषयं प्रामाण्यमुच्यमानमनुमानस्य स्वगोचरं प्रत्येवोक्तं भवति हानादावेव तस्य व्यापारानुबन्धादत आशङ्कैवेयमनुपपन्ना, किमत्र समाधानेनेत्याशङ्क्य व्यापारानुबन्धितया हानादिरस्य गोचरः, प्रतीत्यनुबन्धितया तु वह्निज्ञानस्य वह्निरेव विषयस्तदभिप्रायेण वा शङ्कासमाधाने इत्यभिप्रायवानाह । यद्यपीति । [१०।२१] विज्ञाने यत्प्रकाशते [१०।२४] येन विज्ञानं निरूप्यत इत्यर्थः ।

---

टीकाकृतो ऽनाक्षिप्तसमाधानं परिहरन्नाह । फलवत इति ।

व्यापारानुबन्धितयेति । अनुमितिरूपव्यापारविषयतया हानादिरनुमानस्य विषयस्तज्जन्यव्यापारविषयत्वस्यैव तत्त्वात्, साक्षात्तु विषयोऽग्निरेवेत्यर्थः ।

ननु प्रकाशमानत्वविषयत्वयोरभेदान्न हेतुहेतुमद्भाव इत्यत आह । येनेति । वार्त्तिककारस्यैव भाव इति भ्रमनिराकरणायाह ।

न च स्वविषयादन्यद्विषयान्तरमस्य सम्भवत्यतिप्रसङ्गादिति भावः [१०।१८] पूर्वपक्षिणा इति शेषः। औत्पत्तिक इति [१८।१] स्वभावप्रतिबद्धः।

ननु हेयादिबुद्धयः केन विशेषेण द्वितीयानुमानस्य फलं, न तु द्वितीयस्य प्रत्यक्षस्येत्यत आह। परोक्षार्थावगाहितयेति। [१८।४]

ननु सामीप्यस्य सादृश्यस्य मानं मितिः संज्ञासंज्ञिसम्बन्धपरिच्छेदे प्रमाणमित्युक्तं कुतो व्याघातावकाश इत्यत आह। अनुमानशब्दवदिति। [१८।६]

ननु शब्दप्रतिपत्तिर्न तावत्स्वरूपतः प्रमाणं, व्यापारवतः कारणविशेषस्य प्रमाणत्वात्, नापि वाक्यार्थप्रतिपत्तिरस्याः फलं, तदानीं तस्या विनष्टत्वात्। न च स्मृतिरूपाया अपि शब्दप्रवृत्तेः तत्फलत्वं, अनुत्पन्नसमयानामस्मर्यमाणपदार्थानां शब्दस्मरणेऽपि तदभावादित्यत आह। यत् खलु चैवेति। [१८।१०]

---

पूर्वपक्षिणा इति। नाप्यौत्पत्तिक उत्पत्तिजन्य इत्यर्थो विरुद्ध इत्यत आह। स्वभावेति।

ननु शब्दविषयकानुभवस्य प्रमाणत्वमपहाय कुतोऽनुसन्धानस्य तदुच्यत इत्यत आह। ननु शब्देति।

ननु स्वविषयपरिच्छित्तौ प्राधान्यमनुमानादेरपि, तत्कुतः प्रत्यक्षप्रधानत्वादित्येकदेशौ वक्तीत्यत आह । प्रत्यक्षपराहीति । [१८।१५] . प्रायेण प्रत्यक्षमात्रपूर्वकमिति [१८।५] साक्षात्परम्परया तु सर्वमेवानुमानतयेत्यर्थः ।

उपमानं तु प्रत्यक्षापूर्वकमपि शब्दपूर्वकमेवेति [१८।१७] शब्दपूर्वकत्वे सत्येव प्रत्यक्षपूर्वकत्वं तस्य. केवला तु प्रत्यक्षपूर्वकताऽनुमानस्यैवेत्यर्थः । नन्वेवं सति शब्दानन्तरमुपमानमभिधीयतामित्यत आह । स्मरणसहकारितेति [१८।१८] यद्यपि शब्दस्यापि प्रमाणस्य वाक्यरूपस्य स्मृतिस्थस्य पदार्थस्मृतिसहकृतस्यैव वाक्यार्थबोधकत्वं तथापि न क्वचिदप्यनुभूयमानस्य, लिङ्गं त्वनुभूयमानमपि शब्दस्य विशेषाभिधाने न्यायसिद्धेऽप्येकदेश्यभिमत प्रयोजनाभिधानं तदकौशलस्यापनयनाय । यद्यपि प्रथममेकदेशिमतं दुष्टत्वेनाभिमतमेव, तथापि दूषणाभासेन न दूषयितुं शक्यमिति शिक्षयितुं वार्त्तिकमनुरञ्जयन्नेवोत्तरग्रन्थमवतारयति । तदेकदेशिमतमिति

---

ननु स्वविषयपरिच्छित्ताविवतरानपेक्षत्वमेव प्राधान्यं प्रत्यक्षस्य कुतो नोक्तमित्यत आह । ननु स्वविषयेति ।

[१८।१०] प्रत्यक्षं पूर्वं प्राधान्यादित्येके [१८।११] उक्तमुपपादयितुं महाविषयत्वाच्चादौ शब्दोपदेश इत्यपरः [१८।७०] चोद्यचञ्चुः ।

तत्र महाविषयत्वमनैकान्तिकमिति [१८।१२] शब्दस्य महाविषयत्वादाद्यत्वमापादयता प्रत्यक्षस्यानाद्यत्वमिच्छताऽन्य एव दृष्टान्त उदाहरणीयः, तथा च चित्रादौ पक्षभूते प्रत्यक्षेऽपि गतत्वेन महाविषयत्वमनैकान्तिकमित्यर्थः ।

तदेतत्प्रसङ्गावस्थायां स्वतन्त्रसाधनपक्षे तु कालात्ययापदिष्टत्वं, शब्दचरमतायाः प्रत्यक्षप्राथम्यस्य

ननु विभागसूत्रे प्रत्यक्षमेव पूर्वमुद्दिष्टमिति किं तत्साधनेनेत्यत आह । उक्तमिति । सूत्रकार एव कुतस्तथोद्दिष्टवानित्याक्षेपं निरसितुमित्यर्थः । ननु शब्दस्यादावुपदेशाभावप्रमितेर्महाविषयत्वं बाधितमित्यत आह । चोद्यचञ्चुरिति[1] । देश्यं ख्याततम् । तेन पूर्वपक्षिणा महाविषयत्वादादौ शब्दोपदेश एव युक्त इत्याक्षेपः कृत इति नोक्तदोष इत्यर्थः । ननु महाविषयत्वं प्रत्यक्षेऽनैकान्तिकमित्ययुक्तं तस्यादावेवोक्तत्वादित्यत आह । शब्दस्येति ।

(१) देश्य चञ्चुरिति—पा० २ पु० ।

च प्रत्यक्षसिद्धत्वादेव, व्यतिरेकिपक्षे च विरुद्धत्व-मित्यपि द्रष्टव्यम्।

महाविषयत्वेति [१८।१] पूर्वमुपदिश्यमानं प्रमाणं धर्मि, महाविषयत्वादिति साधारणो धर्मः, प्रत्यक्षं वा शब्दो वेति सन्देहः। साधारणतया न हेतुरिति भाव इति [१८।४] प्राधान्यख्यापनप्रयोजनं यदि प्राथम्यं विना न सिद्ध्येत् तदाऽनुमानस्यापि प्राधान्यात्प्राथम्यं स्यादित्यर्थः।

ननु * सति संप्लवे का नो हानिः सति च किं भवेद्येन भाष्यकारो विचारयति स्मेत्यत आह। स्यादेतदिति। [१८।५]

व्यवस्थितविषयत्वात्प्रत्यक्षस्यानुमानविषये प्रवृत्ति-स्तदा न स्यात् यद्यनुमानमपि व्यवस्थितविषयं भवे-दित्यत आह। न चानुमानविषये सामान्यरूप इति

विरुद्धत्वमितीति। व्यभिचारिणः केवलव्यतिरेक्याभासस्य विरु-द्धत्वादित्यर्थः।

टीकाकृता भिन्नधर्मिकः संशय उक्त इति समानधर्मिकं तमाह। पूर्वमिति।

ननु न चानुमानविषय इति टीकायां नानुमानविषय इति टीकया पौनरुक्त्यमित्यत आह। व्यवस्थितेति। ननु चाव्याख्यानं

* नन्वसति इति युक्तः पाठः।

[१८०] अतो न *युक्तम् । अव्याख्याने कारणमिति [१८।१२] किमिति न व्याख्यातमिति शङ्कानिवृत्तिकारणमित्यर्थः ।

सन्दिग्धेन हीति [१८।१५] उपदेशप्रामाण्ये तद्द्वारा वह्नावप्युत्तरकालमिति मन्तव्यमतो वह्निं प्रत्याहित उत्पादितः प्रत्ययो निश्चयो यस्येत्यनेन न विरोधः ।

अभ्यर्हिततमं मन्यत इत्येकदेशोत्कीर्त्तनेन पूर्वोक्त-संप्लवोपपादनं स्मारयति ।

ननु च निश्चयफलत्वाविशेषेऽपि प्रत्यक्षत एव नाकाङ्क्षानिवृत्तिरिति कुत एतत् इत्यत आह । ताव-दयमिति [१८।२०] प्रत्यक्षफलसाक्षात्कारस्यैवंस्वभाव-त्वादित्यर्थः ।

नन्वङ्गं विशेषणमित्येकोऽर्थः तत्कथं व्यापकत्वेनेति व्याख्यायते ? कुतश्च पूर्वाचार्याणां पन्थाः परिहीयत ? इत्यत आह । तत्तु प्रकृतानुपयोगितयेति [१८।२२]

---

तदत्यन्ताभावात्मकं तत्प्रागभावात्मकं चाजन्यमित्यत आह । किमितीति । तथा चोपजातशङ्काध्वंसोजन्य एवेत्यदोष इत्यर्थः । ननु व्यवस्थितत्वं न युक्तिरित्यत आह । एकदेशेति ।

---

* पुनरुक्तमिति पाठ ।

निरुपधानलक्षणं साक्षात्कारत्वमाकाङ्क्षानिवर्तनयोग्यं प्रत्यक्षधर्मोऽनुमानादिषु नास्ति, तेनानुमानादिपरिच्छिन्नेऽर्थे आकाङ्क्षानिवृत्तिरिति हि प्रकृतम्। न च विशिष्टार्थग्राहकत्वोपदर्शनेनानुमानादिषु तदभावो दर्शितो भवति, विशिष्टार्थग्राहकत्वेऽपि प्रत्यक्षस्य तद्भावादित्यर्थः।

व्यवस्थितानां प्रत्येकमेकत्वादिति [१८।२४] द्वितीयाऽसंसृष्टविषयत्वादित्यर्थः।

इत्युदयनाचार्यकृततात्पर्यपरिशुद्धौ प्रथमाध्याये त्रिसूत्री समाप्ता॥

---

प्रकृतानुपयोगमेवाह। निरुपधानेति। तद्भावादिति। आकाङ्क्षानिवृत्तिहेतुत्वादित्यर्थः। ननु संप्लवेऽपि प्रमाणानां प्रत्येकमेकैकत्वमेवेति न ततो व्यवस्थायां प्रमाणानां कश्चिद्विशेष उक्तः स्यादित्यत आह। द्वितीयेति।

यस्तर्कतन्त्रशतपत्त्रसहस्ररश्मि-
र्गङ्गेश्वरः सुकविकैरवकाननेन्दुः।
तस्यात्मजः पितुरधीत्य निबन्धमित्थं
प्राकाशयत् कृतिमुदे बुधवर्द्धमानः॥

इति महामहोपाध्यायश्रीगङ्गेश्वरात्मजमहामहोपाध्यायश्रीवर्द्धमानविरचिते न्यायनिबन्धप्रकाशे त्रिसूत्री समाप्ता॥

---

श्रीमन्महागणपतये नमः ।

# सटीकन्यायवार्त्तिकतात्पर्यपरिशुद्धौ प्रमाणप्रकरणम्[1] ।



प्रत्यक्षादिप्रमाणविशेषलक्षणाना[७०।१]मिति स्वरूपकथनार्थम् । लक्षणं हीत्यादि, अर्थाक्षिप्तेति [७०।१] च प्रकृतस्वरूपसङ्गतिकथनार्थम्। लक्षणं हि जिज्ञासुप्रतिपादनाय, सा चानिर्ज्ञातसामान्यस्य विशेषे नास्ति, सामान्यज्ञानं च तल्लक्षणाधीनमतस्तल्लक्षणं, विशेष-

---

ननु लक्षणानामिति व्यर्थं अन्येषामपि विशेषज्ञानानां सामान्यज्ञानपूर्वकत्वात्, प्रत्यक्षादीत्यपि तथा, अन्येषामपि विशेषलक्षणानां सामान्यलक्षणपूर्वकत्वात्, अर्थाक्षिप्तेत्यपि व्यर्थं शाब्दानामपि सामान्यलक्षणानां विशेषलक्षणहेतुत्वादित्यत आह, प्रत्यक्षादीति । सामान्यतस्तथात्वेऽपि प्रकृतापेक्षयैतदुक्तमित्यर्थः । ननु सामान्यविशेषलक्षणयोर्नित्यत्वेन न हेतुहेतुमद्भाव इत्यत आह । लक्षणं हीति । लक्षणं-विशेषलक्षणम् । अजिज्ञासितप्रतिपादने प्रतिपाद्यानवधेयवचनत्वापत्तेरिति भावः । सा चेत्यनेन जिज्ञासुपदे

---

(१) चिषु तात्पर्यपरिशुद्ध्यादर्शपुस्तकेषु प्रमाणप्रकरणं विकलं वर्त्तते इति चतुर्थं संवत् १००४ लिखितं तालपत्रपुस्तकमवलम्ब्याकार्यं भवति, जीर्णत्वात् तत्रापि कुत्रचिदक्षराणि विलुप्तानीति टीकादिदर्शनात्समुद्धृतानीति विज्ञेयम् ।

जिज्ञासामुत्थाप्य विशेषलक्षणावतारः तथा च सामान्यलक्षणविभागोद्देशज्ञानस्य जिज्ञासादिजननद्वारा विशेषलक्षणज्ञानं प्रति हेतुत्वात् तज्ज्ञोचरयोरपि हेतुहेतुमद्भावं विवक्षित्वोक्तं हेतुत्वेनेति । [१०।१२]

सू० इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् ॥ ४ ॥

व्यवच्छेदो नास्याभिधेय इत्यत आह । प्रयोजनमिति । [१०।१४] समानजातीयमनुमानादि–प्रमाणत्वेन, अप्रत्यक्षत्वेन तु तदपि विजातीयमेव, अतो नासाधा-

---

धात्वर्थजिज्ञासापरामर्षः । तत्सामान्यमजानतस्तद्विशेषत्वेन जिज्ञासा न भवतीत्यर्थः । अत इति । सामान्यलक्षणविशेषितं यद्विशेषलक्षणं तज्जिज्ञासा न सामान्यलक्षणज्ञानं विशेषविभागज्ञानं च विना, विशेषोपस्थितिं विना तदभावात् । विशेषोपस्थितिश्च विभागाधीना विशेषलक्षणाधीनेतरभेदबुद्धेरनुयोग्यवृत्तिप्रतियोगिवृत्तिधर्मेण प्रतियोग्युपस्थितिसाध्यत्वात्तस्याश्च विभागसाध्यत्वादित्यर्थः ।

अभिधेयपरत्वेऽर्थशब्दस्यानुपपत्तिमाह । व्यवच्छेद इति । अस्य सूत्रस्येति वदता सूत्रस्यार्थः प्रयोजनमित्यर्थो न तु सूत्रार्थशब्दस्यैव प्रयोजनमर्थ इति दर्शितम् ।' ननु समानजातीयपदेन सपक्षाभिधाने ततो लक्षणव्यावृत्तावसाधारण्यं, अव्यावृत्तौ विरोध इत्यत आह । प्रमाणत्वेनेति । तथा च प्रत्यक्षलक्षणशून्यत्वेनानुमानाद्यपि विजातीयमेवेति तदन्योन्याभावः साध्योऽतो नासाधा-

रणं लक्षणस्य। विशेषकत्वं लक्षणधर्मस्तत्प्रयोजनमित्यसङ्गतम्, अतः कारकात् फलभूतां क्रियां निष्कृष्य

---

रणं समानजातीयपदेन सपक्षस्यानभिधानादित्यर्थः। अत एव यद्यप्रमाणत्वेनोपस्थिताद्भेदः साध्यते तदाऽनुमानादेः प्रमाणात् स न सिद्ध्येत्, नापि प्रमाणत्वेन प्रत्यक्षत्वेनोपस्थितात् स्वस्मादपि प्रत्यक्षस्य भेदापत्तेरित्यपास्तम्, प्रत्यक्षलक्षणशून्यत्वेनोपस्थितात् प्रमाणादप्रमाणाच्च भेदस्य साध्यत्वादिति भावः।

प्रत्यक्षलक्षणं तु यथाश्रुतं यद्यपि ईश्वरप्रत्यक्षाऽव्यापकं, आत्मनोऽर्थस्येन्द्रियेण मनसा सन्निकर्षात् ज्ञानमात्रोत्पत्तेरतिव्यापकं, आत्मनोऽर्थत्वाभावेऽप्यात्मानुमितावात्मस्मृतौ चाऽतिव्यापकं, सन्निकर्षत्वं च षोढासाधारणं दुर्वचं, संयोगाद्यन्यतमत्वस्य भेदानुमाने व्यर्थविशेषणत्वात् गौरवेणान्यतमजन्यत्वस्य व्याप्यतानवच्छेदकत्वात्, संयोगादिहेतुत्वस्य च तृणारणिमणिन्यायेन प्रत्यक्ष एव विश्रामात्, तथापीन्द्रियार्थसन्निकर्षोत्पन्नत्वेनैकार्थवृत्तित्वसम्बन्धात् साक्षात्त्वं जातिरुपलक्ष्यते। न च तदसिद्धिः चाक्षुषादिबुद्धौ साक्षात्करोमीत्यनुगतानुव्यवसायसाक्षिकत्वात्। अनुगतमतेश्च बाधकं विना जातिविषयत्वात्। न च व्यञ्जकाभावः चक्षुर्जन्यत्वादेरेव व्यञ्जकत्वात्। व्यञ्जकेष्वननुगमस्य गोत्वादाविवादोषत्वात्। व्यञ्जकानुगमे तत एवानुगतमत्युत्पत्तौ जात्यसिद्धा व्यञ्जकाननुगमस्य जाताव(न)नुगुणत्वाच्च। ईश्वरस्य प्रत्यक्षे साक्षात्त्वं धर्मिग्राहकमानव्यङ्ग्यमेव। यद्वा योगजधर्माजन्य सामान्यलक्षणप्रत्यासत्त्यजन्य-जन्यस्वविषयकस-

**दर्शयति। विशेषकत्वं विशेष इति।** [७०।१] **विपक्षव्यावृत्तप्रत्यक्षप्रतिपादनमित्यर्थः।**

**कः पुनरनेन लक्षणेन प्रतिपादयिष्यत**(१) **इत्यत आह। यः खल्विति।** [७०७]

विकल्पकाजन्य-जन्यप्रत्यक्षस्यार्थजन्यज्ञानत्वं लक्षणं, जन्यप्रत्यक्षस्येन्द्रियजन्यज्ञानत्वमेव वा। न च प्रत्यक्षज्ञानजनकत्वस्य इन्द्रियलक्षणे विशेषणत्वादन्योन्याश्रयः, स्मृत्यजनकज्ञानकारणमनःसंयोगाश्रयत्वस्यैव तल्लक्षणत्वात्। आत्मानुमितिस्मृत्योश्चात्ममनसोर्नार्थेन्द्रियत्वाभ्यां जनकत्वम्, अपि तु समवायित्वमनस्त्वाभ्याम्, अन्यथा ज्ञानमात्रस्य साक्षात्त्वापत्तिरिति दिक्।

ज्ञानाकरणं ज्ञानं प्रत्यक्षमित्यसत्पिदचरणाः। विशिष्टज्ञाने विशेषणज्ञानस्य निर्व्यापारत्वेनाकरणत्वात् प्रत्यभिज्ञायाः संस्कारजन्यत्वे स्मृतित्वापत्त्या तत्तास्मृतिजन्यत्वादिति।

करणस्येदं लक्षणमिति नेश्वरप्रत्यक्षाव्याप्तिर्दोषायेत्यप्याहुः। इतरभेदसाधकव्यतिरेकिणि साध्यप्रसिद्धिश्च वक्ष्यते।

(प्रत्यक्षलक्षणनिर्वचनम्।)

ननु विशेषकत्वमनूद्य प्रत्ययार्थं हित्वा प्रकृत्यर्थमात्रव्याख्यानं कुत इत्यत आह। विशेषकत्वमिति। कारकस्य स्वनिष्ठप्रधानक्रियानुत्पादकत्वादित्यर्थः। ननु विशेषोऽप्यन्योन्याभावरूपो नित्यतया न फलमित्यत आह, विपक्षेति। उत्तरप्रबन्धोपयोगार्थमाह। कः पुनरिति। ज्ञानलक्षणं प्रति तत्प्रतिपादनमफलम्,

(१) प्रतिपादयितव्यः— पा० ४ पु०।

न च सर्वं व्यामूढा, येन प्रतिपाद्यप्रतिपादकव्यवस्था न स्यात्। न च सर्वत्र व्यामोहो येनानवस्था स्यात्। न च सर्वं व्यामोहहेतवो येनाप्रतिपत्तिः स्यात्। न च सर्वाप्रतिपत्तिः येनाऽर्थासिद्धिः स्यादिति भावः।

ननु लक्ष्यमप्रसिद्धत्वात् कथं धर्मि? प्रसिद्धत्वे वा

---

अज्ञातलक्षणं प्रति तु लक्षणवाक्यमप्रतिपादकमेवेति भावः। न च सर्वं इति। न हि स्वरूपतोऽपि लक्षणं यो न जानाति तं प्रति लक्षणवाक्यं, येन तदप्रतिपादकं स्यात्। अपि तु यो वस्तुतो लक्षणं जानन्नपि प्रत्यक्षलक्षणतया न जानीते स लक्षणवाक्यप्रतिपाद्य इत्यर्थः। ननु लक्षणमितरव्यावृत्तं सल्लक्ष्यं धर्मिणमितरव्यावृत्ततया बोधयेत् व्यावृत्तिश्च तल्लक्षणाधीनेति तल्लक्षणाभिधानमेवं तत्रापीत्यनवस्थेत्यत आह, न च सर्वत्रेति। लक्षणमितरव्यावृत्तमवगच्छन्नपि तल्लक्ष्यव्यावर्तकतया यो न जानाति तं प्रति तस्य विपक्षव्यावर्तकत्वं बोध्यत इत्यर्थः। ननु धर्मिज्ञानं विना लक्षणाभिधानाभावात्तस्य च व्यामुग्धत्वाल्लक्षणाभिधानेऽपि धर्मिज्ञानं व्यामुग्धमेवेति लक्षणाभिधानमनुपयुक्तमित्यत आह, न च सर्वं इति। लक्षणरूपविशेषदर्शनाभावात्पूर्वं धर्मिज्ञानस्य व्यामुग्धत्वेऽपि तदुत्तरकालं धर्मिज्ञानं तथा नेत्यर्थः। ननु धर्मिणमपि यो न जानाति तं प्रति लक्षणमाश्रयासिद्धमित्यत आह, न च सर्वेति। ननु च लक्ष्यमनूद्य लक्षणं विधीयते इति प्रसिद्धमेवेति तत्कीर्तनमफलमित्यत आह, नन्विति। धर्मिज्ञानं च विना कश्चेतरभेदो लक्ष-

किं लक्षणेन? किं चास्याभिधेयं? यदभिदधत् तत्परं स्यादित्यत[1] आह। तस्मादिति। [७।९]

ननु लक्षणं यदि प्रसिद्धं किं विधेयम्? तस्याप्रसिद्धत्वात्। विधेयं चेत् कथं लक्षणम्? तस्य प्रसिद्धत्वादित्यत आह, इतस्त्ववगतलक्षण इति। [७।१०] प्रतिपाद्याप्रसिद्धत्वाद्विधेयत्वमग्निहोत्रादिवन्न तु प्रतिपादकाप्रसिद्धत्वात्। प्रतिपाद्यस्य विधेः प्रतीत्यैव लक्षणं यागमिव पश्चात्साध्यं साधयतीत्यर्थः। विशेष्यज्ञानं—सविकल्पकमित्यर्थः।

---

णादवस्येतेति भावः। किञ्चेति। अस्य-लक्षणसूत्रस्य। यत्-अभिधेयमभिदधत्-सूत्रं व्यवच्छेदपरं स्यादित्यर्थः। ननु इतस्त्वित्यत्र (च)यः खल्वित्यादिना पौनरुक्त्यमित्यत आह, ननु लक्षणमिति। तस्य-विधेयस्य "विधिरत्यन्तमप्राप्तौ" इति वचनादिति भावः। तस्य-लक्षणस्य। असिद्धस्य न हि व्यावर्तकत्वं ज्ञातस्यैव तत्त्वादिति भावः। अग्निहोत्रवदिति। अग्निहोत्रादौ स्वर्गसाधनत्वमिवेत्यर्थः।

ननु विशेष्यज्ञानेन फलेन विशिष्यमाणस्य ज्ञानस्यापि प्रत्यक्षत्वावरोधार्थमुक्तं यत्तद्विशेष्यज्ञानमित्यादि, तदयुक्तं निर्विकल्पकस्यापि विशेष्यघटादिविषयकत्वेन विशेष्यज्ञानत्वात्तस्य च ज्ञानजन्यत्वाच्च तेन ज्ञानं प्रमाणं विशेष्यते किन्त्विन्द्रियमेवेत्यत आह, सविकल्पकमिति। ननु अर्थग्रहणेनेत्यादेरव्यापकत्वादिदोषपरी-

---

(१) तत् परं भविष्यतीत्यत पा० ४ पु०।

नन्विन्द्रियार्थसन्निकर्षः प्रत्यक्षकारणमेव न भवति, सत्यपि तस्मिन् परमाण्वादिष्विन्द्रियसंयुक्तव्यवधायकसंयुक्तेषु[1] च घटादिषु तदनुपपत्तेः, अतोऽसिद्धमिदं लक्षणमित्यत आह। अर्थग्रहणेनेति। [३०।१९]

ननु रूपत्वादिसामान्यं नास्त्येव, तत्किमर्थं संयुक्तसमवेतसमवायाभ्युपगम इत्यत आह। न चेति। [३०।२४]

---

हारपरत्वं, न च तत्सम्भवः अणुकाकाशादाविन्द्रियसन्निकर्षे सत्यपि ज्ञानस्यैवाभावात्। उत्पन्नग्रहणं त्विनेन्द्रियार्थसन्निकर्षेण ज्ञानमिति कृते संयुक्तकुड्यादिसंयुक्तेऽतिव्याप्तेरभावात् तत्र ज्ञानस्यैवानुत्पत्तेरित्यत आह, नन्विन्द्रियेति। तथा च स्वरूपासिद्धिनिरासार्थं तदुक्तं न त्वतिव्याप्तिपरीहारार्थमित्यर्थः। इन्द्रियार्थसन्निकर्षेण ज्ञानमित्यतः संयुक्तसंयोगव्यवच्छेदे सिद्धेऽपि यद्यपीन्द्रियसन्निकृष्टार्थज्ञानमिति कृते यदिन्द्रियसंयुक्तसंयोगिनि व्यवहिते घटादावनुमित्यादिज्ञानं तत्रातिव्याप्तिपरीहारार्थमुत्पन्नग्रहणमिति सम्भवति तदनुमित्यादेः संयुक्तसंयोगाजन्यत्वात्, तथापि प्राधान्यादसिद्धिपरीहारपरत्वमेवोक्तम्।

ननु रूपत्वादिसाक्षात्कारार्थं संयुक्तसमवेतसमवायाभ्युपगमः स्यादित्यत आह, नन्विति। ननु व्याघातमुपक्रम्य स एवोपपादयितुमुचितः 'कथं सादृश्यं प्रत्यक्षं भवे'दित्यसङ्गतमित्यत आह,

---

(१) सम्प्रयुक्तेषु पा० ४ पु०।

नतु साहश्यमर्थान्तरं रोचयमानानामपि कुतो व्याघातो न हि तद्विपरीतमिह किञ्चिदभ्युपेतमित्यत आह। तेषामिति। [७०।१७]

नन्वसन्निकृष्टस्यैव सन्निकृष्टाश्रयस्य वा ग्रहणमग्रहणमेव वा भविष्यति, कुतो व्याघात इत्यत आह। इतरथेति। [७१।१] असन्निकृष्टस्य हि ग्रहणे इन्द्रियप्राप्यकारिताभ्युपगमव्याघातः। सन्निकृष्टाश्रयस्य तु ग्रहणे संयुक्तसमवायाभ्युपगमव्याघातः। अग्रहणे च तदभ्युपगमव्याघातः प्रमाणाभावादित्यर्थः।

---

ननु सादृश्यमिति। अर्थान्तरसादृश्याभ्युपगन्तुस्तदभावाभ्युपगमे व्याघातो न च तथा तेनाभ्युपगम्यत इत्यर्थः। ननु न स्वतन्त्रव्याघातस्तुर्यसन्निकर्षानभ्युपगन्तुस्तदभ्युपगमाभावादित्यत आह, नन्विति। संयुक्तसमवायेति। रूपादेरप्याश्रयसंयोगादेव ग्रहणसम्भवादिति भावः। न च रूपादौ सादृश्यं नास्ति, व्यवहारस्याश्रयसादृश्यादेव स्यात्तथा च तद्ग्राहकः संयुक्तसमवाय एव स्यादिति वाच्यम्। अबाधितप्रतीत्यविशेषात्। वैपरीत्यस्यापि सुवचत्वात्। आश्रयवैसादृश्येऽपि रूपादेः सादृश्यानुभवाच्चेति भावः। नन्वनुभवव्याघातस्योक्तत्वात् पुनः 'अनुभूयन्ते ही'त्यादि पुनरुक्तमित्यत आह, चतुर्थेति। चतुर्थसन्निकर्षोऽतीन्द्रियाधारतया न प्रत्यक्ष इति न तद्व्याघातोऽनुभवव्याघात इत्यर्थः। ननु रूपत्वाद्यनुभवेऽपि न चतुर्थ-

चतुर्थसन्निकर्षाननुभवात्कुतस्तद्व्याघात इत्यत आह। अनुभूयन्ते हीति। [७।१।१२] रूपत्वाद्यनुभवस्य चतुर्थसन्निकर्षकार्यतया तदभ्युपगमस्तदनभ्युपगमे उपहितप्रत्यया-योगात् [७।१।१४] तन्मूलस्य चोपहितव्यपदेशस्य तदभावेऽनुपपत्तेरित्यर्थः।

---

सन्निकर्षाभ्युपगमो येन तदनभ्युपगमव्याघातः स्यादित्यत आह, रूपत्वादीति। यद्यपि रूपाकारा अनुगतप्रतीतिर्नास्ति लौकिकानां तथापि नीलोवर्णः पीतोवर्ण इत्यनुगतवर्णाकारा साऽस्त्येव, गन्धरसादौ चानुगतमतिः सार्वलौकिकीति नानुभवापलाप इत्यर्थः। ननु व्यपदेशभेदे चक्षुर्मात्रबहिरिन्द्रियग्राह्यविशेषगुणत्व-रूपं चाक्षुषत्वमुपाधिं निमित्तत्वेनाशङ्क्य उपपत्तिप्रत्यया[१]नुपपत्तिकथनमसङ्गतमित्यत आह, तन्मूलस्येति।

न च मानान्तरोपस्थितमेव चाक्षुषत्वमिन्द्रियजज्ञाने भासते रूपादिशब्दप्रयोगोऽपि तेनैव जन्यते इति वाच्यम्। अतीन्द्रिये रूपादिव्यवहारापत्तेश्चक्षुर्ग्रहणयोग्यतायाश्च तदवच्छेदकाज्ञानेऽज्ञानात्। न च नीलपीताद्येकैकमेव नित्यमिति नातीन्द्रियं तत्, गोत्वादिना तस्य परापरभावानुपपत्तेश्च न जातित्वं, नीलतरादि-प्रतीतेश्च तदन्यरूपासम्भेदविषयत्वादिति वाच्यम्। चक्षूरूपस्य घटादिरूपाभिन्नत्वे प्रत्यक्षत्वप्रसङ्गात्। एकस्योद्भवानुद्भवत्वविरो-

---

(१) उपहितप्रत्ययेतिपाठो युक्तः प्रतिभाति।

न च रूपत्वादिसामान्यविशेषविशिष्टरूपाद्युपलब्धिमन्तरेण प्रमाणमस्ति परस्परव्या - - - - - न्कुरादिषु । विशिष्टोपलब्धेरेव प्रमाणत्वे परस्पराश्रयत्वम् । न चाविशिष्टोपब्धिमात्रोपनीतमविशिष्टमिन्द्रियमुपाधिर्विशिष्टव्यपदेशे रसादिष्वपि रूपादिव्यपदेश इत्याशयवानाह । न चेन्द्रियाणीति । [७५।७] सोऽयं चाक्षुषत्वाद्युपाधिनिबन्धनत्वाभिमानः परस्य रूपादिव्यपदेशाभेद इति स एवोदाहृत्य निराकृतः परमार्थतस्तु

---

धात् । पाकेन रक्तं रूपमुत्पन्नं श्यामं नष्टमित्यनुभवाच्च । न चायं भ्रमो बाधकाभावात् । न चोत्पादविनाशबुद्धेः समवायो विषयः तदनुल्लेखात् । तन्नित्यत्वस्य वक्ष्यमाणत्वाच्च । नीलादितुल्यतया गन्धादेरपि नित्यतापत्तेश्चेति भावः ।

मानान्तरोपस्थितमेव चक्षुर्ग्राह्यत्वमध्यक्षे भासत इत्यत्र दूषणान्तरमाह, न चेति । न च नीलपीतादिबुद्धिकरणतया चक्षुःसिद्धौ नायं दोष इति वाच्यम् । एकैकप्रतीत्या भिन्नकरणसिद्धावपि सर्वरूपेषु तत्करणग्राह्यत्वस्यासिद्धेः । न च नीलपीतादिप्रतीतिकरणेषु गन्धताद्यव्यञ्जकत्वे सति नीलादिव्यञ्जकद्रव्यत्वात्तैजसत्वं प्रसाध्य तैजसेन्द्रियग्राह्यत्वेन नीलादौ रूपाकारानुगतबुद्धिः स्यादिति युक्तं, एतादृशपरम्परामविदुषोऽपि रूपप्रत्ययादिति भावः । नीलाकारानुगतधिया नीलत्वसिद्धौ तत्साक्षात्काराय चतुर्थी प्रत्यासत्तिर्मन्तव्या, न हि चक्षुर्मात्रग्राह्यत्वमेव नीलत्वं

**नीलमधुरादिव्यपदेशाभेदे सोऽपि नास्ति तावताप्यस्माकमभिमतलाभ इति ।**

**शब्दत्वादिसिद्धौ तु तात्पर्यं ततः साधारणवचसोपसंहरति । तस्मादिति ।** [७१८]

---

पीतादावतिप्रसङ्गात्, एवं मधुरत्वसुरभित्वादिकमपि न रसनादिग्राह्यत्वमित्यभिप्रेत्याह, नीलेति ।

समवेतसमवायष्टीकाकृता न समाहित इति तत्र तस्यानभिमतिः तथा च वार्तिकविरोध इत्यत आह, शब्दत्वादीति । अत्रापि श्रोत्रमात्रग्राह्यत्वस्योपाधित्वासम्भवादिति भावः ।

ननु संयोगो नेन्द्रियप्रत्यासत्तिः तथा हि सूक्ष्मावयवावच्छेदेनावयविसंयोगेऽप्यवयविनो न ग्रह इति महावयवावच्छेदेनावयविसंयोगो हेतुरित्यवच्छेदकसंयोगेनैवान्यथासिद्धत्वादवयविसंयोगो न हेतुः । अथावच्छेदकसंयोगेन ग्राह्यसंयोगस्यान्यथासिद्धौ तत्राप्यवच्छेदकान्तरसंयोगेनाऽन्यथासिद्ध्यापत्त्याऽकारणमेव संयोगः स्यात्, किं च स्वावयवसंयोगापेक्षया स्वसंयोगस्यैव लघुत्वात् स एव हेतुरिति मतं, तन्न । अल्पतरावयवावच्छेदेन संयोगस्य हेतुत्वप्रसङ्गात्, मैवम् । स्थूलावयवावच्छेदेन संयोगः किं द्रव्यग्रहे हेतुः? अवयविमात्रग्रहे वा? नाद्यः आत्मग्रहे व्यभिचारात् । नान्त्यः त्रसरेणुग्रहे व्यभिचारात् । एवं चात्मादिद्रव्यग्रहे ग्राह्यसंयोगस्य हेतुत्वात् घटादिग्रहेऽपि स एव हेतुः । सूक्ष्मभागावच्छेदेन तत्सिद्धावपि न घटादिग्रह इति चेत् । तथापि तत्र विशेषे स्थूलावयवोऽपि ग्राह्यसंयोगेऽवच्छेदकमात्रं न तु क्लृप्तहेतुपरित्यागः ।

एतेन रूपादिग्रहे कृप्तत्वाद्‌वयविग्रहे संयुक्तसमवाय एव हेतुः संयुक्तसमवायापेक्षया संयोगस्य लघुत्वेऽपि कल्पनीयकरणभावापेक्षया कृप्तस्यैव करणतौचित्यादित्यपास्तम्। आत्मपक्षे संयोगस्य हेतुत्वकल्पनात् द्रव्यसाक्षात्कारत्वेनाऽन्यत्रापि तत्कल्पनात्।

अथैवमाश्रयसंयोगादेव रूपादिग्रहोपपत्तेर्न संयुक्तसमवायः प्रत्यासत्तिः, तथाऽऽश्रयाश्रयसंयोगादेव रूपत्वादिग्रहसम्भवान्न संयुक्तसमवेतसमवायोऽपि प्रत्यासत्तिः, आश्रयसंयोगादिकारणसाकल्ये समवायाभावात् कार्याभावा(ा)दर्शने समवायस्याहेतुत्वात्। न चैवमिन्द्रिययुक्ते घटे भाविगन्धग्रहप्रसङ्गः, प्रत्यक्षे विषयस्य कारणतया गन्धाभावेन तदभावात्। न च गन्धादीनां साक्षात्कारविषयत्वेन साक्षात्कारकारणेन्द्रियप्रत्यासत्त्याश्रयत्वमनुसन्धेयम्। गन्धेन्द्रियसन्निकर्षसाधने साध्याप्रसिद्धिः इन्द्रियसन्निकर्षमात्रे साध्ये सिद्धसाधनात्। शब्दसाक्षात्कारहेतोः समवायस्य गन्धेऽपि सत्त्वात्। मैवम्। गन्धसमवायियोगस्य हेतुत्वे यदि गन्धसमवायो विशेषणं तदा हेतुरेव। समवायस्यैकत्वेऽपि यथा नातिप्रसङ्गः तथा वक्ष्यामः। उपलक्षणत्वे च संयुक्तद्रव्यमात्रमुपलक्ष्यं यदि, तदा घटसंयोगात् पटगन्धग्रहप्रसङ्गः। स्वसमवायिसंयोगो हेतुः तत्र समवायोऽवच्छेदक इत्यभ्युपगमे संयोगिसमवायो हेतुस्तत्र संयोगोऽवच्छेदक इति वैपरीत्यस्याप्यापत्तेः।

एतेन संयुक्तसमवायो यदि संयोगः कथं रूपादिवृत्तिः? समवायश्चेत्कथं घटरूपसमवायश्चक्षुषि। न चेन्द्रियेण गन्धस्य परम्परासम्बन्धः परम्परायाः संयोगसमवायरूपवत्त्वयोरुक्तदोषापरीक्षा-

ननु नेन्द्रियविशेषणतया कस्यचिद् ग्रहणमस्ति अन्यविशेषणतया तद्ग्रहणे किमायातमिन्द्रियसन्निकर्षस्येत्यत आह। विशेषणभावेन चेति। [१।१।१०]

न च विशेषणभावपदेनोभयसङ्ग्रहे समवायपदेनापि चतुष्टयसङ्ग्रहोऽस्त्विति वाच्यम्। विशेषणभावस्य शुद्धस्य प्रत्यक्षानङ्गत्वेन तदङ्गप्रस्तावे विशिष्टस्य सुलभत्वात्। समवायस्य शुद्धस्यापि प्रत्यक्षाङ्गत्वेन प्रस्तुततया तत्पदस्य तावन्मात्राभिधानेनैव पर्यवसितत्वादिति॥

रादित्यपास्तम्। इन्द्रियतत्संयोगतदाश्रयसमवायानामेव परम्परासम्बन्धत्वात्। अन्यथा वस्त्रादिषु नीलजात्या परम्परासम्बन्धतयाऽनुगतव्यवहारानुपपत्तेः।

ननु वार्त्तिके विशेषणतामात्रं प्रत्यासत्तिरुक्ता तत्रेन्द्रियविशेषणत्वमपहायेन्द्रियसम्बद्धविशेषणत्वस्य प्रत्यासत्तित्वं कुतो व्याख्यातमित्यत आह, ननु नेति। अत्र संयोगसमवायगर्भविशेषणताप्रदर्शनात्संयुक्तसमवेतविशेषणतासंयुक्तसमवेतविशेषणतासमवेतसमवेतविशेषणता च सङ्गृहीता, तासामपि संयोगसमवायगर्भत्वादिति न तत्र टीकाकृतोऽस्वीकार इति मन्तव्यम्। तदङ्गस्य प्रस्ताव इति। विशेषणताङ्गप्रस्ताव इत्यर्थः। शुद्धस्येति। प्रत्यासत्त्यन्तरागर्भस्येत्यर्थः। एतच्च शब्दाभावप्रत्यक्षतापक्षमाश्रित्योक्तम्। शुद्धस्यापीति। शब्दसाक्षात्कारे श्रोत्रादिन्द्रियसमवायस्यैव हेतुत्वादिति भावः।

ननु समवाये यदि विशेषणविवक्षामात्रं शुद्धत्वं? तदा केवल-विशेषस्य पदादिविशिष्टोऽपि लभ्यते पुरुषपदेनेव दण्डी पुरुषः। अथ विशेषणाभावविवक्षा शुद्धिः? तदैकस्यैव समवायस्य विशेषण-योगात् सङ्करप्रतिक्षेपौ विरुद्धौ। न च प्रकारिसङ्करेऽपि प्रकार-विभाग इति युक्तम्। विशेषणतायामपि तुल्यत्वात्। मैवम्। यथा समवायकारणताग्रहमुपजीव्य तद्विशेषाणां कारकत्वग्रहो, न तथा संयुक्तविशेषणताकारणत्वग्रहः शुद्धविशेषणताकारणताग्रहमुप-जीवति, तेन तत्र न प्रकारभेदः कथित इत्यर्थात्। यद्वा सम-वायपदेन साक्षादिन्द्रियसमवाय एव विवक्षितो, विशेषणतायां तु न साक्षादिन्द्रियविशेषणता विवक्षितेत्येव शुद्धाशुद्धत्वे इति भावः

ननु न शब्दसाक्षात्कारबलात् समवायः प्रत्यासत्तिः तत्त्वेऽपि सर्वशब्दोपलम्भापत्तेः। न च कर्णशष्कुल्यवच्छेदेनोत्पन्नो गृह्यते इति युक्तम्। अवच्छेदो नाकाशः उक्तदोषात्। नापि कर्णशष्कुली-तत्संयोगौ, शब्दस्य तत्राऽसमवायात्। अथ संयोगवदिह शब्दो नेह शब्द इति प्रतीतेः शब्दस्याव्याप्यवृत्तित्वं तत्र कर्णशष्कुल्य-वच्छेदिकेति चेत्। न। अवच्छेदस्य समवायरूपत्वेऽतिप्रसङ्गात्। सम्बन्धान्तरत्वे च तस्यैव हेतुत्वापत्तेः। तस्माद्यः शब्दो यं प्रति योग्यीभूयोत्पन्नः स तेन गृह्यते नान्य इत्येवातिप्रसङ्गनिवृत्तौ किं समवायप्रत्यासत्त्या? शब्दमात्रयोग्यत्वं गुणयोग्यत्ववदनुगतमेव। न च सन्निधानव्यवधानयोः शब्दानामबाधितवैषम्यप्रत्ययाद्भेदसिद्धेः समानसिद्धिरिति युक्तम्। नानाशब्दानां नानापुरुषान् प्रति

## 'समवाये चाभावे च विशेषणविशेष्यभावा'दिति वार्त्तिकं, तच्चानुपपन्नं समवायस्य तत्प्रत्यक्षतायाश्चासिद्धेरित्यत[1] आह। अवयवेत्यादि। [७१।१४]

योग्योभूयोत्यादेऽप्यविरोधात्। एवं च वीणाद्यवच्छिन्नमेव नभः श्रोत्रमत एव वीणायां शब्द इति प्रतीतिरिति केचित्।

तन्न। शब्दस्य साक्षात्कारविषयत्वेनेन्द्रियप्रत्यासत्तिसाधनात्। न चातिप्रसङ्गः अव्याप्यवृत्तेर्यस्य शब्दस्य समवायवृत्त्याधारता कर्णशष्कुलीसंयोगेनावच्छिद्यते स गृह्यते यस्य च तदत्यन्ताभावेन, स न गृह्यत इति नियमः। कर्णशष्कुल्यवच्छेदेनापि शब्दग्रहणात्माप्यवच्छेदिकेति तदवच्छिन्नमेव नभः श्रोत्रमावश्यकत्वाल्लाघवाच्च। वीणादीनामनन्तत्वात् शब्दमात्रग्रहे तदर्थविधानाच्चेति सङ्क्षेपः।

अत्र परमाणुमहं जानामीत्यादौ ज्ञानलक्षणाप्रत्यासत्तिर्मनःसंयुक्तात्मसमवेतज्ञानविशेषणतान्तर्भूता, सामान्यलक्षणापि तथा, चक्षुःसंयुक्तधूमादिसमवेतधूमत्वादिविशेषणत्वादतीतानागतधूमादिव्यक्तीनाम्, योगजधर्मः प्रत्यासत्त्यन्तरम्, षोढापरिगणनन्तु तदजन्यजन्यप्रत्यक्षाभिप्रायेण, षोढाप्रत्यासत्तीनामननुगमात् तत्तत्प्रत्यक्षे तत्तत्प्रत्यासत्तीनां जनकत्वात् सन्निकर्षत्वस्यैकस्याभावेऽप्यदोष इति मन्तव्यम्।

ननु समवायस्य प्रत्यक्षतासाधनमनुपयुक्तं न ह्यीन्द्रियप्रत्यासत्तिर्ज्ञातोपयुज्यते इत्यत आह। समवाय इति। 'नान्यथा' इत्यादिना

(१) असिद्धत्वादित्यत पा० ४ पु०।

**नन्ववयवश्चावयवी चेत्याद्येवोपलभ्यते न तु सम्बन्धोऽपीत्यत आह। नान्यथेति। [७।१।४] एवंभूता हि प्रतिपत्तिः परस्परासम्बद्धेभ्यो व्यावर्त्तमाना परस्परसम्बद्धेषु विश्राम्यतीति भावः।**

अर्थापत्तेः समवायप्रमाणत्वोपदर्शनाद्वार्त्तिकोक्तसमवायप्रत्यक्षत्वविरोध इत्यत आह। नन्विति। विरोधविधूननायाह। एवमिति। प्रत्यक्षे विप्रतिपन्नं प्रति विशिष्टप्रतीतित्वेन तन्तुषु पट इत्यादिप्रतीतेः सम्बन्धविषयत्वं साधितमित्यर्थः।

ननु विशिष्टबुद्धौ न तावत्समवायो विशेष्यत्वेन भासते अनयोः समवाय इत्यननुभवात्। नापि विशेषणत्वेन संयुक्ताविमाविति वत् समवायिनाविमावित्यननुभवात्। न च विशिष्टप्रतीतित्वेन विशेषणविशेष्यसम्बन्धविषयत्वमनुमेयम्। अघटं भूतलमित्यत्र व्यभिचारात्। सम्बन्धविषयत्वं बाधकं विनेति चेत्। न। व्यर्थविशेष्यत्वात्। बाधकताभावस्य बाधकत्वाच्च। एतेनेह तन्तुषु पट इति प्रतीतिराधाराधेयसम्बन्धनिबन्धना यथार्थप्रत्ययत्वात् इह कुण्डे बदरमितिधीवदित्यपास्तम्। इह घटाभाव इति बुद्धौ व्यभिचारात्। बाधकं विनेत्यस्य निरासात्। आधाराधेयभावसम्बन्धेन सिद्धसाधनाच्च। न च शब्दजातिरूपादि साक्षात्कारहेतुसन्निकर्षाश्रयः प्रत्यक्षत्वादिति संयोगबाधादिन्द्रियसम्बन्धघटकतया समवायसिद्धिरिति युक्तम्। घटज्ञानयोर्भूतलाभावयोरिव द्रव्ये गुणे जात्यादिभिः स्वरूपसम्बन्धेनार्थान्तरत्वात्। शब्दस्येन्द्रियविशेषण-

तथा जातिरूपादेरिन्द्रियसम्बद्धविशेषणतया रूपत्वादेरिन्द्रियसम्बद्धसम्बद्धविशेषणतया च स्वरूपसम्बन्धरूपया ग्रहणसम्भवात् ।

अत्राऽस्मत्पिढचरणाः । जातिगुणादिविशिष्टबुद्धीनां तत्त्वेन विशेषणविशेष्यसम्बन्धविषयत्वमनुमेयं, अभावादिविशिष्टबुद्धेरपि स्वरूपसम्बन्धविषयत्वान्न व्यभिचारः । निर्विषयकभावविशेषणकविशिष्टबुद्धित्वादिति वा हेतुः । न च स्वरूपसम्बन्धेनार्थान्तरं, क्रियाजात्यादिविशिष्टबुद्धीनां पक्षधर्मताबलेन विषयः सम्बन्धश्च सिद्ध्यन् लाघवादेक एव सिद्ध्यति, स एव समवायः, न तु स्वरूपसम्बन्धः तत्तत्स्वरूपाणामनन्तत्वात् । विशेषणविशेष्यसम्बन्धनिमित्तकत्वं वाऽनुमेयम् । स च सम्बन्धः कारणं लाघवादेक एव सिद्ध्यति, अनुगतकार्यस्यानुगतकारणप्रयोजकत्वात् । न तु स्वरूपसम्बन्धस्तेषामनन्तत्वादननुगमाच्च । अत एवेन्द्रियप्रत्यासत्तित्वेनापि समवायसाधनमप्रत्यूहम् । विशेषणतायास्तत्तद्रूपादिरूपत्वेन(न)नुगतत्वात् ।

एतेन संयोगो विशेषणता चेति द्वयो प्रत्यासत्ति र्न च समवायादिचतुष्टयमिति रत्नकोषकृन्मतमयुक्तम् । विशेषणतायास्तु तत्तत्स्वरूपत्वेऽननुगमात् । प्रत्यासत्तित्वेनापि सिद्धस्य समवायस्य प्रत्यक्षमविरुद्धं सम्बन्धिद्वयप्रत्यक्षत्वात् चक्षुःसंयोगादीनां चाऽतथात्वात् । नन्वेवमभावज्ञाने विशिष्टज्ञानत्वात् संयोगसमवायबाधेऽनुगतं वैशिष्ट्यं सम्बन्धोनिमित्तं विषयश्च स्यात् । न स्यात् । तद्वैशिष्ट्यं प्रत्यभावव्यक्ति भिन्नमभिन्नं वा ? आद्येऽभावविशिष्टबुद्धौ अननुगतमेव वैशिष्ट्यं विषयः कारणं वेति । तत्तत्स्वरूपा विशेषण-

**ननु सामानाधिकरण्यं समानेनाधिकरणेन सम्बन्ध इति पर्यायौ तत्किमनेनोक्तमित्याशयवान् पृच्छति । किं पुनरिति ।** [७१।१८]

---

नैवाऽस्तु, अलमनन्तवैशिष्ट्येन, वैशिष्ट्यसाक्षात्कारे तथा तत्तत्प्रत्यासत्तित्वाङ्गीकारात् । नाद्यः घटाभाववति पटवति पटाभावधीप्रसङ्गात् घटाभावपटाभाववैशिष्ट्ययोरभेदात् । तद्वैशिष्ट्यसत्त्वेऽपि पटाभावस्तत्र नास्तीति चेत् । न, पटाभावाङ्गीकारस्य भावत्वे पटस्य प्रतिबन्धकत्वेन तदभावस्य हेतुत्वात् । तस्य वैशिष्ट्यसम्बन्धेन तत्र सत्वात् । अभावत्वे च तस्यापि वैशिष्ट्यसम्बन्धेन तत्र सत्त्वात् । तथापि ज्ञातो घट इति विशिष्टप्रतीतेर्ज्ञाततांपि घटज्ञानयोः सम्बन्धः सिद्ध्येत् वर्त्तमाने बाधकाभावादिति चेत् । न । अतीतानागतयोर्ज्ञातताया अभावे ज्ञातव्यवहाराभावप्रसङ्गात् । तस्य ज्ञाततासाध्यत्वात् । न च तत्र ज्ञानविषयावेव तद्विषयाविति वाच्यम् । वर्तमानेऽपि तयोरेव तद्विषयत्वापत्तेः । अतीतादिवर्त्तमानतत्प्रतीत्योर्विषयावैलक्षण्याननुभवात् । समवायस्यैकत्वेऽपि रूपवन्नीरूपव्यवस्था वायौ रूपसमवायसत्त्वेऽपि रूपात्यन्ताभावात् । रूपसमवायसत्त्वेऽपि क्वचिद्रूपं क्वचित्तदत्यन्ताभाव इत्यत्र वस्तुस्वभावस्यैव नियामकत्वादिति सङ्क्षेपः ॥

(समवायसाधनं वैशिष्ट्यज्ञातताखण्डनञ्च ।)

---

ननु परोक्षायां ज्ञानान्यथासिद्धौ किं पुनरित्यनेन न किञ्चिद्दूषणमित्यत आह । नन्विति । तादात्म्यमसिद्धं मत्वा साध-

न ह्यत्र कुण्डमिव द्रव्यमधिकरणत्वेन परिस्फुरति। नापि बदराणीव शुक्लत्वपटत्वे आधेयत्वेन, अपि तु य एव शुक्लः स एव पट इत्यभेदेनैव प्रतीतिरित्याशयवानाशङ्कते। तादात्म्यमिति चेदिति। [७।११८] बुद्धेः पौनरुक्त्यं पूर्वापेक्षया अन्यूनानतिरिक्तार्थत्वम्। यदि हि गुणगुणिनोरभेद एव स्यात्तदा तद्वाचकयोरेकार्थत्वात् तद्वदृक्षशब्दवत्सहप्रयोगो न स्यात्। पटमानयेत्युक्ते यत् कञ्चित्[1] शुक्लमानयेत् तस्यैव पटत्वात् अपटः पट इतिवद्शुक्लः पट इत्यपि विरुध्यात्। अन्यस्यापि

यति। न हौति। न हि नीलः पटो दण्डीपुरुष इति प्रतीत्योर्विषयवैलक्षण्यमनुभूयत इति दण्डपुरुषयोरिव नीलपटयोरप्यभेद एव। न चास्या विशेषणसम्बन्ध एव विषयो न तु तदभेद इति युक्तम्, दण्डीपुरुष इतिवन्नीलीपट इति प्रतीत्यापत्तेः। न च सत्तारोपादभेदोपचारत्वात्तदुपपादनम्। नीलपटयोरभेदबुद्धेः प्रमाणत्वात्तयोस्त्र शब्दधर्मत्वात्तत्राभावादिति भावः। ननु पौनरुक्त्यं शब्दमात्रधर्मो न बुद्धेरित्यत आह। पूर्वेति। तद्वदृचेति। शुक्लं पटमानयेत्यत्र यदि शुक्लशब्दः पटशब्दादन्यत्वे सति पटशब्दादभिन्नार्थः स्यात् अत्र वाक्ये न प्रयुज्येत वस्त्रशब्दवदित्यर्थः। पटमानयेति यद्येतत्पटाभिन्नाः सर्वाः शुक्लव्यक्तयः स्युः तदेमं पटमानयेत्येतच्छब्दजन्यानयनकर्माणि स्युरेतत्पटवदित्यर्थः। अशुक्ल

(१) यं कञ्चित् पा० १ पु०।

पटोऽयमितिवच्छुक्लोऽयमित्यपि प्रतीतिः[१] स्यात् । शुक्लाप्रतीतिवद्वा पटप्रतिपत्तिरपि न स्यात् । महारजनादिसंयुक्ते शुक्लत्ववत्पटोऽपि न प्रतीयेतेत्येवमादितर्कसहायं प्रत्यक्षमेव भेदमाकलयतीति परिहारार्थः ।

स्यादेतत् । एकान्ताभेदे हि सर्वमेतद् दूषणम् वयं त्वनेकान्तवादिनः, तथाहि भेदमादायाऽपौनरुक्त्यमभेदमादाय च सामानाधिकरण्यमित्यर्थः ।

इति । यद्ययं पटः शुक्लरूपाभिन्नः स्यात्त्वगिन्द्रियजन्यज्ञानविषयो न स्यात् । महारजनादीति । रक्तः पटो यदि शुक्लरूपाभिन्नः स्यात् न शुक्लरूपाविषयकसाक्षात्कारविषयः स्यादित्यर्थः । शुक्लाप्रतिपत्तिवदिति । (यद्ययं पटः शुक्लरूपाभिन्नः स्यात्त्वगिन्द्रियजन्यज्ञानविषयो न स्यात् । महारजनादीति ।)* शुक्लत्वमधुरत्वसुरभित्वादिजातिर्यदि द्रव्यवृत्तिः स्याद्द्रव्यग्राहकत्वगादिवेद्या स्यात् । तस्माद्रूपत्वादीनां प्रतिनियतेन्द्रियवेद्यतैव गुणगुणिभेदे प्रमाणमित्यादिकमादिपदग्राह्यम् ।

अप्रसक्तनिषेधनिरासायाह । स्यादेतदिति । अत्यन्तभिन्नाभिन्नाभ्यां सामानाधिकरण्यधीर्व्यावर्तमाना भेदाभेदौ साधयति ।

(१) प्रतिपत्तिः पा० ४ पु० ।

( ) एतदन्तर्गतो ग्रन्थः पुनरुक्तः ।

एकं वस्त्विति। [७।१०] भेदाभेदयोः परस्परविरुद्धत्वादित्यर्थः।

भेदो हि लौकिकपरीक्षकप्रसिद्धः, अभेदे तु सामानाधिकरण्यप्रतिपत्तिः प्रमाणमित्याह परः सा चाभेदं नोल्लिखतीति चिन्तितमधस्तादित्यतो लोकप्रसिद्धयोर्भेदाभेदयोरसङ्कीर्णतया विरोध एव लौकिकभेदाभेदा-

---

यद्वा अन्योन्याभावत्वमव्याप्यवृत्तिनित्याभाववृत्ति अभावत्वसाक्षाद्व्याप्यधर्मत्वादत्यन्ताभावत्ववदिति भावः।

भेदाभेदयोरिति। भेदाभेदयोः परस्पराभावरूपतया विरुद्धयोर्नैकत्र समावेशः। न च संयोगप्रतिबन्दिस्तस्येव तत्राऽभावोऽवच्छेदभेदेन वर्तते ज्ञायते च यथासंयोगाद्यभावः, तद्विहापि नीलस्यान्योन्याभावो घटत्वावच्छेदेनेति नीलाद्घटस्य भेदोऽस्तु। अभेदस्तु नीलान्योन्याभावाभावरूपो न घटे घटत्वावच्छेदेन, एकदेशस्य भावाभावयोरेकावच्छेदेनैकत्रावृत्तेरज्ञानाच्च। नाप्यवच्छेदकान्तरेण, तदज्ञानेऽपि नीलो घट इत्यनुभवात्। नीलः पट इत्यत्र नीलसम्बन्ध एव भासते। न च नीलो पट इति शब्दप्रयोगे सम्बन्धवाचकत्वधीप्रसङ्गः, यतो नीलः पट इति बुद्धौ यदि नीलसम्बन्धविषयत्वमापाद्यते ? तदिष्टापादनम्। अथ नीलः पट इति शब्दप्रयोगे सम्बन्धवाचकत्वं ? तदपीष्यत एव नीलपटस्याभेदोपचाराज्जनुष्कोपादा नीलवत्परत्वादिति भावः। अधस्तादिति, अभेदनिराकरणेन। असङ्कीर्णतयेति। विरुद्धतया विरुद्धव्यवहार

तिरिक्तस्तु भेदाभेदनामा समवायो वा स्यात्, वास्तवं वा स्यात्, उभयथापि न नैदर्शनहानिरित्याशयवानुपसंहरति। तस्मादिति। [७१।२२]

ननु यद्यपि सामानाधिकरण्यप्रतीतिर्न तादात्म्यमुल्लिखति, तथापि भेदसम्बन्धाभ्यां व्यावर्त्तमाना अभेदं वा अभेदसम्बन्धं वा साधयेत्, तथा हि प्रयोगः—पटशुक्लत्वे न भिन्ने सम्बन्धे? सामानाधिकरण्यात्। ये पुनर्भिन्ने सम्बद्धे न ते समानाधिकरणे यथा दधिकुण्डे, न च तथेमे, तस्मान्न तथेत्याशयवानाशङ्कते। सम्बन्धेपीति। [७१।२३]

भवेदेवं, यदि भेदसम्बन्धाभ्यामस्य व्यतिरेकः स्वाभा-

---

इत्यर्थः। अतो न साध्याविशेषः। ननु सामानाधिकरण्यं भेदसम्बन्धव्याप्यं नाभेदं साधयतीत्यत्र सम्बन्धे तन्नास्तीति व्यापकव्यभिचारो न युक्त इत्यत आह। नन्विति। भेदसम्बन्धाभ्यामिति। गवाश्वयोर्भेदेऽपि न सामानाधिकरण्यं सम्बन्धेऽपि, तद्यथा कुण्डे बदरमित्यत्र विपरीतव्याप्त्या प्रत्यवस्थानमात्रं न तु व्यभिचारोद्भावनमित्यर्थः। ननु परोक्तायां व्याप्तौ शब्दवृत्तिभेदेन दूषणं न स्यादित्यत आह। भवेदेवमिति। विपक्षात् सामानाधिकरण्यव्यतिरेको नाभेदरूपसाध्याभावप्रयुक्तः, किन्तु धर्मधर्मिभावप्रयोजकस्वभावप्रयुक्त इति निरुपाधिव्यतिरेकसहचार एव नास्तीत्यर्थः।

विकः स्यात्। किन्तु रक्तः पटः अग्निर्माणवक इतिवच्छ-ब्दवृत्तिभेदोपाधिकः, शब्दवृत्तिभेदस्तु सङ्केतोपाधिक इत्याह। न शब्देति। [७१।२४]

सामानाधिकरण्यादिति च हेतुर्यथा भेदसम्बन्धाभ्यां व्यावर्त्तते तथा ऽभेदसम्बन्धाभ्यामित्यपीत्यसाधारणः। अभिन्नं च तत्सम्बन्धि चेति साध्यं, न चैवम्भूतमुभयवादिसम्प्रतिपन्नं किञ्चिदस्ति यतो व्यावृत्तेरसाधारणो हेतुः स्यादिति चेत्? न, उभयव्यवच्छेदपर्यवसानस्य मनोरथेनाप्यसिद्धेः।

---

किं चाऽत्र भेदसिद्धावभेदसाधनं बाधितं सत्प्रतिपक्षितं वा प्रकारभेदस्य निराकृतत्वात् निराकरिष्यमाणत्वाच्चेति भावः। सामानाधिकरण्यं यदि विशेषणविशेष्यभावस्तदा विनाऽप्यभेदं तत्सम्भवः। अथ समभिव्याहृतविशेषणवाचकपदवाच्यत्वं तत्तत्राह। किञ्चिति। यद्यपि भेदे किञ्चित्पदं धर्मविशेषणप्रवृत्तिनिमित्तेन धर्मिणि सङ्केतितं किञ्चिच्च न तथेति धर्मवाचकपदस्य धर्मिणि वृत्त्यभावस्तथाभूतसङ्केताभावप्रयुक्त इत्यर्थः। द्वयोरत्यन्तमभेदस्य सामानाधिकरण्यमसिद्धमेवेति भावः॥

अभेदसम्बन्धाभ्यामिति। अभेदेऽपि न सामानाधिकरण्यं न हि भवति पटः पट इति, सम्बन्धेऽपि तन्न दृष्टं यथा कुण्डे दधीत्यर्थः। ननु न भिन्ने सम्बद्धे इत्यत्र विशिष्टे निषेधान्वयेन सपक्षाभावान्न ततो व्यावृत्तिरिति शङ्कते। अभिन्नं चेति। यद्यपि प्रमेयत्वे

योऽप्यभिन्नः स कथं सम्बन्धः, सम्बन्धस्य भेदाधिष्ठानत्वात् । यः सम्बन्धः स कथमभिन्नः, तेनैव तस्याऽऽसम्बन्धात् । भिन्नोऽपीति चेत् ? तथापि भेदमादायैव सम्बन्धो न पुनरभेदमादाय, तथा च सम्बन्धोभेदेनैव व्याप्तोऽभेदस्त्वसम्बन्धेनैवेति । कथमभिन्ने सम्बन्धे इति प्रतिज्ञा न व्याहता ? प्रकारभेदमादायेति चेत् ? न, तस्याभावात् । न हि द्रव्यस्य गुणत्वमप्यस्ति, गुणस्य द्रव्यत्वमपि, येनाभेदः स्यात् ।

उक्तप्रकारेण च भेद एव । सत्त्वेनाभेद इति चेत् ।

---

प्रमेयत्वं वर्तते इति तत्र साध्यसत्त्वे सामानाधिकरण्याभावोऽस्तीत्यसाधारणमेव, तथापि नात्र येन केनचिद्धेदाभेदौ साध्यौ, अपि तु शुक्लगुणस्य पटाभिन्नत्वे पटसम्बन्धित्वं साध्यं तत्र च नासाधारणम् । यद्यपि च भेदाभेदवादिना गुणगुणिनोः सम्बन्धोनाभ्युपगम्यते इति तत्साधनेऽपसिद्धान्तस्तथापि भेदे सति सम्बन्धनिराकरणायोभयव्यतिरेकप्रदर्शने विशिष्टव्यतिरेको विशेषणमात्रव्यतिरेकादपीति स एव विवक्षित इति शङ्कितुराशयः । पूर्वोक्तानुमानमभिप्रेत्यान्योन्याभावस्याव्याप्यवृत्तित्वमाह । भिन्नोऽपीति । उक्तेति । द्रव्यत्वेन गुणत्वेन चेत्यर्थः । यद्वा सम्बन्धवत्त्वेन चेत्यर्थः । द्रव्यस्य गुणभेदवादिमते गुणत्वस्य द्रव्यवृत्तित्वेऽपि यदि द्रव्यत्वगुणत्वे भेदके

किमिदं सत्त्वं सत्ता वा ? स्वरूपं वा ! स्वरूपं तावद्-गुणो गुण एव द्रव्यं द्रव्यमेव। सत्ता तु ताभ्यामसाधारणाभ्यां साधारणी भिन्ना कथमिव तयोः स्वभावः। केनचिदाकारेण तथेति चेत्। न वै द्रव्यगुणकर्म-साधारणादाकारादसाधारणमाकारं सत्तायाः पश्यामो येन सा तथा स्यात्।

एवं तेषामपि द्रव्यगुणकर्मणां परस्परासंकीर्णात् रूपान्न स्वभावान्तरं पश्यामः। प्रतीयमानरूपमेवाभि-न्नमित्युच्यमाने सत्ता वा न स्यात्, तानि वा न स्युरित्युक्तप्रायम्।

---

एव तेन स्वीक्रियेते तदेदमुक्तं स्वरूपं तावदिति। स्वमसाधारणं रूपं स्वरूपं, ताभ्यां द्रव्यगुणौ भिन्नावेव मिथ इत्यर्थः। सत्ता त्विति। साधारणासाधारणाभ्यां विरोधिधर्माभ्यां सत्ताद्रव्यगुणानां मिथो भेद एव न तादात्म्यम् इत्यर्थः। तथेति। स्वभावश्च द्रव्यगुणा-भ्यामतिभिन्नेत्यर्थः। न चैव द्रव्येति। न च सत्तायां सद्व्यवहार-प्रयोजकमितरभेदप्रयोजकं च धर्मान्तरमवश्यं वाच्यमिति मन्तव्यम्। किंचिदिदन्तु स्वत एव विलक्षणमिति सत्तायाः स्वत एव तदुभयसम्भवादितिभावः।

तर्हि द्रव्यादौ सत्ताया अभेदप्रयोजकं रूपं स्यादित्यत आह। एवमिति। यद्यपि द्रव्यादौ सत्तासाधारणं रूपं प्रमेय-

द्रव्यगुणयोः सत्तैव साधा - - - - - - - - बोधर्मो विशेषणमित्यर्थः । द्रव्यत्वगुणयोर्द्रव्यमेव स्वभावो धर्मो-विशेष्यमित्यर्थः । विशेष्यस्यैकस्यैव विशेषणद्वयद्वारो-भयशब्दबुद्धिविषयत्वाद्गुणगुण्य - - - - वं भेदाभेदो वा परे मेनिरे इति यद्युपनिबन्धेनाह । शब्दानां त्विति । [७।२।१]

नन्वेकान्तभिन्नानां कालतो देशतो वा विवेकख्या-तिरुपलब्धा, सा गुणगुणिभ्यां व्यावर्त्तमाना - - - - ति-कं भेदमपि व्यावर्त्तयतीति अत आह । अयुतसिद्धेति । [७।२।२] अस्त्येवासौ, न तु स्फुटतरोनिर्लुठितगर्भतया ।

---

लमस्ति, तथापि धर्मानवस्थाभयेन यत्र धर्मे धर्मान्तरं नास्ति तत्रैवायं दोषोमन्तव्यः । ननु समूहालम्बनादिविशिष्टज्ञानस्याविशे-षापत्त्या विशेषणविशेष्यभावप्रयोजकस्तयोरत्यन्ताभेदोमन्तव्य इत्यत आह । तस्मादिति । समवायस्य साधितत्वात्तेनैव सोऽप्यन्यथा-सिद्धः । किञ्च समूहालम्बनादिविशिष्टज्ञानस्य विशेषः कार्यकृतः कारणकृतः प्रकारकृतोऽस्त्येवेति भावः । नन्वेकत्रानेकशब्दवृत्ति-र्नैकात्म्ये भ्रमबीजं गौर्वाहीक इत्यत्र तदभावादित्यत आह । विशेषस्येति । तावन्मात्रेण केषाञ्चिद्भ्रमः स्यादित्यर्थः । एतावतैव भेदसिद्धावुत्तरग्रन्थोपयोगार्थमाह । नन्विति । ययोर्मिथोविरोधस्तौ भिन्नदेशकालौ ज्ञायेते यथा गवाश्वावित्यर्थः । अस्त्येवेति । पठस्य

न च तन्निवृत्तिमात्रेण भेदनिवृत्तिः सोऽयदनयोरभेद-प्रसङ्गादित्यर्थः।

स्यादेतत् भिन्नसम्बन्ध्यनुभवेऽपि कुतः सम्बन्धानुभव इत्यत आह। न चासाविति। [७।२।४]

(१) न ह्यदृश्यमाने विशेषणे विशिष्टप्रतीतिः, न च बुद्ध्या बोध्यमनुमीयते प्रत्यक्षोच्छेदप्रसङ्गादित्यर्थः।

---

स्वगुणं प्रति समवायिकारणत्वादौपपत्तिकस्तावद्भिन्नकालोपलम्भोऽस्त्येव, तत्साक्षात्कारस्तु भिन्नयोरपि समानकालोत्पन्ननष्टयोरपि नास्त्येवेति व्यभिचारः भिन्नदेशानुपलम्भस्तन्मात्रगुणत्वेनैवोपपन्न इत्यर्थः। अनिर्लुठितेति। कुण्डे दधीतिवत् पृथक्त्वेन सम्बन्धिनोरप्रतीत्येत्यर्थः। अन्यथासिद्धिमभिधाय व्यभिचारमाह। न चेति। विशिष्टप्रतिपत्तिः-सम्बन्धविशिष्टबुद्धिरित्यर्थः। ननु सम्बन्धबुद्ध्या सम्बन्धोऽनुमीयते न तु प्रत्यक्ष इति किं तदर्थं विशेषणतया प्रत्यासत्त्येत्यत आह। न च बुद्ध्येति। सम्बन्धप्रत्यक्षे विशेषणतया सम्बन्धोभासते, यद्विषया या प्रत्यक्षबुद्धिः सैव तस्य प्रत्यक्षबुद्धिः, अन्यथा प्रत्यक्षं मानान्तरं न स्यादित्यर्थः। ननु समवाये सम्बन्धान्तरसत्वेऽपि न तत्प्रत्यक्षतायाः क्षतिरिति कुतस्तत्र तन्निराक्रियत इत्यत आह। योऽहीति। समवायसाधकं लिङ्गं विशिष्टबुद्धित्व

---

(१) न ह्यदृश्यमाने—पा० १ पु०।

(योहि) विशेषणविशेष्यभावः सर्वः सम्बन्धान्तरपूर्वक इति व्याप्तिरिहैव भज्यत इति परेणापि स्वीकरणीय-मेव। न ह्यसौ समवायमभावं वाऽभ्युपगच्छन् विशे-षणतामस्य न स्वीकरोति। अन्यथा समवायाभाव-विशिष्टप्रतीतिमेव न स्वीकुर्यात्। किन्तु सम्बन्धान्तर-रहितो विशेषणविशेष्यभावः प्रत्यक्षाङ्गं न भवतीति कदाचिद्ब्रूयादतस्तत्समानन्यायेन निवारयति। तत्किम-चेति। [७१९] यथा विनैव सम्बन्धान्तरेण तद्विशिष्ट-प्रतिपत्तिः तथा तस्या एवैन्द्रियकत्वनान्तरीयकः साक्षात्कारः प्रतीयते, विपक्षे त्वनवस्थालक्षणस्तर्कः समान इत्यर्थः॥

न च गुणकर्मसामान्येष्वपि विशेषणत्वमात्रेणैव

---

समवायाभावविशिष्टबुद्धावेव व्यभिचारीति न तत्राऽनुमानसम्भव इत्यर्थः।

अनवस्थालक्षणमिति। यद्यपि समवायस्य समवायवत्त्वेऽपि समवायद्वयसिद्धौ नानवस्था, नापि समवायो यदि समवेतः स्यादिति तदर्थः विपर्यये साधनावच्छिन्नसाध्यव्यापकस्याभावल-स्योपाधित्वात्, तथापि समवायो यदि सामान्यविशेषान्यत्वे सति समवायवान् स्यात् संयोगः स्यादिति समवायाद्यन्यत्रैवानवस्थेति

ग्रहणमस्तु, एतत्तु समवायादिनेति वाच्यम्। शब्दस्य स्वाश्रयाविशेषणस्यापि समवायेन ग्रहणात्।

सोऽपि तृतीयोऽस्त्विति चेत्? न, गन्धरसयोरतथा-भूतयोरपि संयुक्तसमवायेन ग्रहणात्। सोऽपि चतुर्थो-ऽस्त्विति चेत्? न, शब्दरूपत्वयोरपि प्रतीयमानत्वात्। विशेषणभावेनैवेति चेत्? न, द्रव्यगुणकर्मसामान्यानां सम्बन्धाभावे विशेषणभावस्यैवानुपपत्तेः, सम्बन्धश्च प्रसाधितः, अतो न समवायाभाववत् प्रत्यक्ष-बाधोनाप्यनवस्था, सम्बन्धान्तरनिरपेक्षसम्बन्ध एव विश्रान्तेरिति

---

शब्दस्येति। अप्रत्यक्षतापत्ते शब्दाभावस्य इन्द्रियविशेषणतायाः प्रत्यासत्तेरभावात् स्वाश्रयाविशेषणतैव प्रत्यासत्तिरित्युपगम्यैतदुक्तम्। तृतीयः--संयोगविशेषणतयोरपेक्षया।

द्रव्यगुणेति। ननु यद्यपीन्द्रियविशेषणतायामिन्द्रियसम्बद्ध-विशेषणतायां च समवायसंयुक्तसमवायादिरूपजीव्यैर्विना तयोर-भावात्। तथापि विशेषणतास्वरूपे तेषामुपजीव्यत्वं, न तु तस्याः प्रत्यासत्तित्वे, तैर्विनापि समवायाभावयोर्विशेषणतासत्त्वात् तत्सत्त्वेऽपि समवाये विशेषणताया एव कॢप्तत्वात् प्रत्यासत्तित्वौ-चित्यात्। मैवम्। शब्दादीनां प्रत्यक्षत्वेनेन्द्रियसम्बन्धानुमितौ

[illegible] of those works marked with an asterisk * cannot be supplied [illegible] of the Fasciculi being out of stock.

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

[illegible]vaidyaka, Fasc. 1–5 @ -/10/- each
Advaitachintā Kaustubha, Fasc. 1–3 @ -/10/- each
*Agni Purana (Text), Fasc. 4–14 @ -/10/- each
*Aitareya Āranyaka of Rig-Veda (Text), 2–4 @ -/10/- each
Aitarēya Brāhmana, Vol. I, Fasc. 1–5; Vol. II, Fasc. 1–5; Vol. III, Fasc. 1–5, Vol. IV. Fasc. 1–8 @ -/10/- each
Aitareyalocana
Amarakosha, Fasc. 1–2
*Anu Bhāsyam (Text), Fasc. 2–5 @ -/10/- each
Anumāna Didhiti Prasarini, Fasc. 1–3 @ -/10/- each
*Aphorisms of Sandilya (English), Fasc. 1 @ 1/-
Astasāhasrikā Prajñāpāramitā, Fasc. 1–6 @ -/10/- each
*Atharvana Upanishads (Text), Fasc. 2–5 @ -/10/- each
Ātmatattvaviveka, Fasc. 1–3
Avadāna Kalpalatā (Sans. and Tibetan), Vol. I, Fasc. 1–13, Vol. II, Fasc. 1–11 @ 1/- each
Bālam Bhatti, Vol. I, Fasc. 1–2, Vol. II, Fasc. 1 @ -/10/- each
Bauddhastotrasangraha
Baudhāyana Śrauta Sūtra, Fasc. 1–3; Vol. II, Fasc. 1–5; Vol. III, Fasc. 1–2 @ -/10/- each
Bhāmati (Text), Fasc. 5–8 @ -/10/- each
Bhasavritty
Bhātta Dipikā, Vol. I, Fasc. 1–6; Vol. II, Fasc. 1–2 @ -/10/- each
Bodhicaryāvatāra of Çāntideva, Fasc. 1–7 @ -10- each
Brahma Sutras (English), Fasc. 1 @ 1/-
Brhaddevatā, Fasc. 1–4 @ -/10/- each
Brhaddharma Purāna, Fasc. 1–6 @ -/10/- each
[illegible], Fasc. 1–2 @ -/10/- each
Catalogue of Sanskrit Books and MSS., Fasc. 1–4 @ 2/- each
[illegible] Brāhmana, Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–5; Vol. III, Fasc. 1–7; Vol. V, Fasc. 1–4 @ -/10/- each
Ditto Vol. [illegible], Fasc. 1–3 @ 1/4/- each
Ditto Vol. [illegible], Fasc. 1–5 @ -/10/-
Ditto Vol. [illegible], Fasc. 1–2
[illegible]prajñāpāramitā, Part I, Fasc. 1–18, Part II, Fasc. [illegible]
[illegible] Vol. II, Fasc. 4–25; Vol. III, Part [illegible] Part II, Fasc. 1–10; Vol. IV, Fasc. 1–6 @ -/10/- [illegible]
[illegible] Vol. IV, Fasc. [illegible] @ 1/4/- each

BIBLIOTHECA INDICA:

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL

NEW SERIES, No. 1432.






# न्यायवार्त्तिकतात्पर्य्यपरिशुद्धिः

श्रीमदुदयनाचार्य्यविरचिता

श्रीवर्धमानोपाध्यायविरचित-न्यायनिबन्धप्रकाशाभिध-व्याख्यासहिता ।

# NYĀYA-VĀRTTIKA-TĀTPARYA-PARISUDDHI

BY

UDAYANACHARYA

*With a gloss called Nyāya-nibandha-Prakāśa by Varddhamānopādhya*

EDITED BY

MAHAMAHOPADHYAYA PANDIT VINDHYESVARÍ PRASAD DVIVEDIN,

*Librarian, Govt. Sanskrit College, Benares.*

AND

MAHAMAHOPADHYAYA PANDIT LAKSHAMANA SASTRI DRAVIDA,

*Professor, Govt. Sanskrit College, Calcutta.*

FASCICULUS VI.

---

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

समवायादिकं प्रतीत्यैव विशेषणत्वग्रहात् प्रथमोपस्थितत्वेन समवायादेरेव विषयत्वात्, न विशेषणतायाः, चरमोपस्थितत्वादिति भावः।

अत इति। समवायेऽभावे च समवेतत्वाभावोऽध्यक्षेण परिच्छिद्यते समवायेऽनवस्था चेत्यर्थः। न चाभावग्रहे नेन्द्रियसम्बद्धविशेषणता प्रत्यासत्तिः तत्सत्त्वेऽपि चक्षुःसंयुक्तपृथिवीपरमाणौ जलत्वादेरभावाग्रहात्, किन्तु स्वग्राह्यसम्बद्धविशेषणता, महति वायावुद्भूतरूपाभावस्य च योग्याऽनुपलब्ध्याऽनुमितिरिति वाच्यम्। लाघवादिन्द्रियसम्बद्धविशेषणतायाः प्रत्यासत्तित्वात्। यच्च यत्सत्त्वमनुपलब्धिविरोधि तत्र तस्याभाव इन्द्रियप्रत्यासत्त्या गृह्यते, पृथिवीपरमाणौ जलत्वादिसत्त्वं नानुपलब्धिविरोधि इति न तदभावग्रहः, महति च वायावुद्भूतरूपसत्त्वमनुपलब्धिविरोध्येवेति तदभावश्चक्षुर्ग्राह्य एवेति। न चाभावे समवाय एव प्रत्यासत्तिस्तत्साधकविशिष्टप्रतीतेरविशेषात्। न च समवेतत्वेनाभावस्य [illegible]भावत्वापत्तिः, भावस्य तत्त्वे अभावत्वापत्तिरिति वैपरीत्यापत्तेः, [illegible]गभावप्रध्वंसौ प्रतियोग्याश्रयसमवेतौ प्रतियोग्याश्रयनाशजन्यस्य [illegible]:काले समवैति तत्रैव निरूपणात्। न चैवमत्यन्ताभावस्य [illegible]त्वेऽनेकसमवेतत्वाज्जातित्वापत्तिः द्रव्यत्वादिना परापरभावानुपपत्तेः। मैवम्। समवायिनाशे ध्वंसनाशापत्तौ घटोन्मज्जनप्रसङ्गात्। न च नाश्यत्वे भावत्वं तन्त्रम्, प्रागभावे तदभावात्। असमवेतत्वे ध्वंसस्य जन्यत्वेऽपि न नाशः आश्रयनाशादेरभावादिति भावः।

स्यादेतत्—भूतलमेव घटाभावस्तच्च संयोगादिनैव प्रतीयते, अतः किं तदर्थेन विशेषणभावेनेत्यत आह। न चेति। [७१।९] सत्यपि घटादौ भूतलस्य भावात्। [७१।१४] भूतलव्यवहारवत् घटाभावव्यवहारप्रसङ्गादिति शेषः।

न च कैवल्यमिति। [७१।१५] कैवल्यं भूतलधर्मो घटाद्यविरोधी यद्युच्येत? घटादिना सह संभवेत् तथा च दोषस्तदवस्थ एव। विरोधीति चेत्? स तावन्नोभयवादिसिद्धद्रव्यादिष्वन्यतमः तेषां घटेन सह सम्भवात्। अभावव्यवहारकालेऽपि च केषाञ्चिदसम्भवात्। भूतलधर्माणां च तेषां घटेनाविनाशादनाहतेश्च, तदतिरिक्तं तु दशमं द्रव्यम्, पञ्चविंशतितमो गुणः, षष्ठं वा कर्म,

---

यदिन्द्रियसंयुक्तमिति टीकायां यदिन्द्रियसंयुक्तं यच्चेन्द्रियसमवेतं तस्य संयुक्तस्येन्द्रियसमवेतस्य वा विशेषणभावेनेन्द्रियप्रत्यासत्त्या ग्रहणमिति सम्बन्धः। किं तदित्यपेक्षायामुक्तं यथेति।

अभावस्य भूतलानतिरेके यत्प्रकृते दूषणं तदाह। स्यादेतदिति। प्रमेयत्वं भावत्वव्याप्यं न वेति संशयः। ननु सत्यपि घटे भूतलसत्त्वं परः स्वीकरोत्येवेति तं प्रति न किञ्चिदनिष्टमुक्तमित्यत आह। भूतलेति। कैवल्यं न भूतलस्वरूपमेव, पौनरुक्त्यापातादितिस्थिते सत्याह। भूतलधर्माणां चेति। सामान्यविशेषेति।

सामान्यविशेषसमवाया न सम्भवन्त्येव, तस्य द्रव्याद्यन्य-(तर)तमत्वेन तदविनाभाविधर्मापत्तेः अनापत्तौ वा तत्त्वानुपपत्तेः ॥

स खल्वयं सप्तमः पदार्थो भवेत्? तथाऽप्यसौ भावनिषेधाकारो वा स्यात्? अन्यथा वा? न तावदन्यथा, तथा सत्यविरोधित्वप्रसङ्गात्। निषेधाकारोपि यद्यनुत्पन्नोऽपि न निवर्त्तेत? तदा घटादिव्यवहारः कदाचिदपि न स्यात्। उत्पन्नो वा यदि निवर्त्तेत? तदा विनष्टो घटः कदाचिदुपलभ्येत। अतः पदार्थानां सप्तमो निषेधरूपोऽनुत्पन्नप्रध्वंसी च उत्पन्नाविनाशी च

---

उत्पादविनाशशीलत्वादिति भावः। तस्येति। तस्य द्रव्यत्वे संयोगित्वाद्यापत्तेः गुणत्वे च कार्यत्वे च गुणाद्यनापत्तेरित्यर्थः॥

प्रागभावं ध्वंसं च साधयति। यद्यनुत्पन्न इति। यद्यपि अधिकरणतया यथोक्तो न तर्कः तथापि घटसमानकालत्वविरही प्रागभावो यदि घटसमानकालत्वयाऽभ्युपगम्यते तदा तव व्याघात इत्येवंपरोऽयं ग्रन्थः। तस्य फलमाह। तदा घटादीति। ध्वंसं साधयति। उत्पन्न इति। यदा ध्वंसनाशः तं कालं पक्षीकृत्य स कालो यदि प्रागभावविरही सन् घटध्वंसविरही स्यात् घटवान् स्यादित्यर्थः। नन्वतिरिक्ताभाववादिनाप्यभावः साश्रयो वाच्यः देशादिनियमेन व्यवहारात्, तथाच यादृशि भूतलेऽभावो वर्त्तते तत एवाभाव-

भूतलादिधर्मः कैवल्यमभाव इति एकोर्थ इति, तदिद-मुक्तं न घटाभावादन्यो [७।२।१५] घटाभाव एवेत्यर्थः ।

स्यादेतद्यद्यपि ज्ञेयरूपं तत्त्वान्तरं नास्ति, तथापि ज्ञानरूपं भविष्यति, विषयश्च तस्य दृश्ये प्रतियोगिनि भूतलमेवेत्यत आह । न चेति । [७।२।१९] यथा - - - - - । तथा भूतलज्ञानपक्षे घटवत् भूतलपक्षे घटवद्भूतल-ज्ञानेऽपि प्रसङ्ग इत्यर्थः ।

ननु दृश्ये प्रतियोगिनीत्युक्तं घटवद्भूतलज्ञाने तु घटो न दृश्यः किं तु दृश्यमान इत्यत आह । नहीति । नहि दर्शनानर्हो दृश्यत इत्यर्थः ।

दर्शनार्होहि घटस्तत्र यदि न नास्ति तदा भूतल-वदकामेनाप्युपलभ्येतैव, भूतलमपि वा नोपलभ्येत, तुल्ययोगक्षेमत्वात् । तस्माद्भूतलोपलब्धावपि तदनुप-लम्भस्तदभावमादायैवोपपद्यत इति ।

---

व्यवहृतिरस्तु, किं विरोधिना भूतलधर्मेण ? मैवम् । घटाश्रयस्येवा-भावाश्रयस्यापि तत्तद्विशेषरूपत्वात् । अन्यथा गोत्वादिकमपि न लौकिक्येत तदाश्रयविशेषादेव तद्व्यवहारसम्भवात् । अननुगतादनु-गतव्यवहारो न स्यादिति तुल्यम् । तस्मादबाधिता भूतले घटो नास्तीतिबुद्धिरेव बाधिकाऽभावे मानमिति भावः । ननु दृश्ये घटादौ यदि भूतलोपलम्भः कैवल्यं, न तर्हि भूतलधर्मः ? तद्धर्मस्य कैवल्यमित्यत आह । स्यादेतदिति ।

यद्यप्युपलभ्याऽभावमङ्गीकारयितुं शक्यते तर्कगत्या परः, तथापि स्ववचनविरोधमपश्यन्तं प्रति किं तेनापीत्याशयवानाह। दृश्येऽनुपलभ्यमान इति [७२।१७]।

अनुपलम्भो ह्युपलम्भाभावो वा स्यात्? दृश्ये स्मर्यमाणे भूतलोपलम्भ एव वा? घटोपलम्भे स्मर्यमाणे वा केवलात्मोपलम्भः? न तावत् द्वितीयतृतीयौ, स्मर्यमाणे दृश्यमाने घटे भूतलोपलम्भे सति घटवत्यपि प्रसङ्गस्य दुर्निवारत्वात्। तस्मादुपलम्भाभाव एवानुपलम्भ इति।

नन्वनेनैव सर्वव्यवहारोपपत्तौ किमुपलभ्याभावेनेत्यत आह। किमपराद्धमुपलभ्याभावेनेति [७२।१८]।

यथा ह्युपलम्भनिषेधकात्प्रमाणादुपलम्भाभावसिद्धिस्तथोपलभ्यनिषेधकात् प्रमाणादुपलभ्याभावसिद्धिरपि भवति। भवति हि घटं नोपलभ इति वत् घटो नास्तीति प्रतीतिः। न चैकविषयत्वमनयोः, निमी-

दृश्ये-दर्शनयोग्ये घटादावित्यर्थः। स्मर्य्यमाण इति द्वितीयपक्षदूषणम्। तथाहि-यत्र घटस्मरणानन्तरमेव इन्द्रियसन्निकर्षात् घटवद्भूतलबुद्धिस्तत्रघटाभावव्यवहारः स्यात्। दृश्यमान इति तृतीयपक्षदूषणम्। तथाहि-पूर्व्वं यद्घटोपलम्भोजातः तत्स्मरणमिदानीं घटवद्भूतलग्रहः केवलात्मोपलम्भस्य विद्यते। न चाभावव्यवहारः।

**लितनयनस्य त्वनुपलम्भाभावनिश्चय उपलभ्याभावे च सन्देहो जिज्ञासावत् कथं चिद्भूतलनिश्चयेऽपि, न चैकचैकदैतत्सम्भवतीत्याशयवानुपसंहरति। तस्मादिति। [७१।१८] असदिति [७१।१९] सन्निषेध इत्यर्थः।**

---

ननु चासदित्यत्र नञः पर्य्युदासलक्षणया भाव एवोच्यत इत्यत आह। सन्निषेध इति।

ननु घटवद्भूतलभिन्नं भूतलमभावव्यवहारहेतुः यत्र परेषामभावः, भेदश्च स्वरूपमेव, इदानीमिदं भूतलं घटवद्भूतलभ्भवतीतिप्रतीतेः, समानाधिकरणनिषेधबुद्धेः स्वरूपभेदविषयत्वात्। न च भूतलनिश्चये घटाभावसन्देहानुपपत्तिः, भूतले घटवद्भिन्नत्वस्य दोषादनिश्चयेन तदुपपत्तेः। नाप्यननुगतात्तदधिकरणस्वरूपादनुगताभावव्यवहारानुपपत्तिः, अभावेऽपि तुल्यत्वात् न ह्यभावत्वं जातिः, अन्योन्याभावव्यापकत्वात्। न भावविरोधित्वम्। विरोधस्याभावनिरूप्यत्वात्। नापि भावप्रतियोगित्वम्, प्रतियोगित्वस्याभावविरहरूपत्वात्, अतएव न सप्रतियोगिकत्वम्। सादृश्यादेव भावत्वापत्तेः। नाप्यन्यनिरूप्यत्वम्, ज्ञानेऽतिव्याप्तेः। नापि सत्ताशून्यत्वं, सत्तायामतिव्याप्तेः। एतेन सत्ताविरोधित्वमभावत्वम्, सामान्यादौ सत्तावगमेऽपि सा बाधात् त्यज्यते, अभावस्य सद्विरोधितयैव प्रतीतेरित्यपि निरस्तम्। सहानवस्थानरूपतया विरोधस्याऽऽत्माश्रयापत्तेः। एवं चेदभावस्वीकारेऽपि नानुगमस्तदा किमधिकेन?। यदा घटवद्भूतलबुद्धिभिन्ना भूतलबुद्धिरभाव-

व्यवहारहेतुः । न च घटवति भूतले दोषाद्घटवत्त्वाज्ञाने भूतलज्ञानमभावः स्यादिति वाच्यम् । घटवद्भूतलस्य ज्ञानाद्भिन्नस्य भूतलज्ञानस्याभावत्वात् तद्भूमाच्चाभावभ्रमोपपत्तेः । अभाववादिभिरप्यभावज्ञानहेतुत्वेन तादृशबुद्धेः प्रयोजकत्वाङ्गीकारात् । किं चान्योन्याभावेऽत्यन्ताभावे चाधिकरणद्वैरूप्याभावात् तयोरधिकरणातिरिक्तत्वे मानाभावः ।

अत्रोच्यते । अभावधीर्न भावविषया सप्रतियोगिकस्यैवाभावस्यानुभवात् । भूतलमात्रस्याननुभवात् । अधिकरणताज्ञानयोश्च निष्प्रतियोगिकत्वात् । न चाभावव्यवहारः प्रतियोगिज्ञानमपेक्षते नाभावज्ञानमितियुक्तम् । व्यवहारस्य व्यवहर्त्तव्यज्ञाने सत्यधिकानपेक्षत्वात् । न चाधिकसङ्ख्यावच्छिन्नहस्ताद्यवच्छेदः परिमाणस्य दीर्घत्वं तद्विपरीतञ्च ह्रस्वत्वं, तच्चावयविग्रहसमानकालमेवानुभूतं, दीर्घव्यवहारस्य ह्रस्वज्ञानमपेक्षते इति युक्तम् । दीर्घत्वह्रस्वत्वयोः परिमाणान्तरत्वात्, तयोश्चान्योन्यज्ञाननिरूप्यत्वात् । अपि च न भूतलं ज्ञानं वा अभावः, अभावभूतलयोराधाराधेयभावानुभवात् । न च घटवद्भूतलज्ञानभिन्नं भूतलज्ञानमभावः, तस्य भूतलाधारता स्वरूपसम्बन्धेनानुभूयत इति युक्तम्, ज्ञानस्याप्रतियोगिकत्वेनाभावत्वानुपपत्तेरुक्तत्वात् ।

अतएव यस्मिन्समयविशेषे यत्र भूतले ऽभावः परैः स्वीक्रियते तत्समयविशेषयोग एव भूतलस्य घटाभावः, एवं चाधाराधेयबुद्धिरुपपद्यते, समयविशेषयोगस्य भूतलवृत्तित्वादित्यपास्तम् । समयविशेषयोगस्य निष्प्रतियोगिकत्वात् ।

किञ्च समये न (अ) भावाश्रयत्वं विशेषः अभावस्वीकारापत्तेः। नापि तत्समयस्वरूपं तदानीमिदं भूतलमितिबुद्ध्यापत्तेः, विशेषणस्य स्वप्रकारकविशिष्टज्ञानजनकत्वात्, भूतले घटाभाव इति धियोऽनुपपत्तेः, घटाद्यपलापप्रसङ्गाच्च।" यादृशि 'संस्थानविशेषविशिष्टे कपाले घटोवर्त्तते तादृक्कपालादेरेव[१] तत्समयविशेषयोगे घटादिव्यवहारजनकत्वापत्तेः। न चाधिकाभावपक्षेऽपि भूतलेन सहाभावस्य सम्बन्धाभावात् भूतले घटाभाव इति धियोऽनुपपत्तिः, ज्ञानविषययोरिव सम्बन्धान्तरं विना विशिष्टप्रत्ययजननयोग्यत्वस्य स्वरूपसम्बन्धस्य सत्वात्। घटवद्भूतलचलरतदभावयोस्तु न कदापि विशिष्टबुद्धिरिति न तयोः स्वरूपसम्बन्धः। एवं चाभावप्रतीतेरतिरिक्ताभावविषयत्वसिद्धौ अन्योन्यात्यन्ताभावधियोरपि तद्विषयत्व सिद्धिः अधिकरणस्य निष्प्रयोगिकत्वात्। न चाननुगमः अनुगताभावत्वं विना घटादि न पट इति समानाधिकरणानुगत-निषेधव्यवहारोऽन्योन्याभावेनैकेन, घटादौ न गोत्वमित्यनुगत-व्यवहारोऽत्यन्ताभावेनैकेन, कपालेन घटो नष्ट इत्यनुगतव्यवहारो-घटध्वंसेनैकेन, घटानुत्पाददशायामेतेषु घटोनास्तीत्यनुगतव्यवहारः प्रागभावेनैकेन इत्यनुगताभावव्यवहाराश्चतसृभिरेवाभावव्यक्तिभिः क्रियन्तेऽस्माकमित्यतिरिक्ताभावव्यक्तिचतुष्टयसिद्धिः। अभावत्वं च भावत्वात्यन्ताभावत्वम्। अत्यन्ताभावस्याभावत्वाज्ञानेपि ज्ञात एवेत्यधिकरणस्वभावत्वेन सुगमोऽपि दोष इति सङ्क्षेपः।

(इति अभावसाधनम्।)

---

(१) कपालादिरेव इति १ पु० पा०।

स च योग्यानुपलब्धेरेव गम्यते अक्षव्यापारस्याधिकरणग्रहणोपक्षीणत्वादिति केचित्। तदनुपपन्नम्। अन्धस्यापि त्वगिन्द्रियोपनीते घटादौ रूपविशेषाभावप्रतीतिप्रसङ्गात्। अस्ति हि तस्याधिकरणस्य ग्रहणम्, अस्ति च प्रतियोगिस्मरणम्, अस्ति च नीलशुक्लत्वस्य (योग्यानुप)लब्धिश्चेति॥

स चेति। प्रामाणिकोऽप्यभावो न प्रत्यक्षगोचरः, किन्तु योग्यानुपलब्धेरिति किमिन्द्रियप्रत्यासत्त्या? क्रियया ह्ययोगव्यवच्छेदेन सम्बन्धि करणं, नतु तत्र व्यापारवत्त्वमपि तन्त्रं गौरवात्, इन्द्रियगम्यत्वेऽपि तस्य तदुपलम्भे तदभावग्रहात्तस्या आवश्यकत्वादित्यर्थः। ननु अभावधीरिन्द्रियजन्या तदन्वयव्यतिरेकित्वानुविधायित्वादित्यत आह। अक्षव्यापारस्येति। न चाऽधिकरणधीरिन्द्रियव्यापारो न तथा तदन्यथासिद्धमन्यथा सन्निकर्षोपक्षीणमिन्द्रियं हेतुरेव न स्यादिति वाच्यम्। चक्षुरादेः प्राप्यभावेन हेतुत्वासिद्धौ तद्व्यापारत्वासिद्धेः। अतएव स्वतन्त्रान्वयव्यतिरेकग्रहादुभयोरपि हेतुत्वम्, न त्वेकमेकेनान्यथासिद्धमिति निरस्तम्, इन्द्रियेण प्राप्यभावात् न च विशेषणता प्राप्तिः समवायानभ्युपगमेनान्यत्र तदनभ्युपगमात्। न चाऽभावस्येन्द्रियग्राह्यत्वसिद्धौ संयोगादिबाधेनैव तत्कल्पनम्। आश्रयग्रह एव तदुपक्षयात्तद्ग्राह्यत्वासिद्धेः। अन्यथा दुर्गन्धविधानान्नीरूपोऽपि वायुः प्रत्यक्ष

अधिकरणग्राहकेन्द्रियेण ग्राह्याभाववादिनोऽपि समानमेतदिति चेत्? न। प्रतियोगिग्राहकेणेन्द्रियेण तदभावो गृह्यते भावायत्तत्वात्तस्येति सिद्धान्तमर्मत्वात्। (ममापि) - - - तद्ग्राहकेणेन्द्रियेणाधिकरणग्रहणे स गृह्यत इति सिद्धान्तसारमिति चेत्। न। वायौ त्वगिन्द्रियोपनीते रूपाभावप्रतीत्यनुदयप्रसङ्गात्। न हि रूपग्राहकेण तत्राधिकरणमुपनीतम्। तत्रापि तावच्चक्षुरिन्द्रियं सम्बद्धमिति चेत्?। एवं तर्हि तस्य नाधि-

---

इति स्पर्शग्रहेण तदुपचयः स्यात्। तथा (च) (न) विशेषणताकल्पने सत्यभावः प्रत्यक्षसिद्धौ च तत्कल्पनमित्यन्योन्याश्रयः, सम्बन्धस्य सम्बन्धिभिन्नत्वनियमेन ग्राह्यस्वरूपस्याऽसम्बन्धत्वनिश्चयाच्च न तदात्मिका विशेषणता प्रत्यासत्तिः, अन्यथा रूपादिग्रहेऽपि तत एवास्त्विति षोढासम्बन्धवैफल्यापत्तिः। न चाभावधियश्चक्षुरजन्यत्वेन तदेकसहकार्य्यालोकापेक्षा न स्यादिति युक्तम्। आलोकस्य प्रतियोगिग्राहकत्वेन योग्यताघटकतयाऽन्यथासिद्धत्वादिति भावः। ममापीति। प्रतियोगिग्राहकेणेन्द्रियेणाश्रयग्रहे योग्यानुपलब्ध्या तदभावोऽगृह्यते। अन्यथा चक्षुःसंयुक्ते पृथिवीपरमाणौ जलत्वाभावधीप्रसङ्ग इति नोक्तधीः इत्यर्थः। वायाविति। वायोः प्रतियोगिग्राहकचक्षुरग्राह्यत्वादित्यर्थः।

ननु यथा तत्र नीरूपोवायुरितिधीर्वायुविशेष्यिकाऽऽनुमानिकी,

कारणग्रहणे व्यापारो, नापि प्रतियोगिस्मरणे, रूपाभावप्रतीत्या च नियमेनापेक्षत इत्यायातमनन्यथा-

---

विशेष्ययोग्यतामाश्रित्येन्द्रियाणां प्रवृत्तेः, तथा वायौ रूपाभाव इति वायुविशेषणिकापि बुद्धिरनुपलब्धिलिङ्गजन्यानुमितिरेव, तथाच या प्रतीतिः साक्षात्कारित्वेन त्वदभिमता तस्यामियं सामग्रीति नोक्तदोषः। न चाभावधियः साक्षात्कारित्वेन इन्द्रियजन्यत्वमनुमेयम्, स्मृतिवत्तस्याः परोक्षत्वात् तत्कारणेन्द्रियप्रत्यासत्तेर्निरस्तत्वात्। न चाज्ञातकरणकत्वात् तथा, कारणबाधाच्छब्दानुमित्योर्ज्ञातकरणकत्वाविशेषेऽपि यथा शब्दलिङ्गकरणभेदाद्वैजात्यं तथा त्वज्ञातकरणकत्वाविशेषेऽप्यनुपलब्धीन्द्रियकरणभेदादिहापि तदविरोधात्। नापि भावभूतकरणसहकृतस्यैव मनसोवाक्यानुभवहेतुत्वात्ानुपलब्धिस्तत्सहकारिणी, गौरवात्, अन्यथा लिङ्गाद्यपि न मानं स्यात् इन्द्रियसहकृतस्यैव मनसोवाक्यानुभावकत्वात्। अथाधिकरणाभावयोर्विशिष्टधीर्नेन्द्रियजन्या अभावबुद्धित्वात्, नानुपलब्धिजन्या भावबुद्धित्वात्, नोभयजन्या जातिसङ्करापत्तेरित्युभयग्राहकमिन्द्रियं वाच्यमिति चेत्। यथा घ्राणेन चन्दने सौरभमितिधीश्चक्षुरुपनीतचन्दनविशेषणिका सौरभविशेष्यिका जायते तद्दभाववद्भूतलमित्युपलब्ध्युपनीताभावविशिष्टबुद्धिविषये बुद्धिरिन्द्रियेण जन्यते। न चानुमानादौ प्रतियोगिग्राहकस्यैवाभावग्राहकत्वात् प्रतियोगिग्राहकेन्द्रियस्याप्यभावग्राहकत्वम्, भावग्राहकलिङ्गादेरेव तदभावाग्राहक-

सिद्धमैन्द्रियकत्वमभावस्येत्यन्यथासिद्धिप्रलापं[1] गजनि-मीलनेनावधीर्य सिद्धवदाह। इन्द्रियव्यापारे सति

त्वात्। न च तज्जातीयं तथा, उपमाने व्यभिचारात्। नाप्यभाव-ग्रहस्य दृष्टकरणकत्वादनुपलब्धेश्च स्वरूपतो दृष्टत्वाभावात् पित्ता-दिना दृष्टमिन्द्रियमेतद्धेतुरितिवाच्यम्। दोषसाहित्यमात्रस्य दृष्ट-त्वस्येन्द्रियादाविवानुपलब्धावविरोधात्।

अत्रोच्यते। वायौ रूपाभावधीर्नानुपलब्धिलिङ्गजन्या अनुप-लब्धेरज्ञानात्। आप्तवाक्यस्येव तद्बोधकस्याभावात्। न चाज्ञाते-वोपलब्धेरनुपलब्धिस्तद्बोधिका, तथोपलब्धेरतीन्द्रियत्वेन योग्यानुप-लब्ध्योपलब्ध्यभावस्य ग्रहीतुमशक्यत्वात् अनुपलब्धिमात्रस्य चाभाव-ग्राहकत्वात्। उपलब्धेर्योग्यत्वेऽपि घटाभावबद्धूतलमित्यपि धीः साक्षात्कारित्वाभिमता योग्यानुपलब्धेर्लिङ्गादेवास्तु किमनुपलब्ध्या मानान्तरेण। अथ लिङ्गज्ञानाभावेऽपि घटाभावबुद्धेरनुभवादज्ञात करणिकैव सा? तर्हि वायौ रूपाभाव इति धीरप्यस्तु तथा। अपि च घटवत्युपलब्धिप्राक्कालेऽनुपलब्ध्या घटस्मृतिमतः कुतो नाभावधीः। घटाभावाभावात् घटस्य प्रतिबन्धकत्वादेति चेत्? हन्तैवमभाव-धियोऽर्थजन्यत्वात् साक्षात्कारित्वसिद्धौ इन्द्रियजन्यत्वमेव, इन्द्रियं च नाप्राप्तग्राहकमिति तत्प्राप्तिरपि विशेषणताख्या कल्प्येति योग्या-नुपलब्धिरिन्द्रियसहकारिणी, न तु करणान्तरम्, योग्यता च न प्रतियोगितद्व्याप्येतरयावत्प्रतियोग्युपलम्भकसमवधानम्, अन्यतरा-

(१) सिद्धत्व प्रलापं—पा० ३ पु०।

तत्प्रत्ययादिति। [७१।१९] आन्तरालिकमेव व्यापारं व्यवधायकमिति भ्रान्तमुद्बोधयन्नाह। न च प्रतियोगीति। [७१।२०]

प्रतियोगिस्मरणमित्यत्र वाक्छलवादिनमुत्थाप्य बोधयति। न च शब्दस्मरणादीनामिति [७१।२३]।

अभावज्ञानोत्पत्ताविन्द्रियार्थसन्निकर्षो न कारणं व्यभिचारादिति वादिनमुत्थापयति। नन्विति [७१।२४]।

---

अयनाशजन्यसंयोगध्वंसस्याप्रत्यक्षत्वापत्तेः प्रतियोग्युपलम्भकस्यान्यतराश्रयस्याभावात्। किन्तु प्रतियोगिसत्त्वविरोधी योऽनुपलम्भः सैव योग्यानुपलब्धिः। अतएव जलपरमाणौ गन्धाभावो न प्रत्यक्षः प्रत्यक्षस्य महति वायौ रूपाभाव इति सङ्क्षेपः।

न(नु) स्वप्रतियोगिस्मरणकालेन्द्रियसन्निकर्षसत्त्वात्तस्य तद्व्यापारव्यवधानशङ्का नोदेतीत्यत आह। आन्तरालिकमेवेति। व्यवधायकसाधर्म्यमान्तरालिकत्वमात्रं भ्रमबीजमित्यर्थः॥

प्रतियोगि च तत् स्मरणं चेति प्रतियोगिस्मरणं-विरोधिस्मरणं सिद्धान्तिनोक्तमित्यारोप्य विरोधिस्मरणं व्यवधायकमेव, सविकल्पके तु शब्दस्मरणमनु(योग्यत्वनु)कूलत्वविरोधीति तत्र व्यवधायकमिति वाक्छलवादिनमुत्थाप्य बोधयतीत्याह। प्रतियोगीति। अर्थान्तरमाशङ्क्याह। अभावज्ञानेति। तत्रेन्द्रियव्यापारं विनैवानुपलब्धेरभावज्ञानादन्यत्रापि सैव हेतुः क्लृप्तत्वादिति भावः। ननु प्रत्यक्षाभावमात्रेण न मतान्तरसिद्धिरनुमानादेरपि सम्भवा-

तदियमिति [७१।२]। प्रमाणान्तरन्तु तेन सम्भवती-त्यभिमानः परस्येत्यर्थः ॥

सेयमनुपलब्धिः सत्तामात्रेणाभावं गमयेत्? ज्ञाने-नेन वा? न तावदाद्यः—तदानीं गेहस्य विप्रकृष्टस्य व्यवहितत्वेन योग्यानुपलब्धेरसत्त्वात्। न द्वितीयः—अनवस्थाप्रसङ्गात्, अनुपलब्धेरप्यभावरूपत्वेनानुप[1]-लब्ध्यन्तरसाधनीयत्वात् ॥

योग्यस्य, स्मरणाभावस्तावदस्तीति चेत्? न अभावे विपर्ययसंशयाभावप्रसङ्गात्। भवति हि कदाचित्प्रति-योग्यधिकरणयोः स्मरणेऽप्यसतोऽपि सद्भावप्रतीतिः सतोऽभावप्रतीतिः। कथमन्यथा नास्तीत्युक्त्वा झटिति संजातबाधः प्राह—नहि नहि भ्रान्तोऽस्मि, दृष्ट एवासौ तत्र मयेति, अस्तीति प्रथममुक्त्वा पश्चान्नास्तीति

---

दित्यत आह। प्रमाणान्तरमिति। अनवस्थेति। उपलब्धेर-तीन्द्रियतया न योग्यानुपलब्ध्या तदभावो गृह्यते, किन्तु लिङ्गत्वेनानुपलब्ध्या ग्राह्यः, लिङ्गं च ज्ञातमेव, तज्ज्ञानमपि तथैव तया जननीयमित्यनवस्थेत्यर्थः। गेहस्य योग्यमैत्रवत्तया स्मरणार्ह-त्वात्स्मरणमज्ञातमेव गेहे मैत्राभावग्राहकमस्त्वित्याह। योग्य-स्येति। अभाव इति। स्वरूपसतः स्मरणाऽभावस्याभावप्रमापक-

---

(१) नापि तृतीयः— पा० ३ पु०।

किमासीन्नवेति नावधारयामीति चेति। न हि प्रतियोगिनमधिकरणं चानुपलब्धमेवान्यथाकारं स्मरति। न च स्वरससिद्धस्य स्मरणस्यानुपलभ्यमानस्यैव विपर्ययः[१] सम्भवति। इयती च सामग्री यदुत प्रतियोग्यधिकरणस्मरणं तत्रास्मरणं चेति। न वा साधारणं प्रमाकरणमदूषयन्त एव दोषा विपर्ययहेतवः, सर्वेषामनाश्वासप्रसङ्गात्। त्वयाप्येतत्समर्थनीयमिति चेत्? न, योग्यास्मरणस्य मया लिङ्गत्वेनेष्टत्वात्। लिङ्गविपर्ययसंशयाभ्यां च तल्लैङ्गिकसंशयविपर्ययोः[२] सुलभत्वात्। यदा तु सुनिपुणेनैकज्ञानग्रहणयोग्यस्य चैत्रस्य गेहस्मरणेऽप्यस्मरणलक्षणं लिङ्गमवधार्यते तदा लिङ्गिप्रतीतिरविपरीता भवत्येव। अत एव क्षणं ध्यात्वेत्याह।

---

लादित्यर्थः। नहीति। अतो न प्रतियोग्यधिकरणस्मरणमेव भ्रम इत्यर्थः। न चेति। स्वरूपसतामेव दोषाणां प्रमाप्रतिबन्धकत्वादित्यमेव करणानां दुष्टता, न हि दूरत्वादिना चक्षुषः किञ्चिदपक्रियते। स्वरूपसतामेव दोषाणां प्रमाप्रतिबन्धकत्वमत्रापि तुल्यमिति वाच्यम्। मनसा ज्ञाताद्योग्यास्मरणाल्लिङ्गात्प्रमाणत्वेन क्लृप्तात्तदभावबुद्ध्युपपत्तावनुपलब्धेर्मानान्तरत्वे गौरवादिति भावः।

(१) विपर्यासः— पा० ३ पु०।

(२) विपर्यास संशययोः— पा० ३ पु०।

**अन्यथा ध्यानमनुपपन्नम्। असमरणमात्रस्य हि व्यभिचारमुपलभ्य तदनादृत्य विशिष्टासमरणं ज्ञातुकामस्य प्रणिधानमुप —— स्यालिङ्गत्वेनैवास्मरणमुपयुज्यते। किन्तु तदपि कथं ज्ञातव्यमित्यवशिष्यते, तत्राह। नैतदिति** [७१।५]।

**व्यधिकरणतां परिहर्तुं प्रयोगं दर्शयति। तथाहीति** [७१।७]।

---

अन्यथेति। स्वरूपसत एवास्मरणस्य करणत्वपक्ष इत्यर्थः। विशिष्टेति। यादृशस्मरणमव्यभिचारीत्यर्थः। किन्त्विति। योग्यास्मरणं न मनोग्राह्यं प्रत्यासत्त्यभावात् ज्ञानस्यातीन्द्रियत्वादित्यर्थः। नैतदिति। वायौ रूपाभावबुद्धेरलैङ्गिकत्वेनेन्द्रियानुविधानात्तज्जन्यत्वे सिद्धे सम्बद्धविशेषणतायाः प्रत्यासत्तित्वकल्पनात्। ज्ञानं च प्रत्यक्षम्। अन्यथा ज्ञानासिद्धेस्तद्धेतुन एवावश्यकत्वाद्व्यवहारादिसिद्धेः जानामीत्यनुभवस्य लिङ्गाद्यजन्यत्वात् ज्ञाततायाश्च निरस्तत्वादिति भावः।

व्यधिकरणतामिति। असमरणस्यात्मवृत्तित्वेन गेहावृत्तेरित्यर्थः। यद्यपि यावदनुभूतन्तावदेकज्ञानग्रहणयोग्यमपि स्मर्यते एवेति न नियमः मैत्रस्य तद्गेहसत्वेऽप्यननुभवात्, संस्कारानुत्पादात्। तदनुद्बोधात्तन्नाशाद्वा तदस्मरणस्योपपत्तेः, तथापि कश्चिद्विषयविशेष एव तादृशो योगेहादिनिष्ठतयाऽनुभूयत एव, स च न नश्यति, नापि तत्रोद्बोधकान्तरापेक्षा, विलक्षणविषयविशेषमाहात्म्यात्, यथा विश्वनाथायतने विश्वनाथमनुभवतः। प्रयोगस्तु तद्गेहं तदा

न साध्यावच्छेदकयोर्वैयधिकरण्यं दोषो, विशेषण एव तन्नियमात्। अत्र तूपलक्षणत्वात्। वैयधिकरण्ये ऽप्युपलक्षणत्वाविरोधात् तावन्मात्रेणैवोपयोगात्। उपलक्षितं तु साध्यसमाना---त्वपादविहारस्य अचलचक्षुष इत्यादि व्यधिकरणमेव दर्शयतिस्म वार्त्तिककारः, टीकाकारोऽपि तथाऽनुमेने यतो नान्यथा कृतवान्, परैरपि यद्यदा य---कृतमेवैतत् तत्कस्य हेतोः? तथैव प्रतिबन्धसिद्धेः।

---

मैत्राभाववत् तत्तुल्यपरिमाणादिस्मरणे तद्वत्तया अस्मर्य्यमाणत्वात् यदेवं तदेवम्, यथा घटाभाववद्भूतलमिति। यत्र सामान्याभावेन लिङ्गेन विशेषाभावानुमानं तत्र विशेषाऽभाववद्ज्ञानमनया रीत्येति तत्परोऽयं ग्रन्थ इत्यप्याहुः।

यथाश्रुतवैयधिकरण्यमुपपादयति। नचेति। यदाऽन्यत्र साध्यसाधनयोः समानकालयोरेव गमकत्वादत्र कथं तदानीन्तनतदभाववत्वेदानीन्तनास्मरणयोर्गम्यगमकत्वं वैयधिकरण्यादित्याशङ्क्य समाधत्ते। न चेति। विशेषण एवेति। विशेषणं परं समानाधिकरणमुपलक्षणं तु व्यधिकरणमपि भवत्येव, तस्यापि व्यावर्त्तकत्वेनात्रोपयोगादित्यर्थः। उपलक्षितञ्चेति। साध्यसाधनयोरसमानकालत्वेपि साधनस्य साध्यसामानाधिकरण्यमस्त्येवेत्यर्थः। अत एवेति। इदानीन्तनतत्प्रत्ययविषयत्वेन हेतुना पूर्व्वकालीनसूर्य्य-

(ग) इत्यनुमानं साध्यसाधनयोः सामानाधिकरण्यादृष्टमित्यर्थः।

नन्विन्द्रियार्थसन्निकर्षव्यभिचारस्तदवस्थ इत्याह। न च यदिति। [७३।९] साक्षात्कारिणी हि प्रतीतिरस्मदादीनामिन्द्रियार्थसन्निकर्षं न व्यभिचरति, इयं त्वानुमानिकी परोक्षा[1]। तस्मान्न क्वचिद्व्यभिचारशङ्का। यद्य(प्य)नुमानगम्योऽभावः कथं प्रत्यक्षस्य तत्र प्रवृत्तिः अनयोरसङ्कीर्णविषयत्वादिति कदाचिद्ब्रूयात्, तच्च संप्लवव्यवस्थापनेनैव परास्तमित्यर्थः[2]।

'न तर्हि' इत्यादि भाष्येण 'कः सूत्रावयवो व्याख्यात इति शङ्कामपनयन्नेव वार्त्तिकमवतारयति। सम्प्रतीति। [७३।१७]

ननु लक्षणं तथाप्यदुष्टमित्यत आह। प्रत्यक्षकारणेति। [७३।१८] कारणावधारणाभिमानिनः चोद्य-

परैरपीति। यद्यदा यज्जननसमर्थं तत्तदैव न तत्करोति क्षणिकलपक्षे कार्यस्य कारणसमानकालत्वादिति पूर्वकालवृत्तिसामर्थ्यमुत्तरकालकार्यकरणे हेतुरित्यर्थः।

अप्रसक्तनिषेधभ्रमनिरासायाह। नन्विति। इन्द्रियार्थसन्निकर्षव्यभिचारः पूर्वोक्त एतावतापि न समाहित इति तदर्थिकेयं टीकेत्यर्थः। तदेव स्फुटयति। साक्षात्कारिणीति। नन्वेतावतैव व्यभिचारे निरस्ते संप्लवव्यवस्थापनं क्वोपयुज्यत इत्यत आह। यद्यनुमानेति।

(अनुपलब्धेः प्रमाणान्तरत्वखण्डनम्।)

कारणेति। यावत्प्रत्यक्षकारणाभिधानप्रवृत्तः सूत्रकार इत्यभि-

(१) परोक्षवती ३ पु० पा०।

(२) व्यवस्थापनयैव समाहितमित्यर्थः— पा० ३ पु०।

मित्यर्थः। विषयसंयोगि चक्षुरालोकश्चेति वदता विषयसंयोगेनैवालोकव्यापारो न त्वगिन्द्रियाधिष्ठानसंयोगेनेत्युक्तम्।

एतच्चान्धकारमध्यस्थस्यालोक[1]मध्यवर्त्तिविषयोपलब्धेरालोकमध्यवर्त्तिनापि चान्धकारमध्यस्थानुपलब्धे-

---

मानिनः पूर्व्वपच इत्यर्थः। एतच्चेति। इन्द्रियाधिष्ठानगोलकासंयुक्तेनापि विषयसंयुक्तेनालोकेन चाक्षुषज्ञानोदयाद्वैपरीत्ये च तदभावादित्यर्थः।

नन्वेवं परभागावच्छेदेनालोकसंयुक्तोऽपि घट उपलभ्येत। अथाभिमुखावयवावच्छेदेन घटालोकसंयोगः कारणं? तर्ह्यभिमुखावयवावच्छेदेन चक्षुरालोकसंयोगो हेतुरस्तु। यदि चालोकसंयोगावच्छिन्ने चक्षुःसंयोगस्तथा, समानदेशताविरोधश्च निबिडयोरेव मूर्त्तयोरन्यथा पटमहारजनयोर्घटोदकयोश्चाग्रहः स्यात्, तर्हि घटसंयोगावच्छेदेन चक्षुरालोकसंयोगः कारणमस्तु। नैवम्। अन्वयव्यतिरेकाभ्यां विषयालोकसंयोगस्य हेतुत्वे निश्चिते तेनैवोपपत्तौ चक्षुरालोकसंयोगस्य कारणत्वे गौरवात्। न चाभिमुखावयवावच्छेदेन विषयालोकसंयोगस्य कारणत्वे तादृशावयवसंयोग एव हेतुरस्त्वावश्यकत्वादिति वाच्यम्। अवयवसंयोगमात्रस्यातिप्रसक्तेः। स्वावयवसंयोगापेक्षया स्वसंयोगस्यैव लाघवेन कारणत्वावधारणादितिभावः।

---

(१) एतच्चान्धकारमध्यवर्तिनाप्यालोक— पा० १ पु०।

ह्मेयम्। ननु महत्त्वानेकद्रव्यवत्त्वयोः परस्पराविनाभूतयोरग्रहमाणविशेषत्वेनोभयोरपि चाक्षुषत्वं प्रति कारणत्वात् समुच्चय एव, विशेषे वा एकस्यैव कारणत्वं, कुतो विकल्पः, परस्परव्यभिचारिणो ह्यर्थक्रियायां विकल्पसम्भवो नत्विमे तथा, तस्माच्चाक्षुषद्रव्यलक्षणे कर्तव्येऽनयोर्विकल्पेनोपन्यासः कर्त्तव्यः। उभयोपादाने वाऽसमर्थविशेषणं लक्षणं भवेदित्यर्थः। अत एवाग्रे सत्यप्येवंलक्षणकत्व इत्याह। उक्तसामग्रीसत्त्वेऽपि चक्षुरवयविनो न प्रत्यक्षता। अत उक्तं वार्त्तिककृतोपलब्धिफलः संस्कार इति। स च दुर्निरूपः, तथाहि

---

आत्मीयेनेतिटीका। तत्र मानं चक्षूरूपसाक्षात्कारहेतुरूपवत् रूपसाक्षात्कारहेतुतेजस्त्वादालोकवदित्यनुमानम्। उद्भूतरूपवत्त्वं च नोपाधिः तुल्ययोगक्षेमत्वात्। नन्विति। तथा चान्वयव्यतिरेकतुल्यतया विनिगमकाभावात् द्रव्यचाक्षुषत्वे द्वयोरपि हेतुत्वं युक्तमिति वार्त्तिकोक्तसमुच्चये विकल्पो न युक्त इत्यर्थः। विशेषेति। विनिगमनायां वेत्यर्थः। विकल्पमुपपादयति। तस्मादिति०। ननु कारणाभिधानप्रस्तावे लक्षणाभिधानमर्थान्तरमित्यत आह। अत एवेति। प्रासङ्गिकलक्षणाभिधाने नार्थान्तरमिति भावः।

ननु यद्युद्भूतरूपवत्त्वमहत्त्वे बहिर्द्रव्यप्रत्यक्षतायां स्वरूपयोग्यता तदा दण्डत्ववत्त्वयोः कारणता न स्यात्। नैवम्। तदुत्कर्षाप्रत्य-

गुणिधर्मो वाऽसौ स्यात्? गुणधर्मो वा स्यात्? तत्र गुणिधर्मत्वे तद्बलेन रूपस्पर्शयोरविशेषेण ग्रहणं, न तु क्वचिद्ग्रहणमग्रहणं च क्वचिदिति। तदेकार्थसमवेतयोर्ग्रहणमेवेति चेत्। न। निशि निदाघसमये तेजःस्पर्शग्रहेऽपि रूपाऽग्रहात्। चन्द्रातपरूपग्रहेऽपि स्पर्शाग्रहात्। गुणधर्मस्त्वनित्यो न भवत्येव, नित्यस्तु सामान्यरूपो न संस्कारशब्दवाच्यो नाप्युपलब्धिफलः, तस्य स्वोपलब्धेरन्यत्रानिमित्तत्वा-

---

चोत्कर्षेण तयोः कारणत्वात्। न ह्यकारणोत्कर्षमकार्य्यमनुविधत्ते। दण्डत्वे तु नैवम्, प्रकारभेदेनोभयरूपवत्त्वाच्च चाक्षुषद्रव्यज्ञाने विषयतया तयोः कारणत्वात्। द्रव्येऽनुगताननतिप्रसक्तत्वेन कारणतावच्छेदकत्वात्। गुणिधर्मत्व इति। द्रव्यस्योद्भवत्वधर्मकत्वे द्रव्यस्यैव ग्रहणं स्यादन्योद्भवत्वादन्यग्रहणे प्रसङ्ग इति रूपादीनामग्रहप्रसङ्ग इत्यर्थः। उद्भवत्वसामानाधिकरण्यमेव नियामकमित्याह। तदेकार्थेति। उद्भवत्वैकार्थसमवायाऽविशेषादूष्मादौ स्पर्शग्रहे रूपस्य, प्रभादौ रूपग्रहे स्पर्शस्य ग्रहप्रसङ्ग इत्याह। निशीति। न गुणिगुणोभयवृत्ति तत एकवृत्तित्वेनैवोपपत्तेरितिभावः। गुणधर्म इति। गुणे अन्यधर्माभावादित्यर्थः। न संस्कारेति। गुणविशेषाणां संस्कारपदवाच्यत्वादित्यर्थः। नापीति। न द्रव्योपलब्धिस्तस्य फलमित्यर्थः।

दित्यत आह। धर्माधर्मनिमित्त उद्भवसमाख्यात इति [७।१।२२]। रूपादीनां स्वकारणवशादेव स्वभावभेदो जायते केषाञ्चित्सामान्यविशेषः समवैति। स च धर्मा-

---

रूपादीनामिति। स्वभावविशेषोव्यक्तिविशेषः। सामान्यविशेषो रूपादिधर्म्म उद्भवत्वं जातिविशेष इति। स्वभावविशेषो जातिविशेषः रूपादिधर्म्म उद्भवत्वं जातिविशेषः। तज्जातीयं च रूपादि धर्माधर्मात्मकसंस्कारजन्यत्वेन लक्षणया संस्कार इत्युच्यते उद्भवपदेनाप्युद्भवत्वाश्रयो रूपाद्येवात्र विवक्षितमित्यर्थः।

उद्भवत्वे च मानम्, इन्द्रियालोकादिसन्निकृष्टं महद्द्रव्यवृत्ति वायूपनीतं सुरभिशीतसूक्ष्मचक्षुरादिकं साक्षात्कारकारणकिञ्चित्समवधानशून्यम्, अप्रत्यक्षत्वादन्धकारस्थघटवत्। तच्च कारणं लाघवादनुगतं सामान्यम्। रूपस्पर्शादिषु तत् भिन्नम्। तेनैकस्य पक्षेऽप्यपरस्यापक्षः। अथ महत्त्व एवोद्भवत्वमस्तु, तदेव प्रत्यक्षत्वे तन्त्रम्, लाघवात्, न रूपमपि, गौरवादिति चेत्। न। आश्रयमहत्त्वोद्भवाभावेऽपि गन्धस्पर्शयोः प्रत्यक्षत्वेनोद्भूतत्वात्। रूपे च प्रत्यक्षमूर्त्तविशेषगुणत्वेन तत्सिद्धेः महत्त्वे च सामान्यगुणत्वेन तदभावात्। वाय्वादौ महत्त्वोत्कर्षेऽप्यप्रत्यक्षत्वाच्च। अथ रूपत्वादिना परापरभावानुपपत्तिः। न चानुद्भूतत्वमेव जातिरप्रत्यक्षत्वप्रयोजकत्वेन तत्कल्पनात् तदभावाच्च प्रत्यक्षत्वमितिवाच्यम्। अप्रत्यक्षतायाः प्रत्यक्षकारणाभावप्रयोज्यत्वेन प्रत्यक्षकारणस्य जातेः कल्पनात्। न तु प्रतिबन्धकत्वेनानुद्भवत्वं कल्पयित्वा तदभावः कारणं, गौरवात्।

**धर्मजन्यतया संस्कार इत्युच्यते उपलब्धिफलश्च भवतीत्यर्थः ॥**

---

नैवम्। तावदादिवत्त्वानात्वाद्रूपादिप्रत्यक्षताथामेकैकस्योद्भवत्वस्यैव प्रयोजकत्वादिति साम्प्रदायिकाः।

अस्मत्पितृचरणास्तु—शुक्लत्वादिना कारणरूपाग्निसंयोगप्रयोज्याभ्यां परापरभावानुपपत्त्या रूपवृत्ति तदुद्भवत्वमनेकं वाच्यम्, तथा च उद्भूतत्वेन कारणत्वेऽननुगमः। तस्मादनुद्भवत्वं शुक्लत्वादिव्याप्यं नानाजातिः। तदभावकूटस्तु प्रत्यक्षत्वे प्रयोजकः। अन्यथाऽनुगतप्रत्यक्षानुपपत्तेः। यद्वा उद्भवत्वानुद्भवत्वे न जाती, किं तु रूपत्वव्याप्यजातिमत्त्वमेवोद्भूतत्वं तदभावोऽनुद्भवत्वं, प्रत्यक्षे रूपे शुक्लतरतमत्वादिजातिमत्त्वाद्रूपादिरूपे च शुक्लत्वमात्रमेव, तद्व्याप्यजातौ मानाभावात्। न च रूपत्वमेव मानम्। लाघवेन तस्य प्रयोजकत्वे प्रत्यक्षत्वप्रसङ्गादित्याहुः।

ननु भर्ज्जनकपालगतो वह्निर्वारिस्थघटव्यञ्जकसूरतेजश्च न दृश्यते, न च तयोः संयोगविशेष एव प्रतिबन्धकः। जलकपालादीनामालोकव्यञ्जकतया तद्रूपप्रतिबन्धकत्वाभावात्। तत्त्वे वा भर्ज्जनकपालवारिसंयोगिवह्निसूरालोकयोरग्रहप्रसङ्गः। तस्मात्सर्वं तेजोऽदृश्यत एव, उभयोः स्वच्छतया तु विविच्य ग्रहो न भवति। भर्ज्जनकपाले चाऽनुद्भूतरूपमुद्भूतस्पर्शमन्यदेव तेजस्तादृशैरवयवैर्वह्निसञ्चरितैरारभ्यते, अतितप्तलोहादौ कदाचिदुद्भूतावयवप्रवेशाद्व्यारम्भोऽपि।

प्रत्यक्षलक्षणतया तत्कारणमुक्तं न तु कारणतयैव। न च कारणं लक्षणमित्येकम्, उत्पत्तिव्यवस्थापकं हि लक्षणमलक्षणं वा, कारणस्वरूपव्यवस्थापकं हि कारकमकारकञ्च[1] लक्षणम्। न चैवमालोकादयस्तेषामतिव्यापकतया अव्यापकतया च प्रत्यक्षस्वरूपाव्यवस्थापकत्वात्। उत्पत्तिव्यवस्थापकाः पुनरेते भवन्ति तेषामन्यतमापायेऽपि प्रत्यक्षानुपपत्तेरित्याशयवान् परिहारं व्याचष्टे। प्रत्यक्षलक्षणेति। [७३।२४]

---

ननु असाधारणकारणाभिधाने आलोकाभिधानमपि प्राप्तं तज्जन्यत्वस्य लक्षणत्वेऽतिव्याप्त्यभावादित्यत आह। प्रत्यक्षलक्षणेति। असाधारणमपि कारणं तदेवाभिधेयं यल्लक्षणीभवनसमर्थम्, आलोकजन्यज्ञानत्वं च भागासिद्धतया न तथेत्यर्थः। लक्षणत्वाभावे कारणत्वानुपपत्तिनिरासायाह। न चेति। अतिव्यापकतयेति। आलोकजन्यत्वमतिव्यापकं तज्जन्यज्ञानत्वं चाऽव्यापकमित्यर्थः। उत्पत्तीति प्रत्यक्षविशेषमभिप्रेत्योक्तम्, आलोकस्य सर्वप्रत्यक्षोत्पत्तिव्यवस्थापकत्वात्। एतावता प्रत्यक्षविशेषे तदपि लक्षणं भवत्येवेति सूचितम्।

ननु एकत्र विषये जातिव्यक्तिकृतं ज्ञानभेदमपास्य विषयकृत एव

---

(१) व्यवस्थापकं तु कारणमकारणं वा—पा० १ पु०।

ननु यद्यपि स्वरूपतः सन्तानतो वा इन्द्रियाभेदादिन्द्रियमनःसन्निकर्षाभेदो यथायथं सम्भवति, तथापि विज्ञानाभेदो व्यक्तिकृतो जातिकृतो वा स्यात् ? पूर्वस्मिन्निन्द्रियार्थसन्निकर्षाभेदेऽपि धारावाहिकज्ञानानि भिद्यन्ते। उत्तरच त्विन्द्रियार्थसन्निकर्षभेदेप्यभेद एव, सर्वेषां साक्षात्कारिजातीयत्वादिति। तदेकदेशिपरिहारो गर्भस्रावेणैव गत उपन्यासयोग्योऽपि न भवतीत्याशयवानाह। यदा हीति॥ [७४।१५]

अस्ति हि स्वरूपजातिकृतभेदातिरिक्तोविषयकृतो विशेषो बुद्धीनाम्। स चेन्द्रियार्थसन्निकर्षभेदादेव दृष्टोनेन्द्रियमनःसन्निकर्षभेदात्। यच तु धारावाहिज्ञाने नेन्द्रियार्थसन्निकर्षोभिद्यते तत्र ज्ञानस्यापि न विषयकृतो भेद इत्यर्थः। तदिदमुक्तम्—क्रमवन्ति हास्तिकाश्वीयादिविज्ञानानीति। [७५।१] निराकरणेप्येतदनुरूपमुदाहरति। यदा हीति। [७५।३] तस्यैव गोश्चक्षुषा संयोगेन तत्रैव गवि समवायेन प्रथमं

किमर्थमुक्त इत्यत आह। नन्विति। पूर्व्वस्मिन्निति। धारावाहिकज्ञानभेदे इन्द्रियार्थसन्निकर्षस्याप्यभेदात् सूत्रे सोऽपि नोपादेयेतेत्यर्थः। उत्तरत्रेति। एकेन्द्रियजन्यज्ञानेषु जातिभेदो नास्त्येव येनेन्द्रियमनःसन्निकर्षस्याप्यभेदनिरूपणं स्यादित्यर्थः।

शुक्लगुणज्ञानं पश्चाद्गमनकर्मज्ञानमिति भेदेऽभेदादिति समानमित्यर्थः ॥

यद्यप्यप्रसिद्धत्वमव्यपदेशकत्वव्यापकत्वात्तदभिधानेनैव लब्धं, तथाप्यालोकविषयसन्निकर्षो व्यपदेशकत्वेपि प्रसिद्धः, इन्द्रियमनःसन्निकर्षस्त्वव्यपदेशकोऽप्रसिद्धश्चेत्येतावता प्रकारान्तरत्वम् ॥

नन्वन्यतरातीन्द्रियाधारत्वमिन्द्रियार्थसन्निकर्षस्या-

---

चाक्षुषत्वादिजातिभेदे तु चक्षुरादिभेदादिन्द्रियमनःसन्निकर्षोपि भिन्न एवेति भावः। समानमिति। उपादानप्रयोजकोनायं विशेष इन्द्रियमनःसन्निकर्षस्येवेन्द्रियार्थसन्निकर्षस्यापि संयुक्तसमवायरूपस्याभेदादित्यर्थः। यद्यपीति। यद्यपि स्वयमेवालोकविषयसंयोगेन व्यभिचारस्योक्तत्वादप्रसिद्धत्वं नाव्यपदेशकत्वव्यापकम्, तथापि व्यपदेशकत्वं व्यापकं यस्याऽप्रसिद्धत्वस्येति विग्रहादव्यपदेशकत्वस्याभिधानमप्रसिद्धत्वाभिधानेनैव लब्धमित्यर्थः। तथापीति। यत्र व्याप्यं नास्ति तत्र व्यापकव्याप्त्यर्थं व्यापकमप्युक्तमितिभावः। ननु वार्त्तिककृता कृष्णसारनिर्वर्त्तकत्वं कर्मण उक्तं, तत्किं रूपसाक्षात्कारेऽपि कर्त्तव्ये तस्य कर्मसहकारित्वमुच्यत इत्यत आह। नन्विति। कर्मणां विशिष्टत्वं रूपभोजकत्वम्, एतच्च जन्मान्तरे यः प्रसक्तान्धस्तद्विषयम्। यस्तु प्रसक्तान्ध एव जातस्तद्गोलकस्य तज्जन्यत्वे मानाभावः तदुत्पत्तिश्चादृष्टान्तरादेवेति भावः।

(इन्द्रियार्थसन्निकर्षातिरिक्तकारणानुक्तावुपपत्तिकथनम्।)

प्यस्ति उभयातीन्द्रियाधारता आत्ममनःसन्निकर्ष-
स्यापि नास्तीत्यत आह। आत्मा तु यद्यपीति। [७।१४]

ननु विशिष्टकर्माभिनिर्वर्त्तितत्वेन प्रसन्नान्धानां
द्वयोः कृष्णसाराणां[1] न कश्चिद्विशेषः न हि रूपभोगा-
नर्थिनः कृष्णसारे तृष्णा तत्कर्मसम्भवः, असम्भवे च
कथमस्योत्पत्तिरिति, अतः कार्येऽपि कर्मणः सहकारि-
तामाह। एतदुक्तं भवतीति। [७।१०] कर्मक्षयादित्यु-
पलक्षणम्। प्रतिबन्धात्सहकारिविरहाच्चेत्यपि द्रष्टव्यम्।

यदि हि रथादिसंयोगानां नभोव्यापकत्वं भवेत्
तदा तत्कार्यस्यापि शब्दस्य सर्वत्रोत्पादप्रसङ्गः
असमवायिकारणप्रादेशिकत्वानुरोधेन हि व्यापक-

---

मान्तरम् इति ग्रहणविशेषणमिति टीकायाः मान्तरत्वेन ग्रहण-
मित्यर्थः। ननु संयोगस्य नभोव्यापकत्वेऽप्यप्रत्यक्षवृत्तित्वान्नोपलब्धिः
स्यादित्यत आह। यदि हीति। द्विधा हि संबन्धः समवायो
विशेषणता च, तत्राद्य आकाश एव। अन्यस्तु तत्रान्यत्रापि। अन्यथा
वने सिंहनाद इति न स्यात्। तत्र यस्य संयोगोऽसमवायिकारणं
तत्सम्बन्धी यो देशस्तत्र शब्दस्य सम्बन्धविशेषणतया व्यपदेशस्तदभि-
प्रेत्याह। असमवायिकारणेति। न च कर्मजन्याकाशसंयोगे
व्यभिचारः गुणपदेन विशेषगुणस्य विवक्षितत्वात्। दिग्देशव्यप-
देशाच्चेति वार्त्तिकं विप्रकृष्टदिग्देशव्यपदेशादित्यर्थः। इन्द्रिय

---

(१) प्रसन्नान्धानन्धकृष्णसाराणां— पा॰ ३ पु॰।

गुणाः प्रदेशावच्छेदेन जायन्ते, इह तु तदभावादनवच्छिन्नदेशतैवं स्यात्, ततश्च तद्द्वारोपलभ्यमाना रथादयस्तत्संयोगाश्च न नियतदेशतया प्रतीयेरन्नित्याशयवानाह । मा भूत्सर्वंचेति । [७१ । १९]

नन्वाकाशप्रत्यक्षतापक्षः किमिति नाशङ्कित इति परिहरन्नाह । नास्माकमिति [७७।१९] । त्वगादिभिरिति [७७।२९] । तत्र त्वगुदाहरणमुक्तम् । रसनोदाहरणन्तु---मधुरो गुडः, तथा घ्राणोदाहरणं पूतिगन्धाभावविशिष्टा सुरभितरा कस्तूरिकेत्यतो बहुवचनाविरोधः । बौद्धसिद्धान्ते च गुणगुणिनोरभेदाद्गुणिमूर्त्तत्वं गुणग्राहकमेवेन्द्रियं गुणिग्राहकं गुणाभाव एव गुण्यभावः अतो मूर्त्ताभावविशिष्टग्रहे उदाहरणीये अल्याभावग्रहमाहेति ॥

---

सन्निकर्षं सर्व्वं सन्निकृष्टमेव स्यादिति भावः । अपि चेत्यादिटीका-एतद्रूपं क्वचिदाश्रितं रूपत्वादित्यन्तरालेन तदाश्रयानुमानम् । अन्तरालादीनामाकाशादीनामतीन्द्रियत्वादित्यनुमितेनापि द्रव्येण सान्तरग्रहणं न भवतीत्यर्थः । तथाप्यालोकेन रूपवद्द्रव्यान्तरेण सह घटस्य ग्रहणमस्त्येवेत्यत उक्तं टीकाकृता । तस्मादिति । अभाव पदस्य मूर्त्ताभावार्थताव्याख्याने हेतुमाह । नन्विति । आद्यविकल्पे स्वमतेन द्रव्यमाकाशमाशङ्कितम्, परमतेनाभावविकल्पेन मूर्त्ताभावरूपं तच्छङ्कितमिति परिहारार्थः । ननु शरीरसम्बन्धेन न

ननु मा भूत्सह्यान्तरेण ग्रहणं सान्तर इति वा ग्रहणं हेत्वर्थः शरीरेन्द्रियाधिष्ठानाऽसम्बद्धस्य ग्रहणमर्थो भविष्यति। न ह्यथमन्यथासिद्ध, एतस्यैवोपरोपाधित्वेन प्रयोजकत्वादित्यत आह। इन्द्रियसम्बन्धो भवतु मा वेति। [७-६]

यच्छरीरसम्बद्धं, तदवश्यमिन्द्रियसम्बद्धमिति। यदिन्द्रियसम्बद्धं तदवश्यं शरीरसम्बद्धमिति न प्रमाणमस्ति, तयोर्भिन्नत्वात् भिन्नाश्रयत्वाच्च। न ह्यस्ति

---

सान्तरत्वाभिमान इत्ययुक्तं न हि सान्तरग्रहणं तेन हेतुरुक्तः न वा संदेहः शरीरसम्बन्धे सतीन्द्रियसम्बन्धस्यावश्यकत्वादित्यत आह। नन्विति। शरीरासम्बन्धस्येन्द्रियाधिष्ठानगोलकाऽसम्बद्धस्य चेत्यर्थः। यच्छरीरेति। न च शरीराऽसम्बद्धविषयज्ञानजनकत्वेनेन्द्रियाणामप्राप्यकारित्वं साध्यं आलोकेन व्यभिचारात्। इन्द्रियत्वे न हेतुविशेषणे च मनसा व्यभिचाराद्बहिरिन्द्रियत्वे सतीत्यच शरीरासम्बद्धशब्दग्राहकेण श्रोत्रेण व्यभिचार इति भावः। भिन्नाश्रयत्वादित्यनेन कारणाकारणसंयोगात् कार्याकार्यसंयोगोऽपि नास्तीत्युक्तम्। नन्वधिष्ठानाधिष्ठेयसम्बद्धयोरन्योन्यव्याप्त्येन्द्रियाधिष्ठानसम्बद्धमिन्द्रियसम्बद्धं स्यादित्यत आह। न हीति। सम्बन्धचतुष्टयव्याप्त्यर्थमिति टीका। तच प्रत्यक्षत्वेनेन्द्रियार्थसन्निकर्षः कारणं भूयोऽवयवावच्छेदेन अर्थसन्निकर्षे

नियमो यत्प्रदीपेन सम्बद्धं तदवश्यं मक्षिकया। यद्वा मक्षिकया सम्बद्धं तदवश्यं प्रदीपेनापि। तस्मात् तत्र साधकबाधकप्रमाणाभावात्सन्देह इत्यर्थः। तस्मात्तदन्यथासिद्धिरेवेत्यसिद्धिव्यवच्छेदार्थं सजल-सतेजोघटादि[1]ग्राहिणा प्राप्यकारिणा त्वगिन्द्रियेण विरुद्धमपि सहान्तरेण ग्रहणं द्रष्टव्यम् ॥

---

महत्त्वग्रहादर्थावयवेन्द्रियसन्निकर्षः कारणं भूयोऽवयवावच्छेदेन नार्थवृत्तिस्तदा सन्निकर्षः स्यादतीन्द्रियेणापि भूयोवयवाव-च्छेदेनार्थसन्निकर्षः स्यादतीन्द्रियावयवसन्निकर्षोपि कारणम्, अन्वयव्यतिरेकतौल्येनार्थेन्द्रियसन्निकर्षो हेतुः। न तु तयोरवयव-संयोगो हेतुरिति विनिगन्तुमशक्यतया इन्द्रियावयवार्थावयवयोरपि संयोगः कारणमित्यर्थः। असिद्धेति। आश्रयासिद्धिस्वरूपा-सिद्धोर्व्यवच्छेदार्थमित्यर्थः। ननु हेत्वाभासान्तरव्यवच्छेदार्थतापि कुतो नोच्यत इत्यत आह। सजलेति। युगपद्ग्रहणमसिद्धमिति टीका। न च तेजसः संसर्गिद्रव्यतया सौरालोकेन सहावस्थाय तुल्यकालग्रहणं स्यादिति वाच्यम्। उद्भूतरूपानुद्भूतरूपाभ्या-मारम्भनिषेधात्। अत्र यत्काले चन्द्रचक्षुःसंयोगस्तत्कालेऽपि शाखयापि तत्संयोगोऽस्तीति कुतो न तुल्यकालग्रहणम्। न शाखाऽवच्छेदेन चक्षुःसंयोगः प्रयोजकोऽन्यथा गोलकस्यापि बहि-

---

(१) तेजःघटादि— पा० ३ पु०।

आवरणानुपपत्तिरूपस्य तर्कस्योपस्कुर्वाणः प्रयोगेण प्रमाणमाह । प्रयोगस्त्विति ॥ [७८१७]

इह द्विविधः सम्बन्धः प्राप्तिलक्षणः । यथा आलोकादीनां घटादिभिः । तद्विपरीतश्च यथाऽभिधानज्ञानादीनामभिधेयज्ञेयादिभिः । तच्च स्वविषयं प्राप्येति सिद्धसाधनव्युदासार्थम् । जनकत्वादित्युक्ते शब्दादिभिरप्राप्तस्वविषयप्रतिपत्त्यादिजनकैरनैकान्तिकमतस्तद् प्राप्तावजनकत्वादिति । तावन्मात्रेण तु सर्वथा जनकैरनैकान्तिकमतो जनकत्वे सतीति । युक्त्यन्तरम्-तर्कान्तरम्-दूरान्तिकाननुविधानप्रसङ्गः । अस्यापि विपर्ययेण प्रयोगो द्रष्टव्यः ॥

ननु प्राप्तत्वाऽविशेषे सूर्यमण्डलवन्मेरुपृष्ठमध्यन्दिनोल्काप्रकाशावपि गृह्णीयात् । अथानुद्भूताभिभूत-

---

निर्गतनयनसंयोगेन ग्रहणप्रसङ्गः इति वाच्यम् । तिर्यग्भूतचक्षु:(र)-संयोगेऽप्यविरोधादित्यप्याहुः ।

नन्विन्द्रियाणामप्राप्यकारित्वमावरणानुपपत्त्यैव निरस्तमिति किमनुमानेनेत्यत आह । आवरणेति । तर्कस्य स्वातन्त्र्येणापरिच्छेदकत्वात्तदनुग्राह्यं मानमाहेत्यर्थः । सिद्धसाधनेति । सम्बन्धान्तरेणेत्यर्थः । नन्विन्द्रियाणां प्राप्यकारित्वसिद्धौ चक्षुषा प्राप्तस्याग्रहणोपपादनं प्रकृतानुपयुक्तमित्यत आह । नन्विति ।

तया न सुरसदनादीनां ग्रहणं उद्भूतानभिभूतत्वात् सूर्यमण्डलं गृह्यत इति। एवं तर्हि विषय एव कश्चित् तादृशो यो गृह्यते नेतर इत्यभ्युपेयतां, किं व्यभिचारिप्राप्तिपरिग्रहेणेत्यत आह। प्राप्तौ त्विति। [७९।१२]

विषयमाहात्म्यं हि प्राप्तिसहकारि, न स्वतन्त्रम् न हि स्पर्शरसादयो ग्रहणयोग्या इत्यप्राप्तैरेव त्वगादिभिर्गृह्यन्ते, प्राप्यकारित्वाद्वा तैरनुद्भूताभिभूता अपि ते प्राप्तत्वमात्रेण गृह्यन्त इत्यर्थः।

यद्यपि क्षणभङ्गपरिणामनयेऽपि प्राप्तानामेव परस्परं करणकर्मणां कार्यजननं, न त्वप्राप्तानामपि, न हि परस्परमप्रत्यासीदतः सहकारिप्रत्यया भावानतिशाययन्तो दृश्यन्ते, प्रत्यासत्तिस्तु निरन्तरोत्पाद एव तेषां, सैव च स्वरूपयोग्यता, तथा च स्वरूपयोग्यतामिन्द्रियार्थयोर्ब्रुवता निरन्तरोत्पाद एव वक्तव्यः। न पुनर्व्यवहितविप्रकृष्टोत्पन्नानां क्वचिदपि स्वरूपयोग्यता नाम। तस्मात्प्राप्तौ स्वरूपातिरिक्तायां विप्रतिपत्त्ये(?) न तु – – तरोत्पादेऽपि तत्राधिकाप्राप्तिः साधनमर्हतीत्याशयवानाह। निषेत्स्येते हीति [७९।१८]॥

---

व्यभिचारीति। प्राप्तौ सत्यामपि मेरुपृष्ठादीनामग्रहणादित्यर्थः। अतिशाययन्तः—कार्य्यजननसामर्थ्यात् जनयन्त इत्यर्थः।

एवं निवारिताभिमानः 'परदर्शनेऽपि प्रमाणमपश्यन् सन्दिग्ध इति । [७९।१४]

ननु जनकत्वे सतीति निर्णयहेतुं पश्यन् कथं नाम सन्दिग्ध इत्यत आह । अयमभिसन्धिरिति । [७९।१५]

अदृश्यमानप्राप्तावयस्कान्तेपि ' दृष्टत्वादनैकान्तिकत्वमस्याभिमन्यते पर इत्यर्थः ॥

त्वगादीनां दण्डादीनां च प्राप्तानामेव कार्यजनकत्वं पश्यन् कथमिव सर्वत्र विप्रतिपद्यत इत्यतो विप्रतिपत्तिबीजमाह । योग्यतयैवेति । [८०।२]

नन्वयस्कान्तस्याप्राप्यकारित्वे हेत्वन्तरेपि कः प्रतीकार इत्यत आह । अयस्कान्तमणेरिति । [८०।७]

ननु तस्य वृत्तिभेदोऽनुपलम्भबाधित इत्यत उक्तम् । चक्षुष इवेति [८०।७] । तुल्ययोगक्षेम इत्यर्थः ।

---

ननु निरस्तस्वपक्षस्य सन्देहः कथमित्यत आह । एवमिति । कथं नामेति । साधकाभावस्य सन्देहहेतुत्वादित्यर्थः । तथापि साधकस्योक्तत्वात्तत्र दोषं विना न सन्देहोयुक्त इत्यत आह । अदृश्यमानेति । ननु वार्त्तिके प्राप्तावेव विप्रतिपत्तेरुक्तत्वात् प्राप्तिमभ्युपेत्य व्याख्यानं कुत इत्यत आह । त्वगादीनामिति । प्राप्तिस्तु तत्कारणभेदोत्पादेनान्यथासिद्धा न कारणमित्येवं परं वार्त्तिकमित्यर्थः । नन्वयस्कान्तमणेर्वृत्तिभेदोपपादनं प्रकृतानुपयुक्तमित्यत आह । नन्विति । तत्रायस्कान्त एवानैकान्त इत्यर्थः । तुल्येति । व्यवधानविप्रकर्षयोः कार्याऽजनकत्वादित्यर्थः । ननु

व्यवधानविप्रकर्षौ हि अनिरन्तरोत्पादो वा स्याद-प्राप्तिर्वा स्वरूपयोग्यता वा। तत्रानिरन्तरोत्पादाभावो निरन्तरोत्पादः स्यात्। न च कृष्णसारस्यार्थेन मणेर्वा खोष्टेन निरन्तरोत्पादः सम्भवति(१)। अप्राप्त्य-भावस्तु(२) प्राप्तिरेव, तथा सति कः प्रतिकूलोऽनुकूलमा-चरति। अयोग्यताभावस्तु योग्यतैव, सा च बौद्धनये कारणजातीयस्य निरन्तरोत्पादान्न भिद्यत इत्युक्तम्। तस्मात् स्थिरनये कार्यं जनयन्ति कारणानि परस्पर-प्राप्तिं वा व्यभिचरन्ति, प्राप्तिर्वा स्वरूपयोग्यता-प्रयुक्तां व्याप्तिमुपजीवतीत्यवशिष्यते तत्राह। प्राप्ते-रेवेति। [८०।१०]

ननु लक्षणान्तरेण व्यवस्थिते लक्ष्ये कथमन्योन्या-श्रयत्वमित्यत आह। अगतिर्वेति। [८०।११] तद्धि लक्ष्य-सापेक्षमनपेक्षं वा। आद्ये अन्योन्याश्रयत्वदोषादेवा-

---

प्राप्तिरप्रयोजिका, क्षणिकपक्षे व्यवधानादावुत्पादविशेषरूपयोग्यता-विरहादेव कार्यानुत्पादादित्यत आह। व्यवधानेति।

( चक्षुषोऽप्राप्यकारित्वस्य तद्धेतूनां च खण्डनम्। )

नन्वन्योन्याश्रयोऽप्यगतिरेवेति न पक्षान्तरमित्यत आह। नन्विति।

---

(१) भवति— पा० ३ पु०। (२) अप्राप्तेरभावस्तु— पा० ३ पु०।

गतिः। उत्तरत्र त्ववगते लक्ष्ये तत्सापेक्षेण लक्षणेन किं गमयितव्यमित्यगतिरेवेत्यर्थः॥

अस्ति हीति [८०।२४]। यदि विज्ञानाभिन्नहेतुजत्वात्सुखं विज्ञानजातीयं स्यात्, सुखाभिन्नहेतुजत्वात्तदपि(१) सुखजातीयं स्यात्। विज्ञानं न सुखेनाभिन्नहेतुजमिति चेत्?। एवं तर्हि कथं सुखमपि विज्ञानेनाभिन्नहेतुजमित्यर्थः॥

ननु ज्ञानहेत्वनुगमः सुखेऽप्यस्ति, न तु सुखहेत्वनुगमो ज्ञानेऽतो यत्कारणानुगमो यत्र तज्जातीयत्वं तत्रास्तु। यथाङ्कुरमात्रकारणानुगमे यवाङ्कुरस्याप्यङ्कुरजातीयत्वं न तु सर्वस्य यवाङ्कुरत्वं तत्कारणानुगमाऽभावादित्याशयवानाशङ्कते। अवान्तरेति। [८०।२५]

तत्सापेक्षेणेति। लक्ष्यानपेक्ष्यलक्षणान्तरेणैव लक्ष्यव्यवस्थितेर्लक्ष्यापेक्षं लक्षणं व्यर्थमित्यर्थः। ननु विज्ञानाभिन्नहेतुकत्वेन सुखस्य ज्ञानजातीयत्व उक्ते अस्तीत्यादिकमसङ्गतं, ज्ञानजातीयस्य सुखत्वानभिधानात् इति सोपस्करमाह। यदीति। नन्ववान्तरेत्यादिकमयुक्तं, एकसामग्रीकत्वस्योपक्रमादित्यत आह। नन्विति। सुखसामग्री ज्ञानजातीयताप्रयोजकमन्तर्भाव्यैव, ज्ञानसामग्री तु न सुखजातीयतामन्तर्भाव्येवेति न सर्व्वं ज्ञानं सुखजातीयं, किन्तु किंचिदेवेत्यर्थः। 'न किंचित्कारणभेदे'त्यनेन प्रकृते न किञ्चिद्दूषण-

(१) विज्ञानमपि— पा० २ पु०।

न ह्यस्ति सम्भवो[1] यज्जातीयकार्यहेतुचक्रानुगमो यच तच तज्जातीयत्वमिति। बीजजातीयकार्यहेतु-चक्रानुगमेप्यङ्कुरस्य बीजाजातीयत्वादिति सामान्योप-संहारेऽनैकान्तिकत्वं, विशेषोपसंहारे तु सन्दिह्यमा-(ना)नैकान्तिकत्वमाह। न, किञ्चिदिति। [८०।१३]

आकस्मिकत्वप्रसङ्ग(ा)भयाद्धि कार्यभेदो - - - भेद-मनुसरन् प्रयस्यति भवान्, स च कार्यभेदः किंचित्कार-णभेदेनैव बीजाङ्कुरादिवत् ज्ञानसुखादावप्यना-कस्मिक इत्यर्थः।

(?) (ननु) रसगन्धस्पर्शानां उपादानाभेदभेदानुबद्धं तज्जातीयातज्जातीयत्वं, न ह्यस्ति सम्भवो रूपाद्युपादा-

मित्यत आह। नह्यस्तीति। यद्यदुपादानोपादानकं तत्त-ज्जातीयमिति सामान्योपसंहारः। यत् ज्ञानोपादानोपादेयं तत् ज्ञानजातीयमिति विशेषोपसंहारः। सन्दिग्धानैकान्तिकत्वं विपक्षे बाधकाभावः। नन्वाकस्मिकं न परेणाऽऽपादितं तत्कुतः परिह्रियत इत्यत आह। आकस्मिकत्वेति। ज्ञानहेत्वनुगमेपि यदि न ज्ञानजातीयत्वमाकस्मिकं स्यादित्यभिप्रायेण. हेतौ किंचित्कारणसाम्येप्यसाधारणहेतुप्रवेशात् सुखज्ञानयोरन्योन्य-वैजात्यमिति परीहार इत्यर्थः। ननूपादानाभेदात्कार्य्यभेद इति शङ्का नैयायिकासिद्धा न युक्तेत्यत आह। नन्विति।

(१) नियमो— पा० ३ पु०।

नकं वा रूपादिकं[1] चेति'। अतो ज्ञानोपादानत्वे तज्जातीयमेव स्यात्, अज्ञानत्वे वा न ज्ञानोपादानत्वमिति यदि प्रत्यवतिष्ठते तत्राह। न चेति। [२।१।१]

यदि ह्येकजातीयोपादानतयैकजातीयत्वं भवेत्, अवान्तरैकजातीयमपि किं न स्यात्, तथा चैकस्मात्समनन्तरप्रत्ययादनेकावान्तरजातीयानुत्पादप्रसङ्गः। दृश्यते रूपज्ञानाद्रूपज्ञानं रसज्ञानादिजातीयं च। साक्षात्कारिणः साक्षात्कारस्यासाक्षात्कारस्येत्यादि।

अथ विलक्षणानेकसहकारिप्रवेशादनेकावान्तरजातीयकार्यकरणस्वभावस्य कस्य चिदेवोत्पादनियम उपपाद्यः? एवमवान्तरजातिभेदोपपादनवद्विवक्षितैकजातीयोपादानत्वेऽपि विलक्षणानेकसहकारिप्रवेशाद्विवक्षितानेकजातीयकार्यकरणस्वभावस्य कस्यचिन्नियम उपपत्स्यत इत्यर्थः॥

सजातीयकारणमुपादानमिति बौद्धराद्धान्ताच्छङ्का इत्यर्थः। नन्वभिन्नानामपि ज्ञानव्यक्तीनां ज्ञानत्वेनाभेदाव्यभिचारो न युक्त इत्यत आह। यदिहीति। सर्वथा साजात्यापादने साक्षात्काराद-साक्षात्कारोदया(द्)व्यभिचार एव, यथा कथञ्चित्साजात्यं तु ज्ञान सुखयोर्भिन्नजातीयत्वेऽपि गुणत्वादिनाप्युपपद्यत इत्यर्थः। नन्वनिश्चिताऽनैकान्तिकमुक्त्वा सन्दिग्धानैकान्तिकमयुक्तमित्यत आह।

(१) उपादानं वारूपादिकं— पा० १ पु०।

सोयमेकोपादानकत्वेऽप्यवान्तरजातिभेदाभ्युपगमः परेषां दृष्टान्तार्थमुद्भावितः अपि चेत्याद्युद्भावितं सन्दिग्धव्यतिरेकित्वं[1] स्फुटयितुमतो नासङ्गतमिति। तदेतत्सर्वं बौद्धनयेनोक्तम्। परमार्थतस्तु यदुपादानवत्तत्सजातीयं यद्व्यापकोपादानवत् तद्गुणजातीयमिति नियमोऽतः परमनियमः[2], तद्यदि सत्तया गुणत्वेन वा सुख ज्ञानयोरेकजातीयत्वं साध्यते तदा सिद्धसाधनम्॥

अन्यथानियमेऽसङ्कीर्णमुदाहरणमाह। अत एवेति [८२।३]। एकोपादानत्वेऽपि रूपादीनां न व्यक्तिकृतो भेदो[3], नाप्यवान्तरजातिकृतो[4], नापि गुणतया पिठरोपादानत्वेऽपि कर्मणोऽगुणत्वात्। तच्चोपादानबलेन यथा द्रव्यगुणकर्मणामसतामेव सत्त्वं बहि, स्तथाऽऽन्तरज्ञानसुखादीनाम्। यथा च तेषामवान्तरकारणभेदाद्द्रव्यत्वं पृथिव्यादीनां, गुणत्वं रूपादीनां, कर्मत्वमुत्क्षेपणादीनां, तथाऽवान्तरकारणभेदाद्दर्शनस्मरणादीनां ज्ञानत्वं निरुपाध्यनुकूलतरादीनां सुखत्वमित्यादि।

---

सोयमिति। किंचित्कारणसाजात्येऽप्यवान्तरकारणवैजात्यं स्यादिति

---

(१) सन्दिग्धव्यावृत्तिकत्वं—पा० २ पु०। (२) तद्गुणजातीयमिति परमतः परमनियमः—पा० २ पु०। (३) न व्यक्तितो भेदो—पा० २ पु०। (४) जातितो—पा० २ पु०।

एवमवान्तरासाधारणनिमित्तादिभेदाद्यथा पृथिव्यां घटादिभेदो, रूपस्य शुक्लादिभेदः, उत्क्षेपणस्य च पाटवादिभेदस्तथा ज्ञानस्यापि दर्शनादिभेदः सुखस्यापि तारतम्यादिभेदो भविष्यतीत्यर्थः।

स्यादेतत्। अज्ञानरूपतायां पुनः प्रमाणमत उपसंहारव्याजेनाह। तस्मादिति। [८।१९]

यद्यपि विज्ञानसुखादीनां भिन्नजातीयत्वमनुभवसिद्धं----तच सुखं परिस्फुरति तदाऽहं सुखीति स्यात्। नापिसु---चज्ञानं परिस्फुरति तदा जानामीति स्यात्। न चैतदस्ति।. ज्ञानविशेषः सुखं---रिति चेत्? हन्तभोस्तस्य ज्ञानविशेषस्य विषयविशेषोप्यस्ति---निर्विषयज्ञानं सुखमिति प्राप्तम्। न चैतद्दृष्टमिष्टं शक्यं[1] वा साधयितुम्। अस्ति चेत्? बाह्य आभ्यन्तरो वा? न तावद्बाह्यः कश्चिद्विषयभेदोऽस्ति। यदेव हि रागवता गीतमनुभूयते तदेव वीतरागेणापि।

तदेव गीतं, परं रागवताऽनुकूलतया, वीतरागेण

सन्दिग्धानैकान्तिकमेव पूर्व्वमप्युक्त, मित्यर्थः। गुणत्वेनाप्यभेदाभावे हेतुमाह। पिठरे चेति। अग्रिमप्रबन्धोपयोगार्थमाह।

स्यादेतदिति। ज्ञानविशेष इति। सुखत्वमिति ज्ञानस्य ज्ञान-

(१) दृष्टं वा शक्यं— पा० ३ पु०।

तद्विपरीततयेति चेत्? किमनुकूलत्वमस्य निरुपाधिकं? सोपाधिकं वा? निरुपाधिकं चेत्? कथं कञ्चित्प्रति, सोपाधिकत्वे स एवोच्यताम्। इच्छैवोपाधिरिति चेत्। न, इतरेतराश्रयप्रसङ्गात्। इष्यमाणत्वादनुकूलत्वं तेन चेष्यमाणत्वमिति।

तस्मात् तस्य ज्ञानविशेषस्य सुखत्वेनाभिमतस्यान्तर एव विशेषो निसर्गानुकूलस्वभाव एष्टव्यः। यद्वेतुतया बाह्यो विषयोऽनुकूलतयाऽभिमतत्वेनेष्यमाणो भवति स एवोक्तरूपो विषयः सुखमित्युच्यते। तथापि मूढधियां व्यवहारार्थं समानजातीयव्यवच्छेदकाधर्मा-

---

विषयत्वमस्त्येव, जानामीति शब्दोल्लेखस्तु परीक्षकस्यास्त्येवेत्यर्थः। किमनुकूलत्वमिति।

ननु विषयाभेदेऽपि यथाप्रत्यक्षानुमित्योर्वैजात्यं कारणभेदात् तथा रोगिणां शीतादिविषयकं किञ्चिद्विज्ञानं सुखजातीयं स्यात्। न च सुखेऽतिशयो दृश्यते स च ज्ञानात्मत्वे न स्यादिति वाच्यम्। ज्ञानेऽपि पटुत्वाद्यतिशयस्य सत्त्वात्। ज्ञाने विषयाधिक्यादेव पाटवं, सुखे त्वेकत्रैव विषये रागौत्कट्यादतिशयोऽस्तीति चेत्। न। भोजनसुखमिति सविषयकत्वान्यथानुपपत्त्या ज्ञानत्वसिद्धौ तत्रापि संस्काराधानक्षमत्वादेरतिशयस्य कल्पनात्।

अत्राहुः। उदरव्यथायामन्नोपभोगसौहित्ये च सुखदुःखसंवेदने विषयविशेषास्फुरणात्(र्थं) विषयनिरूपणज्ञानात्मकत्वं सुखादेः,

ज्ञानादीनामुक्ताः, तथार्थप्रवणत्वं ज्ञानस्यार्थनिरूपणाधीननिरूपणत्वमित्यर्थः। तदप्रवणत्वमज्ञानलक्षणम्। तथाऽनुकूलवेदनीयत्वं सुखलक्षणं, प्रतिकूलवेदनीयत्वं दुःखस्येत्येवमादिसमानतन्त्रानुसारेण बोद्धव्यम्।

नन्वज्ञानात्मकत्वे घटादिवदवश्यसंवेद्या घटादिवत्सुखादयो न भवेयुः अवश्यसंवेद्याश्च ते। न ह्यसंविदिते सुखे प्रमाणमन्यदस्ति। तदेतदज्ञानात्मत्वे परमुपपद्यते स्वसंवेदनत्वादित्यत आह। तीव्रसंवेगितयेति। [८११७]

---

भोजनसुखमिति　बुद्धेरिन्द्रियसुखमितिवत्तन्निमित्तविषयकत्वात् विशिष्टज्ञानात्मके च तस्य सुखत्वेन भोजनज्ञानमिति सप्रकारकं भासेत। निर्विकल्पकत्वे वाप्रत्यचं सुखं स्यात्। तत्रेति। यद्यप्यनुकूलत्वं न निरुपाधीच्छाविषयकं दुःखाभावेऽतिव्याप्तेः, नापि भावत्वेन विशेषणीयम्, सुखी स्यामितीच्छायामात्मसुखसुखत्वयोरपि विषयत्वात्। न च सुखत्वादेर्विषयतावच्छेदकत्वं न तु विषयत्वमिति वाच्यम्। अवच्छेदकस्यापि विषयत्वात्। तथापि सुखत्वमेवानेनोक्तम्। एवं प्रतिकूलवेदनीयत्वमपि दुःखत्वमिति मन्तव्यम्। ननु सुखस्य प्रत्यक्षत्वे न विवाद इति तीव्रसंवेगितया तत्प्रत्यक्षत्वकीर्त्तनेन किमित्यत आह। नन्विति। सुखदुःखयोर्भोजकादृष्टसाध्यतयाऽवश्यं तद्ज्ञानमित्यर्थः। अतएव समानकालीनसमानाधिकरणसाक्षात्कारविषयताव्याप्यजातिमत्त्वमेव

सन्ति हि पदार्थाः स्वकर्मोपार्जितत्वाऽविशेषेऽपि केचिदध्यक्षा एवं। यथा स्वशरीरादयः। केचित्तु परोक्षा एव। यथा तदन्तर्गतनाडीसंस्थानादयः। एवमज्ञानत्वाविशेषेऽपि कारणलब्धस्वभावभेदाः केचिदवश्यसंवेद्याः सुखादयः केचिदन्यथेत्यर्थः।

सगोत्रमुत्थापयति। स्यादेतदिति। [८।१८]

तथापि जागरावस्थायां तावदनुभवजननद्वारा सुखोत्पत्ताविन्द्रियार्थसन्निकर्ष उपयुज्यते। अन्यथा सुखवदनुभवोऽपि तेन विनैव स्यात्। न च साक्षात्कारणमेव कारणम्, तथा सति व्यापारिण उदासीनाः प्रसज्येरन्। व्यापाराव्यवधायकत्ववादस्त्वत्रापि तुल्य इत्यत आह। इन्द्रियार्थसन्निकर्षस्येति [८।१०]। ज्ञानमात्रमव्यापारीभूतं तत्र उपयोगादित्यर्थः।

---

सुखदुःखयोरनुगतं रूपमाह। नन्वन्यथासिद्धिकथनं व्यर्थम्, व्यभिचारेणैवेन्द्रियार्थसन्निकर्षस्याहेतुत्वसिद्धेरित्यत आह। तथापीति। सामान्ये व्यभिचारेऽपि विशेषे तदभावाद्धेतुत्वं स्यादेवेत्यर्थः। उदासीना इति। अहेतव इत्यर्थः।

व्यापाराव्यवधायकत्वं, अन्यथासिद्ध्यभाव इत्यर्थः। मात्रपदोपयोगमाह। अव्यापारीभूतमिति। तदेवोपपादयति।

अयमाशयः। भवेदेवं यदीन्द्रियार्थसन्निकर्षस्य ज्ञानं व्यापारः स्यात् स हि कार्यावसानो व्यापार्यव्यभिचारी भवति, ज्ञानं पुनः कार्यावसानमपि इन्द्रियार्थसन्निकर्षमतिपतत्येव स्वप्नान्तिके। अन्यथा तु व्यापारक-- --प्रसङ्गात्।

परिहरति। तदयुक्तमिति [८।१।११]। प्रमाणाभावादिति शेषः।

ननु मान --- मित्यत आह। तद्ज्ञानस्येति। [८।१।१९]

कुतो मिथ्यावगतिरित्यत --- पर्यासस्य यथा पूर्वानुभूता स्मरणार्हा कामिनीत्येवं तज्जन्मपूर्वानुभू --- पर्यासत्वं पुनरेतावतैवारपया विप्रकृष्टदेशकालयोः का -- ज्जन्मसुखयोस्तन्निकृष्टदेशकालतया-

---

च हीति। जागरसुखे स्वप्नसुखवैजात्यमसिद्धम्, तत्सत्त्वे ज्ञानस्य तद्व्यापारत्वे मानाभावः, सुखत्वात्तद्दृष्टान्तेन तदजन्यत्वसिद्धेश्चेत्यर्थः। ननु स्वप्ने सुखाद्यनुत्पत्त्या व्यभिचारपरिहारेऽपि विज्ञानस्य व्यापारत्वासिद्धिस्तदवस्थेत्यत आह। परिहरतीति। व्यभिचारमात्रं तावदिति शेषः। सिद्धिशब्दस्योत्पत्त्यर्थत्वे पौनरुक्त्यपरिहाराय व्याचष्टे। अप्रतीतेरिति। स्मृतिविपर्यासो विपर्यस्ता स्मृतिरेव, स्वप्रज्ञानं च न तथा, अनुभवत्वेनानुव्यवसीयमानत्वादित्यत आह।

वभासः। न पुनरकामिन्यसुखयोः कामिनीसुखत्वेन प्रतिभानम्। तथा सति कामिनीत्वसुखत्वनिषेधे-नान्यस्य कस्यचित्प्रतिभासनं बाधकं भवेत्। न च वाच्यम्—यदि न स्वप्नान्तिके सुखमुत्पद्यते न तस्मै विरही स्पृहयेदिति। मोहादसाधनेऽपि प्रवृत्ति-दर्शनात्। शीतापनुत्तये गुञ्जापुञ्ज इव मर्कटा-नाम्। तदिदमुक्तम् स्मरणविपर्यास इति [-१।१।१] स्मरणे प्राप्ते विपर्यासः स्मरणविपर्यासः अनुभवलक्षणः तद्विषय एवेत्यर्थः।

ननु सुखदुःखोत्पादप्रयोजनौ धर्माधर्मौ यदसुखं दुःखारूपान् देहादीन् उत्पादयतस्तत्तदर्थतयैव। एवं तयोः सर्वोत्पत्तिमतां निमित्तत्वं निर्वहति, इदं तु स्वप्नज्ञानं न सुखरूपं, सुखसाधनमपि यदि न स्यात् न तर्हि धर्मनिमित्तं, नाप्यधर्मनिमित्तमदुःखत्वादत-द्धेतुत्वाच्च। ततश्चादृष्टनिरपेक्षोत्पत्तिरस्य च व्याप्ता-कुलयेदित्यत आह। सुखेति। [-१।१।४]

---

आलम्बनमिति। विषय इत्यर्थः। तथा सतीति। इन्द्रिय-सन्निकृष्ट एव कचित्कामिनीत्वसुखत्वारोपे तस्य प्रतिषेधः स्यान्न तु सन्निकृष्टविषयस्येत्यर्थः। स्मरणे प्राप्त इति। स्मृतिविषये तस्मि-न्नित्यर्थः। सामग्रीतिशब्देन यागादेः साधनत्वप्रमितिर्वैषम्यादि-

सुखाद्युपभोगो ह्यदृष्टस्य प्रधानं प्रयोजनम्। न च सुखादि स्वरूपतः उपभोगः, किन्तु तदनुभवः, सप्रमुत्पन्नसुखाद्यनालम्बनत्वेऽपि पूर्वोत्पन्नमालम्ब्य जायमानः सर्वं समञ्जसयति। न च सर्वज्ञैवमस्तु सामग्रीवैचित्र्यात् सत्यमिथ्याप्रत्ययविभागव्यवस्थापनात्।

न ह्येकदोपलब्धरजतविषयसंस्कार इव शाब्दरजतेऽपि रजतप्रत्यय इति सर्वदैवमेवास्त्विति वक्तुमुचितम्। यस्तु मन्यते स्वप्ने तावत्सुखादिकमनुभूयत इत्यविवादं तत्र तु बाधकं भवत् द्विरूपं भवेत्। असुखमेतदिति वा नासीत् सुखमिति वा। न चैतदस्ति। जागरावस्थायां तु नासीत् कामिनीति युज्यते बाधकं स्थिरत्वात्। सहसापसरणासम्भवात्। तत्कार्याणां च दशननखक्षतादीनामननुवृत्तेः। चरमधातुविसर्गादीनां चानुवृत्तावप्यतत्कार्यत्वात्। तत्कार्यत्वेन तदनुवृत्तावन्येषामपि तत्कार्याणामनुवृत्तिप्रसङ्गात्। नास्तीदानीं सुखमिति त्विदानीन्तनसुखस्य बाधो न प्राक्तनस्य, क्षणिकत्वात्तस्य। तत्कार्याणां च

---

त्यर्थः। क्वचिदपि सुखस्याऽप्रामाणिकत्वे तदारोपस्यानुपपत्तेरिति भावः। नन्वेवं कामिन्या अप्यबाधे विषयसंसर्गजन्मैव तत्सुखं स्यादित्यत आह। जागरेति। तथापीति।

हर्षाश्रुपुलकादीनामनुवर्त्तमानानामुपलम्भा(द)न्यथा-शुतरविनाशिनां क्षणान्तरेऽदर्शनादनुभवानामप्रामाणिकत्वमेव स्यात् ।

तस्मादबाधितानुभवसिद्धत्वादस्ति स्वप्नान्तिके सुखमिति, तं प्रत्याह । न चाऽसतीति । [८।१।२५]

---वस्थायामाहत्य बाधकं नास्ति तथापि स्वप्नान्तिक ------ नितादीनामस्ति बाधकं कारणे च बाधिते कार्यं बाधितमेव ------- तिकहष्टपयोदपटलबाधे तदाश्रयो वचुदुद्योतः(?) । हर्षाश्रुप्रभृतयस्तु सुखकार्याः किन्तु सुखज्ञानकार्या इति न तावन्मात्रेण तत्सम्भवोपपत्तिः । तस्मात्स्वप्नान्तिकोदाहरणबलेन ज्ञानमात्रकार्यता सुखस्य सिद्ध्यतीति मनोरथाद्युदाहृत्य परिहृतम् ।

चतुर्धा खलु संसारिणां सुखमुत्पद्यते । किञ्चिदभ्यासात् यथा मृगयादिषु । किञ्चिदभिमानात् । यथा चन्दनादिषु । किञ्चिद्विषयसम्भोगात् । यथा सुरभिमधुर-

---

ननु चन्दनादिकारणबाधे इन्द्रियार्थसन्निकर्षजत्वमात्रं सुखे बाध्यतां न तु सुखत्वमेव, तत्र सुखं नास्तीत्यप्रतीतेः, चन्दनादेस्तु सुखविशेष एव जनकत्वम् । नैवम् । वैज्ञानिकसुखस्याप्रतीतेः चन्दनादिजन्यसुखजातीयस्यैव तत्रानुभवेन तत्रैव बाधकस्योक्तत्वात् ।

गौरगान्धारादिषु। किञ्चिन्मनोरथादिसम्प्रत्ययात् यथा भविष्यत्पुत्रादिजन्मदिनमहोत्सवानुचिन्तनादिषु। ते चामी स्वरूपभेदवन्तोऽनुभूयन्ते। न हि यथा मनोरथेषु सुखं तथा विषयसम्भोगे। तथा सति तत्परित्यागेनान्योपादानवैयर्थ्यात्। तावदेव हि बुभुक्षितो मोदकान् मनोरथयति यावदमी नास्य परमार्थतः सन्निधीयते अथ मनोरथव्यसनमपहाय तत्रैव वर्त्तते नियमेन तदेकजातीयत्वे सर्वमसमञ्जसं स्यात्। जातिभेदे हि कारणभेदोऽवश्याभ्युपेयत इत्यर्थः।

तदत्रेन्द्रियार्थसन्निकर्षस्य सत्त्वमनुविधत्ते सुखोत्पत्तिरिति सिद्धान्तिनो विवक्षितम्। तदन्यथासिद्धमिति मन्वानः पूर्वोक्तं स्मारयति। ज्ञानमात्रमेवेति। [८।१।१९]

नात्र तत्सत्त्वानुविधानमात्रं विवक्षितं, किं नाम? जातिभेदः कारणभेदमाक्षिपति। स च कारणभेदोऽनुविहितभावाभाव एव सिध्यतीत्यत्र विवक्षितमिति प्रतिपिपादयिषुरुक्तमेवानुभाषते। न, विषयाऽसन्निधान इति। [८।१।२०]

---

नन्विन्द्रियार्थसन्निकर्षजं सुखमुपक्रम्य तदभावे तद्विरहमानोरथिकादिसुखाद्यभिधानमयुक्तमित्यत आह। मनोरथादीति। सुखविशेषमधिकृत्येन्द्रियसन्निकर्षजत्वव्युत्पादनं तावतापि ज्ञानपद-

तदिदमुक्तं तादृशस्य सुखभेदस्यानुत्पादादिति [८।१।१८] यादृश इन्द्रियार्थसन्निकर्षादुत्पद्यत इति शेषः ॥

शङ्कते। विषयेति [८।१।१६]। ज्ञानाभेदेऽपि[1] भिन्नजातीयं सुखं कारणान्तरं भिन्नमाक्षिपेत्, इह तु ज्ञानमेव भिन्नजातीयमित्यर्थः।

परिहरति। इत्तेश्वरस्यापीति। [८।१।२०]

ननु विषयसाक्षात्कारोऽपीष्टोपलब्धिलक्षणः सुखहेतुः स च तादृशो नास्तीश्वरे। तस्य बुभुक्षाविरहात्। कथं तस्य सुखोत्पाद इत्यत आह। योगर्द्धिसम्पन्नानामिति। [८।१।२०]

ननु तेप्यलंप्रत्ययवन्तः कथमिव सुखभाजो भवेयुरित्यत आह। असत्यामिति। [८।१।२१]

न हि ते सर्वदैव प्रतिपक्षधारणावन्तो माभूदमीषां सर्वदा भोगविरहाद्धर्माधर्मप्रचयतादवस्थ्यम्। तस्माद्यदा प्रतिपक्षधारणा नास्ति तदा विषयसाक्षात्कारवशादेव[2] तेषां सुखं प्रसज्येतेत्यर्थः।

---

व्यवच्छेद्यसिद्धेरित्यर्थः। नाचेति। वैषयिकसुखे सुखान्तरसाधारणकारणज्ञानजन्यत्वेपीन्द्रियार्थसन्निकर्षाद्यनेककारणभेदाद्वैजात्यमङ्गीकर्त्तव्यमिति तदेव सुखं विलक्षणं ज्ञानपदव्यवच्छेद्यमित्यर्थः।

ज्ञानाभेदेपीति। ज्ञानजन्यत्वे सत्येव सुखवैजात्यं ज्ञानस्य

---

(१) ज्ञानभेदेपि इति २ पा० पु०। (२) साक्षात्कारमात्रादेव– पा० ३ पु०।

न च वाच्यम्—यदि भवेदेवं कीदृशो दोष इति। कायव्यूहे शरीरेन्द्रियनिर्माणवैयर्थ्यप्रसङ्गात्। इष्टानिष्टसाक्षात्कारस्य एकस्मिन्नेव शरीरे मनसैव सिद्धत्वात्। न चेन्द्रियाणामर्थानां च परस्पराऽसन्निकृष्टानामेव सत्तामात्रेण क्वचिदात्मधर्मसमुत्पादे सामर्थ्यमधिगतम्। तस्माद्योगर्द्धिमतां सत्यपि विषयसाक्षात्कारे इन्द्रियार्थसन्निकर्षाभावात्सुखं नास्तीत्यभिप्रेत्योपसंहरति तस्मादिति। [८।२१]

तदयं प्रमाणार्थः[1] योगर्द्धीनीन्द्रियाणि सुखदुःख-

---

साक्षात्कारित्वविशेषादेवोपपन्नमित्यर्थः। नन्विति। तथा चेष्टोपलब्धिलक्षणसाक्षात्कारस्य सुखविशेषहेतुत्वेन शङ्कितत्वात्तत्र परिहार इत्यर्थः। असम्प्रत्ययः—सुखभोगवैमत्यम्। प्रतिपक्षधारणा सुखसाक्षात्कारविरोधी केवलात्मसाक्षात्कारहेतुर्मनःसंयोगविशेषः। कायव्यूह इति। एकस्मिन् काये साक्षात्कारमात्रेणैव तावद्भोगोपपत्तेः। तथा च तावद्देशावस्थिततत्तद्विषयसन्निकर्षार्थं कायव्यूहमुपादत्तं इत्यभ्युपेयमित्यर्थः।

ननु नानाशरीरावच्छेदकं विना भोगयौगपद्यानुपपत्तिरेकदा नानासुखसाक्षात्काराभावात्, तथा राजनदनुजीविशरीरावच्छेदं

---

(१) प्रयोगार्थः—पा० २ पु०।

समुत्पादप्रयोजनानि, सुखदुःखतद्बोधान्यत्वे सत्यन्यथाचरितार्थत्वात्। इष्टानिष्टोपलब्धिवत्।

न चायमसिद्धः। अन्यच चरितार्थत्वं साक्षात्कारे सम्भाव्येत, स तु योगजधर्मसंस्कृतेन मनसैव जनितः। ते च सुखदुःखे सन्निकृष्टैरेवेन्द्रियैर्जन्येते, बाह्येन्द्रियजन्यत्वे सत्यात्मधर्मत्वात्, अस्मदादिविषयसाक्षात्कारवदिति। सोऽयं सन्निकर्षो यदा नास्ति तदा तेषामपि न सुखादिकमिति। तदिदमुक्तम्। स चेति। [८१।२१]

---

विना सुखदुःखसाक्षात्काराभावात् तज्जनकादृष्टध्वंसानुपपत्तिरिति तदर्थं तच्छरीरपरिग्रहो वाच्य इति न कायव्यूहवैयर्थ्यम्।

अत्राहुः। घटनिष्ठचन्दनान्योन्याभावसाक्षात्कारि चन्दनमपि साक्षात्क्रियते। न च तत्र चन्दनसन्निकर्षजं वैषयिकं सुखमुत्पद्यत इति चन्दनेन्द्रियसन्निकर्षस्यैव तद्धेतुत्वे योगिसाक्षात्कारमात्रात् तादृशं सुखमिति कायव्यूहे नेन्द्रियसन्निकर्षात्सुखमिति भावः।

यत्तु कामिन्यालिङ्गनादिजन्यसुखे तदिन्द्रियसन्निकर्षो हेतुः तद्विच्छेदे तदभावादिति परिष्कृतम्।

तन्न। कामिनीसन्निकर्षेऽपि तत्त्वज्ञाने तदनुपपत्तेस्तस्यापि तत्र हेतुत्वात्। सुखदुःखेति। तत्र दुःखाभावे व्यभिचारात् भावत्वेन हेतुर्विशेषणीयः। ननु चरमभावीत्यनुक्तोपालम्भ इत्यत आह।

नन्विन्द्रियार्थसन्निकर्षजन्मा विषयसाक्षात्कारः सुखादिहेतुः, न च तथा सिद्धानामस्त्यतो न तेषां सुखोत्पादप्रसङ्ग इत्यत आह । अपि चेति । [८।१।१४]

न तावदिन्द्रियजन्याजन्ययोः साक्षात्कारयोः कश्चिदाजनितो विशेषः,[1] किन्त्विन्द्रियार्थसन्निकर्षरूपकारणसम्बन्ध एव विशेषः । स च यदि कार्ये विवक्षितः, कथं न तस्य कारणता सुखादिकं प्रति । अविवक्षितश्चेत् सिद्धानामपि तदुत्पादप्रसङ्गो दुर्वारः तुल्ययोगक्षेमत्वात् । तस्मात् चरमभाविन्येव साक्षात्कारे सति किमिन्द्रियेणेत्यहृदयस्याभिप्रायोऽवशिष्यते । तच्च चातिप्रसक्त इत्यर्थः । अत्रैवार्थे वृद्धसम्मतिमाह । स्रगादीति । [८।१।१७] तत्र स्रगादीतिकारणचक्रकथनम् ।

---

नन्विति । यथाश्रुतस्यागमकत्वादाह । न तावदिति । ननु साक्षात्कारमात्रे विषयसन्निकर्षोऽहेतुर्व्यभिचारादित्यवश्यं साक्षात्कारविशेषो वाच्य इति स एव वैषयिकसुखकारणं भविष्यति । मैवम् । एकजातीये साक्षात्कारे विषयसन्निकर्षो न हेतुः सन्निकर्षत्वस्य एकस्य निर्वक्तुमशक्यत्वादिति तत्तद्विशेष एव तस्य संयोगादिरूपस्य प्रयोजकत्वात् । अत्र-'सुखादिव्युदासार्थ'मिति वार्त्तिके

---

(१) स्वभावतो विशेषः – पा० १ पु० । दाजानितो – पा० २ पु० ।

यदुत्पद्यत इत्यनुकूलवेदनीयस्वरूपम् । अनुग्रहादीति कार्यम् । अनुग्रहो भोगापरनामा सुखप्रत्ययः । अभिषङ्गः पुनः पुनः सुखप्रवाहस्याविच्छेदेच्छा । प्रसादः-सुखविषय(१)ग्रहणपाटवमिति ।

( इति ज्ञानपदप्रयोजनोपपादनम् ।

---

नन्वव्यपदेश्यव्यवसायात्मकपदयोः सङ्कीर्णं व्यवच्छेद्यं वा न पश्यामः प्रत्युत परस्परविरुद्धयोरनयोरेकस्मिन् पक्षेऽसमावेश एवेत्यत आह इह द्वयीति । [८२।१]

---

अतद्गुणसंविज्ञानबहुव्रीहिणा इन्द्रियार्थसंयोगजसंयोगव्युदासार्थं ज्ञानग्रहणम् । नन्वर्थपदेन कात्स्न्येनार्थ्यमाणता विवक्षिता, अव्याप्तेः अव्यभिचारिपदवैयर्थ्यापाताच्च, तत एव तदर्थसिद्धेः । नाप्येकदेशेनातिप्रसङ्गादित्येके । तन्न । विशेष्यास्मर्यमाणतायास्तत्सन्निकर्षजन्यत्वेन विवक्षितत्वात् ।

( इति ज्ञानपदप्रयोजनोपपादनम् । )

---

इह द्वयीति टीका । यद्यपि सविकल्पकत्वं न जातिरनुभवत्वव्याप्याभ्यां सङ्करापत्तेः । तथापि सत्ताद्यवच्छिन्नत्वेऽपि न दोष इति सम्प्रदायविदः ।

---

(१) सविषय — पा० २ पु० ।

वस्तुतो जातिपदेनोपाधिरूपं सामान्यमभिप्रेतम् । तच्च सप्रकारकज्ञानत्वं, न तु संस्कारजनकत्वमव्याप्तेस्तज्जनकतावच्छेदकरूपत्वस्य तत्रैव विश्रामात् । एवं निर्व्विकल्पकत्वमपि निष्प्रकारकज्ञानत्वमुपाधिरिति मन्तव्यम् । अत एव एकमपि ज्ञानं क्वचिद्‌विकल्पकं क्वचित्सविकल्पकमित्युपपद्यते ।

तथापि ज्ञानत्वं सविकल्पकातिरिक्ते वर्त्तत इत्यत्र किं प्रमाणम् ? न प्रत्यक्षमननुभवात् । त्वयाप्यतीन्द्रियत्वाभ्युपगमाच्च । नापि व्यवहारः तस्य सविकल्पकजन्यत्वात् । नापि ज्ञानमपि तत्र विवेचितमित्यनुभवस्तस्य विशेषणभूयस्त्वाज्ज्ञानालम्बनत्वात् ।

अथ गौरिति प्रत्यक्षं जन्यविशेषणज्ञानजन्यं जन्यविशिष्टज्ञानत्वात् अनुमितिवत्, न च परोक्षत्वमुपाधिः, प्रत्यभिज्ञायां साध्याव्यापकत्वात् । नापि विशिष्टविशेषणकत्वम् पक्षेतरत्वादित्यनुमानं, विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वे मानाभावात् । अगृहीतसंसर्गविशेषणविशेष्योभयैकज्ञानस्य विशिष्टज्ञानत्वात् । तथा च प्रत्यक्षेणेन्द्रियसन्निकर्षादनुमितौ पक्षधर्मताबलाच्छब्दे योग्यताबलादपूर्व्वमेव विशेषणं भासते, एवमुपमितावपि, प्रत्यभिज्ञाने चोद्बुद्धः संस्कार एव विशेषणज्ञानानुमितीन्द्रियप्रत्यासत्तिः । सुरभिचन्दनमित्यादावपि विशेषणज्ञानार्थं करणान्तरजन्यं तज्ज्ञानमेवेन्द्रियप्रत्यासत्तिः, भ्रमस्तु विशिष्टज्ञानमेव नेति क्वापि विशेषणज्ञानं न तन्त्रम् ।

नैवम् । साध्यप्रसिद्धिपदार्थोपस्थितिवाच्यत्वज्ञानतत्तानुभवानामनुमित्यादिहेतुतया तेषां च विशेषणत्वात्तज्ज्ञानानामनु-

मित्यादिहेतुत्वात्। यद्यप्येतावता प्रत्येकमनुमित्यादौ साध्यादिज्ञानस्य हेतुत्वम्। तथापि यद्विशेषयोः कार्यकारणभावस्तत्सामान्ययोरपि बाधकं विना तथात्वादिति विशिष्टज्ञानमात्रे विशेषणज्ञानमात्रस्य हेतुत्वात्। अन्यथा सामान्यकार्योच्छेदापत्तेः। (न च) नानुमित्यादौ विशेषणज्ञानत्वेन हेतुत्वं द्रव्यत्वेन विशेषणस्य वह्नेर्ज्ञानेऽपि वह्निमानिति ज्ञानानुत्पत्तेः, किन्तु विशेषणतावच्छेदकप्रकारकविशेषणज्ञानत्वेन, तादृशज्ञानजन्यत्वं च प्रकृते बाधितमिति वाच्यम्। विशिष्टज्ञानविशेषे विशिष्टवैशिष्ट्यविषयके तादृशज्ञानविशेषस्य हेतुत्वेऽपि विशिष्टज्ञानसामान्ये विशेषणज्ञानसामान्यस्य बाधकं विना हेतुत्वात्। न च द्रव्यत्वेन वह्निज्ञानेऽपि वह्निमानयमिति विशिष्टज्ञानापत्तिः। सामान्यसामग्रीसत्त्वेऽपि विशेषसामग्र्यसत्त्वात्। तस्यास्तामपेक्ष्यैव हेतुत्वात् निर्विशेषसामान्यस्याभावादिति।

तन्न। स्मृतिवत्पूर्वविशेषणानुभवस्य संस्कारद्वारा जनकत्वेन सिद्धसाधनात्। न चाव्यवहिततदनुभवजन्यत्वं साध्यं, व्यर्थविशेषणत्वात् प्रत्यभिज्ञाने व्यभिचाराच्च। न च तत्कालोत्पन्नरूपादिविशिष्टप्रत्यक्षे संस्काराभावात् पक्षधर्मताबलान्निर्विकल्पकसिद्धौ अन्यत्रापि तत्सिद्धिः तत्रापि शुक्लत्वजातिस्मरणात्। प्रत्यक्षेण विशिष्टज्ञानानन्तरं शुक्लत्वादिविशिष्टशुक्लादिवैशिष्ट्यस्य द्रव्ये ज्ञानात् शुक्लत्वाद्यविशिष्टशुक्लादिवैशिष्ट्ये च द्रव्येऽननुभवात्। न च संस्कारोद्बोधकस्य ज्ञानस्यान्यत्र दर्शनादन्यत्रापि तदेव वाच्यम्, तस्य विशिष्टज्ञानत्वे तत्रापि विशेषणज्ञानापेक्षायाम-

नवश्येति निर्विकल्पकमेव तदिति वाच्यम्। प्रणिधानादिसूत्रे संस्कारोद्बोधकस्यानियतत्वव्यवस्थापनात् ज्ञानहेतोरेव तदुद्बोधात्।

अत्रास्मत्पितृचरणाः। प्राथमिकगोत्वविशिष्टज्ञाने पूर्वं तज्जन्मनि गोत्वाननुभवात् न तेनोपपत्तिः। न चाऽऽद्यप्रवृत्ताविव प्राग्भवीयसंस्कारात् स्मृत्युत्पत्तिस्तत्र जीवनादृष्टस्य संस्कारोद्बोधकत्वात् अत्र तु विलक्षणस्य तस्याभावात्। गोत्वेन्द्रियसन्निकर्ष एव तादृश इति चेत्? एवं तर्ह्यन्यत्र क्लृप्तकारणभावात् तस्माद्गोत्वानुभवः स्यात् स्मृतिसामग्रीतोऽनुभवसामग्र्या बलवत्त्वात्। स च पूर्वं विशेषणज्ञानाभावान्न विशिष्टज्ञानमित्यर्थान्निर्विकल्पकम्। अत एव न तज्ज्ञानत्वेन तद्विशिष्टज्ञानमनुमेयं कारणबाधेन बाधात्। न चाज्ञाने विशिष्टपदव्यवच्छेद्याप्रसिद्ध्या न व्यर्थविशेषणत्वं प्रसिद्धौ वा नानुमानं ज्ञानत्वं च स्वतोऽसिद्धव्याप्तिकमिति वाच्यम्। येन विशेषणेन विना व्याप्तिर्ग्रहीतुं न शक्यते तस्यैव सार्थकत्वात् व्यभिचारावारकविशेषणस्यापि सार्थकत्वे तस्यैव प्रयोजकत्वात्। यत्र विशेषणं विनापि व्याप्तिग्रहस्तत्र विशेषणवैयर्थ्यं यथा नीलधूमादौ अत्र ज्ञानत्वविशेषणज्ञानजन्यत्वयोर्विशेषणं विनाऽनवस्थया सामान्यतो व्यभिचारज्ञाने व्याप्तिग्रहो न शक्यः। अत एव चक्षुस्तैजसत्वादिसाधने रूपादिषु मध्ये रूपस्यैव व्यञ्जकत्वादित्यादावसिद्धिवारकविशेषणमर्थवत्, रूपादिष्विति विना रूपस्यैव व्यञ्जकत्वादित्यस्यैवासिद्धेर्व्याप्यत्वासिद्धेरित्यन्यत्र विस्तरः।

(निर्विकल्पकज्ञानसाधनम्।)

ननु किं विशिष्टज्ञानत्वं न तावद्वस्तुगत्या विशेषणविशेष्यविषयकत्वं निर्व्विकल्पकेन व्यभिचारात्। नापि विशेषणविषयकत्वं तत्त्वाऽतद्व्यावृत्तिबोधजनकज्ञानविषयत्वरूपस्य तत्राभावात्। नापि वैशिष्ट्यविषयज्ञानत्वम्। गौरिति ज्ञानवैशिष्ट्यं विशेषणमिति निर्विकल्पकस्यापि तद्विषयत्वेन विशिष्टज्ञानतयाऽनवस्थापत्तेः। नापि सप्रकारकज्ञानत्वं यद्विशेषणज्ञानजन्यं यज्ज्ञानं स एव तत्र प्रकार(क) इति गौरिति विकल्पे तस्यैव साध्यत्वात्।

मैवम्। विशेषणवद्विशेष्यज्ञानस्य विशिष्टज्ञानत्वात्। यस्य यत्र सम्बन्धस्तत्र तस्यैव वैशिष्ट्यरूपत्वात् तेन तस्य स्वासम्बन्धिभ्यो व्यावृत्ततया बोधनात्। नन्वेवं ज्ञानस्य स्वविषयकनिर्व्विकल्पकेन नाशात् ज्ञानत्वसविकल्पकक्षणे विशेष्याभावेन प्रत्यक्षानुत्पत्तेर्जानामीति विशिष्टज्ञानं न स्यात्, प्रत्यक्षज्ञानस्य स्वसमानकालीनविशेष्यत्वनियमात्। न च व्यवसायनाशक्षणोत्पन्नव्यवसायान्तरे ज्ञानत्वविशिष्टज्ञानं स्यादिति वाच्यम्। तद्धेतोरभावात् अनुमिनोमीत्यनुव्यवसायेऽर्थेऽनुमितित्वाभावाच्च। मैवम्। व्यवसायनाशक्षण एव तत्र ज्ञानत्वविशिष्टज्ञानात् विशेष्यस्य पूर्व्वक्षणे सत्त्वात् प्रत्यक्षत्वे स्वसमयवृत्तितया विशेषस्याहेतुत्वात् गौरवात्। जानामीत्यत्र वर्त्तमानत्वेन स्थूलस्य कालोपाधेर्भानात्। क्षणस्यातीन्द्रियत्वात्। ततो विशिष्टज्ञान, मात्मनि विशेषणज्ञानस्य पूर्व्वं सत्त्वात्। विशेषणञ्च न विशिष्टज्ञानहेतुः, किन्तु तद्ज्ञानम्।

वस्तुतस्तु अभाववत्तज्ज्ञानं सविकल्पकमात्रविषयः व्यवसायस्य विषयनिरूप्यतया विशिष्टज्ञानस्य सामग्रीसत्त्वात्। सामग्रीसत्त्वेन

सङ्गृहीतापि स्वशब्देनोपात्ता किमिति चेदिति शङ्काशेषः । उत्तरम् तत्र विप्रतिपत्तेः ।' यतस्तत्र विप्रतिपत्तिस्ततस्तां निषेद्धुमित्यर्थः ।

व्यपदिश्यते व्यवच्छिद्यतेऽनेनेति व्यपदेशः । सा च व्यवच्छित्तिर्व्यावृत्तिप्रतीतिरुभाभ्यां क्रियत इति तदुभयमाह । विशेषणमिति । [८२।५]

तत्र समानाधिकरणं व्यवच्छेदकं विशेषणम् । व्यधिकरणं तूपलक्षणम् । यथा दण्डी देवदत्तो

---

तत्र ज्ञानत्वभानेष्वसम्भेदेन सप्रकारनिष्प्रकारकतयोरविरोधात् इति ।

( इति विशिष्टज्ञाननिर्वचनम् । )

---

ननूपादाने साध्ये विप्रतिपत्तेरिति विरुद्धो हेतुरित्यत आह । किमितीति । दोषं निरस्यति । यत इति । तथा चोपादानप्रयोजनप्रश्ने विप्रतिपत्तिनिरासाय संगृहीताप्युपात्तेत्युत्तरमित्यर्थः । व्यपदेशपदेनोभयमङ्गृह्याह । व्यपदिश्यत इति । तथापि व्यावृत्तिरन्योऽन्याभावोऽजन्येत्यत आह । व्यावृत्तिप्रतीतिरिति । उभयोर्व्या(र्व्यावर्तकत्वा)वृत्तत्वाऽविशेषेऽपि भिन्नो व्यावर्त्तकलक्षणमाह । तत्रेति ।

ननु सामानाधिकरण्यं नैकविभक्तिनिर्दिष्टत्वं प्रयोगस्य वस्तु-

जटाभिस्तापस इति। न तु सदैव विशेषणम् अति-व्यापकतया अलक्षणत्वात्। लक्षणविशेषणमेतदिति चेत्? अथ किं लक्षणम्? स्वोपरक्तप्रतीतिजनकत्व-मिति चेत्? तदेव किमुक्तं स्यात् अवच्छेदकत्वमन्यद्वा? न तावदाद्यः उपलक्षणस्यावच्छेदकत्वात्। अत एव

---

व्यापकत्वात् उपलक्षणेऽपि गतत्वाच्च। नाप्येकाधिकरण्यं तद्धि न विशेष्येण, (न) उत्पलनीलरूपयोरेकावृत्तेरव्याप्तेः। नापि तद्धर्मेण प्रत्याय्यव्यावृत्त्या वा, उपलक्षणस्यापि तत्त्वात्। न हि तापसे न जटा वर्त्तते। नापि व्यावर्त्तकत्वे सति क्रियात्वम्, क्रियाहीने सुभगोऽयं महाबाहुर्दण्डीत्यत्र दण्डादेरविशेषणतापातात्। पर-म्परया उपलक्षणेऽपि क्रियान्वयाच्च। अथ व्यावर्त्तकत्वे सति विशिष्टधीविषयत्वं विशेषणत्वम्। न चैवं तत्त्वाद्युपलादिविरोधः। विशिष्टज्ञानस्य विशेषणगोचरतया विशेषणत्वागोचरत्वात्। अन्यथा विशेषणोपलक्षणसन्देहानुपपत्तेः। उपलक्षणे तूपलक्षितस्य संस्थान-विशेषादेर्विशिष्टधीविषयत्वं न काकवत्त्वादेः, तदभावे तत्तद्गृहादि-प्रतीतिस्ताद्रूप्यात्।

नैवम्। काकवन्तो देवदत्तस्य गृहा इत्यत्र शब्दोपस्थानस्य शाब्दज्ञानरहितो (?) वानुपपत्तेः। न च तथैव व्युत्पत्तिः गङ्गायां घोष इत्यत्र प्रवाहस्यापि तीरावच्छेदकत्वेनाभासनादिति वाच्यम्। तदसिद्धेः, न ह्युपलक्षणपदातिरिक्तमुपलक्ष्योपस्थापकमस्तीत्युप-लक्षणपदं स्वमुपस्थाप्योपलक्ष्यमुपस्थापयतीति लक्षणापत्तिः घटो

नास्तीत्यत्रोपलक्षणस्य प्रतियोगिनोऽभावधीविषयत्वाच्च। नापि व्यावर्त्यसाक्षात्सम्बद्धं व्यावर्त्तकं विशेषणं परम्परया सम्बन्धि उपलक्षणं गौरनित्योरूपवान् रूपवति रस इत्यादौ जातेरूपस्येव साक्षात्सम्बन्धेऽप्युपलक्षणत्वात् लोहितः स्फटिक इत्यादौ परम्परासम्बन्धेऽपि लोहितस्य विशेषणत्वाच्च। न चान्वयप्रतियोग्युपस्थापकतयाऽन्वितमुपलक्षणं साक्षादन्वितं विशेषणं स्थानाद्युपस्थापकत्वादिति। अभावे सति (प्रति) योगिधर्मान्तरानुपस्थानात्।

अत्रोच्यते। प्रत्याय्यव्यावृत्त्यधिकरणतावच्छेदकत्वे सति व्यावर्त्तकं विशेषणं तदन्यद्व्यावर्त्तकमुपलक्षणम्। तथा हि—दण्डी पुरुष इति ज्ञानात् दण्डवत्यदण्डव्यावृत्तिरवगम्यते इति प्रत्याय्यव्यावृत्त्यधिकरणता पुरुषस्य दण्डेनावच्छिद्यते न पुरुषत्वेनातिव्याप्तेः। उपलक्षणस्य गच्छतापसादिनिष्ठस्य प्रत्याय्यव्यावृत्त्यधिकरणता स काकजटादिभिरवच्छिद्यते (ते)न तदभाववति व्यावृत्त्यप्रतीतेः, किन्तु संस्थानविशेषवत्वादिना। यद्वा—यदन्विततया ज्ञात एव विशेष्ये तात्पर्यविषयेतरान्वयधीस्तद्व्यवच्छेदकं विशेषणमनेवम्भूतं तदुपलक्षणम्, उपलक्षणानवच्छिन्नेऽपि उपलक्ष्ये तात्पर्यविषयान्वयाबोधात्। यद्वा यद्व्यावर्त्तकं विशेष्यान्वयिनाऽन्वीयते तद्विशेषणं, यस्यान्वयि तदुपलक्षणम्। अथवा विशिष्टधीहेतुज्ञानविषयत्वे सति व्यवच्छित्तिप्रत्ययसमये विशेष्यतावच्छेदकधर्माश्रयवृत्ति विशेषणं, काकस्तु यदि व्यवच्छित्तिप्रत्ययसमये विशेष्ये वर्त्तते तदा विशेषणमेव, यदा तु न वर्त्तते तदोपलक्षणम्', अत एव जटासत्त्वसमये जटावांस्तापसो जटाभिस्तापस इति जटाया विशेष-

सदिति विशेषणमिति चेत् ? न, सतोऽपि कस्यचिदुपलक्षणत्वेनेष्टत्वात् अन्यत्र समानाधिकरणव्यवच्छेदकत्वान्नान्यत्। तस्मात् सद्वा असद्वा समानाधिकरणव्यवच्छेदकं विशेषणं विपरीतमुपलक्षणमिति। अत एव विशेषणमात्रमुदाहरन्नोपलक्षणम्, तत्कस्य हेतोः। तदेव व्यधिकरणतयोपलक्षणं यतः। व्यपदेश्यं विशेष्यमिति-व्यवच्छेद्यमिति यावदित्यर्थः। एवमुत्तरत्रापि। नामधेयान्विताः [८।११२] नामधेयात्मान इत्यर्थः। एत-

---

णत्वमुपलक्षणत्वञ्च भवति, अन्यथा तृतीयानियमो न स्यात्। अत एव व्यवच्छित्तिप्रत्ययसमये विशेष्ये सत्त्वासत्त्वाभ्यां तदेव विशेषणमुपलक्षणं च भवति। न तु यद्विशेषणं न तदुपलक्षणम्। यत्र च लक्षणायामुपलक्षणत्वं तत्र तीरतत्सार्थवाहित्वादिधर्मोपस्थानद्वारा गङ्गाकच्चादेर्व्यावर्त्तकस्य तदिति।

परेषां लक्षणं दूषयति, न पुनरिति[१]। सतोऽपि कस्य चिदुपरि भ्राम्यतः काकादेरुपलक्षणत्वादित्यर्थः। उपलक्षणस्यापि सङ्ग्रहार्थमाह। व्यवच्छेद्यमिति। ननु नामधेयसम्बन्धे साध्ये सङ्केतरूपसम्बन्धेन सिद्धसाधनं तादात्म्यविरोधश्चेत्यत आह। नामधेयात्मान इति। तत्र च पदानां करणत्वसाधने सिद्धसाधनं स्यादिति भावः। शब्दात्मन इति। न च शब्दरूपार्थानां शब्दा-

---

(१) इदं प्रतीकं मूले नोपलभ्यते।

देव व्यतिरेकतो दर्शयति । नास्तीति । [८२।१२] नामधेयेन वियुज्यते-विभिद्यत इत्यर्थः । तैरित्यत्र कारणताभ्रमो माभूदित्येतदर्थमुपेतपदेनापूर्य व्याचष्टे । अर्था हीति । [८२।१४] तदयं समुदायार्थः । नामधेयात्मानोऽर्थास्तत्सामानाधिकरण्येन प्रतीयमानत्वात् । यत् पुनर्यदात्मकं न भवति न तत् तत्सामानाधिकरण्येन प्रतीयते । यथा गौरश्वसामानाधिकरण्येन । प्रतीयन्ते चार्थाः शब्दसामानाधिकरण्येन तस्मात्तदात्मान इति ।

---

भिन्नत्वादपतः सिद्धसाधनम्, यत्र भिन्नं प्रत्यक्षतावच्छेदकं तत्र तस्य दोषत्वात् यथाऽनित्ये वाङ्मनसे इति । न चैतत् परिभाषामात्रं तत्र ज्ञानद्वयस्योद्देश्यत्वेन कैरस्य सिद्धत्वात् । अत्र तु शब्दरूपार्थानां शब्दाभिन्नत्वे सिद्धेऽप्यनुमन्त्रिशब्दाभिन्नमित्युद्देश्यबुद्धेरसिद्धत्वात् । न चैवं शब्दे साध्ये सिद्धेस्तदन्तर्भावेन न पक्षत्वं तत्साध्यसंशयसिषाधयिषयोरभावादिति युक्तं, येन हि रूपेण साध्यं सिद्धं तेन रूपेण तयोरभावेऽपि सामान्येन तयोः सत्त्वात्तथाऽपि शब्दविषयस्यापि निर्विकल्पस्याङ्गीकारात् शब्दार्थयोस्तादात्म्यसिद्धावपि निर्विकल्पकमात्रनिराकरणं स्यादिति चेत् ? न, शब्दविषयकं निर्विकल्पकं यो न मन्येत तन्मतनिरासायैतदारम्भादिति भावः । ननु तादात्म्यवादिनये उपायत्वमसिद्ध-

ननु गवाश्वादीनां सामानाधिकरण्यव्यावृत्तिः किमभेदव्यावृत्तेरुत प्रतीत्योरुपायोपेयभावव्यावृत्तेरिति सन्दिह्यत इत्यत आह। न चेति। [८।२।१७]

अपि च यदि शब्दार्थयोः सामानाधिकरण्ये उपायोपेयभाव उपाधिः स्यात् उपायत्वनिवृत्तावेव तदपि निवर्त्तेत, न च निवर्त्तत इत्यत आह। अपि चेति। [८।२।१८]

हेत्वन्तरमाह। किं चेति। [८।२।२१] उत्कर्षः-प्राशस्त्यम्। अपकर्षो-ऽप्राशस्त्यम्। न चेदं व्यवहारमात्रम्। शब्दनिबन्धनाद्युत्कर्षापकर्षव्यवहारस्तथाभूतवस्तुप्रत्ययादेव भविष्यति। यथा षड्जाद्युत्कर्षापकर्षव्यवहारनिबन्धनो मयूराद्युत्कर्षापकर्षव्यवहार इति दृष्टान्तार्थं षड्जादिष्वित्युक्तम्। अन्यथा नामधेयतादात्म्यप्रसाधनप्रस्तावे किमनेन। अत एव सिद्धान्ते

मित्यत आह। नन्विति। तथा च न साध्याभावप्रयुक्तः साधनाभावनिश्चयो व्यतिरेकिणि गमकताप्रयोजक इति भावः। अपि चेति। यद्यपि सामानाधिकरण्याव्यापको ऽप्युपाधिः स्यात् हेत्वव्यापकस्याप्युपाधित्वात्। तथापि व्यतिरेकव्याप्तौ सामानाधिकरण्याभाव उपायोपेयभावाभाव उपाधिर्वाच्यः। न चैवं चक्षुषि सामानाधिकरण्याभावेऽप्युपायोपेयभावस्य सत्वात् समव्याप्तोपाध्य-

संज्ञानिवेशनमित्याह । प्रयोगस्तु नामधेयात्मानोऽर्था उत्कर्षापकर्षानुविधायित्वात् । यत् पुनर्यदात्मकं न भवति न तत् तदुत्कर्षाद्यनुविधायि, यथा गौरश्वस्येति ।

ननु यद्यर्थप्रत्ययो नामधेयोत्कर्षाद्यनुविधत्ते तस्यैव तादात्म्यमस्तु किमायातमर्थस्येत्यत आह । प्रत्ययस्येति । [८।१२]

साक्षादनभिधानेऽपि गुणगुण्यादेरपि योग्यतया सपक्षत्वेन तद्गतसामानाधिकरण्येन विरोध उद्भावयितुं न शक्यत इति तदुपेक्ष्यान्यथा शङ्कते । अस्तीति । [८।१४] अस्ति हि शुक्लभास्वरत्वादिभिः शुक्तिकागतै रजतत्वस्य सामानाधिकरण्यप्रत्ययो न तु तादात्म्यं परस्परं धर्मिणोरित्यर्थः ।

पुनरुक्तभ्रमो माभूदित्येतदर्थमाह । उक्तमपि व्यपदे(श्य)शमिति । [८।४] व्याख्यानस्यैतत्प्रयोजनं यद्वेत्व-

---

भिप्रायेण वा ग्रन्थः । ननु शुक्लः पट इत्यादौ प्रमाविषयो विरोधः कुतो नोद्भावित इत्यत आह । साक्षादिति । सामानाधिकरण्यबलात्परेण तत्रापि तादात्म्यं मन्यत इति साध्याभावस्तत्र नोभयसिद्धो येन तत्प्रभावनं स्यादित्यर्थः । यद्यपि रूपज्ञानस्य रूपशब्दविषयत्वेऽपि न तयोरभेदसिद्धिः तथापि रूपभिन्नगुणविषयमिदं

न्तरह्वचनम्। तथा च प्रयोगः रूपाद्यर्थविषयं ज्ञानं रूपादिशब्दविषयं नियमतस्तेन व्यपदिश्यमानत्वात्। यत्तु यद्विषयं न भवति न तन्नियमतस्तेन व्यपदिश्यते यथा रूपविज्ञानं रसेनेति। अनुविद्धता संश्लेषलक्षणाऽर्थेनैव विज्ञानस्य नास्ति, कुतस्तरान्तदात्मनापि शब्देन भविष्यतीत्यत उक्तमिवेति। यथा ह्यर्थो ज्ञानं तन्निविष्ट इव विषयतया - - - तथा शब्दोऽपीत्यर्थः। शब्दानुव्याधवदेव-शब्दसंभिन्नार्थविषयमेवेत्यर्थः। न चेदमप्रामाणिकं यदवोचत् [८७।११] प्रमाणमित्यादिशेषौ। शब्दस्यानुभवः संस्कारः स्मरणं समुच्चारणेच्छाप्र - - - नाभिघातः। शब्दाभिव्यक्तिरिति स्वात्मन्येव क्रमावगमः। तदतो बालेऽपि प्रथमतः शब्दमुच्चारयति एष एव क्रम उन्नीयत इत्यर्थः।

---

ज्ञानं शब्दविषयमिति साध्यमभिप्रेत्याह। रूपाद्यर्थेति। नन्विवपदादर्थविद्धता न प्रतीयते सादृश्यस्य भेदनियतत्वादित्यत आह। अनुविद्धतेति। संश्लेषः-संयोगः समवायो वा। पूर्वानुपपत्तेरेव व्याचष्टे। शब्दसंभिन्नेति। ननु सादिवासनावशादित्यत एव हेत्वाकाङ्क्षाया निवृत्तेर्हेतोरेव च हेतोरनाकाङ्क्षितत्वाद्यदवोचमितित्यर्थमिति साध्यान्तरमाह। न चेदमिति। आदिश शेषश्च आदिशेषौ। न चेदमप्रामाणिकमित्यादिप्रमाणमिति शेषः।

प्रथमे पक्षेऽसिद्धो हेतुः । अप्रसिद्धविशेषणः पक्षः शब्दब्रह्मण एव वाजिविषाणायमानत्वात् । दृश्यत्वादृश्यत्वलक्षणविरुद्धधर्माध्यासस्य भेदापादकत्वात् विपरीतप्रमाणोपपत्तिश्चेति द्रष्टव्यम् । द्वितीये तु भागासिद्धो हेतुरित्यर्थः । न ह्यविशदेऽपि बालमूकादिशब्दे प्रमाणमस्ति । न हि भावना वा तज्जनिता स्मृतिर्वाऽनुभूतस्य सत्तायामिदानीमनुभूयमानसंभेदे वा

---

टीकाकृदेककल्पद्वये यत्र यद्धेतुदूषणं तत्र तदाह । प्रथमेति । न तावच्छब्दस्य ब्रह्मत्वमात्मत्वं चैतन्यापत्तेः, नापि विभुत्वं द्रव्यत्वापत्तेः, नापि प्रमेयशब्दसामानाधिकरण्येनार्थानां प्रत्ययशब्दाभेद एव शब्दब्रह्मत्वं अद्वैतापातादित्यर्थः । यद्यपि शब्दब्रह्मणोऽसिद्धतया आश्रयासिद्धो विरुद्धधर्माध्यासः तथापि शब्दस्याश्रयो ब्रह्मव्यापकमाकाशः शब्दब्रह्मोच्यत इति नाश्रयासिद्धिरित्यपरितो(शे)षादाह । दृश्यादृश्यत्वेति । आकाशस्यादृश्यत्वात् तदभेदे दृश्यघटादेरदृश्यत्वापत्तिरिति प्रत्यक्षविरोध इत्यर्थः । द्वितीयेत्विति ।

ननु बालादिभिः सामानाधिकरण्याप्रतीतावपि व्युत्पन्नैस्तथाज्ञानान्न भागासिद्धिः सर्वैस्तथा प्रतीयमानत्वस्य च हेतुत्वे विवक्षिते स्वरूपासिद्धिः स्यान्न भागासिद्धिः ।, न च शब्दसामानाधिकरण्यं यदि शब्देन सहैकाधिकरण्यं तदाकाशपरिमाणे तदस्ति, यदा शब्दत्वमेव तदभिप्रेतं तदाशब्देऽस्ति, घटादौ चोभयमपि नास्तीति भागासिद्धिरिति वाच्यम् । एडमूकज्ञाने शब्दसंभेदाभावेन तद्भा-

प्रमाणमस्ति। तथा सति विनष्टो घटः स्मर्यमाणत्वा-त्सन्नेव स्यात्। अनुभूयमानं च भूतलं घटसंभिन्नं भवेदेवं चोच्छिन्नमघटं भूतलमिति। तस्मादभ्युपेत्य विरुद्धधर्माध्यासवादो मन्तव्यः॥

ननु बालेनानुभूयमानं रूपं तावद्विशदमेव, ततश्च तदात्मा रूपशब्दोऽपि कथमविशदः स्यात्. कथं चाप्रामाणिको रूपस्य प्रामाणिकत्वात्। केवलमव्युत्प-

---

त्पादनविरोधात्। नापि गोविषयकज्ञानानि गोशब्दाभिन्नविषय-कानि गोशब्दसामानाधिकरण्यविषयत्वात्, यन्नैवम् तन्नैवम्, बालादिबुद्धेरपि प्रत्यक्षत्वाद्भागासिद्धिरिति युक्तं, निबन्धकृता पदार्थानामेव पक्षीकरणात्। अथ शब्दसामानाधिकरण्यं शब्द-त्वाधिक(रणत्वं)हेत्वं विवक्षितं तस्य शब्देऽर्थे सत्वात् घटादा-वसत्वाद्भागासिद्धिस्तत्र, तथापि बालमूकादिज्ञाने शब्दाविषयत्वा-भिधानस्यानुपयोगापत्तेः।

अत्राहुः यदा शब्दसामानाधिकरण्येन सर्वैः प्रतीयमान-त्वादिति हेतुः क्रियते तदा सर्वशब्देन बालादीनामप्युक्तत्वात्तत्र हेत्वभावात् भागासिद्धिः स्वरूपासिद्धिरेवात्र भागासिद्धिरुक्ता। टीकायां वैशद्यावैशद्ये स्पष्टत्वास्पष्टत्वे। बालादेरपि स्पष्टत्वे तयो संशयो न स्यादित्यर्थः। तस्मादिति। रूपादिनिश्चयेऽपि शब्दा-निश्चयरूप इत्यर्थः। परोक्तहेतोरसिद्धेव निराबादयिमपन्योप-योगार्थमाह। नन्विति। येन केनापि शब्दसामाधिकरण्येन

न्धोऽपि शब्देन व्यवहरेदिति प्रसज्येत, तदसम्बद्धम्, न हि शब्दात्मताप्रत्ययं व्यवहाराङ्गमाचक्ष्महे, किन्तु सम्बन्धग्रहणमित्यत आह। न चेति॥ [८।१८]

अयमप्यभ्युपगमवाद एव। शब्दो हि वक्तृवक्त्रावरुद्धनभोभागावच्छिन्नतया श्रोत्रेण प्रतीयतेऽप्रतीयमानेऽप्यर्थे, अर्थोऽपि पुरोवर्तितया चक्षुषा प्रतीयतेऽनवगतेऽपि शब्दे, तदयं बालो यद्रूपं पश्यति स एव रूपशब्द इति लोष्टलगुडदृष्टान्तमनुहरतीति। सोऽयं भेदप्रत्ययो भ्रान्त इति यदि शङ्कते, तत्राह। न चेति। [८४।१] अयमप्यभ्युपगमवाद एव। न ह्यस्ति भ्रान्तत्वेऽस्य प्रमाणम्।

स्यादेतत्—बालमूकादिज्ञानानां शब्दसम्भेदस्तावत्सान्देहिक एवास्तु, व्युत्पन्नानां पुनः शब्दसामानाधिकरण्येन ज्ञायमानः सविकल्पकधियः शब्दात्मत्वमर्थस्य व्यवस्थापयतु तथा सति बालादिज्ञानानां तद्वि-

---

प्रतीयमानत्वादिति हेतुविवक्षया नासिद्धिरिति भावः। सम्बन्धग्रहणं-सङ्केतग्रहणमित्यर्थः। ननु भेदप्रतीतेः कल्पनार्थं मोक्षं तत्कृतः कल्पितभेदानामित्यत आह। (न) सोऽय मिति। ननु सामानाधिकरण्यं हेतुः पूर्वंनिरस्तस्तत्किं तन्निरासेनेत्यत आह। स्यादेतदिति। तथा सतीति। तेषामप्यर्थविषयत्वेन तदभिन्नशब्द-

षयत्वाच्छब्दसंभिन्नविषयत्वमर्थतः सिद्धं भवतीत्यत आह। सामानाधिकरण्यनिषेधायेति[1]। [८४।६] सास्ना-दिमद्रूपस्येति। [८४।७] न तु गकारादिरूपस्येति तात्पर्यम्। अयं शब्दो गकाराद्याकारो न तु सास्नाद्याकार इति तात्पर्यम्। ननु यो डित्थ इति डित्थशब्दमेवोच्चारयसि न त्वयं डित्थशब्द इति तमेव निषेधसि चेति किमिदमत आह। औत्सर्गिकं हीति। [८४।८] अर्थपरता ह्यस्य स्वपरतानिषेधेनैवाविरोधतः सिद्ध्यतीत्यर्थः। तत्किं सर्वत्रैवमेव नेत्यत आह। क्वचित्पुनरिति॥ [८४।१०]

यत्र तद्व्यसम्भेदेन[2] सङ्केतग्रहे नित्यादिपदानि सन्ति

---

विषयत्वादित्यर्थः। ननु तादात्म्यपक्षे सास्नादिमद्रूपस्यैव गकारादिरूपत्वादित्यभेदेनैव सम्बन्धग्रह इत्यत आह। नन्विति। (औत्सर्गिकस्वीकर्तुंनोपयोगार्थमाह। नन्विति।) यो डित्थ इत्यनेनाकारेण डित्थशब्दमेवोच्चारयसि न त्वयं डित्थशब्द इत्याकारेण डित्थशब्दमेव निषेधसि चेति विरुद्धमित्यर्थः। नन्वर्थपरत्वस्यौत्सर्गिकत्वात् संकेतग्रहेपि, न स्वरूपपरत्वं सिद्धमित्यत आह। यत्रेति। गवित्ययमाहेत्यादाविति शब्दसमभिव्याहाराच्छब्दपरत्वे-

---

(१) निरासायेति— पा॰ २ पु॰।

(२) अर्थभेदेन— पा॰ २ पु॰।

तत्रासङ्केतितत्वान्न तावदर्थपरः, स्वपरोपि यदि न स्यांद्यर्थः प्रयोगः स्यादित्यत आह । यत्रापीति । [८४।१८]
यथा गौर्वाहीक इत्यत्र गोत्वं गोगुणयोगलक्षकत्वेन वाहीकोपाधिर्न तत्समवायात् तादात्म्याद् वा, तथा डित्थोयमित्यत्रापि डित्थशब्दो वाच्यत्वोपलक्षकतया पिण्डोपाधिर्न तत्तत्समवायात्तादात्म्याद्वेति, यथा चात्र वाहीके गौरिति प्रत्ययाभावः प्रमाणं, तथाऽत्रापि वृक्षविशेषे डित्थशब्दोऽयमिति प्रत्ययाभावः प्रमाणमिति समुदायार्थः ।

ननु शब्दपुरःसरत्वनियमाद्विकल्पस्य तदुपायता तद्विषयत्वं वा स्यात् तत्पुरःसरत्वनियमस्याऽतदुपायाद्तद्विषयत्वान्नियमतो व्यावृत्तेः । तत्र यद्यर्थविकल्पस्तच्छब्दविषयस्तदा सिद्धं नः समीहितम् । अथोपायस्तदा ज्ञातोऽज्ञातो वा ? अज्ञातत्वे निर्विकल्पकत्वानुपपत्तिरेव, तस्माच्छब्द उपायो भवन् ज्ञात एव वक्तव्यः ।

---

ऽपि यत्राभेदेन सङ्केतग्रहोऽयं डित्थ इति तत्र स्वरूपपरत्वमेवेत्यर्थः ।

ननु शब्दपुरःसरत्वेऽप्यर्थज्ञानस्य शब्दार्थयोस्तादात्म्यमिति किमनेनोक्तेनेत्यत आह । ननु शब्देति । तु शब्देनोभयत्रापि शब्दपरामर्शः । अज्ञातत्व इति । जात्यादेरज्ञातस्यैव विशिष्टधीहेतुत्वे

न च सन्निहिते ज्ञानमस्ति। तस्मादर्थतादात्म्याच्छब्द-स्यार्थसन्निधानमेव तत्सन्निधिरित्यर्थालोचनमेव तदालोचनमित्यनिच्छताऽपि स्वीकर्तव्यमित्यत आह। यत्त्विति॥ [८४।१४]

न तावच्छब्दः पूर्वं नियमतो भवति विकल्पस्य, किं नाम? व्युत्पन्नस्य शब्दस्मरणपुरःसरत्वं नियमदृष्टं, न चैतावतैव घटज्ञानस्य घटशब्दविषयत्वम्। तथा सति घटाभावज्ञानस्यापि घटविषयता स्यात् तत्स्मरणपुरःसरत्वात्। तस्माद् घटे विकल्पयितव्ये अनुपायो विषयश्च घटशब्दः किमिति नियमतः[1] स्मर्यत

विशेषणज्ञानं विनापि प्रथमं विशिष्टज्ञानमेव स्यादिति, तत्त्वे तु तया न निर्विकल्पकं सिद्ध्येदित्यर्थः। न तावदिति। तदानीं शब्दकारणाभावादित्यर्थः। तथा सतीति।

ननु चाभावस्य प्रतियोग्यविषयकज्ञानाविषयत्वेनाभावज्ञाने प्रतियोगी भासत एव अन्यथा निर्व्विकल्पकवेद्यत्वमभावस्य स्यात्। मैवम्। तादात्म्येन या विषयता तन्निषेधपरत्वात्। ज्ञाने भासमानस्य तादात्म्यनियतत्वे घटाभावस्यापि घटतादात्म्यप्रसङ्ग इत्यर्थात्। यद्वा यत्सद्विषयकं तत्स्मरणजन्यं तत्तदभिन्नविषय-

(१) नियामकः— पा॰ १ ५०।

इत्यवशिष्यते। तत्रेयं स्मरणपरिपाटी कथितेति। शब्दपुरःसराः शब्दस्मरणपुरःसरा इत्यर्थः॥

अत्रैव वृद्धसंमतिमाह। यदाऽऽहुरिति। [८४।१९] प्रतिसम्बन्धिपिण्डदर्शनसहकृतस्तत्संस्कारः स्मृतिं जनयति। धूमानुभवसहकृत इव महानसस्थदहनानुभवप्रभवः संस्कारस्तत्स्मृतिम्। न चैतावता नियमेन शब्दस्मरणपिण्डविकल्पयोरुपायोपेयभावः शब्दस्य वा विकल्पविषयत्वं सिद्ध्यति। येन तयोस्तादात्म्यमाशङ्क्यते(१)। तथा सति वह्निस्मरणधूमविकल्पयोरपि तथाभावः स्यात्, वह्नेरपि वा धूमविकल्पविषयता भवेदिति वार्त्तिकश्लोकार्थः(२)॥

मिति नियमे घटाभावज्ञानस्यापि घटस्मरणजन्यत्वेन घटाभिन्नविषयकत्वप्रसङ्ग इति तात्पर्यात्।

ननु शब्दसामग्र्यभावे कुतः शब्दपुरःसरत्वं प्रत्ययानामित्यत आह।

शब्दस्मरणेति। न चैतावतेति। सर्वत्र सविकल्पके शब्दस्मरणस्य पूर्वमभावादित्यर्थः। धूमविकल्पोऽत्र वह्निस्मरणस्या-

(१) तादात्म्यमाशङ्क्येत— पा० ५ पु०।
(२) वार्त्तिकार्थः— पा० ५ पु०।

स्यादेतत् सर्व एव व्यवहारः स्वार्थः परार्थो वा विकल्पसाध्यो न त्वालोचनेनापि कश्चिदर्थः साधयितव्योऽस्ति, अतो निष्प्रयोजनमिदं कथमुत्पद्यत इत्यत आह। तस्मादिति। [८४।१०]

न तावत्सर्वस्यैवोत्पत्तिमतः प्रयोजनं पिशितचक्षुषः साक्षात्कुर्मो, न च प्रयोजनाप्रतिपत्तिमात्रेण पटुतरप्रत्यक्षकलितमपि कार्यं नानुमन्यामहे। तदेतत्प्रयोजनाप्रतिपत्तिलक्षणमलीकमुत्तरं तथापि स्फुटं सविकल्पकोत्पत्तिरेवास्य प्रयोजनमिति सा दर्शितेति॥

नामधेयस्मरणायेति। [८४।१०] नामावच्छिन्ने विकल्पे कर्त्तव्ये यतो न विशिष्यते—विशेषेण न गृह्यते अतो वैधर्म्यस्य योग्यप्रमाणबाधितत्वात् तदर्थज्ञानं तादृगेव भवति—तत्समानजातीयमेव भवतीत्यर्थः।

---

नन्तरजो विवक्षितः। ननु निर्विकल्पकस्य प्रयोजनप्रदर्शनमशङ्कितपरिहार इत्यत आह। स्यादेतदिति। प्रत्यक्षेति प्रमाणमात्रोपलक्षणम्। ननु सर्वत्र सविकल्पके न शब्दस्मरणोपयोग इत्यत आह।

नानवच्छिन्नमिति। ननु व्युत्पन्नाव्युत्पन्नयोर्मिथो व्यावृत्तिरस्त्वित्यत आह। विशेषेणेति। तत्समानेति। नामधेयरहिततये-

अतो भाष्यपौनरुक्त्यं[1] परिहरतो न साध्याविशिष्टं हेतुरिति ॥

व्यपदेशव्याख्यया भाष्यकारेण सूचितं हेतुं स्फुटयति । नन्विति [८।११०] अर्थव्यपदेशाकारमर्थव्यपदेशविषयम् । विषयिरूपज्ञानस्य तावद्रूपविषयतोभयवादिसिद्धा । तस्य च व्यपदेशविषयता तदा स्यात् यदि रूपतद्व्यपदेशयोरभेदः स्यादित्यर्थः ॥

अन्येनान्यव्यपदेशे अतिप्रसङ्गो व्यवहारविलोपः विप्रलम्भादित्यत तन्नामधेयत्वादेव नियम इति स्फुः

---

त्यर्थः । अत इति । भाष्यपौनरुक्त्यं साध्यसाधनभावपरतया परिहृतं तच्च साध्याविशिष्टमुक्तव्याख्यापरिहार्यमित्यर्थः । व्यपदेशव्याख्यया भाष्यकारेण सूचितमिति योजना । ननु व्यपदेशाकारत्वे ज्ञानस्य व्यपदेशात्मकत्वं स्यादित्यत आह । अर्थव्यपदेशविषयमिति । अत्रासिद्धिं निराकर्तुमाह । रूपज्ञानस्येति रूपवाचकशब्दो रूपाभिन्नः रूपज्ञानव्यपदेशकत्वात् रूपवदिति रूपजनितव्यपदेशविषयं सिद्धमित्यर्थः ॥

अन्येनेति । अन्येन शब्देनान्यस्यार्थस्य व्यपदेशे सर्वं सर्वेण व्यपदिश्येत रूपज्ञान रसेनापि व्यपदेश्यमिति विप्रलम्भाद्व्यवहारनियमो न स्यादित्यत्र विपक्षबाधके तन्नामधेयत्वमेव तन्नियामकं

---

(१) पूर्वस्मादर्थज्ञानाद्य विशिष्यते तदर्थज्ञानं तादृगेव भवतीति भाष्ये पौनरुक्त्यम् ।

भाष्य एव। स्वरूपेणैव विषयेण वा किमिति ज्ञानं न व्यपदिश्यत इत्येतद्विवृण्वन् परिहरति। अर्थाकार-मेवेति॥ [न्वा॰।१]

आत्मानं प्रति तावत्स्वरूपेणैव ज्ञानमज्ञानाद्व्यवच्छिद्यते। ज्ञानान्तरात्तु विषयेणापीत्येतत् को नाम नाभ्युपैति[१]। परस्य तु नित्यपरोक्षं परज्ञानमत एव तद्विषयोऽपि कथं तत्स्वरूपविषयाभ्यां परो बोध्यताम्, कथं वा प्रबोधितो व्यवहरताम्, तस्मात् ज्ञानवाचकेन ज्ञानमर्थवाचकेन चार्थमसौ प्रतिपाद्यः। न चाज्ञातेन वाचकेन वाच्यमधिगन्तुमर्हतीत्यवर्जनीयतया प्रतिपादको वाचकमुच्चारयति। न चैतावताऽर्थशब्दयोस्तादात्म्यसिद्धिः[२], न हि प्रमाणव्यतिरेकेण प्रमेयमधिगन्तुं न शक्यत इति तयोरभेदः स्यात् तदिदमुक्तमन्यथा अशक्यत्वादिति। [न्वा॰।१]

ननु कदाचिदर्थज्ञानकालेऽपि शब्दोव्याप्रियत एव,

मिति परिहृतेऽनुमानमप्रयोजकमित्यर्थः। अन्यथेत्यन्यप्रकाराकाङ्क्षायामाह। स्वरूपेणैवेति। व्यपदेशे अन्यथासिद्धिमाह। परस्येति। तद्विषयोऽपीति। परज्ञानोपहितज्ञानविषयोऽपीत्यर्थः। अन्यो नान्यं बोधयतीत्यचान्यथासिद्धिमाह। न चेति।

(१) नाभ्युपगच्छति—पा॰ ३ पु॰। (२) रभेदसिद्धिः—पा॰ ३ पु॰।

यद्वा प्रयोजकत्वात् प्रयोज्यत्वोऽर्थमधिगच्छतीत्यत आह। प्रतीयमानतया [न्या। ३] विषयतयेत्यर्थः।

स्यादेतत् उत्कर्षापकर्षाद्यनुविधायित्वं हेतुः कीदृगित्यत आह। तदनेनेति। [न्या। ४],

न तावत्तारतमत्वादेरुत्कर्षान्मयूरादेरिव गवादेरप्युत्कर्षः प्रतीयते। नहि गोशब्दे कर्णजपिते ऽपभ्रष्टे वाऽणीयान् गौः कृश उपहतान्नतिविंहतो वा प्रतीयते, विपरीते वा विपरीतः, नापि साधुत्वादिभेदवतो गोशब्दस्य प्राशस्त्यमप्राशस्त्यं च किञ्चिदस्ति। नन्दाभद्रेत्यादिमङ्गलसंज्ञानिवेशस्य त्वर्थमङ्गल्यादिव्यभिचारः स्फुटतर एव, अभद्रादावपि भद्रादिव्यपदेशात्। तस्माद्यवहारोत्कर्षापकर्षमात्रेण नाभेदसिद्धिरतिप्रसङ्गादित्यर्थः।

अस्यैव— साक्षादव्यपदेश्यपदात्प्रतीयमानस्यैव। शब्दानुव्याधरहितता-शब्दार्थानुव्याधरहिततोपपत्ति-

---

तदनेनेत्यादेः सन्निहिते ज्ञानानन्वयात् शङ्कानिराकरणपरत्वमाह। स्यादेतदिति। कीदृगिति। समीचीनोऽसमीचीनो वेत्यर्थः। अस्योत्कर्षहेतुत्वाभावमुपपादयति। न तावदिति। विपरीत इति। गोशब्दस्योच्चारणादौ न स्थूलादिर्गौर्ज्ञायत इत्यर्थः। नापीति। साधोः प्राशस्त्यमन्यत्रास्तीत्यर्थः। नन्वस्त

रित्यतोऽस्य निराकरणं सूचितमिति पूर्वोक्तेन न विरोधः।

ननु वार्त्तिकतात्पर्यव्याख्यामुपक्रम्य भाष्यव्याख्याऽकाण्डकूष्माण्डपतनन्याय[1]मनुहरतीत्यत आह। तदे-तद्भाष्यमिति। [न्या॰] तदेतद्वार्त्तिकं व्याख्यातुमस्माकं भाष्यव्याख्यापरिश्रम इत्यर्थः।

शब्दो हि यत्कार्यो यत्कारणं यद्ग्राह्यो यत्प्रमाणं यद्विरोधी यद्धर्मा यद्रूपो यद्विषयस्तदकार्यस्तदकारणं तदग्राह्यस्तदप्रमाणं तदविरोध्यतद्धर्माऽतद्रूपोऽतद्विष-योऽर्थः प्रत्यक्षत एवावसीयते। तदेतदस्यार्थज्ञानस्य विषयभेदानुविधायित्वं शब्दाद्भेदग्राहकत्वम्। यदि पुनरेषा प्रतीतिर्भेदमुल्लिखन्त्यप्यवधीर्यते? तदोक्त-धर्माणामविरोधे धर्मिपरिवर्त्तनाप्युपलम्भाः स्युः।

---

निराकरणं सूचितमित्याद्यनेन शब्दात्मकत्वनिरासयुक्तिः सूचिते-त्युक्तमिह तु शब्दार्थव्याधरहिततैव सूचितेत्युच्यत इति विरोध-विधूननायाह। उपपत्तिरिति।

विषयभेदानुविधायित्वं व्याचष्टे। शब्दोहीति। यद्धर्मेति समवायिधर्मपरं यद्रूप इति तदन्यधर्मपरम्। धर्मिपरिवर्त्त-

---

(१) पतमहत्वाभ—पा॰ २ पु॰।

तयोदाहरणार्थं कांश्चिदाह। चाक्षुषं हीति [८५।१९] चाक्षुषं हि चक्षुषैव जन्यते रूप एव नियतं रूपेणैव निरूप्यते, न शब्दे प्रवर्तते न शब्देनैव निरूप्यत इत्यर्थः। एवमुत्तरत्रापि। विषयिविषयानियमप्रसङ्गमुक्त्वा कर्मकरणानियमप्रसङ्गमाह। अपि चेति। [८५।१३]

ननु श्रोत्रमेवास्य कदाचिन्नास्तीत्यत आह। अस्ति हीति। [८५।१४] किमत्र प्रमाणमत आह। शब्दज्ञानं चेति। [८५।१४]

ननु लोचनाभावेऽप्यग्रहणमुपपद्यत इत्यत आह। अस्ति हीति। किमत्र प्रमाणमित्यत आह।

रूपज्ञानं चेति। [८५।१५]

---

नेति। गोरश्ववैधर्म्यस्यानुभूयमानस्यावधारणे गौरश्व एव इत्यन्वयमप्युपलम्भः स्यादित्यर्थः। श्रोत्रव्यावर्त्तनायाह। चक्षुषैवेति। ननु रूपमात्रविषयज्ञानासम्भवाद्रूप एव नियतं ज्ञानमप्रसिद्धमित्यत' आह। रूपेणैवेति। चाक्षुषं ज्ञानं रूपाविषयं न भवतीत्यर्थः। ननु न शब्दे प्रवर्त्तत' इत्ययुक्तं शब्दविशिष्टज्ञानस्य शब्दविषयत्वादित्यत आह। न शब्देनैवेति। एवमिति। श्रोत्रजं श्रोत्रेणैव जनितं शब्द एव नियतं शब्देनैव निरूप्यत्वात् न रूपादौ प्रवर्त्तते, न रूपादिना निरूप्यत इत्यर्थः। प्रसङ्गयोर्विषय-

उपलक्षणं चैतत् अर्थसामान्यस्य सर्वेन्द्रियग्राह्यत्वात् शब्दसामान्यमपि सर्वेन्द्रियैर्गृह्येत। शब्दसामान्यस्य वा श्रोत्रेन्द्रियैकवेद्यत्वात् अर्थसामान्यमपि श्रोत्रेन्द्रियैकवेद्यं भवेत्। तथा चेन्द्रियान्तराणां वैयर्थ्यमित्यपि द्रष्टव्यमिति।

इतरेतराभाववत्ताव्यवहाराभावप्रसङ्गमाह। अशब्द इति। [८५। १५] उपलक्षणं चैतत्। अनुत्पन्नो विनष्टोऽत्यन्तासन्नित्यचाप्यभावचर्येऽपि विवक्षितविपरीतमापद्यत-इति मन्तव्यम्।

इतरेतराभावव्यपदेशे विरोधप्रसङ्गमाह। अभाव इति। [८५। १७] अत्राप्यनुत्पादो विनाशोऽत्यन्ताभाव इति विरुद्धं स्यादिति मन्तव्यम्।

इह ह्यर्थशब्देनेन्द्रियग्राह्य एवाभिप्रेतोऽर्यमाणतयेति व्याख्यानात्। इन्द्रियस्य च ग्राह्यः स एव यस्तज्जन्यज्ञानविषयः। तदमी चक्षुरादिसन्निकृष्टा अप्यन्यविषयज्ञानापेक्षया अतदर्था एव। एवं चेन्द्रिय-

---

भदमाह। विषयीति। न च शब्दरूपयोः श्रोत्रग्राह्यतायामपि रूपत्वशब्दत्वयोः प्रतिनियतेन्द्रियग्राह्यतयाऽन्धबधिरादिनियमः स्यादिति वाच्यम्। व्यक्तियोग्यतयैव जातेर्योग्यत्वे रूपत्वशब्दत्वयोर्द्वीन्द्रियग्राह्यत्वप्रसङ्गादिति भावः। अर्थसामान्यस्येति। अर्थः-

गतिज्ञाने कः प्रत्यक्षतायाः प्रसङ्गः ? नहि तद-पेक्षया घटादयस्तदर्थाः। तस्मादप्रसक्तेऽप्यर्थशब्दस्य पदार्थमात्रपरत्वमभ्युपगम्य परिहारे गत्यन्तरं वार्तिक-कृता दर्शितं तच्च दुरवबोधमिति व्याचष्टे। नैतदिति।

[८५।१०] नैतदिन्द्रियार्थसन्निकर्षादुपजायते सत्तामात्र-व्यवस्थितात्, इन्द्रियार्थसन्निकर्षो ह्यज्ञायमान एव सत्तामात्रव्यवस्थितः प्रत्यक्षे विवक्षितः, अनुमाने तु लिङ्गस्य ज्ञायमानत्वमेव विवक्षितं न तु सत्तेत्यर्थः।

---

द्रव्यगुणकर्माणि, तत्सामान्यं सत्ता द्रव्यत्वगुणत्वकर्मत्वाणि। आगामि-प्रसङ्गादिशेषमाह। इतरेतरेति। एवं चेति।

नन्वेवं सुखादेरज्ञानरूपतया न (स) तदपेक्षयेन्द्रियसन्निकृष्टा अपि चन्दनादयोऽर्था इति सुखे प्रसङ्ग एव नास्तीति ज्ञानग्रहणं किमर्थं, कथं च घटेन्द्रियगतिविषयिकायां समूहालम्बनानुमिता-वतिप्रसङ्गो वारणीयः। मैवम्। अग्रे अर्थपदस्य पदार्थमात्रपर-त्वाभिधानेनापि सुखेऽप्यतिप्रसङ्गात्। समूहालम्बनायां अनुमितौ घटत्वस्य विषयत्वेऽपि तदिन्द्रियसन्निकर्षात्तदनुत्पत्तेः तत्सार्थत्वेन विवक्षितत्वात्। अत एवाह। इन्द्रियग्राह्यः स एवेत्याह। दुरवबोध-मिति। परामृश्यमाणस्य लिङ्गस्यैव करणत्वेनेन्द्रियसन्निकर्षादनुमि-त्यनुपपत्तेरित्यर्थः। तथापि परामृश्यमाणलिङ्गकरणत्वपक्षे टीका दुष्टैवेत्यत आह। सत्तामात्रेति। यद्यपि सत्तामात्रावस्थितादिति

नन्वनुमाने लिङ्गसत्तैव किं न विवक्षितेत्यत आह।

अत एवेति। [८१ । १७]

तत्स्मरणमात्रादेवेति। [८१ । १८] मात्रग्रहणं सत्तामभिप्रेत्य, न त्वनुमेयज्ञानं प्रति कारणतामभिप्रेत्य, धूमस्यैव ज्ञायमानस्य तत्कारणत्वात्। अन्यथा तत्कालाननुविधानप्रसङ्गात्।

यत्र हि विषयानपेक्षं ज्ञानमेव कारणं तत्र न विषयकालानुविधानम्। यथाऽभावज्ञाने प्रतियोगि-

---

श्रोत्रेण श्रूयते अध्याहारे च मानाभावः, तथापि ज्ञानानपेक्षसन्निकर्षकारणतायामेव सूत्रतात्पर्य्यं, निरपेक्षोपस्थितस्येन्द्रियार्थसन्निकर्षस्यानुपस्थितज्ञानापेक्षा निरपेक्षे तत्र बाधके सत्येव कल्प्यत इति व्युत्पत्तेः। किन्तु तद्ज्ञानादित्यत्र टीकायां ज्ञायत इति ज्ञानं ज्ञायमानमिति यावत् तच्छब्देन लिङ्गपरामर्षं ततः कर्मधारयेण ज्ञायमानाल्लिङ्गादित्यर्थः। तत्स्मरणमात्रादित्यत्र मात्रग्रहणेन लिङ्गज्ञानकारणत्वाभिधानात् परामृश्यमानं लिङ्गं व्यावर्त्तितमिति भ्रमवारणायाह। मात्रग्रहणमिति। नन्वेवं नाऽगृहीतविशेषणन्यायाल्लिङ्गज्ञानमेवास्तु करणमित्यत आह। अन्यथेति। लिङ्गज्ञानस्य करणत्वे समयविशेषमन्तर्भाव्य व्याप्तिग्रहे तत्तल्लिङ्गकालवृत्ति लैङ्गिकानुमानं न स्यात्। ज्ञायमानविशेषणजन्यविशिष्टबुद्धौ तु विशेषणसमानकालताविशेष्यस्य भायात्। यथा

ज्ञानजन्ये प्रतियोगिनः। अपि च लिङ्गानपेक्षस्य लिङ्ग-ज्ञानस्य[1] लिङ्गिज्ञानजनकत्वे प्रमाणानां गतिद्वय-वादोऽपि तत्र तत्र न स्यात्। तदयमर्थः—

---

दण्डी पुरुष इति प्रत्यक्षदण्डजन्यबुद्धौ पुरुषस्य दण्डसमानकालता भासते। एवं च धूमवानयं (वह्निमानयं) वह्निमानिति धूम-समानकालवह्निविषया धूमविशेषणिकाऽनुमितिर्ज्ञायमानधूमजन्या विशेषणसमानकालविशेष्यविषयकशाब्दज्ञानत्वात् दण्डी पुरुष इति प्रत्यक्षवदिति नानार्थः। ( ) )

परामर्शकारणत्वपक्षेऽपि न परामर्शमात्रं कारणमपि तु लिङ्ग-परामर्शः तथाच विशिष्टकारणताग्राहकमानेन' बाधकं विना विशेषणस्यापि विषयीकरणाल्लिङ्गमपि करणम्, न च परामर्शपरि-चायकतया तदन्यसिद्धं संयोगपरिचायकेन्द्रियस्यापि प्रत्यक्षे तथा त्वापत्तेः। संयोगादिविशेषकतया तस्य करणत्वे परामर्शविशेषकतया लिङ्गस्यापि तथात्वात्। किञ्च परामर्शस्य प्रमात्वादनुमितिः प्रमा जायते। तच्च विद्यमानलिङ्गविषयत्वमिति सिद्धं लिङ्गस्यानुमिति-हेतुत्वम्। अपि च परामर्शो व्यापाराभावान्न करणम् न च तस्य संस्कारो व्यापारः परामर्शस्यानुमितिचरमकारणतया संस्कारो-त्पत्तिकाले अनुमितेरेवोत्पत्तेः लिङ्गकरणत्वपक्षे परामर्श एव तद्व्यापार इति समञ्जसम्। न चैतत् स्वातन्त्र्येणास्माभिरुच्यत इत्यत आह। अपि चेति। टीकाकृताऽप्युक्तं 'किञ्चित्सत्तामात्रेण प्रमा-

(१) तज्ज्ञानमात्रस्य— पा० ३ पु०।

इन्द्रियार्थसन्निकर्षात्सत्तामात्रव्यवस्थितादुत्पद्यते ज्ञानं तत्साधकतमं प्रत्यक्षं, लिङ्गात्तु पञ्चरूपसम्पन्ना-दपि ज्ञायमानादेवासतोऽपि यदुत्पद्यते ज्ञानं तदनु-मानमिति।

नन्विन्द्रियविषयेष्वित्यध्याहारः तर्हि सूत्रे पूर्वेषां कि----- इत्यत आह। इमं चेति। [८१।१]

न ह्यनुमेयस्येन्द्रियेण सन्निकर्षादिति वदता ह्येव-मुक्तं यस्येन्द्रियेण सन्निकर्षात् ज्ञानमुत्पन्नं[1] नासौ तस्य विषयः, यस्तु विषयो न तस्येन्द्रियेण------ वादिदं जायते। तस्मादिन्द्रियार्थसन्निकर्षादुपजातं विज्ञानं यदि तदर्थविषयमेव भवति तदा तत्प्रत्यक्षम् न चैत-त्सूत्राल्लभ्यते। तस्माद्वार्त्तिककृतैव कृतोऽयमध्याहार इति कैश्चिदुक्तम्। स चायमसङ्गतो बोधः अध्याहार-

साधनं यथा प्रत्यक्षं, अनुमानादीनि तु स्वज्ञानेन प्रमासाधनानी'-त्यभिधानात्तस्याप्येतत्सम्मतं इत्यर्थः। असतोपीति। अभावादि-त्यर्थः। असतोऽच कारणत्वात्। तेन यत्राविद्यमानं लिङ्गं तत्र तत्प्रागभावध्वंसयोरेव लिङ्गत्वादिति भावः। नन्वेतावतैवाति-व्याप्तेर्निरासात् किमध्याहारकीर्त्तनेनेत्यत आह। नन्विति। तथा-प्यध्याहारमूलजिज्ञासा निष्फलेत्यत आह। न हीति। उभयथेत्या

(१) समुत्पद्यते– पा० ३ पु०।

स्याभयथाप्यनुपपत्तः तद्व्यावर्त्त्यस्यान्यथैव व्यावृत्तत्वात् अप्रसक्तेश्चेत्यर्थः।

(अव्यपदेश्यपदकृत्योपपादनम्।)

---

इन्द्रियार्थसन्निकर्षादुत्पन्नस्य हि ज्ञानस्य व्यभिचारसम्भवादव्यभिचारीति विशेषणं यद्यपि नानुपपन्नम् तथाप्येतद्व्यावर्त्त्यस्य सामान्यलक्षणेनैव व्यावृत्तत्वान्निष्प्रयोजनमिदम्, अवश्यं च तदनुवर्त्तनीयम्। नहि यत इत्यध्याहृतपदेन करणमात्रं परामृश्यते। तस्याप्रकृतत्वात्। किन्तु प्रमाकरणम्। तथा चायमर्थः—इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं यतः प्रमाणाद्भवति तत्प्रत्यक्षम्। एवं च व्यभिचारिणः कः प्रसङ्गः? इत्यत आह। यद्यपीति। [८२।५]

---

स्यार्थमाह। तद्व्यावर्त्त्यस्येति। न तत्सत्तामात्रस्थितादिन्द्रियसन्निकर्षाज्जायते इत्युक्तत्वादित्यर्थः। अप्रसक्तेश्चेति। अर्थशब्देनेन्द्रियग्राह्यस्याभिधानादित्यर्थः।

असत्प्रतिपक्षत्वादिपरामृश्यमानं लिङ्गं नानुमितिकारणम्। अतीतानागतधूमादिज्ञानेऽप्यनुमितिदर्शनात्। विद्यमानलिङ्गान्तरं तत्र कारणमिति चेत्। न। यत्रैकैव व्यक्तिर्लिङ्गं तत्र लिङ्गान्तराभावात्। सत्त्वेऽप्यपरामृष्टस्याकारणत्वात्। तत्र प्रागभावप्रध्वंसावेव

---

(१) व्यावर्त्तितत्वात्— पा० १ पु०।

**नन्वव्यभिचरिपदकरणं प्रमाणपदानुवर्त्तनं वेति न कश्चिद्विशेष इत्यत आह। अन्यथेति। [८।१]**

**अव्यभिचारिपदम् [८।१७] प्रमाणपदमित्यर्थः। प्रमाणस्यैवाव्यभिचारित्वात्। यद्यपि तच तत्पूर्वकमिति**

लिङ्गे तयोरप्यग्निसमानदेशत्वनियमादिति चेत्। न। यत्र वर्त्तमानतया सन्दिग्धो धूमोऽतीतभाविदिनवृत्तितया निश्चितस्तत्रावर्त्तमानतया धूमस्य तत्प्रागभावप्रध्वंसयोः सन्दिग्धत्वेनालिङ्गत्वात् यत्र पर्वते धूम इति ज्ञानाद्भूतभाविवर्त्तमानत्वाविषयादनुमितिस्तत्रोक्तरीत्यभावाच्च। अपि च लिङ्गं विनापि तत्परामर्शादनुमित्युत्पत्तेः व्यभिचाराल्लिङ्गं न तद्धेतुः। नच प्रमानुमितौ तद्धेतुः, परामर्शमात्रस्यानुमितिसामान्यहेतुतया तद्विशेषप्रमात्वाप्रमात्वाभ्यामेवानुमितेस्तथात्वापत्तेः। नापि विद्यमानलिङ्गविषयत्वं तत्प्रमात्वे तन्त्रम्। यदा कदाचिद्विद्यमानेन भूतभाविसाधारणेन तत्प्रमात्वोपपत्तेः। समयविशेषान्तर्भावेऽपि व्याप्तिग्रहे धूमकालस्य पक्षतावच्छेदकत्वात्। पक्षतावच्छेदकधर्मसामानाधिकरण्यं च साध्यमानस्यानुमाने सिद्ध्यतीति पक्षधर्मतावशादेव धूमसमानकालवह्निसिद्धौ अनुमानस्याप्रयोजकत्वात्। व्याप्तिस्मृतिः करणम्, तृतीयलिङ्गपरामर्शो व्यापार इति सव्यापारत्वमपि लिङ्गपरामर्शस्येति परामर्शः करणम्। यन्यस्तु सविशेषणे हीति न्यायेन परामर्शकरणतया नेय इति तत्त्वचिन्तामणावाङ्कः।

(इत्यव्यपदेश्यकृत्योपपादनम्।)

**लक्षणपदपर्यालोचनेनैव व्यभिचारिनिरासः, न ह्युक्तरूपे द्वे प्रत्यक्षे पूर्वं यस्य ज्ञानस्य तद्व्यभिचारिणीमपि धियं[1] जनयेत्। अत एव तदर्थं तत्र सामान्यलक्षणानुवर्तनमसारमेव। तथाप्येवम्भूतप्रत्यक्षद्वयजनिते संस्कारे निर्णये चाऽनुमानत्वप्रसङ्गस्तदवस्थ एव, तस्मात्तन्निवृत्त्यर्थं प्रमाणपदं न कृतं चेदवश्यमनुवर्त्तनीयमित्यर्थः॥**

तस्याप्रकृतत्वादिति। यद्यपि प्रमाकरणं प्रमाणमिति सामान्यलक्षणे करणमपि प्रकृतमेव, विशिष्टोपस्थितौ विशेष्योपस्थितेरावश्यकत्वात् तस्यैव यतः पदेन परामर्शः सम्भवति, (तथापि) तदा यद्विशेषणविशिष्टं विशेष्यं बुद्धिस्थं, सर्वनाम्नापि तादृशमेव परामृश्यते। यथा दण्डी पुरुषस्तिष्ठति तमानयेत्यत्र व्युत्पत्तिविशिष्टपरामर्श (?) एवेति भावः। ननु चाव्यभिचारित्वं ज्ञानधर्मः तेन कथं करणविशेषवाचिनाऽनुमानपदेन सामानाधिकरण्यमित्यत आह। प्रमाणपदमिति। अव्यभिचारित्वादिति। अव्यभिचारिज्ञानजनकत्वादित्यर्थः। तथाच कार्यवाचकं पदं कारणे प्रयुक्तमिति भावः। न हीति। व्याप्तिविषयकं पक्षधर्मताविषयकं च प्रत्यक्षद्वयमित्यर्थः। तथापीति। यद्यपि संस्कारो न प्रत्यक्षद्वयजन्य इति नचातिव्याप्तिर्नास्ति, निश्चयश्च प्रमाणपदेनापि व्यवच्छेत्तुं न शक्यस्तस्यानुमितिरूपतया क्वचिदुपमितिकरणत्वात्। तथापि साक्षात्परम्प-

(१) प्रमा—पा० १ पु०।

यद्येवं किमव्यभिचारिपदप्रयोजनमित्यत आह। तथापीति ॥ [८६।७]

नोपयुज्यते। [८६।८] परस्पराश्रयप्रसङ्गादित्यपि द्रष्टव्यम्। तथापि नियमो न स्फुटीकृत(१) इत्यत आह। तत्रेति। [८६।११]

नन्वनुमानवदव्यभिचारसिद्धा फलासिद्धिर्न प्रत्यक्षे यथा, तथा शब्देऽपि, ततस्तदवरोधनार्थं तत्राप्य-व्यभिचारिपदावतारप्रसङ्ग इत्यत आह। शब्दादौ त्विति। [८६।१४] प्रत्यक्षे फलाव्यभिचारनिश्चयेनैवा-व्यभिचारनिश्चय इति नियमो नान्यत्रेत्यर्थः ॥

रासाधारणं प्रयोजकमात्रं विवक्षितमनुवृत्तप्रमाणपदाच्चानुमिति-करणविवक्षया न निर्णयेऽतिप्रसङ्ग इति भावः। परस्परेति। चाक्षुषादिप्रमया लिङ्गेन चक्षुराद्यनुमितिरनुमिताच्च तस्मात्तदुत्प-त्तिरित्यर्थः। प्रत्यक्ष इति। यथा चक्षुरादीनामतीन्द्रियतया दोषा-द्यसहकृतत्वमशक्यनिश्चयमतस्तज्जनितज्ञानप्रमात्वनिश्चयादेव प्रामाण्य-निश्चयो न तथाऽनुमाने तत्र तदभावेऽप्यनुमेयाव्यभिचारिलिङ्गस-मुत्थतया तन्निश्चयात्, एवं शब्देऽपि प्रवृत्तिसामर्थ्याविष्टतप्रामाण्य-दृष्टार्थभेदभागेनैककर्तृकतया पूर्वमेव प्रामाण्यनिश्चय इत्यर्थः।

टीकायां 'सृण्येव जर्भरी तुर्फरीतू-इत्यस्य जर्भरी' जृम्भमाणौ तुर्फरी-हस्तिनौ। सृण्येव यथाङ्कुशेन तुद्यमानावित्यर्थमाह। ननु

(१) स्फुटीभूत— पा० २ पु०।

अव्यभिचारिपदोपादानं [८१।१५] फलविशेषणतयेति शेषः। अयं च नियमः स्वरूपतोऽपिफलद्वारैव प्रत्यक्षमुन्नीयते न त्वन्यथा। अनुमानादिकं तु प्रतीतं सत्फलाय कल्पते न त्वन्यथेति नियमे सति स्यादिति। अयमप्यर्थाक्षिप्ततया प्रागेव दर्शितो द्रष्टीति। अपरमप्युत्पत्तिंज्ञप्तिभ्यां नियमद्वयं स्पष्टमाह। अथवेति। [८३।१५]

कारणमुत्पादकं प्रत्यायकं च। उभयं साधयति। न हीति। [८१।२१] उपाधिशङ्कानिवृत्त्यर्थं तर्कसहायत्वोपवर्णनम्।

आगमस्यापि च वक्तृश्रोतृगतत्वेन प्रत्यक्षापेक्षा उत्पत्तौ ज्ञप्तौ च यतोऽतः संमुग्धमाह। एवमिति। [८७।२]
तथाऽप्ययमर्थः कथमव्यभिचारिपदोपादानमात्रात् लभ्यत इत्यत आह। तदयं सङ्क्षेपः। सोऽयं सूत्रकार-

प्रत्यक्षस्य प्रमाणेतरव्यावृत्तरूपमत्राभिधेयं तच्चात्र नोक्तं अव्यभिचारित्वस्य ज्ञानधर्मत्वादित्यत आह। फलेति। अयं चेति। अयं च नियमः पूर्वोक्तः स्वरूपतोऽपीत्यादिनियमे स्यादित्यर्थः।

नियमान्यत्वशङ्कानिराकरणायाह। अपरमपीति। अन्यादृशं नियममाहेत्यर्थः। ननु 'न ह्यस्ति सम्भव' इत्यादिपूर्वटीकया 'न ह्यस्तीत्यादि' पुनरुक्तमित्यत आह। तथापीति। एतादृशनियमनबोधनफलमाह। तदयमिति। प्रत्यक्षे यत्र नियमस्तत्रापि

स्येह विशेषतः प्रयत्नो ज्ञापयति तस्मिन्नव्यभिचारिण्यन्यत्र व्यभिचारशङ्कैव नास्ति अत इहैव तद्ग्रहाय विशेषतोयतितव्यमिति ।

यद्यपि ज्ञप्तिपक्षे लौकिकवचसां प्रवृत्तिसामर्थ्यादिना व्यभिचाराभावग्रहस्तथापि पारलौकिकागमाव्यभिचारनिश्चय आप्तोक्तत्वेनैव । तच्च मूलभूतप्रत्यक्षसिद्धेरिति[1] ॥

ननु भाष्यवार्त्तिकयोः का गतिः? न ह्ययमर्थस्ततः प्रतीयते, किं नाम? व्यभिचारिव्यावृत्तिमात्रमित्यत आह । तस्मात्सुष्ठूक्तमिति । [८७।८] स एवार्थः. किन्तु नियम्यतया न तु विधेयतयेत्याशयः । उच्चावचमुच्चलत इति जलसाहश्यसङ्कीर्त्तनं भ्रान्तिबीजतया । उपघातदोषान्नयनस्यातपादिना ॥

एतदुक्तं भवति । उपदर्शितार्थाप्रापकत्वं व्यभिचारः । न चार्थेन कश्चिदर्थ उपदर्शितोयमप्रापयन्नर्थो व्यभिचरेत् । अन्यथार्थोपदर्शनस्वभावस्य चोत्पत्तिः । न चार्थोपदर्शनस्वभावो न चान्यथोत्पन्नः । तस्मादेवं-

धर्मिधर्मिणोः सम्बन्धं बोधयदेव वाक्यमन्यव्यावृत्तिं धर्मस्य बोधयतीत्यर्थः । नन्विति । नापूर्वार्थप्रापकतयेत्यर्थः । न चार्थस्ये-

(१) प्रत्यक्षसिद्धेरेवेति— पा० ३ पु० ।

भूतो व्यभिचारो ज्ञानस्यैव, न चार्थस्य। तदिदमुक्तम्। प्रत्ययो भ्रान्तो जायत इति। [८०। १९]

वृद्धसम्मतिमाह। यथाहुरिति। [८०। २०] अन्ध इति सम्यक्दर्शनोपायरहितत्वमात्रपरम्। न पश्यतीति सम्यक्ज्ञानाभावमात्रोपलक्षणपरं तेन पुरुषापराधः स भवतीति। अथादर्शनं विपरीतदर्शनं वेत्यपराध इत्यर्थः। यथाहि स्थाणुरदृश्यमानस्तथैव पुरुषत्वेनापि दृश्यमान इति तात्पर्यम्।

यद्यपि संशयोऽपि सामान्यलक्षणानुवृत्त्यैव निरस्तस्तस्याऽप्रमाणफलत्वात्तथाप्यव्यभिचारिपदं नियमज्ञापनायावश्यं कर्त्तव्यं तेन च व्यभिचारिव्युदासमुखेनैव नियमः प्रदर्शयितव्यः संशयोऽपि व्यभिचारिज्ञानीयो-ऽतस्तेनैवास्य व्युदासो युक्त इत्याशयवानाह। अव्यभिचारिपदेनैवेति॥ [८०। १८]

ननु व्यभिचारित्वमेवास्य कथं? विपर्ययज्ञानं हि निश्चयाकारमयं तु न तथेत्यत आह। नोखल्विति।

त्यचापि व्यभिचार इत्यनुषञ्जनीयम्। तेनैवाऽस्येति। प्रकरणोपस्थित्यपेक्षयोपात्तपदोपस्थितेरन्तरङ्गतया तत एव व्यभिचारिणः संशयस्य व्युदासो युक्त इत्यर्थः। अप्रसक्तनिषेधमाशङ्क्य शङ्कान्तरमाह। नन्विति। निश्चयत्वव्याप्यं विपर्ययत्वं नानिश्चयात्मकसंशये

नहि निश्चयत्वमात्रं प्रयोजकम्। किं तर्हि? विसंवादः[१]। स च प्राप्त्ययोगः। न च प्राप्तियोगो द्विरूपस्य वस्तुनः क्वचित्कदाचित्केनचिदप्राप्तेरित्यर्थः।

न च वाच्यं भ्रान्तेरभ्रान्तिप्रतियोगित्वादनियतस्य वस्तुनः क्वचिदपि प्रमाणागोचरत्वादसत्ख्यातेश्च नाभ्युपगमात् सर्वमिदमसमञ्जसमिति। न खलु दोलायमानः स्थाणुपुरुषव्यतिरिक्तः कश्चिदनियतो नामार्थः परिस्फुरति यत्राऽसमञ्जसं स्यात्॥

ननु स्थाणुपुरुषावुभावेव यद्यारोपितौ तदोभयोप-

---

सम्भवतीत्यर्थः। द्विरूपस्येति। स्थाणुपुरुषात्मकस्येत्यर्थः। न च वाच्यमिति। अन्यत्र प्रमितस्यान्यत्रारोपो भ्रान्तिः न च स्थाणुपुरुषात्मकं किञ्चिदस्ति प्रमाणगोचर इति न तदारोप इत्यर्थः। नोखल्विति। स्थाणुपुरुषयोः स्थाणुत्वपुरुषत्वे प्रमिते एवैकत्रारोप्येते। न स्थाणुपुरुषात्मकत्वमनियतत्वमिति नारोप्याप्रसिद्धिरित्यर्थः।

यत्र यद्बाधितं तत्रैव तदारोपितमिति नियमाद्यदि स्थाणुपुरुषोभयात्मकत्वे बाधकं स्यात्तदैव तदुभयविषयस्यारोप्यत्वं स्यात् न चैवं, क्वचित्पुरोवर्त्तिनः स्थाणुत्वात् पुरुषत्वाच्चेत्याह। नन्विति। अथ यद्यपि संशयस्य स्थाणुपुरुषोभयविषयत्वं, तथापि यद्बाधितं यत्र तत्र तदारोप्यते। एवं यत्र स्थाणौ पुरुषत्वारोपस्तत्र धर्मिणि

---

(१) प्रयोजकमत्र किं तु विसंवादः—पा॰ १ पु॰।

मर्दात्मना बाधकेन भवितव्यम्। अथान्यतरस्यारोपस्तदाऽपरस्य पारमार्थिकत्वात्तत्प्रतिपत्तेरबाध्यत्वमेव स्यात् यथा शुक्तौ रजतांशस्य मिथ्यात्वे शुक्लभास्वरत्वादिनिश्चयस्य सत्यत्वं, तथा च स्थाण्वंशे निश्चयः पुरुषांशे त्वेककोटिसन्निवेशवानेव विभ्रम इति संशयो दत्तजलाञ्जलिः प्रसक्तः[१]। तस्मादुभयस्मरणमात्रात्मकोऽयमिति स्यात्। न स्यात्, यत्र तावदुभयोरनुभयात्मके पाषाणस्तम्भादौ समारोपस्तत्रोभयोपमर्दक एव बाधक इति किमत्र वक्तव्यम्। यत्राप्येकतरारोपस्तत्रापि नापरांशे निश्चयः। परस्परप्रतिक्षेपोपस्थितिव्याप्त्या निश्चयात्मकस्यैव ज्ञानस्योत्पादात्। यत्र हि रजतत्वारोपे शुक्लत्वादौ निश्चयस्तत्रारोपितानारोपितयोर्मिथो वि-

निश्चयत्ववद्धर्मांशेऽपि निश्चयत्वात्रानिश्चयात्मकः संशयः स्यादत आह। अथेति। तस्मादिति। स्थाणुपुरुषत्वे स्मर्य्येते ताभ्यां पुरोवर्त्तिन्यसंसर्गो न गृह्यत इत्येतावतैवाभेदव्यवहार इत्यर्थः।

यत्र तावदिति। स्थाणुपुरुषानात्मके यत्र तदुभयारोपस्तत्रोभयत्र बाधकमस्त्येवेत्यनुशयेनोत्तरमित्यर्थः। यत्रापीति। एकदा परस्परविरुद्धस्थाणुपुरुषव्यावर्त्तकधर्मग्रहादुभयारोप एक एवोपपद्यते। न चार्थादनिश्चयात्मक एवेत्यर्थः। विपर्यये विशेषमाह। यत्र हीति।

(१) स्यात्—पा० १ पु०।

रोधाभावः। तस्मादारोपितानारोपितत्वाविशेषेऽपि यत्रारोपितानारोपितौ परस्पराविरुद्धौ स विपर्ययः। यत्र तु परस्परविरुद्धौ स संशय इति सर्वमवदातम्। यद्येवं संशयोऽपि विपर्ययान्तर्भूतस्तदपाकरणेनैवापाकृतश्च किमर्थं तर्हि व्यवसायात्मकपदं चकार सूत्रकारः। स न्यासोऽपरोऽर्थो[1] व्याख्यातृभिः किमित्युपेक्षितः तथाभूतोऽर्थाचीनैः कथमुन्नीयत इत्यत आह। तस्मादिति॥ [८७।१०]

( इत्यव्यभिचारिव्यवसायात्मकपदकृत्यवर्णनम् )

---

स्यादेतदिति। [८८।१] स्यादेतत् तदवबोधार्थं[2], यदि

---

तस्मादिति। न च परस्परविरुद्धयोर्यत्रारोपस्तद्व्यापकत्वं स्मृतकोट्योर्विरोधे भासमाने विशेषादर्शने च विरुद्धानेककोटिकमेव ज्ञानं जायते, न त्वेककोटिकमिति विवक्षितत्वात्। सोऽपर इति। व्यवसायात्मकमिति पदस्य संशयव्युदासार्थतायाः सोपरोऽर्थः सविकल्पकप्रत्यक्षावरोधार्थतेत्यर्थः। व्याख्यातृभिर्भाष्यकारादिभिः।

( इत्यव्यभिचारिव्यवसायात्मकपदकृत्यवर्णनम् )

---

स्यादित्येतस्य तर्कस्य व्याप्यव्यापकासञ्जने विवेचयति। स्यादेतदिति। एतद्व्यवसायात्मकपदं सविकल्पकप्रत्यक्षावरोधार्थं तदा

---

(१) सन्यासोऽपरोऽर्थो—पा० १ पु०।
(२) स्यात् तदवरोधार्थं—पा० १ पु०।

तत्प्रत्यक्षं स्यात्, न त्वेतदस्तीत्यर्थः। हेतुमाह। अभिलापेति। [८८।१] अभिधानाकारसंसर्गयोग्याभिधेयाकारं हि तदित्यर्थः। विपक्षाद्व्यावृत्ति[1]माह। न चेति [८८।१] अभिधानाभिधेयसंसर्गो हि तदाकारयोः संसर्गनियमः। स च संयोगसमवायकार्यकारणभावरूपस्तावन्न सम्भवतीत्याह। न ह्यर्थे शब्दाः सन्तीति। [८८।१] संयोगेन

---

स्यादिति व्यापकाभञ्जनमुक्तम्। यदि तत्प्रत्यक्षं स्यादिति व्याप्याभञ्जनमुक्तम्। न त्वेतदस्तीत्यनेन न व्यवसायात्मकं प्रत्यक्षं भवितुमर्हतीत्यस्यार्थ उक्त इत्यर्थः। ननु सविकल्पकं ज्ञानं नाभिलापसंसर्गयोग्यप्रतिभासं ज्ञानाकारपक्षे ज्ञानाकारस्यैवाभिलापसंसर्गितया ज्ञाने तदभावात्, निराकारतापक्षे ज्ञानस्य साक्षादभिलापसंसर्गाभावादित्यत आह। अभिधानेति। अभिधानाकारसंसर्गयोग्योऽभिधेयाकारो यस्येत्यभिधेयाकारस्यैवाभिलापसंसर्गयोग्यत्वोक्तेरिति साकारपक्षे नोक्तदोष इत्यर्थः। ननु हेतावुक्ते दृष्टान्त आकाङ्क्षितः कुतो नोक्त इत्यत आह। विपक्षादिति। साध्याभावप्रयुक्तः साधनाभावो व्यतिरेकिणि गमक इति प्रत्यक्षात् साधनव्यतिरेक उक्त इत्यर्थः। नन्वाकारयोः संसर्गमुक्त्वाऽऽकारिणोस्तदभावाभिधानमयुक्तमित्यत आह। अभिधानेति। आकारिणोः संसर्गिनियतत्वादाकारसंसर्गस्य तदभावे संसर्ग एव न स्यादाकारयोरित्यर्थः। नन्वर्थे शब्दस्य वाच्यवाचकसंसर्गोऽस्त्येवेत्यत आह। संयोगेनेति।

---

(१) विपक्षाद्व्यतिरेक—पा॰ १ पु॰।

समवायेन कार्यतया वेति शेषः। अर्थात्मानो वेति। [८८।१] न हीत्यनुषज्यते। उपपत्तिमाह। तथा सतीति। [८८।२] न चेति। [८८।४]

स हि संवेदनधर्मो ग्राह्याकाररूपो वा स्यात्? तन्निरपेक्षग्राहकाकाररूपो वा। न तावदाद्यः। अर्था-संस्पर्शी यतः। अर्थासंस्पर्शश्चास्यातद्वृत्तित्वात् अत-दुत्पत्तेश्चेति पूर्वैव युक्तिरित्याशयः। नापि द्वितीयः। अर्थेषु तन्नियोजनात्। अर्यमाणेषु बाह्येष्वर्थेष्वेव तस्याभिलापस्य नियोजनात्। नियमतो(१) बाह्यसामा-नाधिकरण्येन प्रतीतेरित्यर्थः॥

एतदुक्तं भवति। संवेदनाकारो हि ज्ञातृत्वादि-स्तत्सामानाधिकरण्येन प्रतीयते। अभिलापस्तु बाह्य-

नन्वर्थासंस्पर्शीति यद्यभिलापविशेषणं? तदाऽर्थेषु तन्नियोजना-दिति विरुद्धम्, अथ निषेधार्थस्तदा पुनरुक्तम्, अर्थसंस्पर्शित्वनि-षेधेनैव तदसंस्पर्शित्वस्य दर्शितत्वादित्यन्यथा विकल्प्य योजयति। स हीति। सोऽभिलापः संवेदनधर्मोभवन् ग्राह्यार्थस्य या शब्दा-कारता तदनुरोध्याकाररूपोऽर्थनिरपेक्षो ज्ञानाकार एवेत्यर्थः। निशब्दार्थमाह। नियोगतः१। योजनार्थमाह। बाह्येति। ननु ज्ञानधर्मोऽपि कश्चिद्बाह्ये प्रतीयत एवेत्यत आह। एतदुक्तमिति। यद्यभिलापो ज्ञातृधर्मः स्यादहं घट इति ज्ञानधर्मस्य बाह्यनिष्ठ-

(१) नियोगतो—पा० १ पु०।

सन्नियुक्तस्तत्सामानाधिकरण्येनेत्यतो न संवेदनधर्मः। तस्माद्विषयतः स्वरूपतश्च यतोऽस्य प्रत्यक्षस्य नाभिलापसंसर्गयोग्यतासम्भवस्तस्मादिदमर्थात्सरूपकादुपजायमानं ज्ञानं विकल्परूपमर्थमेवादर्शयेदिति प्रसङ्गः। नाभिलापमर्थसंसर्गितयेति शेषः॥

स्यादेतत्। स्वकारणादुपजातस्य कारणमकारणं वा कश्चिदेव विषयः। एवं चार्थादुपजातस्याप्यजनकोऽप्यभिलापोऽस्य विषयो यदि स्यात्को दोष इत्यत आह। न हीति॥ [८८६]

रूपाच्चक्षुषो विषयादुपजायमानं चाक्षुषं विज्ञानं नयनाविषयरससहितमेतद्रूपमिति।

---

लेनाप्रतीतेरित्यर्थः। विषयतो बाह्यतः स्वरूपतो बाह्यानपेक्षतोयतः। ननु ज्ञानं यदा निर्विकल्पकं? तदा तदर्थमादर्शयत्येवेतीष्टापत्तिः। अथ सविकल्पकं? तदर्थाज्जायमानमेव नेत्यत आह। तस्मादिति। स्वरूपकात् समानाकारात् यदि सविकल्पकमर्थाज्जायमानं स्यादर्थमेव दर्शयेत् न चार्थमुपदर्शयति, अभिलापसंसर्गित्वादर्थस्य च तदभावादित्यर्थः। ननु यत्राभिलाप एवार्थस्तत्र तस्मादुत्पन्नं ज्ञानं तमादर्शयत्येवेत्यत आह। अर्थसंसर्गितयेति। एतावतैव सिद्धेऽपिमोपयोगार्थमाह। स्यादेतदिति।

ननु रूपज्ञानस्य रसाविषयकत्वं कुत इत्यत उक्तम्। चक्षुष

एतदुक्तं भवति। साकारवादसिद्धौ तावदनुपप्लुतमाकारमादधदेवार्थो विषयः। न च शब्दसंसर्गयोग्यताऽर्थस्यास्ति येन तदाकारं ज्ञानं भवेत्। न चेन्द्रियविज्ञाने शब्दः स्वतन्त्र एवाकाराधायको विकल्पकाले तदभावात्। भावे वा स्वतन्त्रः प्रतिभासेत नार्थसंसर्गितयेत्युक्तम्। निराकारतापक्षेऽप्यात्मानात्मप्रकाशनशक्तेर्विज्ञानस्य स एव विषयो यत्रेन्द्रियं नियतसामर्थ्यम्, अन्यथाऽतिप्रसङ्गात्। न चक्षुरिन्द्रियान्तरविषये समर्थम्, न च चक्षुर्विषयस्यैव शब्दसंसर्गोऽस्तीति चिन्तितमिति॥

प्रसङ्गमुक्त्वा विपर्ययमाह। तस्मादिति। [८८। ६]
अभिलापसंसर्गानपेक्षमर्थं तत्संसर्गिणमादर्शयदध्यवस्यद्विकल्पवासनोत्थापितं नार्थसामर्थ्यसमुत्थमिति भावः।

इति। दोषं निरस्यति। एतदुक्तमिति। अनुपप्लुतमबाधितम्। तदाकारं शब्दाकारम्। तदभावादिति। तत्काल इन्द्रियसन्निकृष्टशब्दाभावादित्यर्थः। न(ार्थ)(नु)संसर्गितयेति। शब्दविशिष्टार्थज्ञाने श्रोत्रचक्षुषोः प्रत्येकविषयोर्नैकस्यापि सामर्थ्यमस्तीत्यर्थः। उपसंहारभ्रमनिरासायाह। प्रसङ्गमिति। नन्वभिलापसंसर्गानपेक्षो न सर्वस्तत्संसर्गितया व्यवसीयते, अपि तच्छब्दार्थ इत्यतः पूरयति। ननु दर्शनं बौद्धमते निर्विकल्पकं, नच तदभिलापसंसृष्टार्थविषयकमित्यत आह। अध्यवस्यदिति। विषयीकरणमध्यवसायः।

| | | |
|---|---|---|
| *Dasa Rupa (Text), Fasc. 2-3 @ -/10/- each | 1 | 4 |
| Dharmabindu, Fasc. 1 @ -/10/- each | 0 | 10 |
| Dictionary of the Kashmiri Language, Part I | 15 | 0 |
| Gadadhara Paddhati Kālasāra, Vol. I, Fasc. 1–7 @ -/10/- each | 4 | 6 |
| Ditto Ācārasāra, Vol. II, Fasc. 1–4 | 3 | 2 |
| Gobhilīya Grhya Sūtra, Vol. I | 3 | 2 |
| Ditto Vol. II, Fasc. 1–2 @ 1/4/- each | 2 | 8 |
| Ditto (Appendix) Gobhilā Parisista | 2 | 0 |
| Ditto Grihya Sangraha | 0 | 10 |
| Haralata | 1 | 14 |
| *Institutes of Vishnu (Text), Fasc. 2 @ -/10/- each | 0 | 10 |
| *Kāla Viveka, Fasc. 1–7 @ -/10/- each | 4 | 6 |
| Karmapradiph, Fasc. 1 | 1 | 4 |
| Kātantra, Fasc. 1–6 @ -/12/- each | 4 | 8 |
| *Katha Sarit Sagara (English), Fasc. 4–14 @ 1/- each | 11 | 0 |
| Kavi Kalpa Lata, Fasc. 1 | 0 | 10 |
| Kavindravacana Samuccayah | 3 | 8 |
| Kiranavali, Fasc 1–3 @ -/10/- | 1 | 14 |
| Kurma Purana, Fasc. 1–9 @ -/10/- each | 5 | 10 |
| *Lalita Vistara (English), Fasc. 1–3 @ 1/- each | 3 | 0 |
| Madana Pārijāta, Fasc. 1-11 @ -/10 - each | 6 | 14 |
| Mahā-bhāsya-pradipodyota, Vol. I, Fasc. 1–9; Vol. II, Fasc. 1–12; Vol. III, Fasc. 1–10 @ -/10/- each | 19 | 6 |
| Ditto Vol. IV, Fasc. 1–3 @ 1/4/- each | 3 | 12 |
| Maitra, or Maitrayaniya Upanishad, Fasc. 1–2 | 1 | 4 |
| Manutīkā Sangraha, Fasc. 1–3 @ -/10/- each | 1 | 14 |
| Mārkandeya Purana (English), Fasc. 1–9 @ 1/- each | 9 | 0 |
| *Markandeya Purana (Text), Fasc. 4–7 @ -/10/- each | 2 | 8 |
| *Mimansa Darcana (Text), Fasc. 9, 11–17 @ -/10/- each | 5 | 0 |
| *Mirror of Composition (English), Fasc. 4 | 2 | 0 |
| Mugdhabodha Vyakarana, Vol. I, Fasc. 1–7 @ -/10/- each | 4 | 6 |
| Nirukta (2nd edition), Vol. 1, Fasc. 1–2 @ 1 4/- | 2 | 8 |
| *Nirukta (old edition), Vol IV, Fasc. 1–8 @ -/10/- each | 5 | 0 |
| Nityācārapaddhati, Fasc. 1–7 @ -/10/- each | 4 | 6 |
| Nityācārapradipa, Vol. I, Fasc. 1–8, Vol. II, Fasc. 1–4 @ -/10/- each | 7 | 8 |
| Nyaya Vartika Tatparya Parisudhi, Fasc. 1–5 @ -/10/- each | 3 | 2 |
| *Nyayavartika (Text), Fasc. 2–7 @ -/10/- each | 3 | 12 |
| Nyayasarah | 2 | 0 |
| Padumāwati, Fasc. 1–6 @ 2/- each | 12 | 0 |
| *Parāçara Smrti, Vol. I, Fasc. 2–8; Vol. II, Fasc. 1–6; Vol. III, Fasc. 1–6 @ -/10/- each | 11 | 14 |
| Parāçara, Institutes of (English) @ 1/- each | 1 | 0 |
| *Paricista Pravan (Text), Fasc 5 @ -/10/ each | 0 | 10 |
| Pariksamukha Sutram | 1 | 0 |
| Prabandhacintāmaṇi (English), Fasc. 1–3 @ 1/4/- each | 3 | 12 |
| Prākrita-Paingalam, Fasc. 1–7 @ -/10/- each | 4 | 6 |
| Prthviraja Vijaya, Fasc. 1–2 | 1 | 4 |
| Rasarnavam, Fasc. 1–3 | 3 | 12 |
| Ravisiddhanta Manjari, Fasc. 1 | 0 | 10 |
| *Saddarśana-Samuccaya, Fasc. 2–3 @ -/10/- each | 1 | 4 |
| Sadukti-karna-mrita, Fasc. 1 @ -/10/- each | 0 | 10 |
| Samaraicca Kaha, Fasc. 1–7 @ -/10/- each | 4 | 6 |
| *Samavada Sanhita, Vol. I, Fasc. 1–4, 6–10; Vol. 2, Fasc. 2–6; Vol. 3, Fasc. 1–7; Vol. 4, Fasc. 1–6; Vol. 5, Fasc. 1–8 @ -/10/- each | 21 | 4 |
| *Sankara Vijaya (Text), Fasc. 2–3 @ -/10/- each | 1 | 4 |
| *Sankhya Aphorisms of Kapila (English), Fasc. 2 | 1 | 0 |
| *Sankhya Pravachana Bhashya, Fasc. 2 | 0 | 10 |
| Sāṇkhya Sūtra Vṛtti, Fasc. 1–4 @ -/10/- each | 2 | 8 |
| Ditto (English), Fasc. 1–3 @ 1/- each | 3 | 0 |
| Siva Parinahya, Fasc. 1–2 | 1 | 4 |
| Six Buddhist Nyaya Tracts | 0 | 10 |
| Smriti Prakasha, Fasc. 1 | 0 | 10 |
| Srāddha Kriyā Kaumudī, Fasc. 1–6 @ -/10/- each | 3 | 12 |
| Srauta Sutra of Latyayana (Text), Fasc. 1–9 @ -/10/- each | 5 | 10 |
| Sri Surisarvasvam, Fasc. 1–3 @ -/10/- each | 1 | 14 |
| Suçruta Saṁhitā (English), Fasc. 1 @ 1/- each | 1 | 0 |
| Suddhi Kaumudī, Fasc. 1–4 @ -/10/- each | 2 | 8 |
| Sundaranandam Kavyam | 1 | 0 |
| *Suryya Siddhanta, Fasc. 2 @ 1/4/- | 1 | 4 |
| Syainika Sastra | 1 | 0 |
| *Taittereya Saṁhita (Text), Fasc. 17–45 @ -/10/- each | 18 | 2 |
| *Taittiriya Aranyaka of Black Yajur Veda (Text), Fasc. 5–11 @ -/10/- | | |

Tantra Vartika (English), Fasc. 1–15 @ -/1/- .. [illegible] [illegible]
*Tattva Cintamani, Vol. [illegible], Fasc. 7–10; Vol. III, Fasc. 1–[illegible]; Vol. IV, Fasc. [illegible]; Vol. V, Fasc. 1–5, Part IV, Vol. II, Fasc. 1–12 @ -/10/- each .. .. .. .. 14 6
Tattva Cintamani Didhiti Prakas, Fasc. 1–6 @ -/10/- each .. .. 3 12
Tattva Cintamani Didhiti Vivriti, Vol. I, Fasc. 1–8; Vol. II, Fasc. 1–3, Vol. III, Fasc. 1 @ -/10/- each .. .. .. .. 7 8
Tattvarthadhigama Sutram, Fasc. 2–3 @ -/10/- each .. .. 1 4
Tirthacintamoni, Fasc. 1–4 @ -/10/- each .. .. .. 2 8
Trikāṇḍa-Maṇḍanam, Fasc. 1–3 @ -/10/- .. .. .. 1 14
Tul'si Satsai, Fasc. 1–5 @ -/10/- .. .. .. .. 3 2
Upamita-bhava-prapañca-kathā, Fasc. 1–14 @ -/10/- each .. .. 8 12
*Uttara Naiṣhadha (Text), Fasc. 6–12 @ -/10/- each .. .. 4 6
Uvāsagadasāo (Text and English), Fasc. 1–6 @ 1/- .. .. 6 0
Vajjalaggam, Fasc. 1 .. .. .. .. .. 0 10
Vallāla Carita, Fasc. 1 @ -/10/- .. .. .. .. 0 10
*Varaha Purana (Text), Fasc. 2–14 @ -/10/- each .. .. 8 2
Varṣa Kriyā Kaumudī, Fasc. 1–6 @ -/10/- .. .. .. 3 12
Vayu Purana (Text), Vol. I, Fasc. 1–6; Vol. II, Fasc. 1–7 @ -/10/- each 8 2
*Vedanta Sutras (Text), Fasc. 7–13 @ -/10/- each .. .. 4 6
Vidhāna Pārijāta, Fasc. 1–8; Vol. II, Fasc. 1 @ -/10/- .. .. 5 10
Ditto Vol. II, Fasc. 2–5 @ 1/4/- .. .. .. 5 0
Ditto Vol. III, Fasc. 1 .. .. .. .. 0 10
Vishahitam, Fasc. 1 .. .. .. .. .. 0 10
Vivādaratnākara, Fasc. 1–7 @ -/10/- each .. .. .. 4 6
Vrhat Svayambhū Purāṇa, Fasc. 1–6 @ -/10/- .. .. .. 3 12
*Vrhannaradiya Purana (Text), Fasc. 2–6 @ -/10/- each .. .. 2 8
Yogaśastra, Fasc. 1–5 .. .. .. .. .. 5 10
*Yoga Sutra of Patanjali (Text and English), Fasc. 3–4 (Fasc. 3, Re. 1/-, Fasc. 4, Rs. 2-) .. .. .. .. 3 0

## *Rajasthani Series.*

A Descriptive Catalogue of Bardic and Historical Manuscripts.
Sect. i: Prose Chronicles. Part i: Jodhpur State. Fasc. 1 .. 1 0
Sect. i: Prose Chronicles. Part ii: Bikaner State. Fasc. 1 .. 1 0
Sect. ii: Bardic Poetry. Part i: Bikaner State. Fasc. 1 .. 1 0
Vacanikā Rāṭhōṛa Ratana Siṅghajī rī Mahesadāsōta rī Khiṛiyā Jagā rī kahī. Part i: Ḍiṅgaḷa Text with Notes and Glossary .. 1 8
Veli Krisana Rukamaṇī rī Rāṭhōṛa rāja Prithī Rāja rī kahī. Part i: Ḍiṅgaḷa Text with Notes and Glossary .. .. .. 1 8

## *Tibetan Series.*

Amarakosah, Fasc. 1–2 .. .. .. .. .. 4 0
Amṛtika Kamdhenuh .. .. .. .. .. 1 0
Bauddhastotrasangraha, Vol. I .. .. .. .. 2 0
A Lower Ladakhi version of Kesarsaga, Fasc. 1–4 @ 1/- each .. 4 0
Nyayabindu (A Bilingual Index) .. .. .. .. 1 0
Nyayabindu of Dharmakirti, Fasc. 1–2 .. .. .. 2 0
Pag-Sam Shi Tin, Fasc. 1–4 @ 1/- each .. .. .. 4 0
Prajna Pradipah .. .. .. .. .. 1 0
Rtogs brjod dpag hkhri Śiñ (Tib. & Sans. Avadāna Kalpalatā) Vol. I, Fasc. 1–13; Vol. II, Fasc. 1–11 @ 1/- each .. .. .. 24 0
Sher-Phyin, Vol. I, Fasc. 1–5; Vol. II, Fasc. 1–3; Vol. III, Fasc. 1–6 @ 1/- each .. .. .. .. .. 14 0
Tibed-Kun-Den .. .. .. .. .. 1 0
Minor Tibetan Texts. The Song of the Eastern Snow Mountain .. 1 0

---

Notices of Sanskrit Manuscripts, Fasc. 1–34 @ 1/- each .. .. 34 0
Ditto ditto (Palm-leaf and selected paper MSS.) @ 3/- each .. 6 0
Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra .. 5 0
Report on the Search of Sanskrit MSS., 1895-1900, 1901-1905, and 1906-1911 @ -/8/- each .. .. .. .. 1 8
Catalogue of the Scientific Periodicals in Calcutta Libraries .. 5 0

N.B.—All Cheques, Money Orders, &c., must be made payable to the "Treasurer, Asiatic Society," only.

18-10-19.

BIBLIOTHECA INDICA:
A
COLLECTION OF ORIENTAL WORKS
PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
New Series, No. 1437.






# न्यायवार्त्तिकतात्पर्य्यपरिशुद्धिः

श्रीमदुदयनाचार्य्यविरचिता

श्रीवर्धमानोपाध्यायविरचित-न्यायनिबन्धप्रकाशाभिध-
व्याख्यासहिता।

# NYĀYA-VĀRTTIKA-TĀTPARYA-PARIŚUDDHI

BY

UDAYANĀCHĀRYA

*With a gloss called Nyāya-nibandha-Prakāśa by Varddhamānopādhyaya.*

EDITED BY

Mahāmahopādhyāya Pandit VINDHYEŚVARĪ PRASĀD
DVIVEDIN,
*Librarian, Govt. Sanskrit College, Benares.*

AND

Mahāmahopādhyāya Pandit LAKSHMANA ŚASTRI DRAVIDA,
*Professor, Govt. Sanskrit College, Calcutta.*

FASCICULUS VII.

CALCUTTA:
PRINTED AT THE BAPTIST MISSION PRESS,
AND PUBLISHED BY THE
ASIATIC SOCIETY, 1, PARK STREET,
1921.

# ASIATIC SOCIETY OF BENGAL,

## No. 1, PARK STREET, CALCUTTA,

AND OBTAINABLE FROM

*The Society's Agents*—

MR. BERNARD QUARITCH, 11, *Grafton Street, New Bond Street, London, W.*
M. PAUL GEUTHNER, 13, *Rue Jacob, Paris, VI^e.*

***Complete copies of those works marked with an asterisk * cannot be supplied as some of the Fasciculi are out of stock.***

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | Rs. | As. |
|---|---|---|
| Açvavaidyaka, Fasc. 1–5 @ -/10/- each .. | 3 | 2 |
| Advaitachintā Kaustubha, Fasc. 1–3 @ -/10/- each | 1 | 14 |
| *Agni Purana (Text), Fasc. 4–14 @ -/10/- each .. | 6 | 14 |
| *Aitareya Aranyaka of Rig-Veda (Text), 2–4 @ -/10/- each.. | 1 | 14 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1–5; Vol. II, Fasc. 1–5; Vol. III, Fasc. 1–5, Vol. IV, Fasc. 1–8 @ -/10/- each | 14 | 6 |
| Aitareyalocana .. | 2 | 0 |
| Amarakosha, Fasc. 1–2 .. | 4 | 0 |
| *Anu Bhasyam (Text), Fasc. 2–5 @ -/10/- each .. | 2 | 8 |
| Anumana Didhiti Prasarini, Fasc. 1–3 @ -/10/- each | 1 | 14 |
| *Aphorisms of Sandilya (English), Fasc. 1 @ 1/- | 1 | 0 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1–6 @ -/10/- each .. | 3 | 12 |
| *Atharvana Upanishads (Text), Fasc. 2–5 @ -/10/- each .. | 2 | 8 |
| Ātmatattvaviveka, Fasc. 1–3 .. | 1 | 14 |
| Avadāna Kalpalatā (Sans. and Tibetan), Vol. I, Fasc. 1–13; Vol. II, Fasc. 1–11 @ 1/- each | 24 | 0 |
| Bālam Bhaṭṭi, Vol. I, Fasc. 1–2; Vol. II, Fasc. 1 @ -/10/- each | 1 | 14 |
| Bauddhastotrasangraha .. | 2 | 0 |
| Baudhāyana Śrauta Sūtra, Fasc. 1–3; Vol. II, Fasc. 1–5; Vol. III, Fasc. 1–3 @ -/10/- each | 6 | 14 |
| *Bhamati (Text), Fasc. 5–8 @ -/10/- each | 2 | 8 |
| Bhasavritty .. | 0 | 10 |
| Bhāṭṭa Dīpikā, Vol. I, Fasc. 1–6; Vol. II, Fasc. 1–2 @ -/10/- each .. | 5 | 0 |
| Bodhicaryāvatāra of Çāntideva, Fasc. 1–7 @ -/10/- each .. | 4 | 6 |
| Brahma Sutras (English), Fasc. 1 @ 1/- | 1 | 0 |
| Bṛhaddevatā, Fasc. 1–4 @ -/10/- each | 1 | 8 |
| *Bṛhaddharma Purāṇa, Fasc. 1–6 @ -/10/- each .. | 3 | 12 |
| Çatadūṣaṇī, Fasc. 1–2 @ -/10/- each .. | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1–4 @ 2/- each | 8 | 0 |
| *Çatapatha Brāhmaṇa, Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–5; Vol. III, Fasc. 1–7; Vol. V, Fasc. 1–4 @ -/10/- each | 14 | [illegible] |
| Ditto Vol. VI, Fasc. 1–3 @ 1/4/- each .. | 3 | 12 |
| Ditto Vol. VII, Fasc. 1–5 @ -/10/- | 3 | 2 |
| Ditto Vol. IX, Fasc. 1–2 | 1 | 4 |
| Çatasahasrikā-prajñāpāramitā, Part I, Fasc. 1–18, Part II, Fasc. 1 @ -/10/- each | 11 | 14 |
| *Caturvarga Chintāmani, Vol. II, Fasc. 4–25; Vol. III, Part I, Fasc. 1–18, Part II, Fasc. 1–10; Vol. IV, Fasc. 1–6 @ -/10/- each | 35 | 0 |
| Ditto Vol. IV, Fasc. 7 @ 1/4/- each | 1 | [illegible] |
| Ditto Vol. IV, Fasc. 8–10 @ -/10/- | 1 | [illegible] |
| Çlokavartika (English), Fasc. 1–7 @ 1/4/- each.. | [illegible] | [illegible] |
| *Çrauta Sutra of Apastamba (Text), Fasc. 6–17 @ -/10/- each | 7 | [illegible] |
| *Çrauta Sutra of Çankhayana, Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–4; Vol. III, Fasc. 1–4; Vol. IV, Fasc. 1 @ -/10/- each | 10 | 0 |
| Çri Bhashyam (Text), Fasc. 1–3 @ -/10/- each | | |

विपर्यये किं बाधकमित्यत आह। अनियतार्थग्राहि [८८।८] यतः। विकल्पगतमर्थाकारं प्रत्यनियामकत्वात्तस्येत्यर्थः ॥

एतदुक्तं भवति—यदि प्रतिभासमानोऽर्थोऽपि विकल्पस्य जनको भवेत्तदा तदाकारं नियमयेत्। न तु नियमयति, तदसन्निधावपि विकल्पवासनावशात्तस्य तथाविधाकारोपस्थितेः ॥

नन्विन्द्रियमस्य जनकमस्तु, नहि तस्याकारनियामकतया जनकत्व[१]मित्यत आह। मानसमिति। [८८।८] मनोमात्रप्रभवमित्यर्थः ॥

विपर्य्यय इति। अर्थसामर्थ्यसमुत्थमित्यर्थः। ननु चानियतार्थत्वग्राहित्वमसिद्धं घटोऽयमिति ज्ञानस्य नियतार्थग्राहित्वादित्यत आह। विकल्पगतेति।

नन्वेतदसिद्धमित्यत आह। एतदुक्तमिति। तदाकारम्-ज्ञानाकारम्, यादृशोऽर्थः सविकल्पकेन विषयीक्रियते तादृशस्याभावादनादिविकल्पाहितसंस्कारादेव तादृशं ज्ञानमित्यर्थः। मनोमात्रेति। बाह्येन्द्रियजन्येऽपि ज्ञाने मनसःकारणत्वात्तद्व्यवच्छेदार्थं

(१) कारकत्व—पा० ३ पु०।

इन्द्रियमपि हि ज्ञानजनकं भवदाकारनियामकार्थ-सन्निकर्षेणैव, न तु तन्निरपेक्षम्। न चास्य तथा-विधार्थसन्निकर्षोऽस्तीत्युक्तमिति भावः।

ननु विवादाध्यासिते विकल्पे दृश्यतयैवार्थाकारं परिस्फुरति। न चैवमुभयवादिसिद्धार्थसन्निधिनिर-पेक्षविकल्पेष्वपरोक्षतयाऽर्थः प्रकाशते। तद्विशेषो विक-ल्पोऽर्थसन्निधिसापेक्षः। तथा चार्थस्य तदाकारनिया-मकतया[1] तज्जनकत्वमनिच्छताऽप्यभ्युपेयम्। अन्यथो-त्प्रेक्षाव्यापारत्वाद्विकल्पस्य प्रवर्तकत्वमपि न निर्वहेते-त्यत आह। आत्मीयमिति। [८८।८]

उत्प्रेक्षा- असदारोपणं यतोभवत्यवश्यमतोऽप्येव[2]-मुत्प्रेक्षामह इति व्याहारः। तिरस्कारो ऽनुव्यव-

मात्रग्रहणम्। एतत्साधयति। इन्द्रियमपीति। दृश्यतया-प्रत्यक्ष-विषयतयेत्यर्थः। न चैवमिति। अर्थनिरपेक्षाः शाब्दलैङ्गिकविक-ल्पास्तद्विषयो दृश्यतया न भासते, अतः सविकल्पकमर्थविषय इति सन्नेवार्थो निर्विकल्पकस्येवात्रापि जनकः अन्यथाऽर्थविषय-काद्स्या(?)प्रवृत्तिप्रसङ्ग इत्यर्थः। तिरस्कार इति। तस्यार्थनिर-पेक्षत्वेनासाक्षात्कारित्वं दोषान्न ज्ञायत इति प्रवर्त्तकमपि तस्य

(१) नियामकत्वात्- पा० ३ पु०।
(२) अपश्यतोऽप्येव- पा० ३ पु०।

साय: । दर्शनं साक्षात्करणम् । पुरस्कारो भेदाग्रहो वा तद्धेतुक आरोपो वा । तत्सिद्धमिति । [८८।११] प्रसङ्गाद्युपनिबन्धेन । यदि विवादाध्यासिता विकल्पा अर्थसामर्थ्यलब्धजन्मानस्तदा न शब्दकल्पनानुगता इत्यर्थः ॥

तदनुगतत्वमिति । [८८।१२] शब्दकल्पनानुगतत्वम्, तस्योपलब्धिरभिलापाननुगतत्वं निराकुर्व - - - सामर्थ्यजत्वं विरुणद्धीति शेषः ॥

निर्व्यूढमिति भावः । साक्षात्करणमिति । अर्थसापेक्षत्वं साक्षात्कारित्वमित्यर्थः । नन्वनुभवव्यापारं पुरस्कृत्येत्यस्य यदि साक्षात्त्वमारोप्येत्यर्थः तदाऽनुभवतया मन्यन्त इति पुनरुक्तमभिमानस्यारोपरूपत्वादित्यत आह । भेदाग्रह इति । अनेनारोपहेतुरुक्तो ग्रहे वाऽऽरोप इति नोक्तदोषः इत्यर्थः । यद्वा-अनुभवत्वं साक्षात्कारित्वव्याप्यं निर्विकल्पकत्वं यदि, तर्हि, साक्षात्कारत्वारोपस्तद्व्याप्यजात्यारोपे हेतुरुक्त इति न पौनरुक्त्यमित्याह । तद्धेतुक इति । परत्वेनेति । ननु प्रसङ्गसाधनमित्ययुक्तम्, व्याप्यारोपेण व्यापकारोपरूपत्वस्याप्रदर्शनादित्यत आह । वायुपरत्वेनेति । तमेवाह । यदीति । नन्वर्थसामर्थ्यजन्यत्वे निषेध्ये तदनुगतत्वमुपस्थापयतीत्यनेन(न) किञ्चिदुक्तम् । नच करणादेव तदवगतिः, पूर्वमपि तस्योपलब्धिस्तदनुगतत्वमुपस्थापयतीत्यस्य वैयर्थ्यापातात् तत एव तस्याप्यवगतेरित्यत आह । तस्योपलब्धिरिति । ननु

असिद्धत्वविरुद्धत्वयोरसम्भावितत्वादिह[1] सम्भावितत्वया पूर्वोक्तस्मारणपुरःसरं सन्दिग्धानैकान्तिकत्वाशङ्कामेवापनयति। न चेति। [८८।१८] अर्थरूपमनुकुर्यादर्थरूपसदृशाकारं भवेदित्यर्थः। तादात्म्यतदुत्पत्तिभ्यामसम्बद्धरूपानुकारे नियामकाभावात् सर्वरूपानुकारेण सर्वसर्वज्ञतापत्तिः सद्रूपानुकारमात्रत्वात् तद्विषयताया इति भावः। नहि तादात्म्यतदुत्पत्तिलक्षणः सम्बन्धः स्वरूपेणोपयुज्यते, किंनाम? नियामकतया, तदत्र सङ्केत एव नियामको यदि स्यात् को दोष इत्याशयवानाशङ्कते। सङ्केतेति। [८८।२१]

ज्ञानमर्थसदृशमुत्पद्यते न त्वर्थं सदृशीकरोति, तथात्वेऽपि तद्विषयत्वलाभात्, अर्थाविषयकस्यापि तत्सदृशत्वसम्भवादित्यत आह। अर्थरूपेति। ननु वा रूपसम्बन्ध रूपानुकार इत्ययुक्तम् शब्दार्थयोर्वाच्यवाचकसम्बन्धसत्त्वादित्यतः पूरयति। तादात्म्येति।. ननु तादात्म्यतदुत्पत्तिभ्यामिति वदता सम्बन्धान्तरस्य सङ्केतस्याप्रयोजकत्वमुक्तमेवेति तत्सङ्केतबलादिति शङ्केव नोदेतीत्यत आह। न हीति। नियामकत्वेनैव सम्बन्धस्य तत्रोपयोगादिति भावः।

(१) असम्भवादिह—पा० ३ पु०।

तदेव दृष्टं सत्स्मारयेत् तन्नियमेनेति शेषः। किमेतावतापीत्यत आह। तच्चैवेति। [८८।२२]

अनुगतं अनुगति[1]गोचरः। अत एव सामान्यं देशकालानुगतम्। तत्रैव सङ्केतस्य सुकरत्वादिति भावः॥

किमेतावताऽपीत्यत आह। न च तत्तद्दृष्टं साक्षात्कृतं, किन्तु स्वलक्षणं दर्शनगोचरः। [८८।२३] सरूप-

स्वरूपतोऽस्मारकत्वादाह। दृष्टमिति। ननु सामग्रीतः कार्योत्पत्तेः तदेवेत्ययुक्तमित्यत आह। नियमेनेति। सङ्केतविषयेणासाधारणविषयस्वरूपेणेत्यर्थः। किमेतावतापीति। व्यक्तिरेव कृतसङ्केतान् शब्दान् स्मारयतीत्यर्थः। अनुगतं सामान्यमित्यत्र पौनरुक्त्यनिरासायाह। अनुगतमिति। अनुगतधीविषय इत्यर्थः। तच्चैवेति। आनन्त्यव्यभिचाराभ्यां व्यक्तौ सङ्केतग्रहादित्यर्थः।

किमेतावतापीति। निर्विकल्पकविषयः सामान्यमेव तदुद्बोधितसंस्कारापादिततादृशसविकल्पविषयोऽस्त्वित्यर्थः। दृशेर्ज्ञानपरत्वेऽपि निरासायाह। साक्षादिति। ननु साक्षात्कारादेर्न स्वलक्षणं दर्शनगोचरः आकारकादाचित्कत्वानुमेयत्वात्तस्येत्यत आह। सरूपकत्वादिति। तेन स्वसदृशाकाराधायकत्वात्तदपि तद्विषय

(१) अनुगम— पा० ३ पु०।

कत्वादिति शेषः। सरूपकत्वमेवास्य कुत इत्यत आह। तद्देव हीति। [८८।२३]

परमार्थोऽकृत्रिममनारोपितं रूपं, तेनास्तीति परमार्थसत्। तद्देव कुत इत्यत आह। विज्ञानस्य कारणम्। [८८।२४] विज्ञानस्येति प्रकृतोपयोगात्, कारणमर्थक्रियासमर्थं यत इत्यर्थः॥

ननु सामान्यमपि किं न दर्शनगोचर इत्यत आह। न तु सामान्यमिति। [८८।२५] कुतः? सर्वसामर्थ्यरहितं हि तत्। सर्वः-पुरुषार्थो हेयोपादेयरूपस्तस्य सामर्थ्यं शक्तिः तद्रहितं यस्मात्तत्, नहि किञ्चित्पुरुषप्रयोजनं सामान्यसाध्यमस्ति अतोऽर्थक्रियायामशक्तत्वात्तन्न पर-

इत्यर्थः। नन्वाकाराधायकत्वेनैवार्थस्य निर्विकल्पकविषयत्वं सिद्धमिति तद्देव होत्ययुक्तमित्यत आह। सरूपकत्वमेवेति। आकाराधायकत्वमेवेत्यर्थः। परमार्थसच्छब्दयोः पौनरुक्त्यनिरासायाचष्टे। अकृत्रिमं इति। तेनेति लक्षणे तृतीया। ननु कारणत्वमात्रादेव सत्त्वसिद्धौ विज्ञानस्येति व्यर्थमित्यत आह। विज्ञानस्येति। ननु असन्निहितत्वात्सामान्यस्य, कारणत्वनिषेधे साध्ये सर्वसामर्थ्यरहितत्वं हेतुः साध्याविशिष्टः बौद्धमतेऽर्थक्रियासामान्यस्यैव कारणात्मकत्वादिति साध्यान्तरमाह। नन्विति। हि शब्दस्य हेत्वर्थतां दर्शयितुं हेत्वाकाङ्क्षामाह। कुत इति। तच्चेति।

मार्थसत्। असत्त्वान्न तद्विज्ञानजनकम्। अजनकत्वान्न सरूपकम्। असरूपकत्वान्न दर्शनगोचर इत्यर्थः॥

ननु सामान्यस्य तावदर्थक्रियाशून्यत्वा[1]द्दर्शनगोचरत्वं माभूत्, दर्शनगोचरस्यैव तु वाच्यताऽस्तु, सङ्केतोऽपि तत्र केनाप्युपायेन भविष्यति, तन्निर्विचिकित्समेव तद्ध्यर्थक्रियासमर्थवस्तुप्रतिपादनाभिप्रायवन्तः प्रयोजकवृद्धाः प्रयोज्यवृद्धाश्च तथाविधार्थप्रतिपत्तिमन्तः शाब्दे व्यवहारे उपलभ्यन्त इत्यत आह। अपि चेति। [८८।१६]

न ह्यौष्ण्यादतिरिक्तो वह्निर्नामास्ति बौद्धराद्धान्ते, न चोभयवादिसम्प्रतिपत्तिविषयः प्रतीतमौष्ण्यं शीतापनोदनं करोत्यपि कदाचित्। अकुर्वद्धि सर्वथाऽप्र-

स्वलक्षणे। केनाप्युपायेन—अनद्वाहृत्त्येत्यर्थः। तथाविधेति। अर्थक्रियासमर्थार्थज्ञानं विना तथाभिप्राय एव न निर्वहेदिति भावः। ननु वह्निशब्दोऽग्निस्वलक्षणे कृतसङ्केतः कथमौष्ण्यं स्मारयत्यत्र सङ्केताभावादित्यत आह। न हीति। अत्र शब्दज्ञानस्य स्वलक्षणविषयत्वे साक्षात्कारित्वप्रसङ्ग इत्यापादनार्थः। चक्षुषा दूराद्दृष्टेऽपि वह्नौ शीतापनोदनाद्यर्थाश्रुतस्यानुपपत्तेः।

(१) क्रियाविरहात्— पा० ३ पु०।

तीतं न कुर्यादारोपितं वा। नच वह्निशब्दात्सर्वथा वह्नेः[1]रप्रतीतिः। तस्माच्छब्दकल्पनोल्लिखितमवस्त्वेव वस्त्वाभासमित्यभिप्रायः॥

जात्यादीन् पारमार्थिकानभ्युपेत्याह। तन्नेति। [८९।८] विवेकेन—देशभेदेनेत्यर्थः। अवच्छेद्यावच्छेदकभावेन हि मिथोयोजना विशेषणविशेष्यभावः। स च विविक्तदेशताप्रतीत्या व्याप्तः। सा चातो निवर्त्तमाना स्वव्याप्यं विशेषणविशेष्यभावमादायैव निवर्त्तते। ततश्च जात्यादीनां परस्परमसम्बन्धान्न स्वतन्त्रेषु शब्दोऽपि सुकरसङ्केत - - - संसृष्टवेदनमित्यर्थः॥

एतेन शब्दस्य विवेकग्रहसम्भवेऽपि तद्योजना

न च वह्नीति। स्वलक्षणत्वाच्चले शब्दान्तरप्रतीतेरित्यर्थः। तस्मादिति। तथा च वस्तुसाध्यार्थक्रिया कथमवस्तुतः स्यादिति भावः। ननु सामान्यस्यावस्तुत्वात्तेन स्वलक्षणस्यासम्बन्धान्न मिथो वैशिष्ट्यमित्येव परः किन्न परिहृतवानित्यत आह।

जात्यादीति। ननु विशिष्टज्ञाने विशेषणविशेष्ययोर्विवेकेन भानमस्त्येवेत्यत आह। देशभेदेनेति। स चेति। कुण्डबदरादौ तथा दर्शनादित्यर्थः। एतेनेति। शब्दस्य सङ्केताभावेनेत्यर्थः।

(१) वह्ने— पा० २ पु०।

निरस्ता बोद्धव्या। एकमसमुदितम्। अविभागमनंशम्। स्वलक्षणं त्रैलोक्यविलक्षणम्। तथातथेति। गुणकर्मादिगतत्वेन[1] साधारणत्वेन विकल्प्यते, न तु दृश्यत इत्यर्थः॥

अपि च परमार्थसद्वस्तुद्वयवेदनेऽपीति[2] [८९।१२] विवेकेनेति शेषः॥

ननु न ह्येकज्ञानविषयौ समानकाले अङ्गुल्यौ न कार्यकारणभूते इति। तं पूर्वापरत्वेऽपि ते सर्वज्ञैकविज्ञानगोचरौ न तथेति वक्तुमुचितम्[3] यद्युच्येत को दोषः. न ह्युपलब्धे भेदाभेदप्रयोजके[4] कारणत्वाकारणत्वे। किं तर्हि? यदनपेक्षं[5] तत्कारणं सापेक्षं

असमुदितं—जात्यादिभिरविशिष्टम्। अनंशं—स्वभिन्नधर्मैरहितम्। त्रैलोक्यविलक्षणम्—अनुगतम्। विकल्प्यते—व्यावृत्त्या भासते। न दृश्यते साक्षात्क्रियत इत्यर्थः। स्वलक्षणमिति शेषः। ननु पूर्वमपि परमार्थसद्वस्तुद्वयमेवाधिकृत्योक्तमित्यत आह। विवेकेनेति। नन्वित्यादि युक्तं वक्तुमित्यन्तं सिद्धान्तिनो वचनम्। यद्युच्येतेत्यादि-

(१) गुणकर्मादितत्वेन—पा० ३ पु०। (२) वेदनेति—पा० ३ पु०।
(३) युक्तं वक्तुम्—पा० ३ पु०। (४) प्रयुक्ते—पा० ३ पु०।
(५) यदपेक्षणीयं—पा० १ पु०।

च कार्यमिति। तदत्रापि समानम्। एकज्ञानगोचर त्वेऽपि यदवच्छेदकं तद्विशेषणम्। अवच्छेद्यं च विशेष्य- मिति। यत्तु नैवं न तत्तथेति अत आह। विशेषणं खल्विति। [८९।१४] नान्यथेति। [८९।१५] अतिप्रसङ्गा- दिति शेषः। तर्हि उपकारोऽपि कश्चिदस्त्वित्यत आह। न चैकेति। [८९।१६] किमिति न स्यादित्यत आह। तयोरिति। [८९।१७] प्रसङ्गादिति शेषः। स्वरूपतः पौर्वापर्यानियमः कार्यकारणभावः। ज्ञप्तितस्तु ज्ञाप्य- ज्ञापकभावः। स चायमेकज्ञानगोचरयोरेककालयोश्च द्विरूपोऽपि नियमो नास्ति यस्मादित्यर्थः॥

स्यादेतत्। यद्यप्युक्तस्वरूपमुपकारद्वयं न सम्भवति तथाप्याधाराधेयभावो भवेत्, स हि समानकालयोरेव कुण्डबदरयोर्दृष्टः, क्षणभङ्गस्तु त्वयाऽप्युपपादनीयो मयापि भञ्जनीय इत्यत आह। अपि चेति। [८९।१८]

यद्यपि न तीर्थिकैः कुण्डाधारतया[1] बदरस्यैवाय- तनधर्मकस्योत्पादः स्वीक्रियते स्थेमश्रद्धाजडत्वात्।

---

कार्य्यमित्यन्तं पूर्वपक्षिणोवचनम्। तदत्रापीत्यादि पुनः सिद्धान्ति- वचनम्। क्षणभङ्गपक्षे जातितद्वतोराधाराधेयत्वं न वस्तुस्तीत्याह।

---

(१) कुण्डाधारवत्तया— पा० ३ पु०।

तथापि गतिनिवृत्तिलक्षणां गुरुत्वप्रतिबन्धलक्षणां[1] वा स्थितिं तद्धर्मभूतां विदधदेव बदरस्य कुण्डमाधारतयाऽभ्युपेतं तैः, किं चातोऽत आह। तद्वदिहापीति॥

एतावतापि किमित्यत आह। नच शक्त्यन्तरैरिति। [८९।२३]

यद्यपि बदरवज्जात्यादीनां धर्मस्य कस्यचिदुपजनापायरूपमुपकारं नाभ्युपगच्छत्येव परस्तथाऽप्यभ्युपगमवादोऽयं सौगतस्येति मन्तव्यम्॥

तथा चेति। [८९।२५] सन्नित्यनेन हि विकल्पेन सत्त्वोपकारसमर्थो विषयीकृतः। न च ततोऽन्यः कश्चिद्द्रव्यत्वाद्युपकारसमर्थोऽसत्त्वोपकारसमर्थोऽस्ति, यत्र द्रव्यादिविकल्पाः सार्थकाः स्युः। तस्मादेते द्रव्यत्वाद्युपकारसमर्थेऽर्थे सत्त्वोपकारसमर्थाभेदिनि प्रवर्त्तमानास्तदधिकरणसमर्थमस्पृशन्तोऽनर्थकाः प्रसक्ता इति समुदायार्थः॥

बौद्धस्यातिपरामर्शकुशलतां दर्शयातितुच्छतामाह-

क्षणभङ्गस्त्विति। यद्यपि बदरवदिति। जात्यादीनामवस्तुतया विनाशोत्पाद्यधर्मानाधारत्वादित्यर्थः इत्यर्थष्टीकायाः। परवार्त्तिक-

(१) प्रतिबन्धकसंयोगलक्षणां— पा० ३ पु०।

म्व्यास्माक[1]मेव लाघवं सम्भावयिष्यतीत्याशङ्क्य तद्-ग्रन्थं लिखति । 'यदाहेति ॥ [८१ । ८८]

अयं वार्त्तिकार्थः । यस्य दर्शने, नानोपाधेरप्यर्थस्य धीः—विकल्पधीर्ग्राहिका, भेदिनो-विशिष्टस्य । नानो-पाध्युपकाराङ्गं या शक्तिस्तदेकात्मनस्तस्य । सर्वात्मना सर्वैरुपाधिभिरेकस्वभावस्यैवोपकार्यस्य विशेष्यस्य ग्रहे सति, को भेदो-भिद्यत इति भेदो विशिष्यत इति यावत् । अनिश्चितः स्यात् । अपि तु सर्वोपाधिभिर्विशिष्टो निश्चित एव स्यादित्यर्थः । एकस्योपाधेः । उपकार-स्वभावेग्राह्ये-गृह्यमाणे सति, नोपकारा—उपकारकाः स्वभावा उपाध्यन्तराणां ततोऽपरे भिन्ना विद्यन्ते ये तस्मिन्नेवोपकारकस्वभावे दृष्टेपि न दृष्टाः स्युः । किं नाम ? स एव एकस्वभावः सर्वेषामुपकारकः ततस्तद्-ग्रहे-तदेकोपाधिविशिष्टग्रहे । सकलग्रहः-सकलोपाधि-विशिष्टग्रहः प्रसक्त इत्यर्थः । ननु वरं वस्तुस्वभावमा-स्थायानुपकार्यानुपकारकयोरपि विशेषणविशेष्यभावं

---

स्थायं वार्त्तिकार्थ इत्यनेनैव दर्शितत्वात् । नैयायिकमते दूषितेऽपि स्वमतोपदर्शनोपयोगेन्यमाह । ननु वरमिति ।

(१) चोद्यस्य चालब्ध्य अस्माक— पा० १ पु० ।

स्पष्टदृष्टमुपपादयितुं शक्ताः परे उपाध्युपाधिमद्भेदाद्वा-पौनरुक्त्यम् न पुनः सौगताः सत्त्वादीनामुपाधीनां वस्तु-त्वानभ्युपगमात्, एवं च त्वच्छरास्त्वय्येव निपतिता इति अत आह। अस्माकं त्विति। [९०।४] यत्र गृह्णन्ति-सामान्यमात्रम्। यत्राध्यवस्यन्ति-सन्तानम्। न मना-गपि-सामान्येन रूपेण। गाहन्ते गोचरयन्ति, तस्या-लीकत्वाद्वस्तुधर्मत्वाभावादित्यर्थः। तर्हि कथमविसंवा-दकाः प्रवर्तका वेत्यत आह। पारम्पर्येणेति। [९०।५]

ततः किमित्यत आह। अत इति। [९०।६] यत्र विषयाधीना धीस्तत्र तदापत्तौ विशेषाविशेषौ, अत्र तु विपर्ययो विषयस्यैव प्रतिभासस्तथा बुद्ध्यधीनत्वात्। तदिह विकल्पस्य विषयो विशेष्यः, तत्तद्विशेषण-विशिष्टतया तु किं भिन्नोऽभिन्नो वेति विकल्प एव साक्षी, न विचार इत्यर्थः।

---

स्पष्टदृष्टमित्यपि प्रामाणिकत्वकथनम्। परे—नैयायिकाः। एवं चेति। विशेषणविशेष्यभाव उपकारकत्वनियत इति त्वयापि नोपपादितमित्यर्थः। सामान्यमात्रमिति। मात्रपदेन वस्तुनोपि तत्र भानं व्यावर्त्तकम्। सन्तानं—सामान्यसमूहम्। तथाच विशेषणविशेष्यभावो वास्तवो नास्त्येव बौद्धानामिति भावः। अशङ्कितोद्धारत्वमाशङ्क्याह। तर्हीति। बौद्धमते पौनरुक्त्याभाव-मुपपादयति। यत्रेति। विकल्प एवेति। सत्त्वद्रव्यत्वादिविशेषण-

ननु परमार्थतोऽनर्थो माभूद्विकल्पस्य विषयो, जनकस्तु भविष्यतीत्यत आह। अपि चेति। [९०।०] न विकल्पिकामपीति अपरिभिन्नक्रमः। अर्थो विकल्पस्य न गोचरो जनकोऽपि नेत्यर्थः।

अर्थोपयोगः-सन्निकर्षः। न च यद्देवेत्यादि [९०।१०] न्यायादिति [९०।११] वाच्यमिति शेषः।

नो खल्विति। [९०।१२] स्मरणेन्द्रिययोरेकविषयसामर्थ्याभावात्। न परस्परापेक्षत्वं ततः स एवार्थोपयोगोऽविशिष्ट इत्यर्थः।

---

भेदेऽपि तद्विशेष्यस्याभेदात्तदंशे विकल्पानामनर्थकत्वं स्यादित्यर्थः. नन्वेतावतैव सविकल्पस्य वस्तुविषयत्वं निरस्तमिति किमधिकेनेत्यत आह। नन्विति। अविषयस्यापि जनकत्वादित्यर्थः। ननु निर्विकल्पकेन सह समुच्चयो न युक्तस्तस्य तत्पक्षेपीन्द्रियार्थजन्यत्वादित्यत आह। अपि चेति। जनयितुमपीत्यर्थः। तत्राभ्यमर्थमाह। अर्थ इति। नन्वर्थोपयोगेपीत्यस्यार्थकारणत्वेपीत्यर्थः। कारणत्वे सोऽर्थोऽव्यवहितो भवेदित्यर्थे अन्यथासिद्धिप्रदर्शनविरोधादित्यत आह। अर्थोपयोग इति। ननु यद्देवेत्यादिटीकायां न च स्मृतिर्व्यवधायिकेत्यादेर्हेतुविभक्त्यन्तस्य हेतुत्वं न सम्भवति विरोधादित्युभयस्य पूर्वपक्षवाक्यत्वं दर्शयितुं शेषमाह। इति वाच्यमिति। इन्द्रियस्मरणयोर्विषयभेदोपयोगार्थमाह। स्मरणेति। ततश्चेति। स एवार्थोपयोगः सन्निकर्षरूपः सविकल्पकाच्च इवा-

एकगोचरत्वमेवानयोः कुतो नेत्यत आह। तद्गोचरत्वे चेति। [९०।१४] अननुभूतपूर्वाणामप्यर्थानां चक्षुषो व्यापारमात्रेण पूर्वावस्थास्मरणप्रसङ्ग इत्यपि द्रष्टव्यम्। तेन स्यात् [९०।१५] तथा सति प्रसज्येतेत्यर्थः। अक्षापायेऽपि नेत्रधीरित्युपलक्षणम्। वासनाभावेऽपि स्मृतिधीरित्यपि द्रष्टव्यम्। सहते [९०।१८] प्रतीक्षत इत्यर्थः।

सिद्धान्तमुपक्रमते। अत्रेति। [९०।२१] गौरयमित्यादेर्विकल्पस्य तावदभिलापसंसर्गयोग्यत्व(१)वदर्थसाक्षात्कारोऽप्यनुभवसिद्धः। अस्ति चास्येन्द्रियार्थान्वयव्यतिरेका-

विकल्पकालेऽप्यस्तीति सविकल्पकस्येन्द्रियार्थजन्यत्वे निर्विकल्पकोत्पत्तिकाल एव तदुत्पत्तिः स्यादित्यर्थः। उपलक्ष्यमाह। वासनेति। संस्काराभावेपि पूर्वावस्थास्मृतिः स्यादित्यर्थः। असहिष्णुता द्वेषश्चेतनधर्मोनात्र सम्भवतीत्याह। अपेक्षत इत्यर्थः। नन्वत्रोच्यत इति वचनं प्रतिज्ञाय पुनस्तत्र ब्रूम इति पुनरुक्तमित्यत आह। सिद्धान्तमिति। यावदपेक्षं सिद्धान्ताभिधानं प्रतिज्ञायत इत्यर्थः। गौरयमिति। सविकल्पकस्य यथाभिलापसंसर्गयोग्यत्वमनुभवसिद्धं तथा साक्षात्कारित्वमपि, तच्च बाधकाभावात् स्वाभाविकमित्यर्थः। न च कारणबाधात्तद्बाधितमित्यत आह। अस्ति चेति। अनन्यथासिद्धान्वयव्यतिरेकौ कारणत्वे प्रमाणमत्र

(१) प्रतिभासत्व—पा० ३ पु०।

नुविधानम्। तदन्यथासिद्धम्, तयोरालोचनमात्र एव चरितार्थत्वादिति चेत्?। तत्किमिदानीमालोचनस्यायं महिमा विकल्पोपजननं प्रति, तथा सति तस्मान्न कदाचिदप्यालोचनं जायेत। वासनापरिपाकविरहान्न तथेति चेत्। स खलु वासनापरिपाको यदि नियमादिन्द्रियार्थमध्यमधिशेते? कथं तदनपेक्षा कार्यस्य। काकतालीयश्चेत्? सन्निधिसन्निहिते[1]ष्वप्यती-

तावालोचनज्ञानोत्पत्तावुपक्षीणौ। आलोचनमेव विकल्पोत्पत्तिकारणमित्याह। तदन्यथेति। यदीन्द्रियार्थनिरपेक्षमालोचनमेव विकल्पजनकं तदाऽऽलोचनालोचनं क्वापि न जायेत तस्य विकल्पोत्पादसामर्थ्यादित्यत आह। तत्किमिति। न निरपेक्षमालोचनं मम विकल्पजनकमपि तु विकल्पाहितवासनाया यदा परिपाकः सहकारिविशेषसाहित्यं तदालोचनाद्विकल्पोजायते, अन्यदा त्वालोचनमेवेत्याह। वासनेति। सहकारिविशेषः किं नियमेनेन्द्रियार्थघटितसामग्रीसमवहितो न वा? आद्ये विकल्पे नियतपूर्ववर्त्तित्वात्तयोरपि जनकत्वमित्याह। स खल्विति। न च तयोरन्यथासिद्धिः अन्यथासिध्याऽनुभूयमानसाक्षात्कारित्वबाधः तस्मिंश्च सति तत्कल्पनमित्यन्योन्याश्रयादिति भावः। अन्ये-कदाचिदिन्द्रियार्थाभावेऽपि साक्षात्कारिविकल्पः स्यादित्याह। काकतालीय

(१) नित्यसन्निधिरसन्निहिते— पा० २ पु०।

न्द्रियेषु कदाचिद्विशिष्टवासनावशात्[1] साक्षात्कारवान् विकल्प उत्पद्येत। न वै साक्षात्कारवान् विकल्पः कश्चित्, किन्तु निर्विकल्पकभेदाग्रहात् तद्वानिवावभासत इति चेत्। न। प्रमाणाभावात्। न हि विवादाध्यासितविकल्पगतो दर्शनव्यापारोऽयमौपाधिक इत्यस्ति प्रत्यक्षम्। नाप्यनुमानम्। दर्शनव्यापारता कल्पनापोढत्वेन व्याप्ता, तद्वातो निवर्तमानं तामपि निवर्तयतीति चेत्। न। विपर्ययस्यापि वक्तुं सुकरत्वात्।

तथाहि दर्शनव्यापारत्वं कल्पनानुगतत्वेन व्याप्तं

इति। ननु विकल्पे साक्षात्कारित्वस्यानुभवस्यारोपकल्पनात् प्रमाणाभावात् कुतस्तत्र तत्सिद्धिरिति शङ्कते। न वै कश्चिदिति। विकल्पगततयाऽनुभूयमानं साक्षात्कारित्वमौपाधिकमित्यत्र मानाभावात् स्वाभाविकमेव तत्र तदिति परिहरति। प्रमाणेति। दर्शनव्यापारः साक्षात्कारिव्यापकाभावलिङ्गकमनुमानं बाधकमिति तत्र तच स्वाभाविकमित्याह। दर्शनेति।

कल्पना-शब्दादियोजना। तदपोढत्वेन-त्यक्तत्वेन साक्षात्कारित्वं व्याप्तमित्यर्थः। कल्पनापोढत्वं न तद्व्यापकं मानाभावात्, अन्यथा कल्पनानुगतत्वमेव तद्व्यापकमिति ,तद्व्यावृत्त्या निर्विकल्पकादेव तन्निवर्त्ततेत्याह। विपर्ययस्यापीति। निर्विकल्पककाले उपाधिः। सविकल्पकस्यानागतत्वात्। कथं तद्धर्मः साक्षात्कारित्वं भासेते-

(१) परिपाकात्— पा० १ पु०।

तच्च तदनुगतत्वमालोचनान्निवर्त्तमानं स्वव्याप्तं[1] दर्शनव्यापारत्वमपि निवर्त्तयति। तथा च विकल्पसान्निध्यादौपाधिको दर्शनव्यापारोऽयमालोचनमिति किं न स्यात्। अनुभवस्तूपाधिशङ्कया त्वयैवाऽसाक्षीकृतः। अनागते विकल्पे कथमिव तद्धर्मो निर्विकल्पके प्रतिभासेतेति चेत्?। न। कालभेदस्योभयत्रापि तुल्यत्वात्। उपादानोपादेयभावश्च नियमहेतुः समानः।

ननूपादानधर्मा उपादेयमधिगच्छन्ति[2], न तूपादेयधर्मा उपादानमिति चेत्?। न। वस्तुतोऽवस्तुधर्मा-

त्यत आह। अनागत इति। अतीते निर्व्विकल्पकेऽपि क्षणिके कथं तद्धर्मः सविकल्पके भासेतेति तुल्यमित्यनुभूयमानारोपोऽसिद्ध इत्याह। कालभेदस्येति। अथ स्मर्य्यमाणमेव तत्र तदारोप्यते। न चातीतधर्मारोपेऽतिप्रसङ्गः, उपादानधर्म्म उपादेय आरोप्यत इत्यत एव तन्निवृत्तेरित्याह। उपादानेति। एवं निर्विकल्पक एव सविकल्पकगतं साक्षात्कारित्वमनागतमारोप्यते। न चातिप्रसङ्गः, उपादेयधर्मस्य उपादान आरोपादित्येवास्त्वित्यर्थः। ननूपादानधर्मस्योपादेये सङ्क्रमानोपादेयधर्म उपादानं सङ्क्रामतीत्याह। नन्विति। अत्र किमुपादानधर्म उपादेयं याति? तत्र ज्ञायते वा?, यद्वोपादानधर्मादुपादेयधर्मो जायते? आद्यं दूषयति। वस्तुत इति। साक्षात्त्वस्यामूर्त्तत्वादन्यत्र गमनमित्यर्थः।

(१) व्याप्यं— पा॰ ३ पु॰। (२) अनुगच्छन्ति— पा॰ ३ पु॰।

णामप्रतिसङ्क्रमात्। आभिमानिके तु प्रतिसङ्क्रमेऽनियमः। उपादानप्रत्ययबलादुपादेयप्रत्ययस्तथोत्पद्यत इति चेत्? हन्त यदि साक्षात्कारः साक्षात्कारवानुत्पद्यते कथमस्य तथात्वमौपाधिकम्। तावन्मात्रादेवेन्द्रियादिनिरपेक्षादुपजातमित्येतावता तदौपाधिकमिति[1] चेत्। न। समनन्तरप्रत्ययसाक्षात्कारमहिम्ना साक्षात्कारोत्पत्तावसाक्षात्कारानुत्पादप्रसङ्गात्। न चासाक्षात्कारिणः साक्षात्कारः कदाचिदप्युत्पद्यते। सहकारिविशेषादेवमपि स्यादिति चेत्। तर्हि यादृशि कार्ये यादृशस्यान्वय[2]व्यतिरेकाऽनुविधानं दृष्टं तादृ-

द्वितीयं दूषयति। आभिमानिक इति। उपादेयधर्मस्याप्युपादाने समारोपान्नायं नियम इत्यर्थः। तृतीयं शङ्कते। उपादानेति। साक्षात्कारिनिर्विकल्पकजनितं सविकल्पकमिति साक्षात्कारि जायत इत्यर्थः। एवं वास्तवमेव तस्य तदित्याह। हन्तेति। साक्षात्कारिजन्यत्वमात्रात्तच्च तथात्वेऽपीन्द्रियानपेक्षत्वाच्च निर्विकल्पकसाम्यमिति शङ्कते। तावन्मात्रेति। यदि तन्निरपेक्षसमनन्तरप्रत्ययमात्रात् साक्षात्कारित्वं तदा साक्षात्कारः समनन्तरप्रत्ययादसाक्षात्कारि असाक्षात्कारिणः साक्षात्कारित्वमानं न जायेतेति परिहरति। समनन्तरेति। तादृशस्येति। अन्यथा साक्षात्कारित्व-

(१) इत्येवतेव तदुपाधिकमित्यपत्त इति— पा० २ पु०।

(२) यादृगन्वय— पा० १ पु०।

ग्रस्य सहकारित्वमास्थेयम्। दृष्टं चोभयवादिसम्प्रतिपन्ननिर्विकल्पकसाक्षात्कारं प्रतीन्द्रियार्थसन्निकर्षयोः सामर्थ्यं, न तु विकल्पस्ये[१]त्युक्तप्रायम्।

एवं तावदर्थसाक्षात्कारणं स्वाभाविकं तन्नान्तरीयकतयेन्द्रियार्थसामर्थ्यजत्वम[२]स्य स्थितम्। अविसंवादित्वमप्यस्यानौपाधिकम्। तथाहि यद्यस्य पारमार्थिको विसंवादः स्यात् तदा प्रतीयमानोऽप्यौपाधिकोऽयमविसंवाद इति सम्भाव्येत। स च देशकालाकारकृतस्तावन्नास्ति[३]। अननुगतमेवानुगततया दर्शयतीति चेत्। न। असाधारणस्य स्वलक्षणस्य विकल्पेनासंस्पर्शात्। संस्पर्शे तज्जन्यत्वप्रसङ्गात्[४]। अजनकस्यैव

प्रयोजकेऽननुगमः स्यादिति भावः। स चेति। यत्काले यद्देशे यथार्थोविकल्पविषयः तदा तत्र तथैव व्याप्तेरित्यर्थः। स्वलक्षणसाधारणमेव साधारणतया विकल्पविकल्पो न च तत्तथेति शङ्कते। अननुगतमिति। स्वलक्षणं विकल्पविषय इति लभ्यते नैवमिति परिहरति। असाधारणस्येति। संस्पर्शे चेति। तथा चार्थजन्यतया निर्विकल्पकवत्तदपि साक्षात्कार्य्येव सिद्धमिति भावः। अजनकस्य

(१) न त्वविकल्पकस्य– पा॰ २ पु॰।

(२) सामर्थ्यसमुत्थत्वमप्यस्य– पा॰ २ पु॰।

(३) तावन्न भवति– पा॰ २ पु॰।

(४) संस्पर्शेनातज्जन्यत्वप्रसङ्गः– पा॰ २ पु॰।

वस्तुसतो विषयत्वे प्रत्यक्षत्वमर्थसामर्थ्यसमुत्थत्वे न व्याप्तमिति सुप्तप्रलापः। विकल्पः तावत् साधारणं स्वरूपमुल्लिखन्नेव प्रवर्त्तयति। तच्च सर्वसामर्थ्यरहितम्। न चार्थक्रियार्थी तदसमर्थं दृष्ट्वा प्रवर्त्तते, ततोऽसमर्थमेव समारोपितसामर्थ्यं विकल्पते।

तदा[1] कथमस्य विपरीतारोपरूपस्य संवादो नामेति चेत्। न। यदि हि सामर्थ्यमेवारोपयेत् असाधारणमेवोल्लिखेत्। न ह्यन्यदसाधारणाद्रूपात् सामर्थ्यं[2] नाम तव दर्शने। तस्मात्समर्थमिव तद्दर्शयति विकल्पः। दृश्यार्थश्च न तत्रारोप्यो विकल्पार्थस्य समर्थेनासदृशत्वात्।

चेति। तथाचार्थविषयं निर्विकल्पकमप्यर्थाजन्यमिति साक्षात्कारि न स्यादिति भावः। यदि हीति।

सामर्थ्यमुपलक्षणाभेदेन तदारोपे स्वलक्षणमेव तद्विषयः स्यादिति भावः। ततः समर्थने विषयीकरोति सविकल्पकं किन्तु साधारणं रूपं सम्बन्धमिव दर्शयतीत्यत आह। तस्मादिति। तत्र दोषमाह। दृश्यार्थश्चेति। अलीकानलीकयोरत्यन्तविसदृशत्वेन विशेषदर्शनान्न तदारोपः सम्भवतीत्यर्थः। यदा सम्बन्धसदृशं सम्बन्धमेव स्यान्न हि तदेव तत्सदृशमिति नाच सादृ-

(१) तथाच— पा० १ पु०। (२) समर्थं— पा० १ पु०।

नन्वसामर्थ्यव्यावृत्तिमात्रमेव सामर्थ्यं न तत्त्वान्तरं तस्य च न साधारणरूपविरोधः तथा चैकात्म्यप्रथनं न विरुद्धमिति चेत्। अविरोधे समारोपानुपपत्तेः। न हि यद्यथाविरुद्धं सत् प्रथते तत्तथारोपितं-नाम?। तस्माद्भेदाग्रहात्प्रवृत्तिः। न च स एव विसंवादः। तथा च सत्यालोचनमपि विसंवादि स्यात् कल्पनीयालोचनीययोः[1] भेदानुल्लेखात्। एतेन स्वप्रतिभासेऽनर्थे अर्थाध्यवसायेन प्रवृत्तेरिति परास्तमिति।

अनर्थत्वं हि विकल्पाद्भेदो विकल्प्यस्य स्यात्? आलोचनीयाद्भेदो वा?। न तावत्कल्पनागोचरस्यालो-

आरोप इत्यर्थः। तथा चेति। एवं सत्यलोके गोत्वादावलोकान्तरतादात्म्यारोपेण विरुध्यत इत्यर्थः। अविरोध इति। असामर्थ्यव्यावृत्तिर्यदि गोत्वादिसाधारणरूपा तदा सैव तदा यद्यथाभूतं तच्च तथा ज्ञानं नारोपः, अथ नातादात्मिका तदलोके अलोकान्तरारोपेऽपि न ततः प्रवृत्तिः स्यादित्यर्थः। ततो गत्यन्तराभावान्निर्विकल्पकसविकल्पकयोर्भेदाग्रहात् प्रवृत्तिस्त्वया समर्थनीयेत्याह। तस्मादिति।

स्वप्रतिभास इत्यनेन स्वस्मिन्प्रतिभासो यस्येति स्वप्रतिभासो विषय उच्यते तद्ज्ञानाकारो वा। तत्राद्यं दूषयति। अनर्थत्वं हीति। विकल्पः-विकल्पविषयः। आलोचनीयं-स्वलक्षणम्। न

(१) कल्पनालोचनयोः— पा० २ पु०।

कस्य कल्पनयाऽभेदः सम्भवति येन भेदोल्लिखन-मारोपः स्यात्। आलोचनीयाद्भेदे नाभेदप्राप्येति नारोपः। स्वप्रतिभासेऽनर्थे इति वचनान्नैष दोषः। स खल्वाकारो विकल्पादभिन्नोऽपि भिन्न आरोप्यत इति चेत्।

यदि तावत् विज्ञाननयमालम्ब्य एतदुच्यते तदा आलोचनस्याप्येषैव गतिरिति तस्याप्यारोपरूपत्वात्। ग्राह्याकारेऽप्रामाण्यं विकल्पस्यापि स्वात्मनि च संवेदनत्वादुभयोः प्रामाण्यमेवेति न कश्चिद्विशेषः॥

अथ बाह्यमर्थमधिकृत्य प्रस्तुतेयं कथा? तथापि यादृशाकारो विकल्पस्तादृशाकार एव बाह्यतया प्रतिभासेत। न चासौ साधारणाकारः सम्भवति। ततो

तावदिति। नाभेदेति। आलोचनीयस्वलक्षणस्य विकल्पेनाविषयीकरणाच्च तेन तेनाभेदारोपो विकल्पविषयस्येत्यर्थः। द्वितीयं शङ्कते। स्वप्रतिभासेऽनर्थे इति। आकारो न व्यावृत्तिर्ज्ञानाकारः। दूषयति। यदीति। विज्ञाननये निर्विकल्पकस्यापि आकारमात्रविषयतया बाह्यत्वे प्रमाणं न स्यादित्यर्थः। तथापीति। यदि विकल्पसाधारण आकारः स्यात्तदा स आकारस्तन्नियततया भासेत, न चैवमित्यर्थः। तत इति। विकल्पस्य साधारणाकारलाभावात्तदाकारं बाह्यमेव मन्तव्यमित्यर्थः।

यद्येतत्साधारणं रूपमाभाति तन्न विकल्पाकार[1]-मभिनिविशत इति बहिरेवावतिष्ठते। बाह्यत्ववत्साधारणत्वमप्यस्यारोप्यत इति चेत्। न असाधारणस्य पारमार्थिकस्य क्वचिदप्यनुपलब्धेरारोपयितुमशक्यत्वात्। असदुल्लेखे त्वलीकालम्बनत्वमेव विकल्पस्याभ्युपगतं स्यात्। तच्च चारोपसम्भावनैवास्तीत्युक्तम्।

पूर्वापरयोर्विकल्पाकारयोरभेदानुसन्धानमेव साधारण्यमिति चेत्। न। आकारिणां भेदप्रतीतावाकाराणामेकत्वेन प्रतिसन्धातुमशक्यत्वात्, तयोस्तादात्म्याभ्युपगमात्। विकल्पस्यात्माप्याकारो भिन्नो बाह्यतयारोपितः, ततो विकल्पानां भेदावसायेऽपि नाकाराणां भेदावसायः ततस्तदेकतयाऽनुसन्धानमिति चेत्। हन्त यद्ययमाकारो विकल्पात्मा तथेति प्रतीयेत, कथं

आकारिणामिति। आकारिणोर्ज्ञानयोर्भेदे भासमाने तदभिन्नयोराकारयोरभेदेन प्रतिभासासम्भव इत्यर्थः। विकल्पभेदनिश्चयेऽपि नाकारयोर्भेदनिश्चयः विकल्पाभिन्नस्याकारस्य तद्भिन्नबाह्यत्वेनारोपादित्याह। विकल्पस्येति। ततः—तस्मादित्यर्थः। तथेति। विकल्पात्मतयेत्यर्थः। कथमिति। ज्ञानाभिन्नत्वेन ज्ञाय-

(१) बाह्यत्व— पा० २ पु०।

बाह्यत्वेनारोप्येत । तादात्म्याप्रतीतिस्तूभयथा स्यात् । अस्वसंवेद्यत्वाद्वा विकल्पस्य स्वसंवेदनत्वेन वा, ततोऽभिन्नत्वात्तादात्म्यस्य । आद्यस्तावत्सौगतैरनभ्युपगमादेव निरस्तः । द्वितीयस्तु सर्वैरेवावगतः । अवगतं न तु निश्चितमिति चेत् । न । निश्चयानिश्चयलक्षणविरुद्धधर्मसंसर्गेण भेदापत्तेः । व्यावृत्त्योर्भेद एव न तु वस्तुनीति चेत् । अथ कोऽयं व्यावृत्तिर्नाम? न किञ्चिदिति चेत् । एवमस्तु । तथा च नारोपवार्त्तापि । ततो नास्योपदर्शितार्थविसंवादगन्धोऽपि । असदर्थप्रकाशनमेव विसंवादनमिति चेत् । आस्तां तावद्यथाविषयत्वमात्रं[1] विवक्षितम् । प्रकृतोपयोगात् । एवं

---

माने तद्भिन्नत्वस्य बाह्यत्वस्यारोपासम्भवादित्यर्थः । सर्वैरेवेति । तद्भिन्नस्यैतदात्मत्वादिविकल्पप्रतीतिरेव तदाकारप्रतीतिरित्यर्थः । अवगतमिति । आकारस्य विकल्पतादात्म्यमिति शेषः । व्यावृत्त्योरिति । आकारत्वविकल्पत्वरूपव्यावृत्त्योर्भेद एकस्मिन्नेव वस्तुनि विकल्पेऽस्तीत्यर्थः । तथा चेति । न ह्यलीके ज्ञानभिन्नत्वारोपः सम्भवतीत्यर्थः । ततः किमित्यत आह । तत इति । अनारोपपरत्वे च साधारणतया विकल्पगोचर इति नास्यासत्त्व(ास्य विसंवा)दित्वमित्यर्थः । असदर्थेति । तथा चालीकविषयकत्वमेव विकल्पस्य विसंवादित्वमित्यर्थः । यथा विषयत्वमिति । य एव विक-

---

(१) तावत् एतत् यथा विषयमात्रमत्र—पा० १ पु० ।

चाविपरीतार्थत्वात् प्रामाण्यम्। प्रमाणस्य सतः साक्षात्कारित्वात् प्रत्यक्षत्वम्। अस्मदादिप्रत्यक्षत्वादिन्द्रियार्थसामर्थ्यसमुत्थत्वम्, एवं सति सर्व एव सौगतेन प्रयुज्यमानाः कालात्ययापदिष्टतया प्रतिपक्षहेतवः पदमध्यारोपयितुमसमर्थाः प्रागेव विकल्पस्याप्रत्यक्षतां साधयितुम्, तथापीदमवशिष्यते-यदेतावतापि न परमार्थसद्विषयस्य प्रामाण्यं साधितं, तत्र चावयोर्विवाद इति तत्राह। स्यादिरोध इति। [९०।२४]

ननु परमार्थसतोऽभिलापसंसर्गयोग्यताऽशक्यव्युत्पादनैव क्षणिकत्वाज्जगत इत्यत उक्तम्, स्थेमभाजमिति। [९०।२६]

ननु स्थैर्यसिद्धावपि जात्यादीनां दुरुपपादत्वात्कथं परमार्थसतोऽभिलापसंसर्गयोग्यतेत्यत उक्तम् जात्यादिमन्तम्। [९०।२५] तथा चेति। [९०।२७]

यद्यप्युक्तरूपार्थव्यवस्थापने सति कालात्ययापदि-

---

ल्पस्य विषयस्तावन्मात्रे विसंवादाभावोऽस्त्येवेत्यर्थः। एवं सतीति। अविपरीतार्थत्वादिना प्रामाण्यादौ सिद्धे तदभावसाधनानि बाधितानीत्यर्थः। यद्यपीति। यद्यपि बाधस्तर्के गुण एवान्यथेष्टप्रसञ्जनापत्तेः। तथापि प्रसङ्गानुग्राह्यो हेतुरिति मध्यपदलोपिसमासेन विपर्ययानुमानमेवोक्तम्, तत्र च बाधोदोक

ष्टोऽयं प्रसङ्गहेतुस्तद्दर्शने चापक्षधर्मः, न ह्यस्ति सम्भवो विकल्पस्यार्थसमुत्थत्वं निश्चितमनिश्चितं च तदर्थस्य परमार्थसत्त्वं, तथापि परोऽपि तन्निराकरणसिद्ध्येव प्रत्यवस्थितो न राजाज्ञया निराकरणीयः। तस्मादापाततस्तत्सन्देहे सन्दिग्धविपक्षवृत्तित्वमेवास्त्वित्यर्थः।

एतेन विपर्ययोऽपि निराकृतो बोद्धव्यः।

ननु सन्तु जात्यादयः परमार्थभूतास्तथापि यदि तेऽपि पिण्डात्मभूताः? कथं भेदेन प्रतिभासेरन्, तथा प्रतिभासमानाश्च कथं विशेष्यतया विशेष्यमव-

---

एव। न चैवमेतेन विपर्ययोऽपि निराकृत इत्यग्रेतनग्रन्थवैयर्थ्यं, तेन तर्के दोषाभिधानात् विपर्ययानुमानविषयस्य तर्कात्मकत्वादिति भावः। तद्दर्शन इति। तद्दर्शने बाधस्यासिद्धव्यतिरेकादित्यर्थः। अपक्षधर्मत्वं च न स्वरूपासिद्धिरूपं, किन्तु साध्याभावप्रमायां तत्सन्देहाभावात्तद्घटितपक्षत्वाभावेन तद्धर्मत्वस्याभावादिति मन्तव्यम्। तदेवाह। न ह्यस्तीति। जात्यादेः प्रामाणिकत्वे निश्चिते तद्विषयविकल्पेऽर्थजन्यत्वस्यापि निश्चयादित्यर्थः। तन्निराकरणेति। जात्यादिमदर्थनिराकरणसिद्ध्येत्यर्थः। ननु द्रव्याद्यभिन्नं जात्यादीत्यपि जातिमदनुव्यवस्थापनेनैव निरस्तमिति शङ्कैव नोदेतीत्यत आह। नन्विति। न च भेदेन प्रतिभासमानत्वममीषामसिद्धमित्यत आह। तथेति। एकस्य व्यावर्त्यव्यावर्त्तकत्वायोगा-

छिन्द्युः। अनात्मभूताश्चेत् ? कथं सामानाधिकरण्यमश्वुवीरन्नित्यत आह। न चेति। [९०।१८]

तथापि शब्दो भिन्नात्मा अतद्वृत्तिः कथमवच्छेदकः स्यात्, यदि तद्गतस्तदात्मा वा न प्रतीयेत। एवमेव त्ववच्छेदेऽतिप्रसङ्गः, अवच्छेदप्रतीतौ भ्रान्तिरित्याशङ्कते। न चेति। [९१।३]

अभेदकल्पनमविच्छेदकल्पनम्। तच्च तदात्मतया तत्संसर्गितया वा। उक्तमेतदिति। [९१।४] न हि तद्वृत्तितयैव तत्संसर्गिनियमः[1] अपि तु तटस्थेनापि ज्ञानेनैव ज्ञेयस्य वाचकेन वाच्यस्य न विरुद्ध इत्यर्थः।

---

दित्यर्थः। कथमिति। भिन्नयोर्विहगतुरगयोः सामानाधिकरण्याभावादित्यर्थः। ननु डित्थोयमित्यभेदकल्पनादिति शङ्का नैयायिकसिद्धा तैः सामानाधिकरण्याभ्युपगन्तृभिः शब्दार्थयोरभेदानङ्गीकारादित्यतः शङ्कान्तरमाह।

तथापीति। अर्थावच्छेदकत्वस्य तादात्म्यतद्वृत्तित्वव्याप्यत्वादन्यथातिप्रसङ्गात् सामानाधिकरण्यधीर्भ्रम इत्यर्थः। तच्च शङ्कापरतया टीकां व्याचष्टे। अभेदेति। तद्गमत्वमाह। तच्चेति। तद्वृत्तितयेति। तत्संयोगितया तत्समवायितया वेत्यर्थः। तटस्थेनेति। चाक्षुषज्ञानाविषयेणेत्यर्थः। सम्बन्धमात्रमेवावच्छेदकत्वे प्रयोजकं तच्च ज्ञानज्ञेययोर्विषयविषयिभाववद्वाच्यवाचकयोरस्तीति भावः। ननु

---

(१) तत्संसर्गः इति नियमः—पा॰ १ पु॰।

ननु तटस्थोऽप्ययमवच्छेदको न सत्तामात्रेण, अपि तु ज्ञातः, न तु शब्दज्ञाने तदानीं श्रवणस्य व्यापारः विषयस्य विप्रयोगात्। सव्यापारे चक्षुषि मनसस्तत्र प्रसङ्गाच्च। तस्माद्यथा सुप्तावस्थाया[1]मिन्द्रियोपरमेऽपि पूर्वसंस्कारपाटवान्मनसैवैकेनाविद्यमाना अप्यर्था विषयीक्रियन्ते, तथा अशब्दव्यावृत्तिविकल्पजनितवासनापटुना चक्षुषा मनसा वा शब्दोऽपि विषयीक्रियते इत्यविद्यमानशब्दालम्बनत्वाद् भ्रान्तिरेवेत्यत आह।

न च शब्दार्थयोरिति। [११।५] एकेन्द्रियग्राह्यतेत्यत्र प्रसङ्ग इति शेषः।

अयमर्थः—यदि मनोभिप्रायेणैकेन्द्रियग्राह्यता प्रसज्यते, न किञ्चिदनिष्टम्, तस्य सर्वविषयत्वात्। अथ बाह्येन्द्रियमभिप्रेत्य? तत्रापि किं नाम योजनात्मके

---

तटस्थत्वमेव शब्दस्यार्थज्ञानविषयत्वमिति शङ्कैव नोदेतीत्यत शङ्कान्तरमाह। नन्विति। विषयेति। विषयस्य शब्दस्य तदा श्रोत्रेणासन्निकर्षादित्यर्थः। सव्यापार इति। तथाच चाक्षुषज्ञानकाले मनःश्रोत्रसंयोगोऽपि शब्दसाक्षात्कारहेतुर्नास्तीत्यर्थः। ननु शब्दा(र्थ)न्वयो तेनेन्द्रियेण मनसा ग्रहणमस्त्येवेत्यत आह। प्रसङ्ग इतीति। तेन प्रसङ्गस्यानिष्टप्रसञ्जनरूपतया यदेकेन्द्रियग्राह्यत्वे

---

(१) स्वप्नावस्थाया—पा० १ पु०।

विकल्पे ? किं वा जात्यादियोजनात्मकेऽपि, किं नाम्नो विशेषणत्वं विवक्षित्वा किं वोपलक्षणत्वमिति। तत्र नाम्नो विशेषणत्वपक्षस्तावदनभ्युपगमेनैव परिहृतः। उपलक्षणत्वं तु तटस्थस्यैवेति प्रतिपादितमेव। तच्चे-न्द्रियान्तरोपनीतस्यापि निर्वहतीति नैन्द्रियके विकल्पे शब्द[1]स्फुरणमुपयुज्यते। जात्यादियोजनायां तु शब्द-स्मरणस्यापि नास्त्युपयोगः प्रागेव तद्ग्रहणस्य, तस्यान-वच्छेदकत्वात्। केवलं किमिति नियमतः स्मर्यते शब्द इत्यवशिष्यते। तत्रेदमुक्तं किन्त्विति।

तत्किमिदानीं स्मरणस्य न कश्चिदस्त्युपयोग इत्यत आह। इन्द्रियजविकल्पोत्पादं प्रति [९१।१] व्यवहारं प्रति त्वस्यैवोपयोग इत्यर्थः।

परस्यानिष्टमापद्यते तद्विवक्षया शब्दार्थयोश्चक्षुरेकेन्द्रियग्राह्यत्वमा-पादितमित्यर्थः। तथेति। शब्दस्य तदानीमसत्त्वात्तद्विशिष्टोनाम-योजनात्मकचाक्षुषविकल्पो भासत इति नाभ्युपगच्छाम इत्यर्थः। तच्चेति। व्यावृत्तिधी(ज्ञान)हेतुज्ञानविषयत्वाविशेषेऽपि यद्विशेषण-न्तद्विशिष्टधीविषयः उपलक्षणं तु न तद्विषय इति। करणान्तरो-पनीतं स्वज्ञाने न व्यावर्त्तकमिति शब्दोऽपि तथेत्यर्थः।

नन्वेवं शब्दस्मरणस्य कुत्रोपयोग इत्यत आह। व्यवहारं

(१) नाम—पा० ३ पु०।

सङ्केतसमयेति [९१ । ९] पूर्वावस्थास्मरणग्रहणयोरन्यतरोपलक्षणपरं, शब्दस्तु न निवेशयत्यात्मानं गृहीतः स्मृतोऽपीति शेषः। चक्षुषापि स एवायं दृश्यते(१) न तु पूर्वंहृदयस्थः शब्दोऽपीत्यर्थः। तदेव व्याख्याय श्लोकान्तरेण द्रढयति। अनेन ·हीत्यादि। [९१ । १३] न तु शब्दनिवेशनमपीति। [९१ । १४] शब्दरूपमपि विषय इत्यर्थः।

यद्यपि संज्ञा हीत्यादिश्लोके सा तटस्थेत्येतावदेव प्रकृतोपयोगि, तथाप्यनागतं प्रतिविधित्सुरवयवान्तरं

प्रतीति। उपलक्षणीय इत्यत आह। यस्यार्थस्य व्यावर्त्तनरूपं-व्यवहारं प्रतीत्यर्थः। ननु नामयोजनात्मके विकल्पे स्मृतस्य शब्दस्य निवेशनमस्त्येवेत्यत आह। गृहीत इति। तत्र न गृहीतः सम्बन्धात्मनि निवेशयत्यपि तु स्मृतः तथापि शब्दरूपविषयक ऐन्द्रियकविकल्पे शब्द आत्मानं निवेशयत्येवेत्यत आह। स्मृत इति। अत्राऽनुभूत एव शब्दो विकल्पविषयो न स्मृतः अतो गृहीतस्य स्मृतः शब्दो न क्वचिद्विकल्पविषय इत्यर्थः। एवार्थः। एवकारार्थः। ननु नामयोजनात्मकशब्दविकल्पशब्दे निवेशोऽस्त्येवेत्यत आह। शब्दरूपमिति। रूपशब्देन विद्यमानविषयत्वयुक्तम्। नामयोजनात्मके तु विकल्पे शब्दे न विद्यमानो विषय इत्यर्थः। प्रकृतेति। संज्ञिप्रत्यक्षे शब्दाभानं नोपयुक्तमित्यर्थः। अनागतेति। स्मरणे-

(१) गृह्यते—पा० १ पु०।

व्याचष्टे। नार्थेन्द्रियेति। [९१।१९] अर्थसहितमिन्द्रिय-मर्थेन्द्रियम्। यद्यपि क्षणभङ्गपक्षेऽपि 'प्रत्येकमसमर्थेषु येषु सम्भाव्यते गुणः। संहतौ हेतुता तेषा'मिति न्यायेनातिशयपरम्परोत्पादेन पूर्वावस्थास्मरणादिसह-कारिमध्यमध्यासीनं यदेवेन्द्रियं तदेव विकल्पजनकं नेतरदिति नास्ति कश्चिद्विरोधः। तथापि विकल्पस्य स्थिरविषयत्वात् क्षणिकत्वस्वीकारे निर्विषयत्वमापा-द्येतेति निष्फलः प्रयासः स्यात् इति मन्यमानः स्थैर्य-मालम्ब्य परिहरति। न च जनकत्वेति। [९१।२२] स्यादेतदिति। [९१।२३] स्यादेतत्सहकारित्वं संस्कार-स्येन्द्रियं प्रति, यद्यनयोर्विषयभेदो न स्यादित्यर्थः।

---

नान्यथासिद्ध इन्द्रियसन्निकर्षो न कारणमित्यर्थः। न रूपाच्छा-दनचमेत्यवयवान्तरं अर्थेन्द्रियमित्येकवचनं समाधत्ते। अर्थसहित-मिति। येषु संहतौ गुण उत्पादविशेषः सम्भाव्यते तेषां हेतुतेति योजना निर्विषयकत्वम्—अलीकविषयकत्वमित्यर्थः। निष्फल इति। विकल्पस्यालीकविषयत्वेऽर्थजत्वाभावात् प्रत्यक्षत्वासिद्धिरित्यर्थः।

स्यादेतदित्यत्र तच्छब्देन प्रक्रम्यमाणाया अतीतावस्थायाः परामर्शे जिज्ञासक्षतिरित्यत आह। स्यादेतदिति। एतत्-सह-कारित्वं स्यादित्यर्थः। तथापि प्रसक्ते अनिष्टप्रसञ्जनं मोक्ष-मिति तदाह। यद्यनयोरिति। ननु न भिन्नविषययोः सह-

तत्किमिति । [९१।२८] इन्द्रियसंस्कारयोः परस्पराधिपत्यं विषयभेदात्कीदृशान्न भवति । किं प्रतिपत्त्यनुबन्धिनो व्यापारानुबन्धिनो वा ? न तावदाद्यः तथाविधविषयभेदेऽपि गन्धज्ञानचक्षुषोः परस्पराधिपत्येन रूपज्ञानोत्पत्तिदर्शनात् । द्वितीयस्त्वसिद्धः तस्य कार्येणानुविधीयमानतामात्रेणानेयत्वात् । एतच्चोभयमप्युभयवादिसिद्धमित्यर्थः ॥

---

कारितेत्यर्थः किमित्यादिना समाधानं युक्तं न हि रूपज्ञानं गन्धविषयमपीत्यतोविकल्प्य व्याचष्टे । इन्द्रियेति । इन्द्रियस्मरणयोर्वेत्यपि द्रष्टव्यम् । आधिपत्यं-सहकारिता । किमिति । मिथः सहकारित्वाभावे साध्ये भिन्नविषयकत्वस्य हेतोः किं तदविषयकज्ञानत्ववच्च तादृशज्ञानानुकूलव्यापारवत्वमर्थ इत्यर्थः । आद्ये व्यभिचारमाह । तथाविधेति । लब्धतेपि चक्षुरविषयगन्धविषयकज्ञानस्य चक्षुर्विषयरूपज्ञानजनने चक्षुःसहकारित्वादित्यर्थः । यद्यपि चक्षुरसहकृतस्य गन्धज्ञानस्य रूपज्ञानाजनकत्वं तथापि तत्सहकृतस्य तद्भवत्येव, फलदर्शनादितिभावः । द्वितीयस्त्विति । व्यापारानुबन्धितया विषयभेद इत्यर्थः । फलदर्शनादेव संस्कारेन्द्रिययोरुभयविषयव्यापारत्वसिद्धिरितिभावः । यथा गन्धज्ञानं चक्षुःसहकृतमेव रूपविषयव्यापारं तदसहकृतस्य रूपजनकत्वात्, तथा संस्कारेन्द्रिययोरपि तत्तेदन्ताविशिष्टज्ञाने अन्योन्यसहकृतयो-

ननु व्यापारानुबन्धितया संस्कारस्य यदि पुरोवर्त्ती विषयस्तदाऽतीतावस्थास्फुरणं न स्यादेव, न ह्यन्यविषयोव्यापारोऽन्यत्र क्रियेत्यभ्युपगमः, तस्मादतीतविषयत्वात् क्रियाया व्यापारानुबन्धितयाऽपि संस्कारस्य स एव विषयः, न तु पुरोवर्त्ती· एवमिन्द्रियस्यापि यद्यतीतावस्थस्यैव[1] व्यापारवतोविषयस्तदा पुरोवर्तिविषयस्फुरणं न स्यात्। तस्मात्तस्यापि व्यापारवतः पुरोवर्त्त्येव विषय इति व्यापारतोऽपि कथमेकविषयतेति। समनन्तरप्रत्ययस्तु प्रतिपत्तितोगन्धविषयोपि व्यापारतोरूपविषयो रूपविषयव्यापारमेव चक्षुरपेक्षते। नहि चक्षुष्यपि सहकारिणि गन्धज्ञानाद्गन्धज्ञान, मपि तु रूपज्ञानमेवेति।

नैतत्साधीयः—सहकारिभेदादेव व्यापारभेदस्यापि नियमात्। नहि चक्षुरादिसहकारिविरहेऽपि गन्धज्ञानस्य रूपविषयव्यापारनियमः, तथासति गन्धज्ञानाद्रसनादिसहकारिणोपि रूपज्ञानमेव स्यात्, न रसादिज्ञानम्। तस्मात्केवलस्य चक्षुषो यद्यपि रूपमेव

उभयविषयव्यापारत्वं धर्म्मो योभयोरप्येकोविषयोऽस्त्येवेत्याह। सहकारिभेदादेवेति। ननु तत्किमित्यादिनाव्यापकव्यभिचारोद्भावनं

(१) अतीतावस्थैव—पा० २ पु०।

व्यापारविषयस्तथापि पूर्वावस्थासंस्कारसहकारिमतस्त-द्दानेव पुरोवर्ती व्यापारविषय इति न कश्चिद्विरोधः। पूर्वावस्था चक्षुषाऽसन्निकृष्टा कथं तद्व्यापारविषय इति अवशिष्टं तु शङ्कते। नन्वतीतेति। [८९।१]

अथ तत्सम्बन्धमेव तद्व्यापारविषयत्वं स्यात्? सम्बन्धस्य तद्व्यापकत्वं वा? आद्यं निराकरोति। तत्कि-मिति। [८९।४] द्वितीयं शङ्कते। नन्वसम्बन्धमिति। [८९।७]

प्रधानव्यापारविषयता ह्यवान्तरव्यापारविषयतया व्याप्ता, सा चातीतावस्थातो निवर्त्तमाना तामपि निवर्त्तयति। अथ सविकल्पके जनयितव्ये पूर्वावस्था-स्मरणमेवावान्तरव्यापारो न तु विषयसम्बन्धः?, तदा लक्षणविरोधो दूषणमित्यर्थः।

माभूदिति। [८९।९] इन्द्रियगोचरः—इन्द्रियसन्नि-कर्षगोचर इत्यर्थः। [८९।११]

---

गोक्तदेशसमाधानमित्यतो विकल्प्य योजयति। अथेति। व्याप-कत्वं साधयति। प्रधानेति। अवान्तरो व्यापारः सन्निकर्षः प्रधानव्यापारो ज्ञानम्। नन्विन्द्रियजन्यज्ञानविषयत्वमेवेन्द्रियगोच-रत्वं, तत्कुतः तदेव निषिध्यते तदेव विधीयत इत्यत आह। इन्द्रियसन्निकर्षेति। नन्वेवमपि लक्षणविरोधस्तदवस्थ एव यत्स-

न चेति। अयमाशयः—न तावत्सर्वथैवातीतावस्था नेन्द्रियसन्निकृष्टा, संयुक्तविशेषणतायाः सत्वात्[1]। अस्यापि संयुक्तसमवायवत्प्रत्यक्षज्ञानोत्पादकतया सन्निकर्षपदेन सङ्ग्रहात्। यद्यपि समवायेतरभावरूपधर्मेषु सम्बन्धान्तरगर्भ एव विशेषणविशेष्यभावस्तथापि विद्यमानधर्मविषयैव सा व्यवस्थितिरिति न कश्चित्सूत्रविरोध इति यद्यपि रहस्यं, तथापि अतीतावस्थायाः सम्बन्धानभ्युपगमेऽपि न काचित्क्षतिः। नहि यावत्प्रत्येतव्य इन्द्रियसन्निकर्ष इति सूत्रं, किं तर्हि? इन्द्रियार्थसन्निकर्षं ज्ञानं[2] प्रत्यक्षफलं तथाविधफलविषयोऽर्थः प्रत्यक्षः, तथाविधफलसाधनं प्रत्यक्षं प्रमाणमिति।

रणसहकारिणेत्यादिनापि सम्बन्धाप्रदर्शनादित्यत आह। अयमिति। संयुक्तेति। अतीतसमयसम्बन्धात्मिकायास्तत्तायाः सन्निकर्षः विशेषणभावविशेषीभूतघटादिस्वरूपात्मिकाऽस्त्येवेत्यर्थः। विद्यमानेति। पूर्वकालस्त्वतीत इति भावः। किं तर्हीति। विशेष्येन्द्रियसन्निकर्षात् प्रकृतेऽर्थसन्निकर्षमात्रमस्त्येवेति लक्षणाव्यापकत्वमिति भावः। संस्कारेन्द्रियसहकारित्वे प्रस्तुते प्रत्यभिज्ञाया एकत्वानल-

(१) सम्भवात्—पा० २ पु०।
(२) सन्निकर्षजनितं विज्ञानं—पा० २ पु०।

स्यादेतत्—कार्यमेकमभिसन्धायेन्द्रियसन्निकर्षसंस्कारयोः परस्परसहकारिता तदेव त्वेकमनयोः कुत इत्याशयवान् चोदयति[1]। ननु पूर्वापरेति। [९२।१३]

सूचीकटाहन्यायेन पश्चादुक्तमपि प्रथमं विवृणोति। तथाहीति। [९२।१४]

यद्यपि तदित्युल्लेखो न सर्वविकल्पव्यापी तथापि प्रतिसन्धानज्ञाने तावदस्ति। तस्य च प्रामाण्यं स्थिरवादिभिरवश्याभ्युपेतव्यम्, अन्यथा सर्वमालूनविशीर्णमापद्येत। परेणापि तदेव विशेषतो निराकर्त्तव्यं, तन्निराकरणेनैव हि जात्याद्यभावेऽप्रतिसन्धानात्मकस्यापि विकल्पस्य प्रत्याख्यानमयत्नसिद्धमित्यभिसन्धिः॥

ननु विरुद्धधर्मसंसर्गोपि स्यात् न च भेद इत्यत

---

साधनमसम्बद्धमित्याशङ्क्याह। स्यादेतदिति। यद्यपीति। तथाच विकल्पान्तरस्य प्रत्यक्षत्वमिष्टं न सिद्ध्येदितिभावः। अयत्नसिद्धमिति। प्रत्यभिज्ञानाप्रामाण्ये तद्दृष्टान्तेन विकल्पान्तरस्याप्रामाण्यसिद्धिरित्यर्थः। ननु विरुद्धधर्मसंसर्गसिद्धावेकत्वशङ्कैव नोदेति तत्राह वैधर्म्यरूपभेदे सत्यप्यन्योन्याभावरूपभेदो न स्यात् तस्य तद्व्यापकत्वासिद्धेरित्यर्थः। ननु वैधर्म्यभेदे सत्यप्येकत्वमिच्छतः

---

(१) देशयति—पा० ३ पु०।

आह। त्रैलोक्यस्यैक्यप्रसङ्गात्। [९१।१८] तथा च भेद-व्यवहारस्याकस्मिकत्वप्रसङ्ग इत्यर्थः॥

विषयभेदश्चेति। [९१।१९] यद्यपि विषयभेदवतोपि सार्वज्ञविज्ञानस्यैकत्वमक्षतमेव, तथापि क्षणिकानेक-नीलालम्बनत्वमेव यदि प्रतिसन्धानस्य परोऽभ्युपग-च्छेन्न तस्य काचिदिष्टसिद्धिर्नाप्यस्माकम - - - रिस्फु-रणमेव विकल्पे। तस्मादारोपितैकत्वविषयत्वस्य पार-मार्थिकैकत्वविषयत्वं वा। तत्र प्रथमं यदि परोभ्युप-गच्छेदनुकूलयेदेवास्मान्। तस्मान्नानावस्थाविशिष्ट-पारमार्थिकैकविषयतयास्यैकत्वं पराभिप्रायगोचरः। तच्च विषयभेदापादनेनैव निरस्यत इत्यभिसन्धिः।

अथोच्यत इति। [९०।२०] यद्यपि तदिदमितिज्ञानं पूर्वावस्थायामप्यपरोक्षमेव। नहि तदित्युल्लेखादेव[1] परोक्षत्वं तथा सति शाब्दलैङ्गिकविकल्पानां तदित्यु-

---

त्रैलोक्यैकत्वप्रसञ्जनमिष्टमेवेत्यत आह। तथाचेति। व्यवहारलोप मिच्छतस्तदपेक्षणीयत्वमेवेतिभावः। परोनैयायिकः। तच्चेति। तथाच विषयभेदाभावात् ज्ञाने भेदापादनं किन्तु नैयायिकोक्तं प्रत्यभिज्ञानस्य पारमार्थिकैकविषयत्वं विषयभेदेन निरस्यत इत्यर्थः। तथा सतीति। नच परोक्षत्वं विषयवृत्तिधर्मान्तरमेवेति

(१) तदुल्लेखादेव—पा० १ पु०।

क्षेत्रविरहिणामपरोक्षत्वप्रसङ्गात्। नापीदमास्पदत्वादेव साक्षात्कार इति बौद्धस्याभ्युपगमोऽपसिद्धान्तप्रसङ्गात्। किन्तु सन्निहितविषयमसन्निहितविषयं वा यदेव लिङ्गादिनिरपेक्षेणेन्द्रियेण विज्ञानं जन्यते तदेवापरोक्षमुत्पद्यते अनिन्द्रियजन्तु परोक्षमिति विभागः तत्त्व परोक्षमपरोक्षं वाऽनुभूतावस्थाविशिष्टविषयतया तदित्युल्लिख्यते, सन्निहितविषयतयेदमिति, सोऽयं विषयकृतोविशेषस्तथाऽप्यभ्युपगमवादेऽपि न कश्चिद्विरोध इति प्रतिबन्धिग्रह इति मन्तव्यम्।

---

वाच्यम्। तथाभूतज्ञानविषयत्वात् स्मृत इति तद्व्यवहारोपपत्तौ तत्र मानाभावादितिभावः।

अपसिद्धान्तेति। अनुमित्यादाविदन्त्वभानात्तत्रापि प्रत्यक्षत्वापत्तेरितिभावः। किन्त्विति। पारोक्ष्यापारोक्ष्ये ज्ञानधर्मौ न विषयनिरूप्यौ, किन्तु तज्ज्ञानगतजातिभेदौ तत्रापरोक्ष्यमिन्द्रियसन्निकर्षेणैव व्यज्यत इत्यर्थः। तत्त्वेति। परोक्षं स्मरणमपरोक्षं प्रत्यभिज्ञानं, नच प्रत्यभिज्ञाने तत्ताविषयकत्वात् स्मृतिवत्परोक्षत्वं साध्यं तदिदं साक्षात्करोमीत्यनुव्यवसायेन बाधितत्वादितिभावः। तथापीति। अतीतावस्थाविषये प्रत्यभिज्ञानत्वापरोक्षत्वेपि तत्र तत्र तत्र परोक्षत्वमभ्युपगम्य तदिति विकल्पप्रतिबन्दिग्रह इत्यर्थः।

तस्माद्विषयभेदादविरोध इति त्वया समाधातव्यमिति चेत्। नन्विहापीति।

तत्किमिदानीं विकल्पविकल्पनीययोर्यथा भेदस्तथैव तत्तेदन्तास्पदयोरपीति[1]? नन्वेवं सति दत्तः स्वहस्तो-बौद्धानामित्यत आह। सम्बन्धेति विशेषणे। उत्तरत्रा-प्येवं विशेष्यन्त्वेकमेव। तत्रापरोक्षत्वमेवास्येत्याशयः[2]।

योपीति। [९१।१] अत्रापि नानादिग्देशसम्बन्धः प्रतिबन्दीकर्त्तव्यः।

ननु प्रत्यभिज्ञानान्नानाकालसम्बन्धैकत्वसिद्धौ परस्पराऽभावाविनाभावभङ्गः[3], तत्र लूनपुनर्जातकदली-

समाधानोक्ताववविरोध इत्ययुक्तं परेण विरोधस्यानुद्भावनादित्यतः पूरयति। त्वया समाधातव्यमिति। बौद्धेन।

नन्वेवमिति। प्रत्यभिज्ञानस्य पूर्वापरावस्थाविशिष्टैकार्थ-विषयत्वेन ततः स्थैर्यासिद्धौ क्षणिकत्वसिद्धिरित्यर्थः। ननु धर्मिणि ज्ञानस्य पारोक्ष्यापारोक्ष्ये नोक्ते इति सम्बन्धस्य विशेषत्वे-नाक्षिप्ते समाप्तिरित्यत आह। विशेषण इति। एवमुत्तरत्रापि अपरदेशकालसम्बन्ध इत्यत्रापीत्यर्थः। अत्रापीति। नानादिग्-

(१) तदिदन्तास्पदयोपि—पा० ३ पु०।

(२) अपरोक्षत्वमस्यैवेत्याशयः—पा० ३ पु०।

(३) परस्परविनाभावभङ्गप्रसङ्गः—पा० ३ पु०।

काण्डादौ व्यभिचारदर्शनादप्रमाणमेव। न च कदली-काण्डप्रत्यभिज्ञानतः पद्मरागप्रत्यभिज्ञानस्य कश्चिद्भेद उपलभ्यते[1]। ननु नानादिग्देशसम्बन्ध[2]स्यापि तव कदाचिदेकत्वमुपलभ्यते तत्कथं तस्याप्येकतानिश्चयः[3]। अथ नानादिग्देशसंसर्गः[4] स्वाश्रयं भेदयित्वा (?) न निवर्त्तत इति निःस्वभावता वा आपादयेत्, अनैकान्तिको वा स्यात् ? अतोनायं विरुद्धः, सिद्धास्तर्हि संयोगावयव्यादयः। तुल्यं चैतत्कालभेदेऽपि। तथाहि यदि पूर्वापरकालसंसर्गो वस्तुनि विरुध्येत विज्ञानेपि विरुध्येत। तथा च विज्ञानमप्येकमतीतवर्तमानविषयं न स्यात्।

एवं च बुद्धीनां नियतार्थतया प्रतिसन्धानगन्धोपि

---

देशसम्बन्धेप्येकः परमार्थोबौद्धाङ्गीकृतः प्रतिबन्दीकर्त्तव्य इत्यर्थः। तत्कथमिति। एकत्वनिश्चयस्य व्यभिचारितया तस्यानिश्चायकत्वा-दित्यर्थः। अथेति। नानादिग्देशसम्बन्धस्याश्रयभेदकत्वे एकोपि परमार्थः स्वात्मनोपि भिद्येतेत्येकत्वाव्यवस्थैव निःस्वभावा स्यात्। यदि च नानादिग्देशसम्बन्धोनाश्रयभेदापादकस्तदाऽनैकान्तिक-मतोनानादिग्देशसम्बन्धोनैकत्र विरुद्ध इत्यर्थः। दूषयति।

सिद्धा इति। संयोगादयोप्येवमनेकवृत्तयः सिद्ध्येयुरित्यर्थः।

---

(१) विशेषं उपलभामहे—पा० २ पु०। (२) सम्बन्ध—पा० २ पु०।
(३) एकत्वनिश्चयः—पा० २ पु०। (४) सम्बन्धः—पा० २ पु०।

न स्यात्। तथा च मूलाभावान्निरीहं जगज्जायेत। सर्वज्ञस्य दत्तजलाञ्जलिः प्रसक्तः।

अतीतवर्त्तमानविषयत्वेपि[1] नैकं ज्ञानमतीतं वर्त्तमानं च स्वीकुर्म इति चेत्। तत्किमिदं[2] वर्त्तमा --- सदन्तरसम्बन्धो वा। एवञ्चातीतत्वमपि नष्टत्वं नष्टान्तरसम्बन्धो वा। तच सदन्तरनष्टान्तरसम्बन्धः प्रतिसन्धाने सर्वज्ञविज्ञाने चास्त्येव नष्टानष्टविषयत्वात्। तदविषयत्वे प्रतिसन्धानत्वसर्वज्ञत्वानुपपत्तेः। सत्वनष्टत्वे परस्परं विरुध्येते ते चैकत्र प्रतिसन्धाने न स्तः इति चेत्। एवं तर्हि पद्मरागमणेरुत्पत्तेरारभ्य स्वावयवविभागपर्यन्तं सत्वरूपोनास्यष्टत्वसंसर्गः। स एव तु सता केनचित्संसृष्टः केनचिदसता प्रतिसन्धानमिव सद्भ्यां विषयाभ्यामिति। तन्नास्ति विरुद्धधर्मसंसर्गः। ततः परिमाणादयो[3] विरुद्धधर्मसंसर्गा वक्तव्याः। ते यत्र पद्म-

---

वस्तुनि-बाह्य इत्यर्थः। मूलाभावादिति। तज्जातीयत्वप्रतिसन्धानस्य वृत्तिहेतोरभावादित्यर्थः। सर्वज्ञस्येति। बुद्धेः प्रतिनियतार्थविषयत्वनैयत्यादित्यर्थः। तदविषयत्व इति। पूर्वापरावस्थाविशिष्टाभेदावगाहिन एव प्रतिसन्धानत्वादित्यर्थः। द्वितीयकल्पं शङ्कते। सत्वनष्टत्व इति। ननु तज्जातीय एव भेदस्तज्जातीयभेदा-

---

(१) अतीतानागतविषयत्वेऽपि—पा० ३ पु०।

(२) अथ किमिदं—पा० ३ पु०। (३) परिमाणभेदादयो—पा० ३ पु०।

रागादौ न सन्ति तथौत्सर्गिकमेकत्वमेवेति समः समाधिरिति अभिप्रायेण दृष्टमन्तर्भाव्योपसंहरति। तस्मादिति। [९२।९] न चान्यस्य-सम्बन्धिनः कालस्य भेदो-विरुद्धधर्मसंसर्गोऽन्यस्य-पद्मरागमणेर्भेदं-नानात्वम्। न चेन्द्रियेति। [९२।१२] यदि विकल्पजातीयं प्रतीन्द्रियार्थ-सन्निकर्षो न कारणं व्यभिचारादिति परस्याभिप्राय-स्तदानुत्तरैवोत्तरम्। नहि वयमपि विकल्पमात्रं प्रति तस्य कारणत्वं ब्रूमः, किन्तु साक्षात्कारिविज्ञानं प्रति। न चासौ(१) इन्द्रियार्थसन्निकर्षमन्तरेणापि भवतीति सारम्। निर्विकल्पकप्रतिबन्दिग्रहस्त्वसमर्थं सुखेन ग्राहयितुम्।

स्यादेतत् विकल्पस्योभयथा(२)सम्भवे हि सामान्य-

---

पादको न भवतीत्यतोभिन्नार्थतया भेदपदं व्याचष्टे। न चान्यस्येति। तथाच वैधर्म्यभेदस्यान्योन्याभावभेदापादकत्वं निषिद्धमित्यर्थः। प्रतिबन्दिमात्रस्यादूषणत्वात्तत्र मूलयुक्तिमाह। यदीति। ननु व्यभिचाराभावाद्विकल्पविशेषं प्रतीन्द्रियार्थसन्निकर्षः कारणमिति साधिते(३) सविकल्पकस्य साक्षात्कारित्वमौपाधिकमिति शङ्का न युक्ताऽर्थान्तरत्वादित्यत आह।

स्यादेतदिति। तथा च विशेषासिद्धेर्न तमादाय समाधान-

---

(१) साक्षात्कारविकल्पः।　　　　(२) साक्षात्कारासाक्षात्कार।

(३) सधिते इति।

व्यभिचाराद्विशेषमादाय कार्यकारणतावधारणं स्यात्, न तु साक्षात्कारादिरस्य विशेषोस्यौपाधिकत्वात् तस्येत्याशङ्क्य निराकरोति। न च विकल्पगत इति। [९१।१९]

विकल्पगतः 'साक्षात्कारलक्षणोधर्मस्तावदनुभूयत इत्यविवादम्। तस्यौपाधिकत्वं न तावदानुभविक-मित्याह। सर्वा एव हीत्यादि। [९१।२०]

तस्माद्दर्शनव्यापारा विकल्पा इन्द्रियार्थसन्निकर्षज-न्मान इति योजना। नाप्यौपपत्तिकम्, उपपत्तेः प्रागेव निरस्तत्वादित्याशयः।

नन्विन्द्रियविषय एव यदि शब्दोऽपि प्रवर्तेत सोपि साक्षात्कारिणमेव विकल्पमादध्यात्(१), इन्द्रियमपि

मिति भावः। ननु निर्विकल्पकानपेक्षत्वं सविकल्पस्य स्वसिद्धान्त-विरुद्धमित्यन्यथा व्याचष्टे। विकल्पगत इति। औपाधिकत्वमिति। लोहितः स्फटिक इति वदुपाध्यन्वयव्यतिरेकानुभवविषयत्वमित्यर्थः। दर्शनव्यापारस्य स्वीकारान्न तद्विधेयम्, किन्तूद्देश्यमित्याह। तस्माद्दर्शनेति। ननु वस्तुगोचरत्वे प्रत्ययाभेदशङ्का न युक्ता परेणैकविषयत्वे सति प्रत्ययाभेदस्यानङ्गीकारादित्यत आह। नन्विन्द्रियेति। विषयविशेषमिति। तथा च तद्विषयमेव ज्ञानं

(१) प्रत्ययमादध्यात्—पा० ३ पु०।

चोत्प्रेक्षाव्यापारिणं विषयविशेषमन्तरेण ज्ञाने विशेषाभावात्। तस्माच्छब्दैकविषयतया प्रवर्त्तमानोविकल्पोनेन्द्रियविषयं स्पृशति। तदस्पर्शे च न स्वाभाविकमस्य साक्षात्कारित्वमित्याशयवानाशङ्क्य निराकरोति। न चेति। [९३।२४] एकचार्थे इन्द्रियं कारणमन्यच निरपेक्षः शब्दादिरित्यर्थः।

तुच्छतयोपेक्षणीयमपि शिष्यहिततया दूषयति। न च वह्नीति। [९३।२५] वह्निज्ञानाद्-दुष्णज्ञानादित्यर्थः। शीतद्रव्यापगमः तदपगमे वा तदनुपलम्भः तद्धेतुकदुःखाभावोवा शीतापनोद इत्युच्यते। स चोष्णद्रव्योपगमसाध्यो, न तु तदुपलम्भसाध्योऽन्यथा सन्निपातमूढस्य स्वेदनेपि दोषापगमो न स्यात् उष्णद्रव्यानुपलम्भात्। तुहिनाचलगुहामध्यवर्त्तिनि च सर्वज्ञे वडवानलसाक्षात्कारवति तुहिनाचलविलयः स्यादित्यर्थः।

---

किं चिदपरोचं किं चित्परोचमिति शङ्कार्थः। एकचेति। पारोच्यापारोच्ये न विषयप्रयोज्ये ज्ञानधर्मौ, किन्तु कारणविशेषव्याप्तौ जातिभेदावित्येकचापि विषये कारणभेदात्तयोरुपपत्तिरित्यर्थः।

तुच्छतयेति। दूरे वह्निदर्शनेऽपि शीतापनोदनाभावादित्यर्थः। परकीयवार्त्तिकस्य यद्यपि नामोपाधेरित्यस्याऽननुवादाच तच

यस्यापीत्यादिवार्त्तिकार्थं दूषयति। न चैकेनेति।

[६२ । १६]

उपाधयः सत्त्वादयस्तैर्विशिष्टत्वं[1] तैर्विशेषणैः सम्बन्धः।

अयमर्थः। एकेनैव स्वभावेन तावदुपकरोति सर्वोपाधीनामिति परमार्थः।

तत्रोपकारकस्यैकस्वभावतया उपकाराणामवच्छेदानामुपकार्याणां चोपाधीनां तदैकत्वं स्यात्, यद्युपकारकस्वभावान्तर्भूतत्वं तेषामभ्युपेयेत। न चैवमातिष्ठामहे त्वयाप्येवमेव समर्थनीयं किं त्वलौकविषयतयेति विशेषः। स एव[2] न्यायो यदि परमार्थसत्यपि स्य त् कोदोषः[3]। न केवलं काल्पनिके व्यवहारे तत्रैवं

दूषणमिति भ्रमनिरासायाऽऽह। यस्यापीत्यादि। उपाधिपदस्य जातिपरत्वमभिप्रेत्याह। सत्वादय इति। ननु विशेष्यत्वं विशेषणतादात्म्यमेव परैरिष्टमिति कथं न तत्स्वभाव इत्यत आह। सम्बन्ध इति। तदेवोपपादयति। अयमर्थ इति। न चैवमिति। धर्माणामुपाधीनां धर्मिणो भिन्नतया प्रतिनियतसामग्रीवेद्यत्वेनैव स उपपाद्य इत्यर्थः। अपि चेत्यादि न नैयायिकस्याभिधानं युक्तं स्वसिद्धान्तविरोधादित्यत आह। न केवलमिति। विषयग्रहण-

(१) तैर्विशेष्यत्वं—पा० १ पु०। (२) स एव—पा० १ पु०।
(३) कीदृशो दोषः—पा० १ पु०।

समर्थनमपि तु पारमार्थिकेपीत्याह। अपि चेति।
[६५ । १] परमाणुस्वभाव इति षष्ठीतत्पुरुषः। परमाणवो ज्ञानस्य स्वभावा इत्यपि द्रष्टव्यम्।

परमाणुस्वभावत्वे ज्ञानस्यापि नानात्वप्रसङ्गात्। तथा चैकपरमाणुनियमे (स्वभावत्वे) स्थूलप्रतिभासो भ्रान्तोऽपि न स्यात्। ज्ञानस्वभावत्वेऽपि च परमाणूनामप्येकत्वप्रसङ्गा[(१)]दमूर्त्तत्वादिप्रसङ्गाच्चेति स एव दोष इत्याद्युक्तानदोषमुत्सृज्यान्यमाह। तेषां सर्वान् प्रतीति।
[६५ । २]

परमाणूनामेकज्ञानस्वभावत्वे वा न ते द्वितीयेन विदिता स्युरित्यपि द्रष्टव्यम्।

यद्यपि तादात्म्याभावेऽपि ज्ञानज्ञेययोः कार्यकारणभावः सम्बन्धोविषयविषयिनियमार्थं बौद्धेन स्वीकृत-

धर्मेत्यत्र टीकायां विषयग्रहणं धर्मो यस्येति बहुव्रीहौ धर्मादनिच्केवलादनिच्नित्यसमासान्तः बहुव्रीहौ लिङ्गानुपपत्तेरित्याह। षष्ठीति। परमाणव इति।

विषयविषयिणोः परस्परं विशेषणविशेष्यभावात् अंशान्यस्वभावापादनादित्यर्थः। तथा चेति। एकस्य परमाणोरतीन्द्रियत्वादित्यर्थः। स एवेति। स्थूलप्रतिभासोभ्रान्तोऽपि न स्यादि-

(१) एकस्वभावत्वप्रसङ्गात्—पा० १ पु०।

स्तथापि कार्यकारणभावेऽपि को नियन्तेति[1] तुल्यो-ऽनुयोगः अतः 'स्वभावेनैवोत्तरयति। स्वभाव एवेति। [९४।५]

भावाभावयोः समवायतद्वतोर्विषयविषयिणोश्च वय-मपि स्वभावेनैव "परस्परोपहितं सम्बन्धमातिष्ठामहे। द्रव्यगुणकर्मजातितद्वतां यद्यपि स्वभावेनैवोपाध्युपाधि-मद्भावस्तथापि सम्बन्धोऽप्यनुभूयमानो विना बाधकं नोपेक्षितुं युज्यते, यथा स्वाभाविके विषयविषयिभावे कार्यकारणभावस्त्वया नोपेक्षितः, तस्मादतिरिक्तसम्बन्धे क्षणभङ्गसाधनं बाधकमवशिष्यत इत्यर्थः।

न तावद्विशिष्टव्यवहार एव नास्ति तस्य स्पष्टतया अपह्नोतु[2]मशक्यत्वात्, तदभावे सर्वव्यवहाराभावप्रस-ङ्गाच्च। तस्मादस्मदुक्तप्रकारेण्यथा प्रकारान्तरेणायमुप-पादनीयः; तत्राह। भिन्नज्ञानगोचरत्वेऽपीति। [९४।१०]

त्येदंरूपः। ननु इन्तेत्यादिना द्रव्यगुणादीनामपि अभावसम्बन्धा-भिधानेऽपसिद्धान्तस्तत्र समवायस्वीकारादित्यत आह। भावा-भावयोरिति। नन्वेकबुद्धिगोचरयोर्न विशेषणविशेष्यभाव इति परेणोक्ते भिन्नज्ञानगोचरत्वेऽपि नासौ सम्भवतीत्यनेन तद्व्यवहार एव निरस्तः स्यादित्यन्यथा व्याचष्टे। न तावदिति। ननु वासना-

(१) न कोपि नियन्तेति—पा०। (२) निह्नोतु—पा० १ पु०।

अपि शब्दोद्देश्याभास(१) तुल्यतामात्रे। नन्वस्ति व्यवहारो न तु वास्तवः स च यथाकथञ्चिद्वासनाद्वारेणापि निर्वहेत्। येषां त्वयं वास्तवस्तैरर्थद्वारैवास्य निर्वाहश्चिन्तनीय इत्याशङ्कते। ताभ्यामिति। [९४।१३]

त्वदुक्तमेव वासनाद्वारमुपादाय यदि वास्तव एवायं व्यवहारः स्यात् तदा कीदृशो दोष इत्याशयवानाह। अस्तु तावदिति। [९४।१४]

तथापि वास्तव एवायमित्यत्र किं प्रमाणमित्यत आह। तथा सतीति। [९४।१६] अस्येन्द्रियार्थसन्निकर्षजत्वे स्वाभाविकं साक्षात्कारित्वमेव प्रमाणमित्यर्थः।

निर्विकल्पकोपधानं कल्प्येत [९४।१७] विना प्रमाण-

---

द्वारा विशिष्टव्यवहारमुपपादयन् सौगतो नैयायिकमेवाश्रयत इत्यतः शङ्कामाह। नन्वस्तीति। ननु विशिष्टव्यवहारस्य वास्तवत्वे प्रतिक्षिप्ते अस्तित्यादिना तस्यौदासीन्ये तस्येन्द्रियजत्वं साधितमेव न स्यादित्यत आह। त्वदुक्तमिति। उत्तरग्रन्थोपयोगार्थमाह। तथापीति। ननु सविकल्पकस्य साक्षात्कारित्वं निर्विकल्पौपाधिकं परस्येष्टमिति न तदापादनं युक्तमित्यत आह। विनेति। ननु

---

(१) चोद्याभास—पा॰ १ पु॰ ।

मिति शेषः। यदि हि स्वकारणबलेन नोत्पत्तेर-विचारकत्वं मानसस्याप्यविचारकत्वप्रसङ्ग इत्याशय-वानाह। इन्तेति। [९४।१८]

मनसः सर्वविषयत्वं न तावद्व्यापारानुबन्धितया परस्य विवक्षितं इन्द्रियार्थसन्निकर्षस्यापि संस्कार-सहितस्य तथाभावव्यवस्थापनात्। तस्मात्प्रतिपत्त्यनु-बन्धितया वा स्यात्सर्ववासनाधारतया वा, आद्यं दूष-यति। यदि पूर्वकमिति। [९४।२०] अस्माकं तु मनः सर्वविषयकमपि व्यापारानुबन्धितया न प्रतिपत्त्यनु-बन्धितयाऽसर्वविषयमप्रतिपत्तिरूपत्वादिति भावः।

न च सकलसंस्काराधारतयेत्याह। अचेतनतया न

---

इन्तभो इत्यादिना परोक्तो दोषः स्वीकृत एव स्यादित्यत आह। यदिहीति। तथा चानिष्टप्रसङ्गेन परोक्तं दूषितमेवेति भावः।

ननु पूर्वज्ञानात्मकस्य मनसोऽव्यापारानुबन्धितया सर्वविषयत्वं परस्येष्टमेवेति कथं तस्य सर्वविषयतेति न युक्तमित्यतो विकल्प्य योजयति। मनस इति। तद्विवक्षायां संस्कारसहकृतस्येन्द्रियस्यापि सर्वविषयत्वात्ततो विशिष्टज्ञानं स्यादेवेति भावः। ननु मनसः सर्वविषयत्वविवादे तच्चेत् स्वीकृतं तदा न विचारकमित्यसम्बद्ध-मतः पूरयति। व्यापारेति। अचेतनतयेत्यस्योपयोगार्थमाह। न च सकलेति। ननु मनसः सर्वविषयत्वविवादे तच्चेत् स्वीकृतं तदा न

विचारकमिति[1]। [९४।२१] विश्वारौपयिकसकलवासना-नाधारतयेत्यर्थः[2]।

त्वदभिप्रेतस्य च मनसः सकलवासनाधारत्वं निषेत्स्यत इत्यभिप्रायेणाह। तस्मादात्मैवेति। [९४।२१]

स्थितं ज्ञानं—ज्ञानवासनेत्यर्थः। अत्र हेतुः। स हि बोद्धेति। [९४।२१] अत्र प्रमाणं—गम्यत इति। अतः स्मरणस्य सामर्थ्यम्। चो हेतौ।

ननु यद्येवम्भूतचेतनाधिष्ठितमिन्द्रियं, तर्हि निर्विकल्पकोत्पत्तिकाल एव लब्धसंस्कारसचिवतया विकल्पमेव जनयेदित्यत आह। स खल्विति। [९४।२२] प्रागा-

---

विचारकमित्यप्रस्तुतमतस्तस्य हेतुपरत्वमाह। अविचारकत्वादिति। तथा च वासनानाधारत्वेऽचेतनत्वं हेतुः सकलवासनानाधारत्वं च तदाधारतया सर्वविषयत्वाभावे हेतुरिति भावः। ननु बोध्यत्वं बोधसमवायित्वमतः साध्याविशिष्टमित्यत आह।

ज्ञानवासनेत्यर्थ इति। लक्षणाबीजमाह। अत्रेति। मुख्यार्थपरत्वे साध्याविशेषप्रसङ्ग इति भावः। स हि बोद्धेत्येतावतैव हेत्वाकाङ्क्षानिवृत्तेरत्र गम्यत इत्यनर्थकमिति पूरयित्वा व्याचष्टे। अत्रेति। प्रमाणमाह। स्मरण इति। कारिकायां सन्धानं—प्रति-

---

(१) न विचारकत्वादिति—पा० ३ पु०। (२) नाधारत्वादित्यर्थः—पा० ३ पु०।

लोच्योद्बुद्धसंस्कारसमुपजातस्मृतिसहायः पश्चाद्विकल्पयतीति योजना।

एवं तर्हीन्द्रियार्थसन्निकर्षादालोचनं संस्कारोद्बोधः ततः स्मृतिस्तत्सहायश्च विकल्पयतीति न चक्षुषः कश्चिदुपयोग इत्यत आह। चक्षुषेति। [९४।२५]

नन्वेवम्भूता सामग्री मिलिता यदि चक्षुर्व्यापारविरहे न विकल्पिकां धियमुपजनयेत् ततस्तस्यापि कारणत्वं कल्प्येत, न त्वेदस्तीत्यत आह। गौरयमिति। [९५।२५]

एतेन साक्षात्कारं प्रति तस्यान्वयव्यतिरेकौ स्त इति दर्शितम्।

तदेवाभिप्रेत्योत्तरश्लोकमाह। यथाहेति। [९४।२५]

सह चेतनया वर्त्तत इति सचेतनः।

तथापि क उपकारः समर्थित इत्यत आह। तेनेति। [९४।२७] ज्ञाप्यज्ञापकभाव इत्युपलक्षणं कार्यकारणभावोऽपि न सर्वथास्तीति द्रष्टव्यम्। क्वचित्तु द्रव्यगुणकर्मणामस्तीति नोदाहृतः। तदर्थालोचनानु-

मन्धानम्। एतेनेति। तथाच चक्षुषोऽपि तद्धेतुत्वं प्रमाणमस्तीत्यर्थः। स इत्यनेन पौनरुक्त्यनिरासायाह। यथेति। क्वचिदिति। द्रव्यगुणकर्मणां विशेषणविशेष्यभावे कार्यकारण-

गतं स्मरणं ययोस्ते विशेषणविशेष्ये तथोक्ते तयोः। अतदधिकरणव्यवच्छेदप्रतीतिजननमेव विशेषणेन विशेष्यस्योपकार इत्यर्थः।

यद्यपि स्वाभाविको विशेषणविशेष्यभावो नोपकारमपेक्षत इति तत्तत्र वक्ष्यति। न चोपकार्योपकारकभावोऽप्युपकारान्तरप्राप्तः[१] तथा सत्यनवस्थापातात्। तथापीह सम्भवप्राचुर्येणाभिधीयत इति मन्तव्यम्।

ननु यदि स्वाभाविकमनयोर्विशेषणविशेष्यत्वं प्रथमतः स्वभावे गृह्यमाणे किं न गृहीतं? न च स्वभावस्तदानीं न गृहीत इत्यत आह। अथेति। [९५।८]

न खलु रूपपरमाणुषु स्पर्शादिपरमाणवोऽपि स्वभावतः स्थिता इत्येतावतैव प्रतीतिपथमवतरन्ति। सामग्र्यभावान्न तथेति चेत्। स इहापि समान इत्यर्थः। अत एव प्रमाणं कृत्स्नवृत्तीति मत्वा यदापादितं तदपि नास्तीत्यत आह। तेनेति। [९५।१]

भावसत्त्वेऽपि न सर्वत्र विशेषणविशेष्यभावोऽस्तीति नैतदभिमत[२]मित्यर्थः। अप्रसक्तनिषेधमाशङ्क्याह। अत एवेति। तथापि प्रमाणस्य कृत्स्नवृत्तित्वे न किञ्चिद्बाधकमित्यत आह।

(१) व्याप्तः—पा० १ पु०।　　(२) दभिमान मिति पु० पा०।

स्वरूपाभिप्रायेण कृत्स्नवृत्तित्वं प्रमाणस्यानुमन्यामहे एव, स्वाभाविकसमस्तसम्बन्धाभिप्रायेण तु सर्वं त्वितरधियामप्रामाण्यमापादयतीति उपसंहारं स्थाने सङ्कलय्याह। सविकल्पकन्त्विति। [९५।४] पश्चादपि जायमानमिति योजना। आलोचनादिति शेषः। तस्मात्सर्वं तुल्यम्। क्षणभङ्गे परं विवादोऽवशिष्यत इत्याशयवानाह। अक्रमस्यापीति। [९५।५] विवादाध्यासिता इति। [९५।६] साक्षात्कारिण इत्यर्थः। तेन तदितरव्युदासः।

स्वरूपेति। धर्मिस्वरूपाभिप्रायेणेत्यर्थः। स्वाभाविकेति। यावद्धर्मग्रहस्य सामग्रीभेदाधीनत्वात्तदभावेनाभाव इति भावः।

अजायमानेन सह समुच्चयानुपपत्त्याऽन्यथा योजयति। पश्चादपीति। पश्चात्त्वस्य सावधित्वेनावधेरश्रवणादिन्द्रियार्थसन्निकर्षस्यैव बोधकत्वकल्पने सविकल्पकप्रत्यक्षत्वे न किञ्चिद् दूषणं शङ्कितं स्यादित्यत आह। आलोचनादिति। तेनालोचनानन्तरं जायमानं तज्जन्यमेव, नत्विन्द्रियार्थसन्निकर्षजन्यमिति तदप्रत्यक्षत्वे हेतुरुक्त इत्यर्थः। साक्षात्कारिण इति। यद्यपि साक्षात्कारित्वस्य परासिद्धत्वात्तेन पक्षविशेषणमुक्तं तथापि साक्षात्कारित्वेन विवादविषया इत्यर्थः। तेनेति। अनुमित्यादावसाक्षात्कारित्वस्योभयवादिसिद्धत्वात्तद्व्यवच्छेद इत्यर्थः। परमते सविकल्पकस्य स्वप्रकाश-

सिद्धसाध्यताव्युदासार्थं स्वगोचर इति। [६५।७] पीतः शङ्ख इत्यादिना व्यभिचारनिवृत्यर्थमव्यभिचारित्वे सतीति। अत्र च स्ततः प्रयत्नः।

( इति व्यवसायस्य प्रत्यक्षत्वसाधनम्।)

---

न चैतन्मन्तव्यमिति भाष्यमिति। [६५।११] इन्द्रियार्थसन्निकर्षमन्तरेणापि संशयोत्पत्तिदर्शनात् अत-

---

तया स्वात्मनि प्रत्यक्षत्वमस्त्येवेति प्रत्यक्षत्वे साध्ये सिद्धसाधनं स्यादतः स्वातिरिक्तस्वविषये तस्य प्रत्यक्षत्वं साध्यमित्याह। सिद्धसाध्येति। अत्र निर्विकल्पकत्वं नोपाधिः सविकल्पकस्यापि स्वात्मनि प्रत्यक्षतया निर्विकल्पकत्वेन साधनव्यापकत्वात्। उक्तन्यायेनेन्द्रियार्थजन्यत्वस्य प्रत्यक्षप्रयोजकत्वादसत्त्वेन हेतोः साध्यव्यापकतया तदव्यापकत्वेन साध्याव्यापकत्वाच्च। पीतः शङ्ख इति प्रमाभूतप्रत्यक्षत्वस्य साध्यस्य तत्राभावादित्यर्थः।

न व्यभिचारित्वं तस्य सिद्धमित्याह। अत्रेति।

(इति व्यवसायस्य प्रत्यक्षत्वसमर्थनम्।)

---

ननु यद्यधिकरण एवेन्द्रियमन्यथासिद्धं तदा निर्विकल्पकोपक्षीणमिन्द्रियं सविकल्पकमपि न जनयेदतोऽन्यथासिद्धिप्रयोजकं व्यभिचारमाह। इन्द्रियार्थेति। केवलसविकल्पकवेद्याभावादिपक्षे निर्विकल्पकाभावेनेन्द्रियस्य हेतुत्वव्यवस्थितेर्न प्रतिबन्धिरित्यर्थः।

त्कारणतया[1] प्रसङ्ग एव अस्य नास्ति, कुतोन्वाचीयमानोऽपि व्युदास इति पूर्वः पक्षः।

यद्यपि न सर्वः संशयः इन्द्रियार्थसन्निकर्षजस्तथापि साक्षात्कारवानवश्यं तज्जन्यः, तस्माद्व्युदासोन्वाचीयत इति प्रकरणार्थः।

स्यादेतदित्यादि। [६१।६] मन एव केवलमिन्द्रियनिरपेक्षं बहिर्व्याप्रियमाणं साक्षात्कारिसंशयादि जनयति। दृष्टो ह्यस्यानुव्यवसीयमानज्ञानविशेषणे घटादौ व्यापार, इन्द्रियव्यापारविगमेऽपि सौदामिनीसम्पातादौ सकृदुपजायमानस्या[2]र्थनिश्चयस्य समन्धकारेप्यनुव्यवसीयमानत्वात्, तस्य चानुव्यवसायस्य साक्षात्कारित्वात्[3], तस्मादप्रसङ्ग एव पुनरापतित[4] इति।

किमेतावतापीत्यत आह। कुत इति। साक्षात्कारवानिति। यथा न सर्वत्र संशयो न मानसः किन्तु बहिरिन्द्रियजन्योऽपि तथा तल्लक्षणावसरे निपुणतरमुपपादयिष्यतेऽस्माभिः। इन्द्रियानपेक्षमिति। तदपेक्षस्य मनसः करणत्वं सिद्धान्तिनाऽपीष्यत इति भावः। मनसेति। मनःसंयुक्तात्मसमवेतज्ञानविषयके ज्ञाने संयुक्तसमवेतविशेषणतया प्रत्यासत्त्या घटादिरपि भासते चाक्षुष इव प्रत्यभि-

(१) संशयोत्पत्तिदर्शनेऽतत्कारणतया—पा० १ पु०।
(२) उपजातस्या—पा० १ पु०। (३) साक्षात्कारिजातीयत्वात्—पा० १ पु०।
(४) रापातः—पा० १ पु०।

मनसा ह्यनुव्यवसीयमानज्ञानलक्षणविशेष्यसन्निकृष्टे-नासन्निकृष्टो घटादिरवच्छेदकतया प्रतीयते[1] चक्षुषेव घटसन्निकृष्टेन प्रागुपलब्धा तदवस्था। संशयज्ञानं तु नोर्ध्वार्थोपलब्धिविषयं, नापि स्थाणुपुरुषस्मृतिविषयं, किन्त्वनिर्द्धारितस्थाणुपुरुषत्वोर्ध्वपदार्थविषयं, न च तत्सन्निकृष्टं मनः बाह्येन च विशेष्येणाप्यसन्निकृष्टं कथं ज्ञानमुत्पादयेत्, उत्पादने चान्धबधिरादेरपि उत्पादये-दिति सिद्धान्तः।

तत्पूर्वं—व्यवसायोत्पत्तौ। स्वविषयप्राप्तिसम्पत्तय

---

ज्ञाने तत्त्वेत्यर्थः। असन्निकृष्टोऽपीति। असंयुक्तोऽसमवेतोऽपी-त्यर्थः। अवच्छेदकतयेति। विशेषणतयेत्यर्थः। संशयज्ञानं त्विति। येन ज्ञानविशेषणतया स्थाण्वादिकं भासेतेति भावः। विशेष्येणा-पीति। असत्यप्रत्यक्षविशिष्टज्ञाने विशेषणसन्निकर्षस्याहेतुत्वे विशेष्य-सन्निकर्षस्य प्रत्यक्षविशिष्टज्ञानमात्रहेतुत्वादित्यर्थः। नन्वनुव्यवसायेन कुतश्चक्षुराद्यपेक्षणीयम्, न हि चक्षुषा तज्जन्यत इत्यत आह। स्वविषयेति।

अनुव्यवसायो विषयतया व्यवसायमपेक्षते, व्यवसायश्च बाह्य-विषयः स्वोत्पत्तये चक्षुरादीति परम्परया तदपेक्षेत्यर्थः। नन्वेवं

(१) व्यवसीयते—पा० १ पु०।

इति शेषः। तथा च संशयज्ञानोत्पादेऽपीति। [९१।१०] सहकारितयेति शेषः।

( इति व्यवसायात्मकपदकृत्यप्रदर्शनम् )

---

अव्यापकत्वेनेत्यादि। चोदयति पार्श्वस्थः। परिहरति। पूर्वपक्षी। पुनःपार्श्वस्थस्य शङ्कामाभूदित्यत आह। पूर्वपक्षी। न च सुखादिषु प्रमाणान्तरमस्ति।

परम्परयेन्द्रियार्थसन्निकर्षापेक्षायामपि तज्जन्यत्वं संशयस्य नोक्तं कारणकारणत्वेऽप्यपेक्षोपपत्तेरित्यत आह। सहकारितयेति।

( इति व्यवसायात्मकपदकृत्यप्रदर्शनम्।)

---

लक्षणाक्षेपपरभाष्यमात्मादि इत्यादि, तदव्यापकत्वेन व्याचष्टे इति योजनाभ्रमनिरासाय विच्छिद्य गृह्णाति। अव्यापकत्वेनेत्यादीत्येके। आखण्डलकान्तरव्याख्यानं बोधयितुं गृह्णाति। अव्यापकत्वेनेत्यादीत्येके। ननु देशयतीत्यत्र कर्त्ता न पूर्वपक्षी, विरोधात्, नापि नैयायिकः तस्योक्तपक्षनिर्वाहकतयोक्तदोषनिरासस्यैवोचितत्वादित्यत आह। पार्श्वस्थः। पुनरिति पूर्वपक्षिणा स्वपक्षविरुद्धाभिधानस्यानुचितत्वादित्यर्थः। आहेत्यत्र कर्त्तर्य्यपेक्षायामाह। पूर्वपक्षी। नन्वनुमानापेक्षया प्रत्यक्षस्यापि मानान्तरत्वा-

प्रत्यक्षं विहायेति शेषः। संवेदनत्वे हि तेषां स्वसंवेदनता शङ्कास्पदमपि स्यादिति शेषः।

नन्विन्द्रियस्य वै सतं इति वदतो भाष्यकृतो मनस इन्द्रियत्वमिष्टमेवेत्यत आह। न च तदिति। [९७।१] मनस इन्द्रियत्वाभ्युपगमो वात्स्यायनीये गौतमीयसूत्रविरुद्ध इत्यर्थः।

मा भूद्विभागपरमिदं सूत्रं तथापि सूत्रकारस्य मन इन्द्रियं यद्यभिमतमिन्द्रियप्रकरण एव लक्षयेदित्यत आह। तच्च चेति। [९७।३] इन्द्रियत्वे नेन्द्रियप्रकरण एवाभिधाने प्राप्ते यदन्यत्र करोति तेनाधिकमप्यस्य किञ्चिद्रूपं विज्ञेयमिति सूचयति। नत्विन्द्रियत्वमेव न सहत इत्यर्थः। दर्शयिष्यति हि वार्त्तिककार इत्यागामिका(?) फक्किकाभ्रमनिरासार्थं भूताभू - - - ह्राम्न दृष्टो न त्वभिप्राय इति।

त्तन्निषेधो न युक्त इत्यत आह। प्रत्यक्षमिति। ननु संवेदनत्वेऽपीत्ययुक्तं नैयायिकेन संवेदनस्य स्वप्रकाशत्वानभ्युपगमादित्यत आह। शङ्कास्पदमिति। ननु नेदं विभागपरमित्यत एवाक्षेपे निरस्ते किं तद्लक्षणसमाधानेनेत्यत आह। माभूदिति। ननु दर्शयिष्यति हि वार्त्तिककार इत्यप्यन्तर्भाव्यवार्त्तिकार्थं इत्यत आह। दर्शयिष्यतीति। प्रत्ययो न स्वार्थिक इत्यस्य स्वप्रकृतिः तदर्यार्थको न

उपलक्षणं चैतत् । सगुणानां चक्षुरादीनामिन्द्रियभावो मनस्तु न सगुणमिन्द्रियमित्यथापि यो विशेषगुणो येनेन्द्रियेण गृह्यते तज्जातीयेन गुणेन सम्बन्धित्ति सगुणत्वम् । ग्राह्यविशेषगुणजातीयविरहश्च मनस इति यद्यभिप्रेतं भाष्यकृतः तदेतदपि वैधर्म्यमेव । किन्त्वेभिरक्षरैरेतदप्यभिधातुं न शक्यते[१] । विभक्तिविपरिणामेन तु भाष्यं सुगमम् ।

तथाहि—इन्द्रियभूतानामेषां सगुणत्वं ग्राह्यैर्गुणैः सह सम्बन्धश्च क्षुरादीनां मनसस्त्विन्द्रियभूतस्यैव न सगुणत्वं न ग्राह्येन गुणेन सह सम्बन्ध इति । तस्मा-

---

भवतीत्यप्युपपाद्यमतो न गमकमिति भ्रमनिरासायोपपत्तिः वार्त्तिककारतात्पर्यविषय इति टीकार्थ इत्यर्थः । तज्जातीयेनेति । तेन सगुणानामिति समानशब्दस्य प्रयोग इति भावः । विभक्तिविपरिणाममाह । तथा हीति ।

ग्राह्यैर्गुणैरिति । ग्राह्यजातीयैरित्यर्थः । न च बहिरिन्द्रियत्वेन श्रोत्रस्यापि ग्राह्यजातीयग्राहकगुणवत्वमनुमेयम्, तेनातीन्द्रियशब्दान्तरवदेव श्रोत्रं शब्दग्राहकमिति वाच्यम् । मूर्त्तत्वस्योपाधित्वात् । अत्र गुणमन्तर्भाव्य नेन्द्रियत्वं द्रव्यगर्भत्वात्तल्लक्षणस्येति । यदिन्द्रियं तत्प्रत्यक्षहेतुताग्राह्यजातीयगुणवदित्येव सगुणानामि-

(१) अभिधातुमशक्यम्—पा॰ १ पु॰ ।

दत्रापि शब्ददोषः, न त्वभिप्रायदोष इति मन्तव्यम् । नन्वनभिमतनिषेधेन मतमुन्नेष्यत इति शङ्कते । न चेति । [९८।२] निराचष्टे । अभावस्येति । [९८।४] यावदनभिमतनिषेधेनाभिमतलाभे गरीयोगौरवमापद्येत, तत्तन्निषेध्यमनुपनीय निषेधस्य प्रतिपादयितुमशक्यत्वात् । विशेषविधौ तु शेषनिषेधो लघीयानिति भावः ।

सूत्रकारवचनस्य विचारास्पदत्वात् कथं तेनैव निर्णय इत्यत आहेति पूरयति भाष्यकार इति ।

शाब्देत्यनेन शब्देन्द्रियसमाहारजमयमसावश्व इति ज्ञानं व्यवच्छेद्यमभिमतं वार्त्तिककृत इति केषाञ्चिन्मतमपनयति । न खल्विति । [९८।९]

वाच्यत्वेन हि विशेषणतया गृहीतेन विशेष्यनिष्ठेन भवितव्यमतः केवलवाच्यत्वप्रस्तावेऽपि तथैवोदाहृतम् ।

---

न्द्रियभाव इत्यस्यार्थ इति सम्प्रदायविदः । अनर्थमतनिषेधमात्रेण नाभिमतलाभ इति तद्विधानमुचितमित्यत आह । नन्विति । विशेषनिषेधस्यानिषिद्धशेषविधानानुमापकत्वादित्यर्थः । यथाश्रुतस्यागमकत्वादाह । यावदिति । अर्थान्तरत्वशङ्कानिरासायाह । शब्देत्यनेनेति । वार्त्तिकगतेनेत्यर्थः । ननु वाच्यत्वविकल्पे कृते तन्मात्रमुदाहर्त्तुमुचितं, किमिति वाच्यत्वविशिष्टमुदाहृतमित्यत आह । वाच्यत्वेनेति । न्यायप्राप्ततया विशेष्यमुदाहृतम्, न तु तत्र

इन्द्रियव्यतिरेकव्यभिचाराच्च तद्व्यतिरेको न शङ्कितः। गृहीते ह्यश्वत्वे तदसन्निकर्षेऽपि योऽयं पिण्डस्त्वया दृष्टोऽयमसावश्व इत्युपदेशात् केवलादेव वाच्यत्वप्रतीतिदर्शनात्। तस्मादिन्द्रियस्य सम्बन्धिसमर्पण एव व्यापारः एवमुत्तरत्रापि तत्रार्थः सङ्केतयितुरभिप्रायविशेषः। यद्यपि पराभिप्रायस्तदुपहितार्थो वा नेन्द्रियगोचरस्तथाप्यभ्युपगम्याशङ्कते। अथायमपीति। (९८ : १८)

तात्पर्य्यमिति भावः। नन्विन्द्रियशब्दयोर्द्वयोरपि कारणत्वेन शङ्कितत्वादुभयत्रापि व्यतिरेकव्यभिचारोद्भावनमुचितं तत्कुतः शब्दव्यतिरेकमात्रमुक्तम्, न त्विन्द्रियव्यतिरेक इत्यत आह। इन्द्रियेति। इन्द्रियव्यतिरेके वाच्यत्वज्ञानान्नेन्द्रियव्यतिरेक उदाहृत इत्यर्थः। तदेव स्पष्टयति। गृहीतेति। इन्द्रियव्यापारे सति तदन्यथासिद्धिमाह। तस्मादिति। नन्वेवमपि वाच्यत्वविशिष्टपुरोवर्त्तिज्ञानप्रति नेन्द्रियव्यभिचार इत्ययमसार इति। ज्ञानमिन्द्रियशब्दजन्यत्वात् प्रमाचतुष्टयविजातीयमेवास्त्वित्यत आह। एवमिति। वाच्यत्वविशिष्टपुरोवर्त्तिज्ञानोदाहरणेपीत्यर्थः। तथा च धर्म्मिणि साचात्कृतेऽपि कालान्तरे तस्मिन्निन्द्रियासन्निकृष्टेऽपि शब्दादयमश्व इति ज्ञानोत्पत्तेरन्यथासिद्धमेवेन्द्रियम्। तदुक्तमिन्द्रियस्य सम्बन्धिसमर्पणमेवेति। ननु गाथापाठेनेन्द्रियजत्वमेव तस्य दर्शितमिति पूर्वापरविरोध इत्यत आह।

इदमैन्द्रियकमिदमतीन्द्रियमिति हि साक्षात्कारासाक्षात्कारौ नैयोऽयमर्थः ।

तच्च स्पष्टग्रहणरूपत्वात्साक्षात्कारापरव्यपदेशादैन्द्रियकमेतदिति युक्तं स्यात्, न त्वसाक्षात्कारादपि । तयोश्च कोच मनसा वेद्यत इति भवानेव परिभावयतु । तच्च साक्षात्कारित्वपक्षे प्रत्यक्षमेवेदमतो[१] न व्यवच्छेदनीयम् । असाक्षात्कारित्वपक्षे च नेदमैन्द्रियकमिति प्रथमपदेनैव व्युदस्तं नाव्यपदेश्यपदस्यावकाश इति गाथापाठस्यार्थः ।

किमर्थन्तर्ह्यव्यपदेश्यपदं ? कश्चास्य वार्त्तिकस्यार्थ ? इत्यत आह । व्यवसायात्मकपदेन त्विति । [९८।१०]

एकपदपरिग्रहं स्फुटं मन्वानोपि द्विपदपरिग्रहं व्याचष्टे । द्विपदेति । [९८।११]

( इति प्रत्यक्षलक्षणम् )

---

इदमिति । साक्षात्कारित्वादेरनुव्यवसायैकगम्यत्वादित्यर्थः । वस्तुतः शब्दजत्वमेवास्य नेन्द्रियजत्वमिति भावः । अस्येति । अनुमानसुखशब्दादेरित्यर्थः । नन्वेवं प्रत्यक्षलक्षणव्यवस्थितौ किं

(१) मेवेदमिति—पा० १ पु० ।

उत्तरप्रबन्धोपयोगं दर्शयन्नाह। तदेवमिति। [९९। १९]

लक्षणमिदमनुमानम्। तच्च तदाभासाद्विवेकेन सुगमं भवति। स च तदाभासेषु आविष्कृतेषु भवतीत्याशयवतोऽयमर्थः। ततोऽर्थादित्यत्र हि पञ्चम्या हेतुत्वमर्थस्य विज्ञानं प्रतिदर्शितं, तत्परश्च एवकारः एवं सम्बध्यते स व्यपदेशकोऽर्थो हेतुरेव यस्य, न पुनरहेतुरपि तद्विज्ञानं प्रत्यक्षमिति --- अयोगव्यवच्छेद एव, तथाप्यन्ययोगव्यवच्छेदोऽपि वार्त्तिककृता निराकर्त्तव्य इति व्याख्यायामुभयं दर्शितवान्। यदि तत एव तद्भवति नाऽर्थान्तरादित्यव्यपदेशकादित्यतो न विरोधः।

नन्वनुमानविशेषस्तावत्कश्चिदव्यपदेशकादेवोत्पद्यते ततो न तस्य व्युदासः कृत इत्यत आह। ततोऽर्थादित्यत्र हीति। [९९। २०] प्रत्यक्षजातेरिदं लक्षणं तस्याश्च प्रतियोगिन्यनुमानादिजातिः तथा च तस्या एव जातेर्व्यवच्छेदो विवक्षितः, स च एतावतैव सिद्ध इत्यर्थः।

परतल्लक्षणदूषणेनेत्यत आह। उत्तरेति। उपयोगमाह। उभयमिति। यदि तत एव भवतीत्ययोगव्यवच्छेदोदर्शितो नार्थान्तरादित्यन्ययोगव्यवच्छेद इत्यर्थः। अयोगव्यवच्छेदप्रदर्शननिराकरणीयां शङ्कामाह। नन्विति। अनुमानविषय आत्मविषयको मनोविषयकः। तचात्ममनसोर्व्यपदेशकत्वजनकादस्तन इत्यर्थः। तथाप्यात्ममनो-

यत्रैव-यज्जातीय एव, तद्योग-स्तस्य व्यपदेशकस्य हेतुत्वेनायोगस्तदप्रत्यक्षमिति। तेन व्यपदेशो हि तदुपाधिकं निरूपणमिह विवक्षितम्। न च ज्ञानं कर्त्रा करणेन वा निरूप्यते, अपि तु कर्मणैवेत्यर्थः। अभिधानापर्यवसानात्--शब्दव्यापाराप्र्यवसानात्। तच्छब्दस्य पूर्वप्रक्रान्त एवार्थे सङ्केतितत्वात्, तदनभिधानेऽवाचकत्वप्रसङ्गादिति भावः।

पूर्वप्रक्रान्तश्च व्यपदेशक एव, स चार्थ एवेति विशेष्यः प्राप्यते नान्तरीयकत्वादित्यर्थः।

नैवं वार्त्तिकमित्यत आह। अभ्युपेत्य त्विति। [१००।४] अनुमानादिव्युदासार्थं[1] ह्ययोगव्यवच्छेदः स चान्ययोगव्यवच्छेदेऽपि सिध्यतीत्यर्थः।

विषयकार्यमानेऽतिव्याप्तिस्तदवस्थेत्यत आह। यज्जातीय एवेति। आत्मादिविषयकानुमानस्य व्यपदेशकात्तदुत्पत्तावपि न तथात्वम्, सर्वस्य प्रत्यक्षजातीयस्य तु व्यपदेशकादुत्पत्तिरित्यर्थः।

नन्वनुमानमपि सर्वं व्यपदेशकादेवोत्पद्यते, आत्मना मनसा च ज्ञानं, जन्यत इति व्यपदेशात् ततस्तदुत्पत्तेस्तेत्यत आह। तेनेति। विषयरूपो व्यपदेशक उत्पादकस्तयाचाभिमत इति नोक्तदोष इत्यर्थः। शब्दव्यापारः—सङ्केतविषयार्थस्मरणं तस्याऽपर्यवसानात् सङ्केतविषयाप्रतिपादनादित्यर्थः। प्रक्रान्तो—ज्ञातः। ननु

(१) व्यवच्छेदार्थं--पा० १ पु०।

नन्वन्ययोगव्यवच्छेदोऽशक्य इन्द्रियादेरव्यपदेशकस्यापि तत्कारणत्वादत आह। अन्यव्यवच्छेदेपीति। [१०० ५] इन्द्रियादयो ह्यव्यपदेशका अपि व्यपदेशकाधिपत्येनैव ज्ञानजनका इत्यविरोधितया न ते व्यवच्छेद्याः। लिङ्गादयस्तु व्यपदेशकाधिपत्यनिरपेक्षतया तद्विरोधिन इति त एवान्ये व्यवच्छेत्तव्या इत्यर्थः।

ननु सर्वं च स्वविषयादिति वार्त्तिकमसङ्गतमेव श्रुत्यनुमिति[1]भ्रान्तीनां स्वविषयादनुत्पत्तेरत आह। यत्संस्मृतित्वेनेति[2]। [१०० । २२]

ननु भ्रान्तिज्ञानमपि न व्यपदेशकमर्थमन्तरेण भवति तत्कुतश्चोद्य[3]मतस्मादपीत्यत आह। पुरोव-

चाविरोधिव्यवच्छेदको विरोध इत्यत आह। नन्वन्ययोगेति। अविरोधित्वमेवाह। इन्द्रियादयो हीति। येऽर्थसापेक्षजनकाः तेऽर्थेनाविरोधित्वान्न व्यवच्छेद्याः। ये त्वर्थनिरपेक्षास्तज्जनकास्ते विरोधित्वेन व्यवच्छेद्या इत्यर्थः। सामान्यशब्दस्य विशेषपरतया व्याख्याने हेतुमाह। ननु सर्वमिति।

ननु मिथ्याज्ञानमतस्मादपीत्यनेनाव्यपदेशकादपि भवतीत्युक्ते न ततस्तद्भवतीत्यनेन व्यपदेशकान्न भवतीति वचनं विरुद्धमित्यत आह। ननु भ्रान्तीति। पुरोवर्त्तिनो विशेष्यादिव्यपदेशकात् भ्रान्त्यु-

(१) स्मृत्यनुमिति—पा० १ पु०। (२) यत्स्मृतित्वेनेति—पा० १ पु०।
(३) कुतोऽस्य—पा० १ पु०।

त्तीति। [१०१।१६] अतस्मादपीत्यत्र यद्यपि नञ् श्रूयते तथापि व्यपदेशकादपि न भवतीति बोद्धव्यमित्यर्थः॥

तदिमुक्तं येन विशेषरूपेण तस्य व्यपदिश्यते न ततस्तद्भवतीति। [१००।१८] तस्माद्यत्तत एव भवति ततो भवत्येवेत्यर्थः। अततश्च न ततश्चेत्यर्थः॥

ननु व्यपदेशकादनुत्पत्तेरित्यव्यपदेशकादुत्पत्तेरिति वा चोद्यमुपक्रम्याशुक्ते रजतान्नोत्पद्यत इति वाक्छल-मात्रमित्यत आह। न ह्यतस्मादारोपिताद्रूपादिति। [१०१।७]

---

त्पत्तिरित्यर्थः। तथाप्यव्यपदेशकाद्भवतीति पर्युदासेन तद्बोधका-द्रजतान्न भवतीति कुतो लभ्यत इत्यत आह। अतस्मादपीति। ननु भ्रान्तिर्व्यपदेशकादेव न भवति इन्द्रियादेरव्यपदेशकादपि तदु-त्पत्तेरित्यत आह। ततो भवत्येवेति। अयोगव्यवच्छेदो अवधार-णार्थो न त्वन्ययोगव्यवच्छेद इत्यर्थः। मिथ्याज्ञानमतस्मादपीत्यत्र प्रसज्यप्रतिषेधपक्षे अर्थमाह। व्यपदेशकादपीति। रजतादित्यर्थः। पर्युदासपक्षे अर्थमाह। अव्यपदेशकादेति। शुक्तिद्रव्यादित्यर्थः। वाक्छलमात्रमिति। मिथ्याज्ञानमतस्मादपि भवतीत्याक्षेपवार्त्तिके तच्छब्देन शुक्तिं परामृश्य तदिति तत्रारोपितं रजतमुक्तं ततस्त-द्भवति मिथ्याज्ञानमित्यर्थं कल्पयित्वा न ह्यतस्माद्भवतीत्यनेन सिद्धान्तवार्त्तिकेन रजतान्नोत्पद्यत इति दूषणं वाक्छलम्। न ह्याक्षेपवार्त्तिकस्य तादृशोऽर्थः किन्तु तत्र तज्ज्ञानव्यपदेशकं यद्

अयमर्थः। मिथ्याज्ञाननिरासोऽन्ययोगव्यवच्छेदेन वा अयोगव्यवच्छेदेन वा? न तावदाद्यः। अन्यव्यवच्छेदस्य तत्रापि भावात्। तदा हि स न स्यात्। यद्व्यपदेशकस्यैव वणिग्वीथ्यां व्यवस्थितस्य स्वतन्त्रस्य रजतस्य हेतुत्वं स्यात्। न चैतदस्ति। तदिदमुक्तं न ह्यतस्मादारोपितात् तत्रासतस्तन्मिथ्याज्ञानं भवति।

नापि द्वितीयः व्यपदेशकस्य हेतुत्वादेव। रजतं व्यपदेशकं न हेतुरिति चेत्? कथं पुनारजतं व्यपदेशकं, स्वातन्त्र्येण पुरोवर्त्यात्मना वा? न तावदाद्यः। सामानाधिकरण्याऽनुपपत्तेः। स्वमिथ्यात्वप्रसङ्गाच्च। पुरोवर्त्यात्मना तद्व्यपदेशकं भवति। स च

रजतं तस्मान्न भवतीत्यस्यार्थ इत्यर्थः। वाक्छलनिरासायाह। अयमर्थ इति। तदा हीति। अन्ययोगव्यवच्छेदकस्तदा तत्र न स्याद्यदि व्यवच्छेदस्याव्यपदेशकस्य तत्र हेतुत्वं स्यान्न चैवमित्यर्थः।

व्यपदेशकस्येति। इदमित्याकारेण व्यपदेशकस्य धर्मिण इदं रजतमिति भ्रमहेतुत्वादेवेत्यर्थः। स्वातन्त्र्येणेति। पुरोवर्त्तिनात्मना वेत्यर्थः। पुरोवर्त्तिरजतयोर्भेदो भ्रमविषयो न वा? आद्यं दूषयति। सामानाधिकरण्येति। अन्त्यन्निराकरोति। स्वमिथ्यात्वेति। रजते पुरोवर्त्तिनस्तादात्म्यं स एव भ्रमत्वात्तदविषयत्वे भ्रमत्वमेव न स्यादित्यर्थः। पुरोवर्त्यात्मनेति। न च पुरोवर्त्या-

पुरोवर्त्यात्मा हेतुरेवेत्ययोगव्यवच्छेद एव। तदिद-मुक्तं—आरोपितं तु रजतमस्य विषयो दृश्यमानाकार-तयेति। [१०१।७] अयं त्वभिप्रायः स्यात्, यादृशा-कारेण व्यपदेशकोऽर्थस्तादृशादुत्पन्नं ज्ञानं प्रत्यक्ष-मिति। न त्वयं लक्षणपदानामर्थः। न चाभिप्राय-विशुद्धिमात्रेण परः प्रतिपादयितुं शक्यते। प्रत्यभिज्ञा-

त्मत्वेन रजतस्याप्रामाणिकत्वात् कथ तदात्मतया तस्य हेतुत्वमिति वाच्यम्। असत्ख्यातेरनभ्युपगमाद्रजतात्मत्वेन ज्ञातस्य व्यपदेशकत्वं, न तु रजतमात्रस्य, तत्र पुरोवर्त्तिनो हेतुत्वादेवेति भवति व्यप-देशस्य हेतुत्वम्। अयन्त्विति। परस्य लक्षणकर्त्तुरिति शेषः। ततो भ्रमेऽतिव्याप्तिर्न स्यादिति भावः। यादृशेति। इदं रजतमिति भ्रमे रजताकारेण न व्यपदेशकोऽर्थः पुरोवर्त्ती, न च रजताका-रात् तस्मादर्थादुत्पन्न इति न तत्रातिव्याप्तिरिति भावः। परो-क्षलक्षणदूषकः। नन्वर्थशब्दस्य सामान्यस्याकारविशेषवति तात्पर्य्यात् तस्यैवायमर्थो भविष्यति, सामान्यशब्दस्य विशेषपरत्वं दृष्टमेव, अत एवार्थपदं न व्यर्थमित्यतः पूर्वापरितोषेणाह। प्रत्यभिज्ञेति। यद्यपि प्रत्यभिज्ञा स्मृत्यनुभवरूपं ज्ञानद्वयं परेणाङ्गीकृतमतो न तत्राति-व्याप्तिर्दोषः, तथापि स्वप्रमाणदार्ढ्येण तस्या विशिष्टज्ञानत्वमभ्युपगम्य तत्राव्याप्तिरुक्ता। तथापि प्रत्यक्षैकरूपज्ञानस्यैव परेण लक्षणाच्चानु-मानादिस्वसंवेदनाव्याप्तिः तस्य स्वात्मनि प्रत्यक्षत्वेऽपि स्वभिन्नविषये परोक्षत्वादिति न वाच्यम्। प्रत्यक्षमात्रस्यैवं लक्षणाकाङ्क्षायां लक्षण-

स्वसंवेदनाऽव्यापकत्वाच्च । एतच्च जैमिनीये स्फुटी-भविष्यति ।

तदेतल्लक्षणमाभिप्रायिकमप्यस्मन्नये कदाचित्सम्भाव्येत । त्वन्नये तु विरुद्धमसिद्धं चेदमुक्तं वार्त्तिककृता । तदेतद्युत्पादयति । अयप्येतदिति । [१०१।८]

व्यपदेशको ह्यर्थो वर्त्तमानतया सर्वत्र प्रत्यक्षस्य विषयः स चेद्धेतुरेवैवमतीतः स्यात् । तथा च प्रत्यक्षत्वे साध्येऽप्रत्यक्षत्वमेव सिध्यतीति भवति विरुद्धत्व-मित्यर्थः ।

अथ वर्त्तमान एव व्यपदेशकस्तदा समानकालतया ततोऽर्थादित्यसिद्धमाह । तत्समानेति । [१०१।१०]

करणात् विशेषलक्षणपरत्वेऽपि सर्वविषयसर्वज्ञप्रत्यक्षाव्याप्तेः । एत-च्चेति । अत्राव्यापकत्वं जैमिनीयप्रत्यक्षलक्षणदूषणावसरे टीका-कृदेव वक्ष्यतीत्यर्थः ।

आभिप्रायिकमिति । यादृशाकारेण व्यपदेशकोऽर्थ इत्यादि-परोक्ताभिप्रायविरुद्धं इत्यर्थः । व्यपदेशको ह्यर्थ इति । यद्यपि वर्त्तमानत्वमतद्व्यावृत्तिरूपं तच्च न प्रत्यक्षविषयः किन्तु सवि-कल्पकविषयः तच्च न प्रत्यक्षं, तथापि सविकल्पकप्रत्यक्षत्वं प्रमाणेन साधितमिति अभिप्रेत्यैतदुक्तम् । तदेति । अर्थ-ज्ञानयोरेककालतया नार्थजन्यं ज्ञानमिति ततोऽर्थादित्यसिद्धमि-

यत्तु केनचित्प्रलपितम् अपरोक्षज्ञानावभासतैव वर्त्तमानतेति, तत्तुच्छमित्युपेक्षितवान् ।

तथा ह्यपरोक्षैकसर्वज्ञविज्ञानावभासितया सर्वेषामर्थानामेककालत्वात् सव्येतरगोविषाणवत्कार्यकारणभाववार्त्तैवोच्छिद्येत[1], पूर्वोक्तश्चानुयोगस्तदवस्थ एवेति, 'भिन्नकालं कथं ग्राह्य'मित्येवमादिना कार्यकारणभावविशेष एव ग्राह्यग्राहकभावः, स च भिन्नकालयोरेव भवतीति स्वभाषया समर्थितं परेण । न च वयं भिन्नकालयोः कार्यकारणभावमवजानीमहे, किन्त्वतीतस्य वर्त्तमानतयाऽवभासनं तस्य वा सत्यत्वम् । न च तदनेन समर्थितमित्यर्थः ।

ननु 'ज्ञानाकारार्पणक्षम'मिति वदतैव समर्थितमेतत्, अनेन हि न प्रतिभासमानतयाऽर्थो ग्राह्य इति व्यवह्रियते, किन्नाम ? आकारार्पकतयेति दर्शितम्,

त्यर्थः । तादवस्थ्यमेवाह । भिन्नकालमिति । परसम्बन्धे दोषमाह । न चेति । किं त्विति । परदर्शने वर्त्तमानावभासिप्रत्यक्षं न स्यात्, भवद्वा यथार्थं न स्यात्तदुभयमपि तेन न समवहितमित्यर्थः । अनहङ्कारास्पदमित्यादेरप्रसक्तप्रतिषेधत्वमाशङ्क्याह । ननु ज्ञानेति । अनेनेति । अर्थो हि न ज्ञानविषयतया न ग्राह्यः

(१) कार्यकारणव्यवस्थैवोच्छिद्येत—पा० १ पु० ।

आकार एव त्ववभासमानतया ग्राह्यः, स च ज्ञानात्मभूततया वर्त्तमान एवेति न कश्चिद्विरोध इत्यत आह। अनहङ्कारेति। [१०१।१९] विज्ञानाद्भिन्नस्य नीलादेरनुभवो यदि सत्यो न ज्ञानगताकारवेदनम्, असत्यश्चेन्न प्रत्यक्षं प्रमाणम्, इति सेयमुभयतःपाशा रज्जुरित्यर्थः।

अपि च भवत्वाकारवेदनम्, भवतु वार्थस्याकारार्पकत्वम् वा, तथापि 'ततोऽर्थाद्विज्ञानं प्रत्यक्ष'मित्यसिद्धं लक्षणम्, तथाहि प्रतिभासमानस्यैव ज्ञानं व्यपदिश्यते, न त्वप्रतिभासमानस्य। आकारश्च प्रतिभासते न तु जनकोऽप्यर्थः। तस्माद्व्यपदेशको न जनकः जनकश्च न व्यपदेशक इति॥

अत्र शङ्कते। न चेति। [१०१।२१] प्रतिभासमानाकारद्वाराऽर्थो व्यपदेशको जनकश्चेत्यपि न चेत्यर्थः।

---

किन्तु ज्ञानाकारजनकतया, तथाच योयच ज्ञाने आकारोत्पादकः स तद्ग्राह्यतया व्यवह्रियते, विषयतया तज्ज्ञानाकार एव ग्राह्य इति स्वाभिमतः स्वाकारतयाऽनुभूयत इति नातीतस्य तत्त्वर्त्तमानतया भानमित्यर्थः। नन्वाकारवेदनपक्षस्य पूर्वमेव निरासात्तमादाय शङ्काऽनुपपन्नेति शङ्काविषयं स्वयमाह। अपि चेति। तदिदमाह अथेति। तथापि पूर्वपरिहृतमेवाशङ्कीत्यभिप्रेत्य व्याचष्टे। प्रतिभासमानेति। हेत्वर्थस्य व्यक्तत्वादर्थाहिताकारवेदनमर्थवेदनं भाक्त-

कुतः ? भाक्तत्वप्रसङ्गात् । किमतो यद्येवमित्यत आह । न च गौणमुख्येति । [१०१।२३]

यथा ह्यविनाभावमन्तर्भाव्यैव गङ्गाशब्दस्तीरे, लक्ष्यमाणगुणयोगमन्तर्भाव्य सिंहशब्दो माणवके वर्त्तते, न तथा धूमप्रत्यक्षमग्नौ सिंहप्रत्यक्षं माणवके, प्रमाणान्तरोच्छेदप्रसङ्गादित्यर्थः । तदिदमुक्तं भिन्नप्रस्थानत्वादिति । [१०१।२४]

एतेनैतदपि निरस्तम्—यदाहुः प्रत्यक्षसिद्धेनाकारेणार्थोऽनुमीयत इति फलतः प्रत्यक्षोऽर्थ इति । अनुमीयते कोऽर्थः । अनुमितौ परिस्फुरति । तच्च बौद्ध-

लाच्च चेति योजनायामनुपपत्तिमभिप्रेत्य विच्छिद्य योजयति । कुत इति ।

यथाश्रुत इष्टापत्तिमभिप्रेत्याह । किमत इति । यथाहीति । यथान्यत्र शक्तं पदमन्यविषयं वृत्त्यन्तरेण दृष्टं, नैवमन्यविषयं प्रत्यक्षमन्यविषयं ज्ञानस्य प्रतिनियतार्थत्वादित्यर्थः । 'गिराञ्चतय' इत्यत्र टीकायां शब्दानां वृत्तय इत्यर्थः । 'भिन्नप्रस्थानत्वादिति' भिन्नविषयत्वादित्यर्थः । एतेनेति । आकार एव भासमानो व्यपदेशकः कादाचित्कत्वान्यथानुपपत्त्याऽऽकाराधायकोऽर्थोऽनुमीयत इत्यत्रापि पक्षे लक्षणमसिद्धं व्यपदेशकस्याकारस्याजनकत्वाज्जनकस्याव्यपदेशकत्वादित्यर्थः । दूषणान्तरमाह । अनुमीयत इतीति । यदा

नये स्वप्नेऽपि दुर्लभम् अनुमितेरपि स्वाकारालीकयो-रेवान्यतरस्मिन् पर्यवसितत्वात्। यस्तु सर्वथैव ज्ञाना-गोचरः स व्यवह्रियत इति कुतः। तस्मादाकारवाद-पक्षे बाह्योऽर्थो हेयः तदभ्युपगमे वाऽकारवाद इत्यभि-प्रायेणाह। तस्मान्निराकारमिति। [१०१।२५]

( इति वासुबन्धवप्रत्यक्षलक्षणनिरासः )

अकृत इति। [१०२।११]

न हि किञ्चिद्वस्तुभूतं वाच्यं नाम सौगतानां समस्ति। लक्षणवाक्येन व्यवहारमात्रं साध्यते स चातद्व्यावृत्तिनिष्ठ इत्यर्थः।

साकारं ज्ञानं तदाऽनुमितिरपि ज्ञानतया स्वाकारमात्रविषयेति नानुमितावन्योविषयः, यदा तु निराकारं ज्ञानं तदानुमिति-रलीकव्यावृत्तिविषया नार्थं विषयीकरोतीत्यर्थः। अर्थस्यानुमित्य-विषयत्वे दोषमाह। यस्येति। तस्मादिति। ज्ञानविषये स्ववस्तुनि मानं 'आकारश्चेत्तद्विषयस्तदा बाह्योऽर्थो मानाभावान्न सिद्ध्येत्। बाह्यार्थविषयकत्वे च ज्ञानमात्रस्याकारादौ मानाभावान्नास्तीति साकारं ज्ञानं च वस्तु चेत्युभयं न सिद्ध्यतीत्यर्थः।

( इति वासुबन्धवप्रत्यक्षलक्षणनिरासः )

न हीति। यद्वति स्वलक्षणे ज्ञानव्यभिचाराभ्यां प्रत्यक्षा-दित्यर्थः। एवं सति लक्षणवाक्यं समर्थयति। लक्षणेति। अप्र-सक्तनिषेधमाशङ्क्याह।

ज्ञानस्य कल्पनापोढस्य प्रत्यक्षतया व्युत्पाद्यमानस्य कथं सर्वेऽर्थाः प्रत्यक्षतया प्रसज्येरन्नित्यत आह । न हीति [१०२।१०] ।

दिङ्नागस्यातिव्यापकतयाऽलक्षणं कीर्त्तेस्त्वव्यापकतया विकल्पप्रत्यक्षानवरोधात्, तस्य प्रत्यक्षत्वव्युत्पादनात्, अनिष्टमाचस्यातिप्रसञ्जकत्वादिति सिद्धान्तः । स्वदर्शनसमाधित्सया वार्त्तिकमिति दर्शयितुं चोदयति । ननु यदीति । [१०२।११] सामान्यान्वितम् । अभिधीयत इति वार्त्तिकशेषः[१] । मनुष्यत्वजातिमानि-

ज्ञानस्येति । दिङ्नागस्येति । कल्पनापोढं प्रत्यक्षमिति कीर्त्तिदिङ्नागयोर्द्वयोरपि लक्षणं, तत्र दिङ्नागस्य सम्यक्ज्ञानमनुसृत्यावस्तुमात्रे लक्षणमतिव्यापकं, कीर्त्तेस्तु प्रकरणात्तल्लाभेऽपि सविकल्पकव्यापकं प्रमाणं विना तद्प्रत्यक्षत्वाङ्गीकारस्य निर्विकल्पकाप्रत्यक्षत्वमप्यासञ्जयतीत्यर्थः । दिङ्नागस्यापि लक्षणं तत्रैवाव्यापकमित्यपि द्रष्टव्यम् । ननु शाब्दव्यवहारस्याऽवास्तवत्वं सौगतैरिष्यत एवेत्यत आह । स्वदर्शनेति । तथाच तदेकदेशिन्त्र पूर्वपक्षीत्यर्थः । नन्वभिधीयत इत्यनूद्य सामान्यान्वितमित्यर्थ इति तद्व्याख्यानमयुक्तम् अभिधीयत इत्यस्यापि तदर्थत्वाभावादित्यत आह । अभिधीयत इति । वार्त्तिके एतदस्ति तदेवात्र योज्यमित्यर्थः ।

(१) 'अभिधीयत इति वार्त्तिकगतं टीकायां शेषः' इति टिप्पण्याम् ३ पु० ।

त्यर्थ इति। [१०२।२२] मनुष्यशब्दस्य ब्राह्मणो ब्राह्मणत्वादिजातिमत्तयाऽवाच्योऽपि मनुष्यत्वजातिमत्तया वाच्य एवेत्यर्थः।

पौनरुक्त्यं परिहरन्नाह। अथास्यकर्णौति। [१०२।२५]

( इति दिङ्नागीयप्रत्यक्षलक्षणनिरासः )

---

ननु व्यत्ययेऽपि तत्सम्प्रयोग इति स्यात् न तु तच्छब्दस्य प्रकृततया विषयः कश्चिदस्तीत्यत आह। बुद्धेति। [१०३।४]

यद्यपि प्रत्यक्षज्ञानमप्यनेन लक्षणेन स्वात्मनि

---

ब्राह्मणत्वेति। मनुष्यशब्दवाच्यत्वे ब्राह्मणत्वस्य प्रयोजकत्वे ब्राह्मणभिन्नोऽपि तच्छब्दवाच्यः स्यादिति भावः। योगतिरस्कारेण रूढिपुरस्कारबीजमाह। पौनरुक्त्यमिति। यदि कल्पनापोढशब्देन प्रत्यक्षमुच्यत इति वार्त्तिकेन पौनरुक्त्यमित्यर्थः।

( इति दिङ्नागीयप्रत्यक्षलक्षणनिरासः। )

---

ननु तच्छब्देनैव बोध्योपस्थितेः किं बुद्ध्यारोपोपस्थापनेनेत्यत आह। नन्विति। प्रत्यक्षसमभिव्याहृततत्पदस्य तृतीयासमासो व्यत्ययः। बुद्ध्येतीति। तच्छब्देन बुद्धिस्थपरामर्षात् बुद्ध्यारोपोपस्थापनेन बोधस्य बुद्धिस्थत्वं कृतमिति भावः। यद्यपीति। नहि

प्रत्यक्षं न स्यादेव तथापीन्द्रियार्थसन्निकर्षजन्यत्वमात्रं तावत्तत्राप्यस्तीति कदाचित्परो ब्रूयादित्यत आह। अनुमानादीति।

एतेन ततोऽर्थादित्यस्याभिप्रायशेषो दूषितः। प्रत्यभिज्ञानस्वसंवेदनयोरव्यापकत्वादिति ॥ ४ ॥

( इति जैमिनिवार्षगण्यप्रत्यक्षलक्षणनिरासः )

(॥ इति प्रत्यक्षलक्षणं समाप्तम् ॥)

---

सूत्रं पठति व्याख्यातुमिति शेषः।

प्रत्यक्षमात्मनि प्रत्यक्षं न तत्प्रयोगजमित्यर्थः। एतेन—स्वात्मनि प्रत्यक्षत्वाभावेनेत्यर्थः। अभिप्रायशेष इति। ततोऽर्थात्प्रत्यक्षमिति सौगतलक्षणदूषणावसरे अयं लभिप्रायः स्यादित्यादिः पूर्वोक्त इत्यर्थः।

ननु वार्त्तिकतात्पर्य्यव्याख्यानविधाने प्रतिज्ञाते सूत्रपाठस्य तात्पर्य्यं कुतो नोक्तमित्यत आह। व्याख्यातुमिति।

( इति जैमिनिवार्षगण्यलक्षणनिरासः। )

(॥ इति प्रत्यक्षलक्षणं समाप्तम् ॥)

---

सू० अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत् सामान्यतो दृष्टं च ॥ ५ ॥

**सूत्रावतारमसहमानं प्रत्याह । अनेति । साधर्म्येण हि नियमवतेति शेषः ।**

**उपलक्षणं चैतत् । वैधर्म्येणेत्यपि द्रष्टव्यम् । अप्रामाण्यविधानं प्रामाण्यनिषेध एव । नाप्रत्यक्षं प्रमाणमित्यनेन हि विशेषनिषेधेन कण्ठतोऽनुमानप्रामाण्यनिषेधोऽर्थतः प्रत्यक्षप्रामाण्यविधिश्च विवक्षितः । न**

---

उपमानसूत्रं पठतीत्यत्र भाष्यव्याख्यानत्वाच्छेषो न दत्त इति भावः । ननु सूत्रपाठानन्तरं सूत्रं व्याख्यायानुमानाप्रामाण्यशङ्कां निराकर्त्तुमर्हतीति तन्निराकरणमनवसरदुःस्थमित्यत आह । सूत्रावतारमिति । प्रामाण्ये सति सामान्यविशेषलक्षणप्रकरणे अनुमानस्यावतारः स्यात् तदेव त्वसिद्धमित्यवतार एवास्य नास्तीति वादिनं प्रतीत्यर्थः । ननु साधर्म्यमात्रं व्यभिचारिसाधारणानुमानमित्यत आह । नियमवतेति । केवलव्यतिरेकिसङ्ग्रहायाह । उपलक्षणमिति । कथं प्रामाण्यमप्रामाण्यं च विदधीत इत्ययुक्तम् नाप्रत्यक्षं प्रमाणमित्यभिदधता चार्वाकेन प्रत्यक्षप्रामाण्याविधानात्, नाप्यनुमानाद्यप्रामाण्यं विधीयते प्रामाण्यमात्रनिषेधादित्यत आह । अप्रामाण्येति । अनेन वाक्येन शब्दतः प्रत्यक्षेतरस्याप्रामाण्यं निषिध्यते । अर्थतः प्रत्यक्षप्रामाण्यं विधीयते । विशेष-

चैतदुभयमपि प्रमाणमन्तरेण सिद्ध्यति। न चात्र प्रत्यक्षमेव भवतीति चिन्तितमादिवाक्ये; नापि शब्दोपमाने स्वप्रत्यये तयोरनवकाशात्। परप्रत्ययेऽपि धर्म्यसिद्धेः। सिद्धावपि परस्याप्तत्वानिश्चयात्। तस्मादतीन्द्रियविधिनिषेधयोरनुमानमनङ्गीकृत्याशक्यत्वादशक्यापह्नवमनुमानमित्यर्थः।

दृष्टसाधर्म्यं च नियतमिति शेषः। कथं तेनैव

---

निषेधस्य शेषाभ्यनुज्ञाफलकत्वात्, तच्च प्रमाणसाध्यं, न च प्रामाण्यं प्रामाण्याप्रामाण्ययोरप्रत्यक्षत्वादित्यतोऽनुमानमेव 'तत्र मानमिति तेनैव तन्निषेधो न युक्त इत्यर्थः। नापीति। प्रामाण्यविधिनिषेधयोः प्रभवत इति शेष.। न हि य एव शब्दप्रयोक्ता तस्यैव स प्रत्यायकः। न चोपमानं व्युत्पन्नस्यैव व्युत्पादकं किन्त्वन्यस्येत्यर्थः। नापि परप्रत्यायनाय यदा शब्दमुपमानं वा प्रयुङ्क्ते तदा तत्र तयोः प्रामाण्यमित्याह। परेति। धर्मिणः प्रतीतावेव तत्प्रत्यायनाय शब्दादिः प्रयुज्यते न चानुमानं विना तत्सिद्धिरित्यर्थः। अथ चार्वाकमते देहस्यैवात्मतया प्रत्यक्षतः स्यादेव तत्सिद्धिः तत्राह। सिद्धावपीति। वक्तुराप्तत्वासिद्धेस्तद्वाक्यमात्रात्र प्रामाण्यादिसिद्धिरित्यर्थः। ततः प्रवृत्तिसंवादादिनाऽऽप्तत्वं निश्चेयमुपजीव्यबाधाच्चानुमानाप्रामाण्यसाधनं पदमात्रादयतीत्याह। तस्मादिति। नियतमितीति। साधर्म्यमात्रस्य व्यभिचारिसाधारणतयाऽननुमान-

तस्याप्रामाण्यमिति व्याघातमात्रं विवक्षितम्। तेनायमर्थः यद्यनुमानमप्रमाणं? कथं तेनैव विधिनिषेधसिद्धिः। अथ तेनैव विधिनिषेधसिद्धिः? कथं तस्याप्रामाण्यमिति। किञ्चानुमानमनङ्गीकृत्य परप्रत्यायनाय शब्दप्रयोगोऽप्यशक्यः। परवेदनप्रतिपत्तेरेव

त्वादित्यर्थः। नन्वनुमानसाध्ये प्रत्यक्षप्रामाण्येऽपि व्याघात इति कुतो प्रामाण्य एव तदभिधानमित्यत आह। व्याघातमात्रमिति। तेन व्याघातसामान्ये तात्पर्य्यं न त्वप्रामाण्ये एवेत्यर्थः। तदेव स्पष्टयति। तेनेति। यद्वा तेनैव तस्याप्रामाण्ये को दोष इत्यत आह। व्याघातमात्रमिति। प्रकारान्तरेण व्याघात एवोक्तो न (नष्ट) तदर्थं दूषणमिति दर्शयन्नाह। किं चेति। न चानुमानाभावेऽपि सन्देहादेव (र)परोपस्थितौ प्रवृत्त्यादि स्यादिति वाच्यम्। व्याप्तिपक्षधर्मतोपस्थितौ विशेषदर्शने सन्देहाभावात्। ननु नानुमानाप्रामाण्यं चार्व्वाको ब्रूते किन्तु प्रत्यक्षप्रत्यभिज्ञानान्तर्भूतं तदित्याह—तथा हि वह्नेरसन्निधानेऽपि यथा धूमत्वेन सकलधूमव्याप्तताज्ञानाद्धूमविशेषे संस्कारात्स्मरणाद्दोपनीतव्याप्याभेदग्रहरूपो लिङ्गपरामर्शो जायते तथा धूमवत्त्वेन वह्निमज्ज्ञानाद्धूमवद्विशेषे पर्व्वते संस्कारवशेन व्याप्तिज्ञानापेक्षात् प्रत्यक्षादेव वह्निमदभेदग्रहोऽस्तु। न च व्याप्यवच्छेदकतया वह्निस्मरणेऽपि स्वातन्त्र्येण न तत्स्मृतिरस्ति। विशिष्टज्ञाने विशेषणज्ञानमात्रस्य हेतुत्वेन स्वातन्त्र्यं स्वातन्त्र्यत्वात्।

तदन्तरेणाशक्यत्वात्। न चेत् परप्रत्यायनाय नूनमौ-न्मत्त्यमाविष्करोति वक्तुरित्याह। अपि चेति। [१०१।२०]

सूत्रे विभागोप्यस्तीति व्यवच्छिद्याह। लक्षणत्वेन-तात्पर्यमाहेति। [१०२।१]

स्यादेतदतिव्यापकमिति। [१०२।२] अव्यापकं चेत्यपि

अथ यो यत्रावगतः स तत्र संस्कारवशाद्यथार्थप्रत्यक्षे भासते, न च पर्वते विशिष्टवह्निः पूर्वमवगत इति चेत्तर्हि पक्षधर्मधूमेऽपि पूर्वविशिष्टव्याप्तिर्नावगतेति संस्कारवशेन प्रत्यक्षात् व्याप्तिबोधोऽपि न स्यात्। मैवम्, विशेषणज्ञानं तस्य विशेष्ये सम्बन्धस्तयोरसंसर्गा-ग्रहो विशेषदर्शनविशेषणविशेष्येन्द्रियसन्निकर्ष इत्येतावतो यथार्थ-प्रत्यक्षे कारणत्वात्। प्रत्यभिज्ञानेऽपि तत्तया विशेषणताप्रत्यासत्तेः सत्त्वात्। व्याप्याभेदप्रत्यक्षेऽपि व्याप्तेर्विशेषणस्य स्मरणं स्मृतव्याप्तेः पक्षवृत्तिधूमे सत्त्वं तयोरसंसर्गाग्रहो धूमत्वविशेषदर्शनं व्याप्तिवि-शिष्टधूमेन्द्रियसन्निकर्षस्य व्याप्तिविशिष्टपक्षहेतवो विद्यन्ते वह्नि-विशिष्टज्ञानस्य प्रत्यक्षस्य सामग्री वह्नेर्विशेषणस्य सन्निकर्षाभावा-न्नास्तीति कथं प्रत्यक्षादनुमेयप्रतीतिः धूमदर्शनादग्निं साक्षात्करो-मीत्यनुव्यवसायाभावाच्चेति भावः।

लक्षणपदव्यावर्त्त्यमाह। सूत्र इति। सूत्रे यावल्लक्षणपरं तावत एव तात्पर्यमाहेत्यर्थः। नन्वतिव्याप्तिमात्रमुपक्रम्याव्याप्त्यतिव्याप्ति-भ्यामलक्षणमित्युभयोपसंहारो न युक्त इत्यत आह। अव्यापकं चेति। ननु तत्पूर्वकमिति, न विग्रहः, किन्तु समासः समास-

द्रष्टव्यम्। अत उभयव्युत्पादनोपसंहाराविरोधः। विग्रहत्रयप्रदर्शनं विग्रहत्रयं द्रष्टव्यमित्यर्थः। व्याप्तिस्मृतिसहायात् द्वितीयलिङ्गदर्शनादेवानुमितिसिद्धेरलं तृतीयलिङ्गदर्शनकल्पनयेति यथाश्रुतभाष्यानुसारिणस्तान्निरस्यति[1]। न चेति। [१०४।११]

स एष संस्कारोद्बोधमधिकमभ्युपगच्छतो दोष उक्तः।

यस्तु सहकारिलाभादन्योन कश्चिदुद्बोधोनामेति मन्यते तं प्रत्याह। विनश्यदवस्थस्येति। [१०४।२५] नहि

समानार्थत्वाकाङ्क्ष्य विग्रहत्वादित्यत आह। विग्रहत्रयमिति। समानार्थविग्रहत्रयं कृत्वा एकशेषो द्रष्टव्य इत्यर्थः। यद्यपि विभागसूत्रस्थप्रमाणमात्रस्य तच्छब्देन परामर्शात् सर्वसंशयोपपत्तावावृत्तौ मानाभावः तथापि सूत्रतात्पर्यकथनपरमेतदिति साम्प्रदायिकाः। ननु व्याप्त्यनुभवाहितसंस्कारस्योद्बोधो द्वितीयलिङ्गदर्शनानन्तरोत्पन्नज्ञानान्तररूपो यदोत्पन्नस्तदा स्वजनितसंस्कारेण द्वितीयलिङ्गदर्शननाशाद्व्याप्तिस्मरणद्वितीयलिङ्गदर्शनयोर्यौगपद्यं नास्तीति किमिदमुच्यते, नहि तयोर्यौगपद्ये व्यवस्थापिते यौगपद्यं कुत इत्यत आह। यस्त्विति। द्वितीयलिङ्गदर्शनसहकारिलाभ एवोद्बोधोऽन्यत्र मानाभावादित्यर्थः। नहीति। धूमो वह्निव्याप्य इति स्मृतिमतोऽपि धूमवत्त्वपरामर्शेऽनुमानानुदया-

(१) तन्निवारयति—पा० ३ पु०।

व्याप्तिस्मरणमात्रादनुमितिः, नापि लिङ्गदर्शनमात्रात्, किं तर्हि व्याप्तिविशिष्टलिङ्गदर्शनात्। न च व्याप्तिविशिष्टं लिङ्गमेकैकस्योभयस्य वा, गोचरः, किन्तु स्वतन्त्रमुभयमुभयस्य। न च स्वतन्त्रोभयज्ञानेऽपि विशिष्टज्ञानं भवति। तदिदमुक्तं परस्परवार्त्तानभिज्ञतया—स्वतन्त्रस्वस्वविषयपर्यवसिततया। मिथो घटनायोगो विशिष्टप्रत्यययोग इत्यर्थः। न च स्वतन्त्रमेतदुभयमेकात्मसमवायमात्रेणानुमितिं भावयिष्यतीति वाच्यम्। द्वितीयलिङ्गदर्शनं हि वस्तुगत्या लिङ्गविषयमित्येतावतैव व्याप्तिस्मृतेः सहकारि लिङ्गत्वरूपोल्लेखि-

दित्यर्थः। नापीति। अगृहीतव्याप्तिना धूमदर्शनेऽप्यनुमित्यनुदयादित्यर्थः। एकैकस्येति।

व्याप्तिस्मरणस्य द्वितीयलिङ्गदर्शनस्य वापीत्यर्थः। स्वतन्त्रमिति। परस्परविशेषणविशेष्यभावानापन्नव्याप्तिमात्रं पक्षधर्मतामात्रं च व्याप्तिस्मरणस्य द्वितीयलिङ्गदर्शनस्य च विषय इत्यर्थः। नन्वात्मा ते घटयतीत्यस्यात्मा चेतनस्ते द्वे व्याप्तिपक्षधर्मते घटयतीत्येकज्ञानविषयीकरोतीति नार्थः विशिष्टज्ञानाङ्गीकारापत्तेः, नापि ते द्वे व्याप्तिपक्षधर्मताज्ञाने घटयति विशिष्टं विषयीकरोतीत्यर्थः। एकैकविषयस्योभयविषयकत्वासम्भवादिति तदर्थमाह। न च स्वतन्त्रमिति। तथा चात्मा ते व्याप्तिस्मृतिलिङ्गदर्शने घटयति

तथा वा। न तावदाद्यः; दूराद्धूमविषयवस्तुत्वज्ञानस्यापि प्रकारान्तरायातव्याप्तिस्मृतिं प्रति सहकारित्वप्रसङ्गात्।

द्वितीयस्तु द्वितीयलिङ्गदर्शने नास्त्येव। तदिदमुक्तं वृत्त्या खल्वयं घटयेत्। व्यापारेण न रूपतो नोभयसमवायितामात्रेणातिप्रसङ्गादिति।

तस्माल्लिङ्गतोल्लेखि तृतीयं लिङ्गदर्शनमास्थेयमित्याह। तस्मादिति। [१०४। १७]

अनुमितौ कर्त्तव्यायां सहकारीकरोत्यर्थ उक्तः। लिङ्गत्वं व्याप्तिविशिष्टपक्षधर्मत्वम्। दूरादिति। यत्र दूराद्धूमविषयमेव वस्तुत्वेन ज्ञानं दैवाच्च धूमो वह्निव्याप्य इति स्मृतिः। तत्र वस्तुगत्या यल्लिङ्गं तस्य ज्ञानं व्याप्तिस्मृतिश्चेत्येतावता चानुमितिहेतोः सत्त्वादनुमितिप्रसङ्गादित्यर्थः। द्वितीयस्त्विति। तस्य पक्षधर्मविषयकत्वेऽपि व्याप्तिवैशिष्ट्याविषयकत्वादित्यर्थः। व्यापारेण तृतीयलिङ्गपरामर्शेनेत्यर्थः। तस्मादिति। व्याप्तिविशिष्टे पक्षधर्मताविषयकत्वमित्यर्थः। तथा च व्याप्तिस्मृतिः करणं लिङ्गपरामर्शो व्यापार इत्युक्तम्। 'क्रियया अयोगव्यवच्छेदेन सम्बन्धित्वस्यैव करणत्वाद्व्यापाराभावेपि तृतीयलिङ्गपरामर्शः करणमित्यन्ये।

अथ व्याप्तिस्मृतिर्व्याप्यतावच्छेदकरूपेण पक्षधर्मताज्ञानमित्येवानुमितिकारणं लाघवात्, तृतीयलिङ्गपरामर्शहेतुत्वेनावश्यक-

त्वाच्च, तथा च धूमो वह्निव्याप्यो धूमवांश्चायमिति ज्ञानद्वयादेवा-नुमितिरस्तु किं तृतीयलिङ्गपरामर्शेण। न चैवं गोत्वादेरनु-मितिहेतुत्वानापत्तिः तत्रापि तद्भितरावृत्तित्वे सति तद्वृत्तित्वस्य धर्मान्तरस्य व्याप्यतावच्छेदकत्वात् पर्वतीयधूमे धूमत्वेन ज्ञाते वह्निव्याप्योऽयं न वेति संशयेऽप्यनुमितिः स्यादिति चेत् न, धूमो वह्निव्याप्य इति स्मरतो धूमज्ञानस्य विशेषदर्शनत्वेन संशयासिद्धेः अन्यथा परामर्शस्याप्यापत्तेः। अत एव सामान्यनिश्चयात् सामान्येन संशयनिवृत्तावपि धूमविशेषव्याप्यतासंशयनिवर्त्तको वह्निव्याप्यता-निश्चयः स्वीकर्त्तव्य इत्यपास्तं, यत्सामान्यवति यद्विशेषदर्शनं तच्च सामान्यवद्विशेषेऽपि संशयसामग्र्यभावात्।

अथ व्याप्यपक्षधर्मयोर्भेदज्ञाने अनुमितिप्रतिबन्धाद्यद्व्यतिरेक-ज्ञानं यदुत्पत्तिप्रतिबन्धकं तत्तन्निश्चयजन्यमितिनियमात् पक्ष-भेदस्य व्याप्याभेदज्ञानमनुमितिहेतुरिति चेन्न। धूमत्वपुरस्कारेण व्याप्तिस्मरणपक्षधर्मताज्ञानसत्त्वे विशेषदर्शनाद्धूमे व्याप्यभेदबुद्धे-रसिद्धेः प्रतिबन्धकाभावत्वेन तदभावस्य व्याप्याभेदज्ञानहेतुत्वात्। अथ सामग्रीत एवाभेदज्ञानसिद्धिः इन्द्रियसन्निकृष्टधूमे वह्नि-ज्ञानव्याप्यधूमस्मरणधूमत्वसाधारणधर्मदर्शनात् व्याप्याभेदधीसत्त्वा-दिति चेन्न। तत्र व्याप्याभेदप्रत्यक्षसामग्रीतोऽनुमितिसामग्र्या बलवत्त्वेनानुमितेरेवोत्पत्तेः। न च अवलम्बसिद्धन्तवापि परामर्शे सति परामर्शान्तरापत्तेः तत्सामग्रीसत्त्वात्। अनुमिनोमीत्यनु-व्यवसायादनुमितिरेव तत्र जायते न तु परामर्शान्तरं धारा-वाहिकमिति तुल्यम्। अथ भावोऽभावो वा उभयथापि प्रमेय-

मित्यत्र व्याप्यतावच्छेदकयोर्भावत्वाभावत्वयोरनिश्चये कथमनुमितिः। न चान्यतरत्वं तत्र लिङ्गं तच्च निश्चितमेवेति वाच्यम्। भावाभावान्यान्यत्वरूपस्य तदन्यतरत्वस्याप्रसिद्धेरिति चेत्। न। भावत्वाभावत्वान्यान्यधर्मत्वस्य तत्र लिङ्गत्वात्। अपि चेन्द्रियासन्निकृष्टेऽतीन्द्रिये च लिङ्गे व्याप्तिविशिष्टलिङ्गज्ञानसामग्रीनास्तीति व्यभिचारान्न तृतीयलिङ्गपरामर्शो हेतुः अस्मदुक्ता चानुमितिसामग्री तत्राप्यस्ति। न चानुमानात्तत्रपरामर्शस्तत्रापि तदपेक्षायामनवस्थापत्तेः शब्दादेश्च परामर्शजननकस्याभावात्। न च ज्ञानान्तरोपनीते विशिष्टे व्याप्तिस्मृतिसहकृतेन मनसा परामर्शो जन्यते तदनन्तरमनुमितिदर्शनादिति वाच्यम्। व्याप्तिस्मृतेर्मानान्तरत्वापत्तेः यदसाधारणं सहकार्यासाद्यमनोबहिर्गोचरप्रमाजनकं तस्यैव शब्दादेरिव मानान्तरत्वात्। यत्र निद्रासहकारान्मनसो बाह्यस्वप्नानुभवो यत्र वा परमाणुर्गुरुत्वाधारो न वेति संशयः कोटिस्मरणविशेषादर्शनादिसहकाराज्जन्यते तत्र निद्रादेरप्रमाजनकत्वात् न प्रमाणान्तरत्वं, न च धूमो वह्निव्याप्य इति व्यवहारस्तत्रापि न स्यात्तदाव्याप्यत्वानुभावकाभावादिति वाच्यम्। स्मृतधूमे धूमवत्त्वेन वह्निव्याप्यतानुमानात् अस्मदभिमतानुमितिसामग्र्यास्तत्र सत्त्वात् त्वदुक्तानुमितिसामग्र्याश्चासत्त्वात्। यदा व्याप्यपक्षधर्मयोर्गृहीतयोर्भेदाग्रह एवानुमितिहेतुरस्तु। तृतीयलिङ्गपरामर्शवादिनापि तत्कारणतया तस्यावश्याभ्युपेयत्वात्। तयोश्च भेदाग्रहोऽतीन्द्रिये सन्निकृष्टे च लिङ्गे विद्यत इति सर्वत्र स एव हेतुरिति सङ्क्षेपः।

अत्रास्मात्पदृचरणाः पक्षधर्मस्यानुमितिं प्रति व्याप्यत्वज्ञानं हेतुः लाघवादुपजीव्यत्वात्। न तु तस्य व्याप्यतावच्छेदकप्रकारकं गौरवात्। न च तस्यानुमितेः पूर्वमसिद्धौ युगपदुपस्थित्यभावाञ्च लाघवं विनिगमकमिति वाच्यम्। तत्र व्याप्तिधूमत्वयोर्वैशिष्ट्यं प्रथममेव युगपत्पक्षधर्मे भासते? शब्दाद्वा? तत्रोभयोर्युगपदुपस्थितेः। न चैवमतिरिक्तविशिष्टज्ञानकल्पनायां गौरवम्, प्रमाणवतो गौरवस्यापि न्याय्यत्वात् फलमुखगौरवस्यादोषत्वाच्च। कारणताग्रहसमये सिद्ध्यसिद्धिभ्यां व्याघातात्। अपि च वह्निव्याप्यधर्मवानिति शाब्दज्ञाने व्याप्यतावच्छेदकधूमत्वाद्यज्ञानात्। व्याप्यत्वज्ञानस्य च तत्रापि सत्त्वात्तदेवानुमितिकारणम्। अथ वह्निव्याप्यत्वमपि व्याप्यतावच्छेदकम्, तथाहि—वह्निनिरूपितधूमादिप्रत्येकवृत्तिव्याप्तित्वेन सकलधूमादिवृत्तिव्याप्यतावच्छेदिका आश्रयभेदात्। प्रमेयत्ववदवच्छेदाभेदादेति मतम्। तन्न। सकलधूमादिवृत्तिव्याप्तौ मानाभावात्। यत्र वह्निव्याप्यस्तत्र वह्निरिति व्याप्तिबुद्धौ च प्रत्येकवृत्तिव्याप्त्याश्रयस्यैव विषयत्वात्। प्रत्येकधूमादिव्याप्तिज्ञानं विना सकलधूमादिवृत्तिव्याप्तिज्ञानाभावात्। अपि चायमालोको धूमो वोभयथापि वह्निव्याप्य इति ज्ञानाद्यत्र वह्न्यनुमितिस्तत्र धूमत्वादिव्याप्यतावच्छेदकरूपानिश्चयात्कथमनुमितिः। अथ तदन्यान्यत्वमेव तत्र लिङ्गं, न च तदज्ञानदशायामप्यनुमितिदर्शनान्न तल्लिङ्गं, धूमालोकान्यान्यत्वज्ञानं विना तत्रापि तत्र वह्निव्याप्यत्वानिश्चयेन तदर्थज्ञानावश्यकत्वादिति चेत्। न। तन्निश्चयेऽपि तस्य व्याप्यतानवच्छेदकत्वात् गौरवात्। व्याप्य-

तावच्छेदकस्य धूमत्वादेरनिश्चयात्, व्याप्यत्वज्ञानस्य तत्रापि सत्त्वात्तदेवात्रानुमितिहेतुः। न चैवं तदन्यान्यत्वाद्वह्निव्याप्यत्वमपि तत्रानुमेयमिति वाच्यम्। तदन्यान्यत्वविशेषदर्शनसहकृतस्य प्रत्यक्षस्यैव तत्र वह्निव्याप्यत्वपरिच्छेदकत्वात्। न च तत्र सामग्र्यसिद्धिः विशेषणव्याप्तिज्ञानविशेषणविशेष्येन्द्रियसन्निकर्षतद्संसर्गाग्रहतदन्यान्यत्वविशेषदर्शनानां सत्त्वात्। नच गौरवात् प्रत्यक्षेऽपि तन्न सहकारीति वाच्यम्। अन्वयव्यतिरेकाभ्यां गुरोरपि विशेषदर्शनत्वेन प्रत्यक्षसहकारित्वात्। न चासन्निकृष्टेऽतीन्द्रिये च लिङ्गे व्याप्यत्वप्रत्यक्षत्वस्य भावाद्व्यभिचाराच्च तद्धेतुः, तत्र व्याप्तिस्मरणधूमत्वज्ञानसहितेन मनसा तदुत्पादनात्। न च व्याप्तिस्मृत्यादेर्मानान्तरत्वम्, इन्द्रियादेः सन्निकर्षादनुगतस्य व्यापारस्याभावेनाकारणत्वात्। सहकारिमात्रस्य तदभावेऽपि युक्तत्वात्। कथमन्यथा कविकाव्यस्थले चिन्तनोपनीतपदार्थानां मनसैव संसर्गानुभवः। एतेन व्याप्यपक्षधर्मयोर्भेदाग्रहोऽनुमितिरित्यपास्तम्। उक्तरीत्या विशिष्टज्ञानस्यानुमितिहेतुत्वादिति। साक्षादात्मीयरूपमित्यादिटीका। अज्ञातकरणाद्भासमानो योऽर्थः स प्रत्यक्षः स्वविषयज्ञानजनकः तेन साक्षात्कारिज्ञानमर्थादेव भवतीति न तत्र प्रतिबन्धग्रहापेक्षेत्यर्थः। स्वरूपोपधानसामर्थ्यविरहित्वं स्वविषयज्ञानजनकत्वमित्यर्थः। बौद्धकारिकायां स्वभावत्वेत्यत्र तदात्वेत्यर्थः। अविनाभावनियमोऽविनाभावनिश्चय इत्यर्थः। अदर्शनाच्च व्यभिचारादर्शनमात्राच्च भवतीत्यर्थः। न दर्शनाच्च वा सहचारदर्शनमात्रादित्यर्थः। ननु टीकाकृता वह्निधूमयोः कार्यकारणभावग्रहनिरासः स्वसिद्धान्त-

इह तादात्म्यतदुत्पत्तिस्वरूपादिनिश्च---यः तदा न स्यात् यदि ते एव प्रतिबन्धस्ताभ्यां समानोपायो वा प्रतिबन्धस्तयोरेव वा प्रतिबन्धपर्यवसानं, ते एव वा प्रतिबन्धनिश्चयोपायः। तत्रोपायत्वं सहचारावसाये वा, व्यभिचारशङ्कानिरासे वा। व्यभिचारशङ्काप्युपाधिदर्शनाद्वा, उपाधिशङ्कया वा, भूयो भूयः सहचरितयोरप्युपलब्धयोः कयो[१]श्चिदर्थयोर्व्यभिचारानुसन्धानमात्रेण वेति।

अत्र च सहचारावसायस्तावदिन्द्रियसन्निकर्षाधीनोत्पत्तिस्तदुत्पत्त्यनिश्चयेऽपि वह्निधूमयोः सिध्यति। व्यभिचारशङ्कापि दर्शनयोग्योपाध्यधीना योग्यानुपलम्भबाधादेव निरस्ता। अतीन्द्रियास्तूपाधयोऽन्यत्र प्रमाणपरिदृष्टाः शङ्किता अपि यथा निवर्त्तन्ते तथा

---

विरुद्ध उक्तः स्वयमपि तयोस्तथाऽनङ्गीकारात्, अपि चेत्यादिटीकायां पौनरुक्त्यं चेत्यभिप्रेत्यान्यथा योजयितुं विकल्पयति। इहेति। ते एव—तादात्म्यतदुत्पत्ती एव। ताभ्यामिति। येनोपायेन तादात्म्यतदुत्पत्ती ज्ञायेते तेनैव प्रतिबन्धोऽपि गृह्यत इत्यर्थः। तयोर्वेति। तादात्म्ये तदुत्पत्तिव्याप्यत्वं प्रतिबन्धस्येत्यर्थः। कार्य्य-

(१) पार्थिवलत्वोहलेख्यत्वयोः

वक्ष्यामः। प्रमाणपथानवतीर्णोपाधिशङ्का तु तदुत्पत्तिनिश्चयमप्यास्कन्दतीति कथं सा तेन निवर्त्तनीयेत्याह। अथोच्यत इति। [१०५।२१] सहचरितयोर्व्यभिचारदर्शनमात्रेण तु व्यभिचारशङ्का कार्यकारणयोरपि समाना, तदुत्पत्तिलक्षणविशेषसिद्धौ विपक्षे बाधकप्रमाणवृत्त्या शङ्कानिवृत्तिरिति यदि, तदास्माकमपि स्वाभाविकत्वसिद्धौ[१] विपक्षे बाधकप्रमाणवृत्त्यैव शङ्कानिवृत्तिरिति समः समाधिः। विशेषस्तु स्वाभाविकसम्बन्धस्य व्यापकत्वमव्यापकत्वं तदुत्पत्त्यादेरित्याह। अपि चेति। [१०७।४] तदिदमुक्तम्। स च यो वा स

---

कारणभावदूषिकां टीकां प्रतिबन्दिपरतया व्याचष्टे। प्रमाणपथेति। तादृशशङ्कया तदुत्पर - - निश्चयात्ततः प्रतिबन्धनिश्चय इत्यर्थः। भूयोभूय इत्यादिकल्पं दूषयति। सहचरितयोरपीति। सिद्धौ सिद्ध्यर्थमित्यर्थः। नित्यं सत्त्वमसत्त्वं चेति बौद्धकारिकायां अन्यानपेक्षणाद्धेतोरिति योजना। यद्वा अहेतोर्हेतुशून्यस्य सदासत्त्वमेव वा न तु कदाचित्सत्त्वमसत्त्वं वा स्यादित्यर्थः। ननु कादाचित्कत्वान्यथानुपपत्त्या कार्य्यकारणभावनिश्चये समाश्रिते तर्हीत्यादिना स्वाभाविकसम्बन्धस्य प्रयोजकत्वं यदुक्तं तत्पूर्वापरविरोधीत्यत आह विशेषस्त्विति। तथा चास्तु तर्हीत्यादिना स्वाभाविकसम्बन्धस्य

---

(१) स्वाभाविकसम्बन्धसिद्धौ—पा० ३ पु०।

वेति। [१०७।१०] न च समानोपायत्वादुभयोरन्यतरा-निश्चये नान्यतरनिश्चय इति साम्प्रतम्। प्रतिबन्धा-निश्चयेऽपि हुताशभस्मनोः कार्यकारणभावावधारणात्। कार्यकारणभावानिश्चयेऽपि धामधूमयोः प्रतिबन्धावबोधात्। यदनतीतमेव वह्निमनुमिमत इत्याह। अपि च कार्यादिति। [१०७।१२]

तयोरेव प्रतिबन्धः पर्यवस्यतीति पक्षं निराचष्टे। अपि च रसादिति। [१०७।१८]

यत्तु भेदे सति व्याप्यव्यापकभाव एव कार्यकारणभाव इति व्युत्पादितं प्रज्ञाकरेण तत्पापादपि पापीयः।

तथाहि नियामकविरहे भिन्नयोरव्यभिचारः शङ्काकलङ्काङ्कितत्वात् दुरवधारण इति तामपनेतुं

---

व्यापकत्वं विपक्षबाधकस्य तर्कस्तद्बाहकोऽप्यनुगतस्तादात्म्यतदुत्पत्त्योश्च परस्परमव्यापकत्वमुक्तं टीकाकृतेत्यर्थः। ननु अपि च कार्यात्कारण-मित्यादिनाऽप्यव्यापकत्वमेवोच्यत इति पूर्वेण पौनरुक्त्यमित्यत आह। न च समानेति। प्रतिबन्धनिश्चयेऽपीति। प्रतिबन्धतादात्म्य-तदुत्पत्तीनामेकोपायनिश्चयत्वे प्रतिबन्धनिश्चये तदुत्पत्त्यनिश्चयो न स्यात्, तन्निश्चये च प्रतिबन्धानिश्चयो न स्यात्, नचैवमित्यर्थः। अव्यापकत्वस्य पौनरुक्त्यनिरासायाह। तयोरिति। यत्त्विति। तथा च रसाद्रूपानुमाने तदुत्पत्तिरस्त्येव तल्लक्षणत्वादिति भावः।

कार्यकारणभावोऽनेनोपनीतः, स चेत्तद्रूप एव कथं तन्निश्चयेनैवाव्यभिचारनिश्चयः।

न चैतत्कीर्त्तेरनुमतं यद्रसेन रूपानुमानेऽन्यथाभ्युपायमाह। यदि च सर्वलोकमतिबाह्य स्वयंकृतलक्षणैर्व्यवहारस्तदा भेदे सतीत्येतदपि परिह्रीयताम्। अव्यभिचारमात्रं तदुत्पत्तिरित्येवास्तु। लघु चैवं लक्षणं स्यात्। तदात्मनोऽप्येतदस्तीति चेत्। अस्तु शिंशपापि तत्कार्यम्। कथं तेनैव तत्कर्त्तव्यमिति चेत्। को दोषः।

असिद्धं सिद्धेन साध्यते न तु तदेव सिद्धमसिद्धं चेति चेत्! हन्तैवमनागतमपि कथं व्यापकतामात्रेण कारणमसिद्धत्वात्। वर्त्तमानमपि कथं व्याप्यतामात्रेण कार्यं सिद्धत्वात्। एवं समानकाले अपि कथमविना-

भेदे सतीति तादात्म्यव्यावर्त्तनायोक्तम्। स चेदिति। स-कार्य्यकारणभावः। तद्रूपः—व्याप्यव्यापकभावरूप इत्यर्थः। यादृशा तेन जनितं इति टीका। यादृशेन पूर्व्वेण रूपेण जनितोरसस्तादृशमेव पूर्व्वमनुमापयति। स च रससमानकालं यद्रूपं तज्जनकेन जनित इति तादृशकारणे रूपेऽनुमीयमाने विशेषणतया रससमानकालं रूपं सिद्ध्यतीत्यर्थः। प्रयोगस्तु रसः स्वसमानकालरूपजनकजन्योरसत्वादिति। ननु लौकिकानामित्ययुक्तम्, अन्येषामप्यपिशित-

भावमात्रेण कार्यकारणभूते, असद्भावस्थायामुभयो-रप्यसाध्यत्वाविशेषाविशेषात् भिन्नावस्थायामुभयोरप्य-साध्यत्वाविशेषात्। तस्मात्पूर्वकालभावनियमः कार-णत्वं पश्चाद्भावितानियमः कार्यत्वम्। अविनाभावस्तु नियममात्रमित्येव न्यायः।

अपि च रसरूपयोः कार्यकारणभावनिश्चयो वह्नि-धूमयोरिव प्रत्यक्षानुपलम्भसाध्यो वा स्यात्? क्षणभङ्ग-सिद्धौ पुञ्जात्पुञ्जोत्पत्तिरिति न्यायेन वा? आद्यस्ता-वत् क्षणयोरशक्य एव तयोरेव प्रत्यक्षानारोहात्। तच्च तस्यानिश्चायकत्वात्। सन्तानयोरपि दुरवबोधः। नहि वह्नेरिव रूपस्य पूर्वकालतानियमं धूमस्येव रसस्यापश्चाद्भावितानियमं लौकिकाः प्रतिपद्यन्ते। क्षणभङ्गसिद्धिन्यायस्तु न लौकिक इति लौकिकानां रसतो रूपानुमानं न स्यादित्याह। लौकिकानां चेदमिति। [१०८।११]

चक्षुषां तदनुमानादित्यन्यथा तदर्थमाह। अपि चेति। प्रत्यक्षा-नुपलम्भौ अन्वयव्यतिरेकावित्यर्थः। तयोरेवेति। कार्यकारण-योरेकदा सत्त्वाभावेनैकप्रत्यक्षज्ञानाविषयत्वादित्यर्थः। न हीति। रसपूर्वकालेन रसाद्रूपानुमानादित्यर्थः। अपि चेत्यादिना व्याप-

अपि च [१०८।११] इत्यनेन ते एव प्रतिबन्ध इति निरस्तम्।

तादात्म्यं तु गम्यगमकभावे प्रत्युत विरुद्धमित्याह। अपि चेति। [१०८।१९ नहि तदेव कर्म-निश्चेयं, कर्तृ च-स्वनिश्चयेन निश्चायकं च। निश्चितानिश्चितयोः परस्परविरोधादित्यर्थः।

भवत्वभेदेऽपि गम्यगमकभावस्तथापि न शिंशपात्वेन वृक्षत्वानुमानम्, अनवसरदुःस्थत्वात्। न ह्यस्ति सम्भवः सामान्यमनिश्चितं निश्चितस्तु विशेष इत्याशङ्क्य केनचित्समर्थितमुत्थाप्य दूषयति। यस्त्विति। [१०९।४]

भिन्नयोरेव व्यावृत्त्योर्गम्यगमकभावः किन्त्वभिन्नाध्यवसेयसम्बन्धात् तयोरपि तादात्म्यं व्यवह्रियत इति।

कत्वदर्शनात् पुनरपि पौनरुक्त्यमित्यन्यथा व्याचष्टे। अपि चेत्यनेनेति। मध्यनक्षत्रेति टीका। मध्ये नक्षत्रविशेषे दृष्टे सति पूर्वस्याष्टमनक्षत्रस्यास्तमयः अग्रिमाष्टमनक्षत्रस्योदयः योऽनुमीयत इत्यर्थः। ननु, तादात्म्यं चेत्यनेन पूर्वमेव तादात्म्यपक्षो निरस्त इति पौनरुक्त्यमित्यत आह। तादात्म्यं त्विति। व्यवहारानुमाननिवर्त्तनीयां शङ्कामाह। भवत्विति। अनवसरमेवाह। न हीति। विशिष्य शिंशपात्वस्यासंशये सामान्यस्य वृक्षत्वस्यानिश्चयासम्भवादित्यर्थः। अभिन्नाध्यवसेयेति। शिंशपारूपमेकं स्वलक्षणमित्यर्थः।

स यद्यभिन्नदेवदत्तसम्बन्धात् कुण्डलयोरप्यभेदं व्यवहरति को वारयिता। केवलं प्रमाणप्रयोजनयोर्व्याहतिर्लौकिकविरोधश्चेत्यनेनाभिप्रायेणोपसंहरति। तस्मादिति। [१०९।१०]

अस्येदं कार्यकारणमित्येकः सम्बन्धः।

स्वाभाविकं सम्बन्धमुपसंहृत्य तस्य स्वरूपमाह। तथाहीति। [१०९।२२] स्वाभाविको निरुपाधिरित्यर्थः।

यद्यपि व्यभिचाराव्यभिचारव्याप्ते औपाधिकत्वानौपाधिकत्वे, ताभ्यां च व्यभिचाराविति नियमः। तौ

---

स यदीति। स्वलक्षणाभेदेऽपि तद्वृत्तिव्यावृत्त्योर्भेदेऽतिप्रसङ्गादित्यर्थः। एकः सम्बन्ध इति। प्रत्येकं सम्बन्धत्वे चतुःप्रकारत्वाभावादित्यर्थः। साङ्ख्यवार्त्तिके मात्रा—स्वभावः। वध्यघातायेरिति पूर्वार्द्धोक्तविशेषणं न तु स्वतन्त्रमतो न सप्तत्वविरोधः। ननु स्वाभाविको न स्वभावादुत्पन्नः नित्यसम्बन्धाव्याप्तेः न स्वभावाश्रितत्वं व्यभिचारिण्यपि गतत्वादित्यत आह। निरुपाधिरिति।

ननु तेहि विनेत्यादिना व्यभिचारे दर्शिते यदा लित्यादिना किमर्थमुपाधिर्दर्शितः उपाधेर्व्यभिचारोन्नायकतया दूषकत्वात् स्फुटे व्यभिचारे व्यर्थमुपाध्युद्भावनमित्यत आह। यद्यपीति। तथापीति।

यद्यपि यद्येकव्यभिचरितः सम्बन्धो व्याप्तिः स्यात्तदा व्यभिचारस्यैव व्याप्त्यभावत्वे तन्निश्चयार्थमुपाध्युद्भावनमनुपयुक्तं स्यात्

हि न तावन्निर्निमित्तौ सार्वत्रिकत्वप्रसङ्गात् । नियतविषयौ चोपलभ्येते । नाप्यनिमित्तौ सोपाधेरप्यव्यभिचारे निरुपाधेरपि व्यभिचारेऽनियमप्रसङ्गात् । तथा सति कार्यात्मनोऽपि कारणात्मव्यभिचारः प्रसज्येत । तस्मादुपाधेरवश्यं व्यभिचारोऽनुपाधेरवश्यमव्यभिचारः व्यभिचारेऽवश्यमुपाधिरव्यभिचारेऽवश्यमुपाध्यभावस्तथापि यत्र स्फुटो व्यभिचारस्तत्र निष्फलमुपाध्यनुसरणम् तदर्थत्वात्तस्य । अस्फुटे तु व्यभिचारे तस्योपयोगः न तूपाधितदभावसिद्धये व्यभिचारा-

चैवम् । किन्तु निरुपाधिः सम्बन्धो व्याप्तिरित्युक्तम् । तथा च निश्चितेऽपि व्यभिचारे व्याप्तिभङ्गायोपाधिरवश्यमनुसर्तव्यः । तथापि व्यभिचारेऽवश्यमुपाधिसत्वात् तन्निश्चयेन सामान्यत उपाधौ निश्चिते विशिष्य तदनुसरणं व्यर्थं तस्य व्यभिचारस्य तदर्थत्वात् उपाधिविनिश्चयार्थत्वादित्यर्थः । वस्तुतस्तु अव्यभिचरितः सम्बन्धो व्याप्तिः लाघवात् अनौपाधिकत्वं तल्लक्षणमिति व्यभिचारस्य साक्षान्निश्चये उपाध्यनुसरणं व्यर्थमित्येतत्परोऽयं ग्रन्थः । न चैवं व्यभिचारस्य व्याप्तित्वे व्यभिचारस्तदभावत्वेनासिद्धः स्यान्नत्वधिक इति वाच्यम् । साध्याभाववद्गामित्वं हि व्यभिचारः तदभावश्च नाव्यभिचारः केवलान्वयिन्यभावात् । किन्तु स्वसमानाधिकरणात्यन्ताभावाप्रतियोगि साध्यसामानाधिकरण्यम् । न चानयोः परस्पराभावत्वम् । न

...; Fasc. 2–3 @ -/10/- each .. .. ..
...ndya Brahmana (Text), Fasc. 13–18 @ -/10/- each .. .. .. 3 12
...ntra Vartika (English), Fasc. 1–15 @ 1/4/- .. .. .. 18 12
...attva Cintamani, Vol. II, Fasc. 7–10; Vol. III, Fasc. 1–2; Vol IV, Fasc. 1; Vol. V, Fasc. 1–5; Part IV, Vol. II, Fasc. 1–12 @ -/10/- each .. .. .. .. .. .. 14 6
...attva Cintamani Didhiti Prakas, Fasc. 1–6 @ -/10/- each .. .. 3 12
...attva Cintamani Didhiti Vivriti, Vol. I, Fasc. 1–8; Vol. II, Fasc. 1–3; Vol. III, Fasc. 1 @ -/10/- each .. .. .. .. 7 8
...attvarthadhigama Sutram, Fasc. 2–3 @ -/10/- each .. .. 1 4
...irthacintamoni, Fasc. 1–4 @ -/10/- each .. .. .. 2 8
...rjkānda-Mandanam, Fasc. 1–3 @ -/10/- .. .. .. .. 1 14
...ul'si Satsai, Fasc. 1–5 @ -/10/- .. .. .. .. 3 2
...pamita-bhava-prapañca-kathā, Fasc. 1–14 @ -/10/- each.. .. 8 12
...ttara Naishadha (Text), Fasc. 6–12 @ -/10/- each .. .. 4 6
...vāsagadasāo (Text and English), Fasc. 1–6 @ 1/- .. .. 6 0
...ajjalaggam, Fasc. 1 .. .. .. .. .. 0 10
...allāla Carita, Fasc. 1 @ -/10/- .. .. .. .. 0 10
...araha Purana (Text), Fasc. 2–14 @ -/10/- each .. .. 8 2
...arsa Kriyā Kaumudi, Fasc. 1–6 @ -/10/- .. .. .. 3 12
...ayu Purana (Text), Vol. I, Fasc. 1–6; Vol. II, Fasc. 1–7 @ -/10/- each 8 2
...edanta Sutras (Text), Fasc. 7–13 @ -/10- each .. .. 4 6
...idhāna Pārijāta, Fasc. 1–8; Vol. II, Fasc. 1 @ -/10/- .. .. 5 10
Ditto Vol. II, Fasc. 2–5 @ 1/4/- .. .. .. 5 0
Ditto Vol. III, Fasc. 1 .. .. .. .. 0 10
...ishahitam, Fasc. 1 .. .. .. .. .. 0 10
...ivādaratnākara, Fasc. 1-7 @ -/10/- each .. .. .. 4 6
...rhat Svayambhū Purāna, Fasc. 1–6 @ -/10/- .. .. .. 3 12
...rhannaradiya Purana (Text), Fasc. 3–6 @ -/10/- each ..
...ogaśastra, Fasc. 1–5 .. ..
...oga Sutra of Patanjali (Text and English), Fasc. 3 ... Fasc. 4, Rs. 2/-) .. ..

## ...usthani Series.

A Descriptive Catalogue of Bardic and Historical Mss. ... Sect. i: Prose Chronicles. Part i: Jodhpur State ...
Sect. i: Prose Chronicles. Part ii: Bikaner State ...
Sect. ii: Bardic Poetry. Part i: Bikaner State. Fasc. 1 ...
...canikā Rāthòra Ratana Singhajī rì Mahesadāsòta rī Khiriyā Jagā rī kahi. Part i: Dingala Text with Notes and Glossary .. .. 1 8
...li Krisana Rukamanī rī Rāthòra rāja Prithī Rāja rī kahī. Part i: Dingala Text with Notes and Glossary .. .. .. 1 8
...rdic and Historical Survey of Rajputana, Chanda rāu Jèta Sī rò .. 1 8

## Tibetan Series.

...arakosah, Fasc. 1–2 .. .. .. .. .. 4 0
...artika Kamdhenuh .. .. .. .. .. 1 0
...uddhastotrasangraha, Vol. I .. .. .. .. 2 0
Lower Ladakhi version of Kesarsaga, Fasc. 1–4 @ 1/- each .. 4 0
...ayabindu (A Bilingual Index) .. .. .. .. 1 0
...ayabindu of Dharmakirti, Fasc. 1–2 .. .. .. 2 0
...g-Sam Śhi Tin, Fasc. 1–4 @ 1/- each .. .. .. 4 0
...ajna Pradipah .. .. .. .. .. 1 0
...ogs brjod dpag hkhri Śiñ (Tib. & Sans. Avadāna Kalpalatā) Vol. I, Fasc. 1–13; Vol. II, Fasc. 1–11 @ 1/- each.. .. .. 24 0
...ér-Phyin, Vol. I, Fasc. 1–5; Vol. II, Fasc. 1–3; Vol. III, Fasc. 1–6 @ 1/- each .. .. .. .. .. 14 0
...med-Kun-Den .. .. .. .. .. 1 0
...nor Tibetan Texts. The Song of the Eastern Snow Mountain .. 1 0

---

...tice of Sanskrit Manuscripts, Fasc. 1–34 @ 1/- each .. .. 34 0
Ditto ditto (Palm-leaf and selected paper MSS.) @ 3/- each .. 6 0
...palese Buddhist Sanskrit Literature, by Dr. R. L. Mitra .. 5 0
...port on the Search of Sanskrit MSS., 1895-1900, 1901-1905, and 1906-1911 @ -/8/- each .. .. .. .. 1 8
...talogue of the Scientific Periodicals in Calcutta Libraries .. 5 0

N.B.—All Cheques, Money Orders, &c., must be made payable to the "Treasurer, Asiatic Society," only.

BIBLIOTHECA INDICA:
COLLECTION OF ORIENTAL WORKS.

# न्यायवार्त्तिकतात्पर्य्यपरिशुद्धिः

श्रीमदुदयनाचार्य्यविरचिता ।

श्रीवर्द्धमानोपाध्यायविरचित–न्यायनिबन्धप्रकाशाभिध-
व्याख्यासहिता ।

---

# NYĀYA-VĀRTTIKA-TĀTPARYA-PARIŚUDDHI

BY
UDAYANĀCĀRYA.

WITH A GLOSS CALLED
NYĀYA NIBANDHA-PRAKĀŚA

BY
VARDHAMĀNOPĀDHYĀYA.

EDITED BY
MAHĀMAHOPĀDHYĀYA VINDHYEŚVARĪPRASĀDA DVIVEDI
AND
PAṆḌITA LAKṢMAṆA ŚĀSTRI DRĀVIḌA.

Work Number
205.
Fasc. VIII.

Issue Number
1467.
New Series.




CALCUTTA:
Printed by the Baptist Mission Press.
Published by the Asiatic Society of Bengal, 1, Park Street.
1924.

**व्यभिचारपर्यवसानमुपयुज्यते। व्यभिचारादिसिद्धौ इत्यामुपाधितदभावपरीक्षाया निष्फलत्वात्। तस्मादन्योन्यव्याप्तिप्रदर्शनमात्रप्रयुक्तो व्यभिचारमुन्नाव्याप्युपाधिमाह। यदात्विति। [१०९।२६] यतो न स्वाभाविको न निरुपाधिकस्ततोऽनियतो नाव्यभिचारीत्यर्थः।**

न्वेवमुपाधिरसिद्ध्युपजीव्यत्वेन सव्यभिचारवत् हेत्वाभासान्तरं स्यात् न तु व्याप्त्यभावत्वेनासिद्धिः। मैवम्। उपाधिज्ञानस्यासिद्ध्युपजीव्यत्वेऽपि स्वतो दूषकत्वाभावात्। न ह्यन्यस्य साध्यव्यापकत्वज्ञानमन्यस्य साध्यव्याप्यत्वज्ञाने स्वतः प्रतिबन्धकं अव्यभिचारिज्ञानस्य च तद्धेतुतया तद्ज्ञानस्य तथात्वात्। अनौपाधिकत्वज्ञानं च न व्याप्तिहेतुरिति वक्ष्यते। तथाच व्यभिचारज्ञानजनकतया स दूषक इति दूषकतायां परमुखनिरीक्षकत्वेनासिद्ध्युपजीव्योऽप्युपाधिः सिद्धसाधनवन्न हेत्वाभासः पृथगित्यस्मत्पितृचरणाः।

संप्रदायविदस्तु। यस्यानुमितिकरणव्यतिरेकरूपत्वं तदुन्नायकत्वं वा स हेत्वाभासः उपाधिस्त्वसिद्ध्युन्नायकव्यभिचारोन्नायकः व्यभिचारव्याप्यताप्रतिसंधानं विना असिद्धेरुन्नेतुमशक्यत्वादिति नोपाधिः पृथक्हेत्वाभास इत्याहुः।

तस्मादिति। उपाधिव्यभिचारयोर्व्याप्तिप्रदर्शनार्थमित्यर्थः। अपिच व्यभिचारिण्येकत्र साधने साध्यतदभावयोर्विरोधेनावच्छेदभेदं विनातदुभयसम्बन्धाऽभावादवश्यं साध्यसम्बन्धितावच्छेदकमस्ति तदेव साधनावच्छिन्नसाध्यव्यापकं साधनाव्यापकं चोपाधिः। अतएव

**अथ धूमादीनामपि वह्न्यादिभिः कथं स्वाभाविक इत्यत आह। स्वाभाविकस्त्विति।** [११०।१]

**नन्वस्फुटे व्यभिचारे सफलमुपाधिपर्येषणं[1] तत्किमत्र सोऽस्फुट इत्यत आह। क्वचिद्व्यभिचारस्यादर्शनादिति।** [११०।२]

**ननु क्वचित्कदाचिद्व्यभिचारोऽपि स्यादयोग्यत्वाच्च न दृश्येतापीत्यत आह। अनुपलभ्यमानस्यापि कल्पनानुपपत्तेः।** [११०।२] **अनुपलभ्यमानव्यभिचारकल्पनाद्वारभूतोपाध्यभावादित्यर्थः। अतो नियतोऽव्यभिचारीत्यर्थः॥**

व्यभिचारे चावश्यमुपाधिरितिसंगच्छते, अन्यथा व्यभिचारादेवागमकत्वे सिद्धे व्यभिचारित्वेन तदनुमानवैयर्थ्यादित्यस्मत्पितृचरणाः।

ननु नियतस्याभावे साध्यस्वाभाविकत्वाभावोहेतुः साध्याविशिष्ट इत्यत आह। यत इति। नन्वेतावतैव धूमस्य वह्निव्याप्यत्वे सिद्धे किमधिकेनेत्यप्रसक्तप्रतिषेधमाशंक्याह। नन्विति। कल्पनासंभवार्थमाह। ननु क्वचिदिति। ननूपाधिदर्शनमेवानुपलभ्यमानव्यभिचारकल्पनाहेतुः स्यादित्यत आह। अनुपलभ्यमानेति। प्रत्यक्षो व्यभिचारोनास्त्येव तत्कल्पनाबीजं चोपाधिर्नास्तीत्यर्थः। अपौनरुक्त्यमाह। अव्यभिचारीत्यर्थ इति। ननु संदिह्यमान उपाधिरित्यनेनोपाधिसन्देह इति व्याप्तिनिश्चयप्रतिबन्धाच्च तन्निश्चय

(१) मुपाध्यनुसरणमिति पु० १ पा०।

ननूपाध्यभावेऽनुपलभ्यमानव्यभिचारकल्पना[1]नवकाशः, स एव उपाध्यभावः कुतस्त्य इत्याशङ्कते। न चेति। [११०। ३] परिहरति। अवश्यमिति। [११०।

उपाधिर्हि प्रमाण[2]पदवीमवतीर्ण एव वक्तव्यः। अन्यथा सर्वैः प्रमाणैः सर्वत्र सर्वदा सर्वेषां जात्या कश्चिदनुपलभ्यमानः स्यादुपाधिरिति शङ्का तदुत्पत्तावपि ब्रह्मणाऽप्यपनेतुमशक्या। नानाप्रमाणगोचरार्थसाक्षात्कारवतः सर्वज्ञस्यापि स्वभावत एवानुपलभ्यः कश्चिदर्थो भवेत्। भवेच्च सर्वप्रमाणापोढमपि कदाचिदद्वैतं प्रकृतिपुरुषौ वा निःस्वभावता वा जगतः वेदानां प्रामाण्यम्। तत्कथञ्चैत्यवदनादावपि भिक्षुः प्रवर्तेत।

अथ सन्देहात् प्रवृत्तिरिति चेत्। यत्र प्रमाणानि

---

इत्यप्रकृतं वस्तुगतेः प्रकृतत्वादित्यन्यथाशंकामाह। ननूपाध्यभाव इति। तथा च वस्तुगतावेवाक्षेप इति नाऽप्रकृतत्वमिति भावः। ननु वस्तुगत्याक्षेपस्तु 'अवश्यं शंकया भाव्य'मित्यनेन परिहृतः शंकाया अप्रस्तुतत्वादित्यभिप्रेत्य परिहारस्य स्फुटत्वेनाह। परिहरतीति'। यथास्य परिहारता तथास्माभिर्वच्यते इति भावः। तदेवाह। उपाधिर्हीति। जात्या-स्वभावतः। अस्मदादिभिरनुपलभ्योपि सर्वज्ञस्योपलंभः स्यादित्याह। नानेति

---

(१) ऽनुपपत्तिः १ पु० पा०। (२) प्रमाणपथम० २ पु० पा०।

परिभूय शङ्कापिशाची प्रसरति कुतस्तत्त्वार्थसम्भावनापि। आस्तां तावत्परलोकप्रवृत्तिरिहलोकप्रवृत्तिरपि न स्यादित्याह। अन्तत इति। [११०।६]

यद्यपि विशिष्टाहारानन्तरं भूयोभूयः पुष्टिधातुसाम्यादि दृश्यते, मरणं तु रोगानन्तरमेव, तथाप्याहारविशेषोमरणस्यैव हेतुः कदाचिद्भवेत्, कथमन्यथाऽन्ते तदनन्तरमेवोपलभ्यते। यत्त्वियन्तं कालं न मारितवान् तत्र मन्त्रप्रतिबद्धवह्निवत्केनचित्प्रतिबद्धत्वात्। स एव प्रतिबन्धकः पुष्ट्यादिहेतुरित्यपि सम्भाव्येत। रोगादिकमेव पुष्ट्यादिहेतुः तत्तु पुष्ट्यादिकाले अदृश्यत्वादेव नोपलभ्यते। न हि पुष्ट्यादिकारणैर्दृश्यैरेव भवितव्यमित्यपि कदाचित्स्यात्। यथा चाप्रामाणिकोपाधिशङ्कया व्यभिचारित्वशङ्कयानुमाना(दि)निवृत्तिस्तथाऽप्रामाणिकानर्थशङ्कयैव विशिष्टाहारभोजनादिनिवृत्तिरित्यर्थः। तस्मादुत्प्रेक्षितार्थनिश्चयवत्तच्छंकापि वन्ध्यैव, प्रमितस्य तु निश्चयवच्छङ्कापि समीहोपयोगिनीत्याह। तस्मादिति। [११०।६]

तदयं सङ्क्षेपः। व्यभिचार एव प्रतिबन्धाभावः।

---

कथमन्यथेति। पूर्वाहाराजीर्णतायामाहारान्मरणस्योपलंभादित्यर्थः।

व्यभिचार एवेति। अव्यभिचरितसम्बन्धस्य व्याप्तित्वादित्यर्थ.।

**उपाधेरेव व्यभिचारशङ्का, प्रमाणनिश्चित एवोपाधि-**

यदि त्वनौपाधिकः सबन्धोव्याप्तिस्तदा व्यभिचार इति सम्बन्तं न प्रथमान्तं, तेन व्यभिचारे सत्येव प्रतिबन्धाभावः सोपाधिकत्वरूपोऽनौपाधिकत्वस्य व्याप्तित्वात् । उपाधेरेवेति । यद्यप्युपाधेर्व्यभिचारोन्नायकतया व्यभिचारनिश्चये न तत्संशयो युक्तस्तथापि साध्योपाध्योरिव साध्यसाधनयोरपि व्यभिचारादर्शनव्याप्तिग्राहकतौल्यन यथा साध्यव्यापकोपाधिव्यभिचारित्वात् साधनस्य साध्य व्यभिचारित्वमेवं साध्यव्याप्यसाधनाव्यापकत्वादुपाधेरेव साध्यव्यापकत्वमनुमीयते तथाचोपाधेर्न व्यभिचारनिश्चयः किन्तूभयत्र व्याप्तिग्राहकसाम्यात् व्यभिचारसंशय इति भावः । एतच्च साधनोपाध्योर्यत्रान्यतरत्रापि न व्याप्तिग्राहकतर्कावतारस्तदभिप्रायेणोक्तम् । यद्वा संदिग्धोपाधिमभिप्रेत्य एतदुक्तं, तथा चोपाधेरेवोपाधिः शंक्य एवेत्यर्थः ।

नन्वनौपाधिकः सम्बन्धो व्याप्तिर्नास्ति । तथाहि । यद्यपि साध्यव्यापकसाधनाव्यापकधर्मशून्यत्वज्ञाने व्यापकज्ञानस्य व्याप्तिरूपतयाऽन्योन्याश्रयः तद्वन्निष्ठात्यन्ताभावाऽप्रतियोगित्वस्य विरोधित्वरूपतया विरोधस्य च सहानवस्थाननियमात्मकत्वेन नियमस्य च व्याप्तिरूपत्वयान्योन्याश्रयः । प्रतियोगित्वं हि न विरोधित्वं गोत्वाश्वत्वयोर्मिथो विरोधित्वेपि प्रतियोगित्वाऽभावात् अन्योन्याभावप्रतियोगिनोरेकसमवायिवृत्तावपि तदभावाच्च, किंत्वभावाधिकरणयोः प्रतियोग्यनुयोगिनोरपि स्वरूपविशेष एव प्रतियोगित्वं स्वाभावविरहात्मकस्य तथापि वह्निधूमसम्बन्धेयत्किंचित्साध्या-

व्यापकधर्मशून्यत्वं नानौपाधिकत्वं तद्ग्रहेपि वह्नेर्धूमव्याप्यग्रहात्, नापि प्रकृतसाध्यव्यापकसाधनाव्यापकधर्मशून्यत्वं, तावता तयोः सोपाधित्वस्यैवापत्तेः तादृशधर्मज्ञानं विना तदभावानिरूपणात् सिद्ध्यसिद्धिव्याघातात्। यावद्वह्निमद्व्यापके धूमवत्त्वाव्यापके वह्निमत्वव्यापकत्वं वा निषिध्यत इति चेत्। न। तादृशधर्मिनिषेधस्य व्यधिकरणतया धूमत्वेनायोगात्। साध्यव्यापकव्याप्यत्वे चात्माश्रयात्। सोपाधेरपि साध्यव्यापकप्रमेयत्वादिधर्मव्याप्यत्वाच्च। अतएव साध्यव्यापकसकलव्यापकत्वमित्यपि निरस्तम्। तथासति साध्यव्यापकसकलव्याप्यत्वं सोपाधित्वं भवेत् तच्चासिद्धं किंचित्साध्याव्यापकव्याप्यत्वे विद्यमाने सकलतद्व्यापकाव्याप्यत्वासंभवात्। यावत्साध्यव्यापकं व्यापकं यस्य तत्वमनौपाधिकत्वं सोपाधौ तूपाधेरेव साध्यव्यापकस्याव्यापकत्वादिति चेत्। न, सोपाधेरपि तथात्वात्। साध्यधूमव्यापकार्द्रेन्धनस्यार्द्रेन्धनप्रभवसाधनविशेषे वह्निव्यापकत्वात्। एतेन यावत्साधनाव्यापकमव्यापकं यत्साध्यस्य तत्वं तदित्यपास्तम्। साधनवह्न्यव्यापकस्य यावदार्द्रेन्धनस्य प्रत्येकं साध्यधूमाव्यापकत्वात्। प्रत्येकं धूमस्यार्द्रेन्धनान्यत्वात्। साध्यं यावदव्यभिचारि तदव्यभिचारित्वं तदिति चेत्। न। साध्याव्यभिचारित्वस्यैव गमकत्वात् शेषवैयर्थ्यात्। तन्मात्रस्य च दूषितत्वात्। अपिच यावत्साध्यव्यापकमध्ये साध्यमनियतमस्तीति तावन्मात्रमेवास्तु शेषं व्यर्थं। तन्मात्रोक्तौ च साध्यव्यापकत्वे तन्निरुक्तौ व्यापकताभिधानवैयर्थ्यं साध्यव्याप्यत्वस्यैव गमकत्वात्। न चेष्टापत्तिः व्याप्यताया अद्याप्यनिरुक्तेः। अनौपाधिकत्वं न व्याप्तिः किन्तु तर्कादिवत्तद्ग्राहक-

मिति चेत् । तथापि यद्व्याप्तिज्ञानादनुमितिरुत्पद्यते का सा व्याप्तिः । नन्वस्तु सम्बन्धमात्रमेव व्याप्तिर्व्यभिचारिसम्बन्धस्यापि केन चित्सह व्याप्तिः यावद्धूमादिव्याप्तिर्विशिष्यैव वक्तव्या । तन्न । तथाहि । किंव्याप्तिस्वरूपमिदमुच्यते । व्याप्तिपदप्रवृत्तिनिमित्तं वा ? नाद्यस्तृतीयलिङ्गपरामर्शविषयव्याप्तिस्वरूपनिरूपणप्रस्तावे खस्यार्थान्तरत्वात् सम्बन्धमात्रज्ञानादनुमित्यनुत्पत्तेः । नान्यः सम्बन्धज्ञानेऽपि व्याप्तिपदाऽप्रयोगात् । न चाविनाभावोव्याप्तिः, स ह्यविनासाध्यस्याभिचारेण वाभावः विना साध्यस्य व्यतिरेकेण योभावस्तद्भावो वा । उभयमपि व्यभिचारिसाधारणं तस्यापि क्वचित्साध्यसत्त्वे सत्वात् । क्वचित्साध्यव्यतिरेके व्यतिरेकाच्च । केवलान्वयिन्युभयस्यापि व्यतिरेकाच्च । नापि कार्त्स्न्येन सम्बन्धः । तथा हि । किं कृत्स्नस्य साधनस्य साध्येन सम्बन्धः आहो कृत्स्नस्य साध्यस्य साधनेन सम्बन्धः । नाद्यः कस्या अपि वह्निव्यक्तेः सकलधूमसम्बन्धस्याभावात् । वह्नित्वं साध्यं तच्च सकलधूमसह चरितमेवेति चेत् । न तर्हि कृत्स्नशब्दस्यार्थः तस्याऽशेषानेक-वाचित्वात् । धूमत्वस्यैकत्वात् । न च साधनाधिकरणस्य कृत्स्नत्वं विवक्षितं न साधनस्य, कृत्स्नधूमाधिकरणसम्बन्धश्च वह्नित्वस्यास्त्ये-वेति वाच्यम् । एकव्यक्तिमात्राधिकरणयोर्व्याप्यव्यापकयोराकाश-कत्वशब्दयोस्तदभावात् । अतएव नान्यः विषमव्याप्तेतदभावाच्च । अतएव यावत्साधनाश्रयाश्रितसाध्यसम्बन्धोव्याप्तिरितिनिरस्तम् । नापि साधनसमानाधिकरणयावद्धर्मसमानाधिकरणसाध्यसामाना-धिकरण्यं व्याप्तिः, यावद्धर्मसामानाधिकरण्यं हि यावत्तद्धर्माधि-

करणाधिकरणत्वं तच्चाऽप्रसिद्धं, साधनसमानाधिकरणसकलसन्तान-मत्वाद्यधिकरणाप्रतीतेः। नापि स्वाभाविकः सम्बन्धः स्वाभाविकत्वं हि स्वभावजन्यत्वं वा स्वभाव एव वा। आद्ये नित्यसम्बन्धाव्याप्तिः। द्वितीयतृतीययोश्च व्यभिचारिसाधारण्यम्। नाप्यव्यभिचरितः सम्बन्धो व्याप्तिः स हि न साध्यात्यन्ताभाववदवृत्तित्वं द्रव्यत्वस्या-व्याप्यवृत्तिसंयोगाव्याप्यत्वापत्तेः। नापि साध्यवद्भिन्नसाध्यात्यन्ता-भाववदवृत्तित्वं साध्यवदन्यावृत्तित्वं वा, केवलान्वयिन्यसम्भवात्।

अथ केवलान्वयिनि केवलान्वयिधर्मसम्बन्धो व्यतिरेकिणि साध्य-वदन्यावृत्तित्वं व्याप्तिः एतयोरनुमितिविशेषजनकत्वम्, तत्सामान्ये पक्षधर्मतायाः प्रयोजकत्वात्। न च पक्षधर्मताज्ञानमात्रा-दनुमित्यापत्तिः, सर्व्वत्र विशेषसामग्रीसापेक्षत्वेनैव सामान्यसामग्र्या जनकत्वात् निर्व्विशेषस्य सामान्यस्याभावात्, विशेषद्वयसामग्र्याः तत्राभावादित्युच्यते। तन्न। धूमे साध्यवदन्यावृत्तित्वाभावात् वह्निमत्पर्व्वतादिव्यतिरिक्तेऽपि धूमसद्भावात्। न च साध्य-वत्सामान्यान्योन्याभाववदवृत्तित्वं धूमस्य नास्तीतिवाच्यम्। याव-द्विशेषाभावकूटादेव सामान्याभावव्यवहारोपपत्तौ तदतिरिक्ते तत्र मानाभावात्। अथ साध्यासामानाधिकरण्यानधिकरणत्वे सति व्याप्यत्वं, केवलान्वयिनि साध्यासमानाधिकरणत्वं निरधि-करणे आकाशादौ प्रसिद्धमिति चेत्। न। साध्यासमा-नाधिकरणत्वं साध्यानधिकरणाधिकरणत्वं साध्याधिकरणानधि-करणत्वं साध्यवैयधिकरण्यानधिकरणत्वं वा सर्व्वं केवलान्वयिन्य-व्यापकम्। अथ प्रमेयत्वादावपि संयोगित्वादिना व्यधिकरणेन

धर्म्मेणावच्छिन्नोऽत्यन्ताभावो घट एव, प्रसिद्धः तादृशधर्म्मावच्छिन्नाभावस्य केवलान्वयित्वात्। न च तमादाय व्यभिचारिण्यपि साध्याभाववद्वृत्तित्वमस्त्येवेति वाच्यम्। साध्याभावसमानाधिकरणयावदत्यन्ताभावप्रतियोगित्वस्य विवक्षितत्वादिति वाच्यम्। तन्न। तथा सति घट एव व्यभिचारापत्तेः। अथ साध्यत्वावच्छेदकावच्छिन्नप्रतियोगिकाभाववद्वृत्तित्वं व्यभिचारो, न च केवलान्वयिनस्तादृशाभावो घटे, तर्हि तादृशसाध्याभावाऽसामानाधिकरण्यं व्याप्तिः तथा चाप्रसिद्धिः तथैव तादृशाभावे मानाभावाच्चेत्यन्यत्र विस्तरः। नापि स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिसामानाधिकरण्यं व्याप्तिः यत्किंचिदत्यन्ताभाववति धूमस्य वृत्तेः संयोगादेरव्याप्यवृत्तेर्द्रव्यत्वाव्याप्यतापत्तेश्च तस्य स्वसमानाधिकरणात्यन्ताभावप्रतियोगिसमानाधिकरणत्वात्। न च संयोगित्वं द्रव्यत्वेनानुमीयते तच्च व्याप्यवृत्त्येवेति वाच्यम्। संयोगस्य व्याप्यवृत्तितया तत्सम्बन्धस्याप्यव्याप्यवृत्तित्वात्। न च प्रतियोगिविरोधित्वमभावविशेषणम् अव्याप्यवृत्त्यभावः प्रतियोगिसमानाधिकरणतयाऽविरोधीतियुक्तम्। संयोगे साध्ये प्रमेयत्वस्याव्यभिचारित्वप्रसङ्गात्। न हि गुणे यः संयोगात्यन्ताभावः स प्रतियोगिसमानाधिकरणात्तस्माद्भिन्नः अधिकरणभेदेनाभावभेदाभावात्। नापि साधनवन्निष्ठान्योन्याभावाप्रतियोगिसाध्यवत्कत्वं व्याप्तिः साधनवन्निष्ठान्योन्याभावाप्रतियोगि साध्यवद्यस्येति षष्ठ्यर्थो हि न व्याप्यव्यापकभावः व्याप्यत्वस्यानिरुक्तेः। नापि ज्ञाप्यज्ञापकभावः व्यभिचारिसाधारण्यात्, वह्निमत्पर्व्वतस्य धूमवन्महानसनिष्ठान्योन्याभावप्रतियोगित्वाच्च वह्निमान्पर्व्वतो धूम-

वान्मद्दानमं न भवति इति प्रतीतेः यावद्विशेषाभावादेवोपपत्तौ सामान्याभावे मानाभावादित्युक्तम्। नापि साधनसमानाधिकरणयावद्धर्मनिरूपितवैयधिकरण्यानधिकरणत्वं व्याप्तिः केवलान्वयिन्यसम्भवात्। अपि च सर्व्वत्र लक्षणे साध्यं यदि सिद्धिकर्मोच्यते तदा पर्व्वतीयधूमवन्ह्योरेव व्याप्यव्याप्यव्यापकभावः स्यादिति साध्यसाधनपदेन व्यापकव्याप्ययोरभिधाने आत्माश्रय इति सङ्क्षेपः

अत्रास्मत्पितृचरणाः—यावत्स्वसमानाधिकरणात्यन्ताभावप्रतियोगिप्रतियोगिकात्यन्ताभावाऽसामानाधिकरण्यं यस्य तस्य तदेवा नौपाधिकत्वं, सोपाधौ तु साध्यवन्निष्ठात्यन्ताभावाप्रतियोगिन उपाधेर्योऽत्यन्ताभावस्तेन समं साधनस्य सामानाधिकरण्यं उपाधेः साधनाव्यापकत्वात्। यावत्स्वव्यभिचारिव्यभिचारिसाध्यसामानाधिकरण्यं वा। यद्वा प्रतियोगिव्यधिकरणस्वसमानाधिकरणात्यन्ताभावाप्रतियोगिसामानाधिकरण्यं व्याप्तिः तदेव चाव्यभिचारित्वं अन्यवृत्तिवह्नितद्वतोरन्यवृत्तिधूमवन्निष्ठात्यन्ताभावप्रतियोगित्वेपि व्यधिकरणवह्निधूमयोर्न व्याप्तिः, किं तु तत्तद्धूमस्य समानाधिकरणतत्तद्वह्निना। न चैवं धूममात्रे न व्याप्तिरिति वाच्यम्। सर्वधूमव्यक्तेस्तथात्वात्, गुणे संयोगाभावस्य प्रतियोगिव्यधिकरण एव वस्तुतो यत्सम्बन्धितावच्छेदकरूपवत्त्वं यस्य तस्य सा व्याप्तिः। तथा हि धूमस्य वह्निसम्बन्धे धूमत्वमवच्छेदकं धूममात्रस्य वह्निसम्बन्धित्वात् वह्नेस्तु धूमसम्बन्धित्वे वह्नित्वं नावच्छेदकं धूमासम्बन्धिनि गतत्वेनातिप्रसक्तत्वात्, किं त्वार्द्रेन्धनप्रभववह्नित्वं तादृशं च व्याप्यमेव न च यत्तद्भ्यां लक्षणेऽननुगमो दोषः। लक्ष्यस्याप्यननुगतत्वात्

त्वेन शङ्कनीयः। साधने सोपाधिः साध्ये निरुपाधि-रेवं उपाधित्वेन निश्चेयः, अतोन्यथान्यथात्वेनेति। प्रमाणपरिदृष्टेष्वेव कश्चिदुपाधिर्भविष्यतीत्यत आह। प्रयत्नेनेति। [११०।१०]

किन्तु तत्तद्व्याप्तिज्ञानात्तत्तदनुमितिः। तथा चानुमितिहेतुव्याप्ति-स्वरूपजिज्ञासायां तदेव लक्षणं युक्तमित्यत्र मार्गोऽवधेयम्। साधने सोपाधिरिति।— — — — —रूपादन्योऽनुपाधित्वेन निश्चेय इत्यर्थः। अनौपाधिकत्वज्ञानं च न व्याप्तिग्राहकमितिवक्ष्यते तथात्वे वा व्यापकत्वमन्यदेव निरुक्तमिति नान्योन्याश्रयः इति वदन्ति। तन्न। — — — साधनपक्षधर्मावच्छिन्नसाध्यव्यापकोपा-ध्योरव्याप्तेः। न च तयोरनुपाधित्वमेव, दूषकताबीजसाम्यात् बाधानुन्नीतपक्षेतरेष्वतिव्याप्तेः। न च यत्र पक्षे साध्यमस्ति तत्र साध्याव्यापकत्वादेव न तस्योपाधित्वमिष्यते इति युक्तम्। पक्षा-तिरिक्ते साध्यव्यापकत्वनिश्चयेनैवोपाधित्वात् तस्य च तत्रापि सत्वात्। अन्यथा पक्षे साध्यसन्देहात्। अनुपाधित्वे उपाधिमात्र-मुच्छिद्येत साध्यव्यापकत्वानिश्चये— — — — — पक्षेतरत्वव्यतिरेकस्य न तथा।केवलान्वयिनि साध्यात्यन्ताभावाऽप्रसिद्धेः केवलव्यतिरेकिणि प्रत्यनुमानस्य विरुद्धत्वात्। अन्वयव्यतिरेकिणि चाऽसाधारणत्वा-दिति चेन्न— — —भावनापत्तेः एकेनैव भूयसां प्रतिबन्धात्। सन्दिग्धोपाधेरदूषकत्वापाताच्च। पक्षे तदभावस्य सन्दिग्धत्वात्। बाधोन्नीतस्यापि तस्यानुपाधित्वापत्तेश्च। यद्यपि — — — — —

तथापि साधनप्रतिपक्षाभिमते बाधे सत्युपाधिरस्त्येव । व्यभिचारो-न्नायकत्वेन दूषकत्वस्य च पक्षेतरत्वेपि सत्वात् । सत्प्रतिपक्षभावेन दूषकत्वेपि केवलव्यतिरेकिणः सपक्ष — — — — प्रतिपक्षत्वसम्भ-वाच्च । किञ्चपर्व्वतावयववृत्त्यन्यत्त्वं पर्व्वतेतरद्रव्यत्वादिकं च उपाधिः स्यादेव व्यतिरेकेऽसाधारण्याभावात् । अथ पर्व्वतेतरान्यत्त्वादित्य-त्रेतरान्यत्वस्याऽसिद्धत्वादसिद्धिवारकं पर्व्वतपदमिति व्यतिरेके व्यर्थविशेषणत्वान्न तस्योपाधित्वमिति चेन्न । बाधोन्नीतस्यापि तस्यैवमनुपाधित्वापत्तेः । अथ — — व्यभिचारावारके तत्र तस्यैव प्रयोजकत्वात् तस्य च प्रकृतेपि सत्वात् इतरान्यत्वाप्रसिद्ध्या तेन विना व्याप्तिग्रहासम्भवात् । अथोपाधिलक्षणे विपक्षाव्यावर्त्तक-विशेषणशून्यत्वं विशेषणं पर्व्वतेतरत्त्वादेश्च विशेषणस्य पक्षमात्र-व्यावर्त्तकतया विपक्षाव्यावर्त्तकत्वात् । आर्द्रेन्धनत्वादेश्च विशेषणस्य विपक्षायःपिण्डादिव्यावर्त्तकत्वात् एतच्च विशेषणव्यतिरेकेप्यस्ति विशिष्टव्यतिरेकात् बाधोन्नीते नाव्याप्तिः तत्र पक्षाभिमतस्य विपक्षत्वादित्युच्यते । तत्किं व्यभिचारवारकविशेषणवत्तया दूषकत्वमेवास्य नास्ति । ओमिति चेन्न । साध्यव्यापकत्वसाधना व्यापकत्त्वमात्रस्यैव तद्बीजत्वात् । व्यभिचारवारकविशेषणशून्य एव व्याप्तिग्रह इति चेन्न । सर्व्वस्यैव व्यभिचारवारक-विशेषणवत्त्वात् । न हि वस्तु व्यभिचारावारकविशेषणशून्यं भवति प्रमेयत्वादेः सर्वत्र सत्त्वात् । उपात्ते इति विशेषणा-न्नैवमिति चेन्न । यत्र क्वचिदुपात्तव्यभिचारावारकविशेषणस्याऽ-प्यव्यतिरेकात् । तत्रोपात्तव्यभिचारावारकविशेषणशून्यत्वं विव-

चितमिति चेन्न । सिद्धासिद्धिव्याघातात् । न हि तत्रोपात्तं तेन शून्यं चेति । अपि च व्यभिचारावारकं विशेषणं किं व्याप्तिविरोधि तद्धीविरोधि वा ? नाद्यः । शब्दोऽनित्योगुणत्वे सति कार्यत्वादित्यत्र व्याप्तेर्व्विद्यमानत्वात् । नान्त्यः नित्यावृत्तित्वे सति वृत्तिमत्त्वादित्यनेन प्रमाणेन स्वरूपसत्या व्याप्तेर्ग्रहणसम्भवात्, तथा च साध्यव्यापकत्वे सति साधनाव्यापकत्वं पक्षेतरत्वेऽप्यस्तीति तदभावात् साध्याभावः स्यादेवेति हेतोर्व्यभिचार एव । व्यभिचारे चावश्यमुपाधिरिति पक्षेतरत्वमेवोपाधिः स्यात् । अतएवासाधकमिदं सोपाधित्वादित्यत्रापि पक्षेतरत्वस्योपाधेः सम्भवादनुमानमात्रोच्छेदकतया न तदुपाधिरित्यपास्तम् । तस्य साध्यव्यापकतया व्यतिरेकस्य दूषणसम्बद्धत्वेन जातित्वाभावात् । भवतु वा कथञ्चित्पक्षेतरस्यानुपाधित्वं तथापि लक्षणमतिव्यापकमेवानुपाधावपि गतत्वात् । एतेन पक्षेतरत्वव्यावर्त्तकं विशेषणान्तरमपि प्रतिक्षिप्तम् । उपाधित्वाभावेपि दूषणसम्बद्धत्वात् । नापि लक्षणान्तरमुपाधेः सम्भवति । तद्धि न तावत्साध्यसमव्याप्तत्वे सति साधनाव्यापकत्वं विषमव्याप्तोपाधावव्याप्तेः । न च विषमव्याप्तोनोपाधिः व्यभिचारोन्नायकत्वस्य दूषकताबीजस्य तत्रापि सत्त्वात्, इदं साधनमेतत्साध्यात्यन्ताभाववद्वृत्ति एतत्साध्याव्यापकाव्याप्यत्वादिति प्रयोक्तुं शक्यत्वादिति । न चैवं पक्षेतरत्वमुपाधिः स्यादिति वाच्यम् । प्रयोजनमात्रक्षतेरन्यथैव समाधास्यमानत्वात् । दूषणान्तरसङ्कीर्णत्वान्न विषमव्याप्त उपाधिरिति चेत् । न । सर्व्वत्रोपाधिसाधारणत्वात् सर्व्वेषामेवोपाधीनां व्यभिचारादिसङ्करात् ।

अथ साध्यप्रयोजको धर्म उपाधिरित्युच्यते। प्रयोजकत्वं च न न्यूनाधिकदेशवृत्तेः, तस्मिन्सत्यप्यभवतस्तेन विनापि भवतश्च तदप्रयोजकत्वात् किन्तु समनियतस्येति चेन्न। प्रयोजकत्वं व्यापकत्वं तद्विषमव्याप्तस्याप्यस्ति। अथ व्याप्यत्वं? तदा व्यभिचारः। नहि समव्याप्तमेव व्याप्तं नोभयं समव्याप्तस्यैव समव्याप्तमित्युक्तौ साध्याविशिष्टत्वात्। तस्माद्दूषणौपयिकं प्रयोजकत्वं वाच्यं। तच्च विषमव्याप्तेप्यस्तीत्युक्तम्। अथ यद्धर्मोऽन्यनिष्ठतया भासते लोके तत्रैवोपाधिपदप्रयोगात् यद्वृत्तिव्याप्तिः साधनाभिमतनिष्ठतया भासते स एवोपाधिः स च न व्याप्यतामात्रेण व्यभिचारोन्नयनादिदूषकत्वबीजसम्भवात्। व्यापकत्वमपि तत्रान्तर्भाव्यमिति समव्याप्त एवोपाधिरिति चेन्न। शास्त्रेऽनुमानदूषणार्थमुपाधिव्युत्पादनं तच्च साध्यव्यापकत्वमात्रेणैवेति तत्रैवोपाधिपदप्रयोगात्। अथोपाधिर्नामासावुच्यते यदभावो व्यभिचारविरोधी, न च विषमव्याप्तस्याभावो व्यभिचारं विरुणद्धि, किन्तु समव्याप्तस्य, यत्र हि व्यभिचारस्तत्र साध्यसमव्याप्तमन्ततः साध्यमपि भवत्येवोपाधिः तस्यापि स्वं प्रति व्यापकत्वे सति व्याप्यत्वात् साधनाव्यापकत्वाच्च। अभेदेपि व्याप्यव्यापकभावात्। अन्यथा कृतकत्वेनापि नित्यत्वे साध्ये कृतकत्वमेवोपाधिः स्यात्। अभेदेन तु व्यापकत्वे साधनव्यापकत्वादनुपाधिः। विषमव्याप्ते तु साध्यव्यापको यो धर्मस्तद्व्याप्यत्वमात्रान्न तद्व्याप्यत्वसिद्धिः शब्दो नित्यो गुणत्वादित्यत्र हि साध्यव्यापकं प्रमेयत्वं व्याप्यं भवति गुणत्वं च साध्येन न व्याप्तं जलपरमाणुरूपादौ व्यभिचारात्। समव्याप्तेन व्याप्तं तद्व्यभिचारि चेति व्याघात एवेत्युच्यते। तन्न

अव्यभिचारे हि साध्यव्याप्यत्वन्तन्त्रं. न तु साध्यव्यापकव्याप्यत्वमपि, भवत्येव व्यभिचारस्य दर्शितत्वात् ।

न चैवं साध्यव्याप्यव्याप्यत्वमेवानौपाधिकत्वमस्त्विति वाच्यम् । साध्यव्याप्यत्वमित्यत्रापि तदेवानौपाधिकत्वं वाच्यं, तथा चान-वस्थितिः । यावदिति पदं साध्यव्यापके विशेषणं दत्तमेवानौ-पाधिकत्वलक्षण इति नोक्तव्यभिचारः । नापि पक्षधर्मावच्छिन्न-साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधित्वं तथाहि यद्यपि वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र पक्षधर्मोद्रव्यत्वं तदवच्छिन्न-साध्यव्यापकं उद्भूतरूपवत्वमुपाधिरनेन सङ्गृह्यते .तथाप्यार्द्रेन्धन-प्रभववह्निमत्वादिः केवलसाध्यव्यापक उपाधिर्नानेन सङ्गृह्यते। कोहि तत्र पक्षवृत्तिस्तदवच्छेदकः । अपि च शब्दोऽभिधेयःप्रमेय-त्वादित्यत्राश्रावणत्वमुपाधिःस्याद्भवति हि शब्दत्वादिजातौ साध्य-व्यापकमपि शब्दवृत्तिगुणत्वावच्छिन्नाभिधेयत्वस्याश्रावणत्वं व्यापकं साधनाव्यापकञ्च । नापि पक्षावृत्तित्वे सति साध्यव्यापकत्वमुपाधित्वं द्व्यणुकं सकर्तृकं कार्य्यत्वादित्यत्राणुत्वस्योपाधित्वापत्तेः तद्धि द्व्यणुके पक्षे न वर्त्तते साध्यव्यापकं च भवति अन्धकारोद्रव्यं स्वातन्त्र्येण प्रतीयमानत्वादित्यत्राश्रावणत्वस्यानुपाधित्वापत्तेः पक्षवृत्तित्वात् । नापि साधनवद्भिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधित्वं । तथाहि । यद्यपि ध्वंसोध्वंसप्रतियोगी जन्यत्वादित्यत्र भावत्वमुपा-धिरनेन सङ्गृह्यते । — — — — वृत्तितया साध्याव्यापकत्वेपि जन्यत्वावच्छिन्नसाध्यव्यापकत्वात् । तथाप्यार्द्रेन्धनप्रभवाग्निमत्वादेः पक्षधर्मावच्छिन्नसाध्यव्यापकोपाधेरनेनाऽसङ्ग्रह इत्यव्याप्तिः अलं

प्रमेयं रसवत्त्वादित्यत्रैव रसत्वावच्छिन्नसाध्यव्यापकस्य पृथिवी-त्वस्योपाधित्वप्रसङ्गः। इदमसाधकं सोपाधित्वादित्यत्र साधना-वच्छिन्नसाध्यव्यापकव्यभिचारित्वादित्यत्र साधनावच्छिन्नेत्यस्य वैयर्थ्यं साध्यव्यापकव्यभिचारित्वस्यैव गमकत्वात्। अतएव साध्यसाधन-सम्बन्धाव्यापकत्वमुपाधित्वमिति निरस्तम्। अपिच पक्षत्रयेऽपि विशिष्टसाध्यव्यभिचारं साधयित्वा पश्चात्केवलसाध्यव्यभिचारः साधनीय इत्यर्थान्तरं केवलसाध्ये विप्रतिपत्तौ विशिष्टस्य तद-विषयत्वात्। नापि यद्विशिष्टे साधने साध्यसामानाधिकरण्यं स उपाधिः रासभादीनामप्युपाधित्वप्रसङ्गात्। तद्विशिष्टेऽपि साधने साध्यसम्बन्धात्। यद्विशिष्ट एवेति विवक्षितमिति चेत्। न। प्रमेयत्वादेरप्युपाधित्वप्रसङ्गात्। यद्विशिष्टे साधने साध्यसामाना-धिकरण्यमस्त्येवेति चेन्न। गुरुत्वेन रसवत्त्वे साध्ये गन्धवत्त्वादेः साध्याव्यापकस्यापि उपाधित्वापत्तेः। नापि पर्य्यवसितसाध्यव्यापकत्वे सति साधनाव्यापक उपाधिः यद्यपि पर्य्यवसितं साध्यं पक्ष-धर्म्मताबललभ्यं यथा शब्दोनित्यत्वातिरिक्तशब्दधर्म्मातिरिक्तधर्म्मवान् प्रमेयत्वादित्यत्र पर्य्यवसितं यत्साध्यमनित्यत्वं तस्य व्यापकं कृत-कत्वमुपाधिः। तेनैव हेतुना कृतकत्वे साध्येऽनित्यमुपाधिबलेन सङ्कल्प्यते। तथापि द्व्यणुकस्य सावयवत्वे सिद्धे द्व्यणुकमनित्यद्र-व्यासमवेतं जन्यमहत्त्वानधिकरणद्रव्यत्वादित्यत्र निःस्पर्शद्रव्यसमवेतत्व-मुपाधिः स्यात् भवति हि नित्यद्रव्यसमवेतत्वं यत्पर्य्यवसितं साध्यं तस्य व्यापकं साधनाव्यापकं च, अपि च पक्षधर्म्मताबललभ्यसाध्यसिद्धौ निष्फल उपाधिः तदसिद्धौ च कस्य व्यापकः न हि सोपाधौ

पक्षधर्मताबलात्साध्यं सिद्ध्यति यद्व्यापक उपाधिः स्यात्। अथोपाधिमात्रव्यतिरेकिधर्मत्वं लक्षणं क्वचिद्बाधोन्नीतस्य पक्षेतरत्वस्याप्युपाधित्वात्। तत्तदुपाधेश्च तत्तत्साध्यव्यापकत्वे सति तत्तत्साधनाव्यापकत्वं वह्निधूमोपाधेस्तु न लक्षणमिदं लक्ष्याभावात्। न च पर्व्वतेतरत्वं वह्निधूमसम्बन्धे उपाधिः आपाद्याप्रसिद्धेः। न च पक्षेतरत्वं वह्निव्यापकं कुतो न भवतीति वाच्यम्। उपाधिलक्षणप्रस्तावे एतस्यार्थान्तरत्वादिति मतम्। तन्न। अनुमितिप्रतिबन्धकज्ञानविषयत्वावच्छेदकत्वमुपाधित्वमिह निरूपयितुमुपक्रान्तं अन्यस्याप्रयोजकत्वात्, तच्च न व्यतिरेकित्वमपि सहचारदर्शनादेस्तद्ग्राहकस्य तुल्यत्वात्, तथाच विरुद्धोभयव्यापकनिवृत्त्या साध्यतदभावाभ्यां पक्षे व्यावर्तितव्यम्, न चैवम्। तथा च साध्यव्यापकतासन्देहात् न पक्षेतरत्वमुपाधिरिति। तन्न। तथापि साध्यव्यापकतापक्षमालम्ब्य दूषकत्वाविरोधादिति।

एवं प्राप्तेऽस्मत्पितृचरणाः यद्व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वं स उपाधिरिति। उपाधिलक्षणं तु पर्य्यवसितसाध्यव्यापकत्वे सति साधनाव्यापकत्वं यद्धर्म्मावच्छेदेन साध्यं प्रसिद्धं तदवच्छिन्नं पर्य्यवसितं साध्यं, तत्रार्द्रेन्धनप्रभवत्वाद्युपाधौ महानसत्वादिरेव तादृशोधर्म्मस्तदवच्छेदेन साध्यस्य धूमस्य प्रसिद्धेः पक्षधर्म्मतावच्छिन्नसाध्यव्यापकोपाधौ साधनावच्छिन्नसाध्यव्यापकोपाधौ च साधनमेव, तथा च तदवच्छिन्नसाध्यव्यापकोपाधिव्यभिचारेण साधनस्य साध्यव्यभिचारः स्यादेव व्यापकव्यभिचारिणस्तद्व्याप्यव्यभिचारित्वनियमादतः साध्यव्यापकत्वसाधनाव्यापकत्व एव दूषकताबीजम्। न च

पक्षधर्मावच्छिन्नसाधनावच्छिन्नोपाधिव्यभिचारेण साधनस्य साध्य-व्यभिचारोन्नयनेऽर्थान्तरं विशेषणाव्यभिचारित्वेन निश्चिते साधने विशिष्टव्यभिचारस्य सिद्धतो, विशेष्यव्यभिचारमादाय सिद्धिः पक्ष-धर्मतावलात् अन्यथा प्रतीतेरपर्य्यवसानात्। न च पक्षधर्म-तावलात्साध्यसिद्धावर्थान्तरत्वं अतिप्रसङ्गात्। भवतु वा ततो-ऽर्थान्तरं तथापि हेत्वाभास एव अर्थान्तरस्य पुरुषदोषत्वात् तथा चाभासान्तरस्य तत्राभावादुपाधिरेव भावत्वादित्यत्र दोषः। यद्वा यः साधनव्यभिचारी साध्यव्यभिचारोन्नायकः स उपाधिर्व्य-भिचारोन्नायकत्वं च साक्षात्परम्परया वेति नार्थान्तरम्। न चैवं शब्दोऽभिधेयः प्रमेयत्वादित्यत्राश्रावणत्वं जलं प्रमेयं रसवत्वा-दित्यत्र पृथिवीत्वमुपाधिः स्यादिति वाच्यम्। केवलान्वयित्वग्राहक-मानान्तरादुपाधेर्विशिष्टाव्यापकत्वात्। न च स्वव्याघातकत्वेना-नुपाधौ पक्षेतरत्वेतिऽव्याप्तिः अनुकूलतर्काभावेन तस्य साध्या-व्यापकत्वनिश्चयात्। न हि सहचारदर्शनव्यभिचारादर्शनमात्रात् व्याप्तिग्रहः अप्रयोजकेऽपि तद्ग्रहप्रसङ्गात्। न चाप्रयोजकत्वादेव तद्गमकं नहि व्याप्तस्य पक्षधर्म्मत्वं प्रयोजकं नाम, सहचारदर्शनमात्रस्य संशायकत्वाच्च। तथापि व्यभिचारसंशयाधायकत्वेन सन्दिग्धोपाधिः स्यादिति चेत्। न। स्वव्याघातकत्वेन तस्य तत्र संशयानाधाय-कत्वात्। बाधोन्नीते च पक्षेतरत्वे साध्यव्यापकताग्राहकोऽनुकूल-तर्कोऽस्त्येव। अत एव पर्व्वतावयवत्त्यन्यत्वादयोऽप्युपाधयो निरस्ताः। धूमवत्त्वे साध्य आर्द्रेन्धनप्रभववह्निमत्त्वस्य बहिरिन्द्रियप्रत्यक्षे चोद्भूत-रूपवत्वस्य व्यापकताग्राहकः प्रत्यक्षोऽवधृतःमैत्रतनयश्यामत्वे साध्ये

शाकपाकजत्वस्य चैतन्यावच्छिन्नः कार्यकारणभाव एवं जन्यानित्यत्वे साध्ये भावत्वस्य व्यापकत्वग्राहको घटोन्मज्जनप्रसङ्गात्। एवमन्येषामपि तत्तदनुकूलतर्काद्व्यापकत्वग्रह इति।

सम्प्रदायविदस्तु यद्व्यावृत्त्या यस्य साधनस्य साध्यं व्यावर्त्तते स धर्मस्तत्र हेतावुपाधिः स च धर्मः कतमो भवति, यस्य व्यावृत्तिः साध्यसाधनसम्बन्धविरोधिनी, यथार्द्रेन्धनवत्वं वह्निमत्वे, व्यावर्त्तते हि तद्व्यावृत्त्या धूमवत्वं तप्तायःपिण्डे, एवं व्यावर्त्तते भावत्वव्यावृत्त्या प्रध्वंसे जन्यानित्यत्वसम्बन्ध इति पक्षधर्मताबलादनित्यत्वाभावः सिद्ध्यति। तथा वायावुद्भूतरूपवत्वं निवर्त्तमानं बहिर्द्रव्यत्वे सति प्रत्यक्षत्वं निवर्त्तयत् पक्षधर्मताबलेन प्रत्यक्षत्वाभावमादाय सिद्ध्यति। पक्षेतरस्तु नोपाधिः स्वव्याघातकत्वेन तद्व्यतिरेकस्य साध्याव्यावर्त्तकत्वादित्याहुः।

स चायं निश्चित एव, क्वचित्सन्दिग्धोपाधिः, स च नैवमाकारोयमनुपाधिरस्ति न वेति तस्य शङ्कापिशाचीत्वेन उपपत्तिसमप्रपञ्चत्वात्। किन्तु साध्यव्यापकत्वे साधनाव्यापकत्वे चोभयत्र वा सन्देहात्। यथेश्वरानुमाने तुल्ययोगक्षेमत्वेन साधनस्य साध्यव्यापकत्वानिश्चयदशायां शरीरजन्यत्वं, तथा मैत्रतनयत्वेन श्यामत्वे साध्ये शाकपाकजत्वस्य साध्यव्यापकत्वानिश्चयदशायां शाकपाकजत्वमिति क्रमेणोदाहरणानि।

अत्रोपाधित्वसन्देहो नोपाधिर्न वा हेत्वाभासान्तरमिति तदुद्भावने निरनुयोज्यानुयोग इति केचित्।

तन्न। व्यभिचारस्य हेत्वाभासतया तच्छङ्काधायकत्वेन सन्दि-

अयं प्रयत्नार्थः। प्रत्यक्षोपलम्भा(१)त्तावद्योग्यानुपलब्धानैकान्तिकवदस्यापि दोषत्वात्। स चायमुपाधिर्नातिरिक्तो हेत्वाभास इति व्यवस्थापितमधस्तादिति स्थिते, किमयं स्वव्यतिरेकद्वारा सत्प्रतिपक्षः साध्याव्यापकाव्याप्यत्वेन व्याप्तिविरहोन्नायको-व्याप्तिविरहरूपत्वेनासिद्धो वा व्यभिचारोन्नायको वा। नाद्यः सन्दिग्धोपाधेरदूषकत्वापातात् तद्व्यतिरेकस्य पक्षेऽसिद्धत्वात्। बाधोन्नीतपक्षेतरत्वस्य व्यतिरेकेऽसाधारणतयाऽनुपाधित्वापत्तेश्च, सत्प्रतिपक्षे सत्पक्षान्तरानुद्भावनात्, एकेनैव भूयसामपि प्रतिबन्धात्। न द्वितीयः साध्यव्याप्यसाधनाभिमताव्यापकत्वेनोपाधेरेव साध्यव्यापकत्वसाधनात्। न तृतीयः तद्व्यतिरेकलज्ञानस्य व्याप्तिज्ञानकारणत्वेन विघटकतया स्यात् तच्चान्यस्य साध्यव्यापकत्वसाधनाव्यापकत्वज्ञानमन्यस्य व्याप्तिज्ञाने स्वतो न दूषणमित्यनेन निरस्तमेव। न चतुर्थः साध्यव्याप्यव्यभिचारित्वेनोपाधेरेव साध्यव्यभिचारित्वानुमानप्रसङ्गात्। मैवम्। पक्षे बाधकेन यावन्नोपाधेः साध्यव्यापकत्वं निश्चीयते तावदुपाधित्वाभावेन दूषणतैवास्य नास्तीति न (स)दूषकताबीजचिन्ता। तन्निश्चये च साधनाभिमतस्य साध्य(त्वा)व्याप्यत्वानिश्चयान्न तद्व्यभिचारित्वेन तदव्यापकत्वेन वोपाधेः साध्यव्यभिचारित्वं, तदव्यापकत्वं वाऽनुमीयते। तस्मात्साध्यव्यापकव्यभिचारात् तद्व्यभिचारोन्नयनद्वारा साध्यव्यापकाव्याप्यत्वेन व्याप्तिविरहोन्नायकतया वोपाधेर्दूषकत्वमिति पितृचरणोन्नीतमार्गानुगमनोन्मुखैरस्माभिरुक्तो विस्तरोनानवधेय इति।

(१) लभ्या इति पु० २ पा।

लब्धेरेव निरस्ताः। प्रमाणान्तरपरिदृष्टानामपि व्यापकानामुपाधित्वे वह्नेः सार्वत्रिकत्वप्रसङ्गः। अव्यापकानामपि नित्यानामुपाधित्वे वह्नेः सदाऽनुवृत्तिप्रसङ्गः। अनित्यास्त्रिविधाः। उभया[१]व्यभिचारिण अन्यतराव्यभिचारिण उभयव्यभिचारिणः। तत्र प्रथम[२]द्वितीया उपाधिलक्षणाभावादेव नोपाधयः। अन्यतराव्यभिचारिणश्च द्विविधाः। धूममात्राव्यभिचारिणो वह्निमात्रा[३]व्यभिचारिणश्च। तत्र पूर्वं पूर्ववत्। वह्नि-

उक्तरीत्या उपाधिशङ्कानिरासे प्रयत्नोपयोगार्थमाह। प्रमाणेति। व्यापकानामुपाधीनामुपाधित्वेन समव्याप्तोपाधिपक्षमाश्रित्य दूषणमाह। सार्वत्रिकत्वेति। विषमव्याप्तोपाधिपक्षे साधनव्यापकत्वं तेषामिति भावः। नित्यानां परमाण्वादीनामित्यर्थः। अत्रापि विषमव्याप्तोपाधिपक्षे साधनव्यापकत्वमेव दोषः सम्मतः। तथेति। साध्यं साधनं चेत्युभयम्। यद्यप्युभयाव्यभिचार्यनित्यत्वप्रमाणपरिदृष्टो नैयायिकानामप्रसिद्धः महानसादीनामुभयव्यभिचारित्वात् वह्निमत्वस्य चोपाधेर्नित्यत्वात् तथापि वह्निरेव वह्निव्यापकस्तथाभूतः प्रसिद्धः अभेदेपि व्याप्यव्यापकभावादिति भावः। तत्रेति। प्रथमे साधनव्यापकत्वात् द्वितीये साध्यव्यापकत्वादित्यर्थः। धूममात्रेति। मात्रशब्दोऽत्रसामान्यार्थः नतु व्यवच्छेदार्थः वह्निधूमयोरेव व्याप्त्यापत्तेः। पूर्व्व इति। साधनव्यापकत्वादित्यर्थः। व्याप्य-

(१) उभयव्य २ पु० पा०। (२) प्रथमतृतीया इति २ पु० पा०।
(३) स्थिति, तत्र पूर्वे लक्षणाभावादेव नोपाधयः। वह्निमात्रा इति २ पु० पा०।

साध्याव्यभिचारिणोऽपि द्विविधाः। व्याप्यमात्ररूपा उभयरूपाश्चेति।

पूर्ववदेव पूर्वे। उभयरूपास्तु सामग्रीतः, नापि परे विद्यन्ते। सा च न क्वचिदुपाधिः धूमस्य वह्निनेव तथापि स्वभावसम्बन्धात्। वह्निजननसामग्र्यां वह्ने-

---

मात्रेति। मात्रपदेन वह्निव्यापकत्वनिषेधः। तथा च साध्याव्यापकत्वमित्याह। पूर्व्व इति। उभयरूपा इति। साध्यव्याप्यत्वे सति साध्याव्यापका इत्यर्थः। सा चेति। यद्यपि सश्यामोमैत्रतनयत्वादित्यत्र शाकपाकजत्वं श्यामसामग्य्रेवोपाधिः तथापि यत्र साध्यसामग्र्या सह साधनस्य व्याप्तिग्राहकमस्ति तत्र साधनव्यापकत्वात् सामग्री नोपाधिः, यत्र तु तन्नास्ति तत्र सामग्र्युपाधिरेव। न च तेनैव हेतुना शाकपाकजत्वमपि साध्यं तत्र श्यामत्वस्योपाधित्वात्। उभयस्यापि साधने चार्थान्तरं श्यामत्वमात्रे हि विप्रतिपत्तिः न तूभयत्र। ग्रन्थस्तु सामग्री क्वचिन्नोपाधिः यत्र साधनाव्यापिका अन्यत्र तूपाधिरेवेति योजनीयः। न चैवं धूमाद्वह्न्यनुमाने वह्निसामग्र्युपाधिः स्यात् तत्र वह्निनेव तत्सामग्र्यापि सह धूमस्यानौपाधिकत्वनिश्चये साधनव्यापकत्वनिश्चयात्। मैत्रतनयत्वं व्याप्यश्यामसामग्र्याभावमित्यत्र च कार्य्यकारणभावादीनां व्याप्तिग्राहकाणामभावादित्याह। धूमस्येति। वह्निजननेति। यद्यपि वह्निजन्यं न वह्निद्व्यणुकं वह्नित्वस्य परमाणावृत्त्याऽवयविमात्रवृत्तित्वात्। तथापि वह्निप्रत्यक्षसाधने यदि वह्निसामग्र्युपाधिरुच्यते तदा वह्निरेवोपाधिः स्यात्

रप्यन्तर्भावाच्च। न च कृतकत्वानुष्णत्वयोः सम्बन्धे तेजोजातीयेतरत्ववदिहापि साध्यधर्मजातीयेतरत्वमुपाधिः। तस्य प्रमाणबाधैकमात्रनियतत्वात्।

अत एवोपाधिमप्यपश्यन्तो विरोधिप्रमाणसदसद्भावनिश्चयव्यग्रतया मुहूर्तमनुमितौ विलम्बामहे। तदैव सर्वथोपाध्यनुपलम्भात्तदभावनिश्चयो यथा धूमसम्बन्धे तथाऽन्यत्रापि द्रष्टव्यः। तर्कश्च शङ्कानिराकरणपटीयान्विजयते।

साध्यं च नोपाधिः व्यभिचारसाधने साध्यावैशिष्ट्यप्रसङ्गादनुमानमात्रोच्छेदाच्चेति भावः। ननु वह्निरनुष्णः कृतकत्वादित्यत्र बाधोन्नीतवह्नीतरत्ववत्पर्वतेतरत्वमुपाधिः स्यादित्यत आह। न चेति। तत्र वह्नावुपजीव्यप्रत्यक्षेण साध्याभावप्रमया साधनसाध्यव्यभिचारनिश्चयात् व्यभिचारे चाऽवश्यमुपाधिसम्भवादन्यत्र चोपाधेरसम्भवात् पक्षेतरत्वमुपाधिः, प्रकृते च न तथा अनुमानमात्रोच्छेदप्रसङ्गादित्यर्थः। अत एवेति। यद्यपि बाधितत्वज्ञानाभावोऽनुमितिप्रयोजको न त्वबाधितत्वज्ञानमिति विरोधिप्रमाणाभावनिश्चयोऽप्रयोजकः तथापि विरोधिप्रमाणसंशयस्यानुमितिप्रतिबन्धकतया तदभावस्याप्यपेक्षणीयत्वमस्त्येवेति भावः। नन्वेतावता प्रत्यक्षोपाध्यभावनिश्चयेऽप्यतीन्द्रियतदभावः कथं निश्चेयः कथं वा साध्यव्यापकोऽयं साधनव्यापको न वेति संशयस्य देशान्तरकालान्तरयोर्व्यभिचारसंशयस्य वा निवृत्तिरित्यत आह। तर्कश्चेति। यथा चैतत्तथाऽनुपदमेव

ननु प्रमाणसिद्धं वस्तुनिस्वभावोऽवलम्बनं, न तु स्वभावावलम्बनेनैव वस्तुव्यवस्थेत्याशयवान्पृच्छति। केन पुनरिति। [११०।१८]

प्रथमदर्शनेनैव वह्निधूमयोरव्यभिचारग्रहणं, द्वितीयादिभिस्तु शङ्कामात्रमपनीयत इति केषांचिन्मतमपनयन्नेव प्रकृतं प्रपञ्चयति। यदा तावदिति। ११०।२१

अत्र चैवं परमार्थः। योयमुपाधिमादाय येन सह सम्बध्यते स निरुपाध्यवस्थायां तस्यागमको यथा वह्निर्धूमस्य। सोपाध्यवस्थायामपि उपाधेः, केवलस्यैव सामर्थ्ये स एव गमको न तूपहितः। यथा ऽऽहारपरिणतिभेदस्यैव गमकत्वे मैत्रतनयत्वं, यत्र तूपाधिः

वक्ष्यामः। ननु स्वाभाविके सम्बन्धे कुतः प्रमाणापेक्षेत्यत आह। नन्विति। ननु प्रमाणाभिधानमुपक्रम्य संशयाभिधानमर्थान्तरमित्यत आह। प्रथमदर्शनेति। प्रथमदर्शनेनैव व्याप्तिनिश्चयेऽग्रे ततः संशयो न स्यादिति संशयान्यथानुपपत्त्या न तथेति भावः। यथा वह्निरिति। आर्द्रेन्धनप्रभवत्वमुपाधिमादाय वह्निर्धूमेन सह व्याप्त इति तदभावे अयं धूमवान् वह्निमत्त्वादित्यत्र वह्निर्धूमस्य न गमक इत्यर्थः। यथा आहारेति। पुरुषश्यामत्वे शाकपाकजत्वस्यैव गमकत्वं, न तु तद्विशिष्टमैत्रतनयत्वस्य, व्यर्थविशेषणत्वादित्यर्थः। यत्र त्विति। आर्द्रेन्धनप्रभवत्वमात्रस्य गुणादावपि सत्त्वात्तन्मात्रं

केवलोऽव्यभिचारी तत्र सोपाधिरपि गमक एव। यथार्द्रेन्धनवान् वह्निर्धूमस्येति। तत्कस्य हेतोः। विशिष्टस्य निरुपाधित्वादिति। भूयोदर्शनमिति। [१११।५] तज्जनितसंस्कारसहितमित्यर्थः।

अग्रे चैतदेव स्फुटीकृतमित्यविरोधः। मणिभेदतत्त्ववदिति। [१११।६] यथा मणीयर्यैर्विशेषैस्तत्तद्व-

न धूमगमकमित्युपाधिरूपविशिष्टोऽप्यार्द्रेन्धनप्रभववर्त्मत्वादिर्गमक एवेत्यर्थः। ननु भूयोदर्शनं यदि व्याप्तिग्राहकं तदाऽग्रे संस्कारस्य तद्ग्राहकत्वाभिधानं विरुद्धमित्यत आह। तज्जनितेति। यथेति। विशेषोऽवान्तरजात्यादिभिर्मणेः पद्मरागादिव्यवहारविषयोधारकस्य शुभाशुभजनकस्यानुमीयत इत्यर्थः।

ननु भूयांसि दर्शनानि प्रत्येकं व्याप्तिं गमयेयुः मिलितानि वा? नाद्यः प्रत्येकदर्शने सत्यपि तत्र संशयात्, नान्त्यः, आशुविनाशिनां क्रमभाविनां यौगपद्यासम्भवात्। यथा प्रत्यभिज्ञायां संस्कारसहितमिन्द्रियं हेतुः तथा तावद्दर्शनजसंस्कारसहितं तत्तथेति चेन्न। तत्र संस्कारेन्द्रिययोः समानविषयत्वात् तथैवौचित्यात्। अत्र च सहचारविषयकः संस्कारो व्याप्तिविषयकमिन्द्रियमिति भिन्नविषयकत्वात्। अपि च भूयोदर्शनं न भूयांसि दर्शनानि एकचैव धारावाहिकेन तद्ग्रहप्रसङ्गात् त्रिचतुरादिरूपत्वेनाननुगमाच्च। नापि भूयःसु स्थानेषु दर्शनं एकाश्रयाश्रितरूपरसयोस्तदभावात्। नापि भूयसां दर्शनं गोत्वद्रव्यत्वयोस्तदभावात्

किञ्च शतशः सहचरितयोरपि पार्थिवत्वलोहलेख्यत्वयोर्व्याप्त्यग्रहात् व्यभिचारात्। न च तत्तत्समानं तर्कसहकृतस्य तद्ग्राहकत्वे सहचारदर्शनादिरेव तर्कसहकृतो व्याप्तिग्राहकोऽस्त्वावश्यकत्वात् किं तत्र भूयोदर्शनेन। न चैवमस्त्विति वाच्यम्। तर्कस्यापि व्याप्तिमूलकत्वात्। तत्र तर्कं विना यदि तन्निश्चयस्तदा व्यभिचाराज्ञ सोऽपि तद्धेतुः स्यादिति। अथ तर्कान्तरात्तन्निश्चयस्तदाऽनवस्था। न चानादिसिद्धव्याप्तिका एव केचित्तर्का इति वाच्यम्। तत्र प्रमाणानुयोगे अनुमान एव पर्य्यवसानात्। न च व्याप्तिग्रहान्यथानुपपत्त्या तर्कस्यानादिसिद्धव्याप्तिकत्वज्ञानं अनुपपत्तेरनुमानत्वात्। अथ सर्व्वोपसंहारेण सामान्यलक्षणया प्रत्यासत्त्या व्याप्तिनिश्चयः सामान्यरूपत्वं च न सकृद्दर्शनगम्यमिति तद्भूयोदर्शनापेक्षेति चेत्। न। सकृद्दर्शनगम्यत्वादिभिस्तदनभ्युपगमात्। अभ्युपगमेऽपि वस्तुसत् सामान्यं प्रत्यासत्तिः न तु सामान्यरूपतया ज्ञातं प्रत्यासत्त्यन्तरे तथाऽकल्पनात्। न च काकतालीयतादिशङ्कानिरासार्थं द्वितीयादिदर्शनापेक्षा, तत्त्वेऽपि शङ्कातादवस्थ्यात्। अथानौपाधिकत्वज्ञानस्य व्याप्तिज्ञानहेतुतया साध्यसहचरितानामनुपाधित्वनिश्चयस्य साध्यव्यापकसाधनव्यापकत्वनिश्चयसाधनाव्यापकसाध्याव्यापकत्वनिश्चयसाध्यत्वात् तस्य च भूयोदर्शनसाध्यत्वात्तदपेक्षेति चेत्। न। योग्यानां तेषां ततोऽनुपाधित्वनिश्चयेऽप्ययोग्योपाधिसंशयाधीनव्यभिचारशङ्कातादवस्थ्यात्। अनुमानात्तदनुपाधित्वनिश्चये अनवस्थापत्तेः। तस्मात् परिशेषेण सकृद्दर्शनगम्यैव व्याप्तिः उपाध्यभावस्य व्याप्तित्वात्। तस्य च केवलाधिकरणरूपतया

चक्षुरादिना प्रथमदर्शनगम्यत्वात् । न चाद्ये व्याप्तिसंशयानुपपत्तिः । सन्नप्युपाधिरुपाधित्वेन मया न ज्ञात इति संशयात् विद्यमानः ज्ञानप्रामाण्यसंशयाद्वा तदुपपत्तेः । न ह्याप्तिसंशयानुरोधात् पूर्व्वव्याप्तिनिश्चयसामग्र्यामपि तन्निश्चय इति युज्यते घटज्ञान-सामग्र्यामपि तथा कल्पनापत्तेः । न चैवं प्रथमदर्शनानन्तर-मेवानुमितिः स्यात् । उपाधिस्मरणसहकृतस्य योग्योपाध्यनु-पलम्भस्यानुमितावुपाध्यभावव्यवहारे च कर्त्तव्ये व्याप्तिज्ञानसह-कारित्वात् । सैवम् । उपाध्यभावो हि नानौपाधिकत्वं यत्-किंचित्साध्यव्यापकसाधनाव्यापकधर्म्मशून्यत्वस्य धूमेऽप्यभावात् व्यभि-चारिण्यपि गतत्वाच्च । किन्तु यावत्स्वव्यभिचारिव्यभिचारिसाध्य-सामानाधिकरण्यमित्युक्तं, तच्च न सकृद्दर्शनगम्यम्, अपि च वस्तुगत्या या व्याप्तिस्तज्ज्ञानं नानुमितिहेतुरतिप्रसङ्गात् । किन्तु व्याप्तित्वेन । न चोपाधेरज्ञाने तथात्वेन ज्ञानं सम्भवति विशेषणज्ञानं विना विशिष्टज्ञानानुत्पादात् । किंच प्रतियोगिज्ञानस्याभावव्यवहार हेतुत्वेऽप्युपाधिज्ञानं विनापि तदभावज्ञानादनुमितिः प्रथम दर्शनानुपदं स्यादेव, न ह्युपाध्यभावव्यवहारोऽनुमितिहेतुरपि तूपाध्यभावज्ञानं तच्च तदानीं जातमेव, तथापि सकृद्दर्शनस्येव भूयोदर्शनस्यापि संशायकत्वात्तर्कदोषाच्च कथं व्याप्तिग्रहः ।

अत्रास्मत्पितृचरणाः व्यभिचारज्ञानविरहसहकृतं सहचारदर्शनं व्याप्तिग्राहकं, न च सर्वेषां व्यभिचारज्ञानविरहित्वमशक्यं ज्ञातुं स्वीयव्यभिचाराज्ञानं च व्यभिचारिसाधारणमिति वाच्यम् । न हि व्यभिचारज्ञानाभावो ज्ञात उपयुज्यते अपि तु स्वरूपसन्ने-

वेन्द्रियसहकारी। व्यभिचारज्ञानं च तन्निश्चयस्तच्छङ्का च। तत्र-शङ्का क्वचिदुपाधिसन्देहात् क्वचिद्विशेषादर्शनसहितसाधारणधर्म-दर्शनात्। तद्विरहस्तु क्वचिद्विपक्षबाधकतर्कात् क्वचित् स्वतःसिद्ध एवेति न तर्कस्य व्याप्तिग्रहमूलकत्वेऽनवस्था, यावदाशङ्कन्तर्कानुसर-णात्, यत्र व्याघातेन शङ्कैव नावतरति तत्र तर्कं विनैव व्याप्ति-ग्रहः, तथाहि—धूमो यदि वह्न्यसमवहितकारणाजन्यत्वे सति वह्नि-समहिताजन्यः स्यादजन्यः स्यादित्यत्र किं धूमोऽवह्नेरेव भविष्यति क्वचिद्वह्निं विनापि भविष्यति तदकारणक एवोत्पन्नः स्यादित्याशङ्का स्यात्तत्र सर्वत्र स्वक्रियाव्याघातः, यदि गृहीतान्वयव्यतिरेकं हेतुं विना कार्योत्पत्तिं शङ्केत तदा धूमार्थं कथं स्वयं वह्निमुपाददीत। परप्रतिपत्त्यर्थं कथं शब्दं प्रयुञ्जीत। न हि यद्व्यतिरेकेण यस्योत्पत्तिराशङ्क्यते नियमतस्तदर्थं तदुपादीयत इति सम्भवति। न च केवलान्वयिनि व्यभिचारशङ्काया असम्भवः। तत्रापि समानाधिकरणात्यन्ताभावप्रतियोगिसाध्यं न वेति तस्याः सम्भवात् तस्या व्यापकतागोचरत्वेऽपि समानसंवित्संवेद्यतया व्याप्यगोचरत्वात्। न च व्याघातस्य विरोधस्वरूपतया तस्य सहानवस्थाननियमरूपतया नियमस्य च व्याप्तिरूपतया अनवस्था, न हि विरोधिप्रतिसन्धानं तादृशशङ्कानिवर्त्तकमाचक्ष्महे किन्तु स्वक्रियैव तादृशशङ्कोत्पत्ति-प्रतिबन्धक इति क्रमः।

अतएव 'व्याघातो यदि शङ्कास्ति न चेच्छङ्का ततस्तराम्। व्याघातावधिराशङ्का तर्कःशङ्कावधिः कुतः'—

इति खण्डनमपास्तम्। स्वक्रियाया एव तादृशशङ्काप्रति-

हारविषयो भवति धारयितुश्च तत्तत्फलभेदसम्पादक-श्चोन्नीयते ते ते सूक्ष्मविशेषाः परीक्षकैरुन्नीयन्ते भूयो-भिर्दर्शनैस्तथाचापीति।

तथाहि प्रथमतस्तावद्भूयोदर्शनं काकतालीयन्याय-

---

बन्धकतया शङ्काया, व्याघातानाश्रयत्वात् एतादृशतर्कावतारस्य न भूयोदर्शनं विनेति भूयोदर्शनादरो न तु स्वत एव प्रयोजकः। अतएव वक्ष्यति। न वारसङ्ख्यानियम इति। यावता दर्शनेन तर्काभावस्तावतो विवक्षितत्वादिति भावः। भूयोदर्शनाहित-संस्कारस्य मनःसहकारी तेन चक्षुरादिव्यापारं विनापि सहचार-ज्ञानवतो व्याप्तिग्रहः। न चैवं शाब्दादेरिव संस्कारस्य मानान्तर-तापत्तिः। तर्कावतारे तस्य प्रयोजकत्वात्। तस्य चाप्रमात्वादतो निद्रादिवदप्रमाजनकत्वान्न मानान्तरत्वम्। ननु वस्तुगत्या सन्नपि तर्को न व्याप्तिग्राहकः तदभावेपि व्यभिचारिणि व्याप्तिग्रहात्। नापि तर्कत्वेन ज्ञातः व्यभिचारिसाधारण्येन संशायकत्वादिति। सहचारदर्शनव्यभिचारादर्शनवत्तर्कत्वेन ज्ञानं व्यभिचारिसाधारण-मिति. न तावता व्याप्तिनिश्चय इति चेन्न। स्वरूपसत एव व्याप्तिग्राहकत्वात् न हि इयं व्याप्तिसामग्री, अपि तु तद्ज्ञान-सामग्री, तथा च सत्तर्कात् व्याप्तिप्रमा, तदभावादप्रमेति न काचित् क्षतिः। यथा विशेषदर्शनस्य प्रमात्वाप्रमात्वाभ्यां विशेषज्ञानस्य तथात्वमिति। येषां च तर्कं विनैव सहचार-दर्शनादेव व्याप्तिग्रहः. तेषां पक्षेतरत्वमुपाधिः स्यादित्युक्तम्।

व्युदासाय। ततः सातत्योर्द्धगत्यादि विशेषावसायाय। तत उपाधिशङ्कानिरासाय। तत्र च नवारसङ्ख्यानियमाभ्युपयोगः। मृदुमध्यातिमात्रबुद्धिभेदेन पुंसां विचित्रशक्तित्वात्। न चैवं लक्षणशास्त्रवैयर्थ्यं। अनियतवारविशिष्टतत्वसाक्षात्कारावधि योगाभ्यासोपदेशवदिहापि निरुपाधिसम्बन्धबोधावधिनियमात्। कार्यकारणभावावगमेऽप्ययमेवमार्गो न तु पञ्चप्रत्यक्षानुपलम्भाः। अन्यतोऽनागतस्य तत्राऽसतस्तदनन्तर-

इयं च प्रत्यक्षव्याप्तिग्रहसामग्री तदभावेपि शब्दानुमानाभ्यां व्याप्तिग्रहादिति सङ्क्षेपः। तत इति। धूममात्रस्य वह्निव्यभिचारित्वाद्यद्विशेषणविशिष्टस्य तदव्यभिचारित्वं तन्निश्चयार्थमित्यर्थः। तत इति। व्यभिचारोन्नेयोपाधिस्तद्दर्शनेनाभावनिश्चय इत्यर्थः। न चैवमिति। पुरुषशक्तिवशादेव तदुपपत्तेरित्यर्थः। अनियतवारेति। यथा योगाभ्यासे न वारसङ्ख्यानियमः किन्तु यावताभ्यासेन साक्षात्कारोभवति तावत् विवक्षितः तथा यावता दर्शनेन यस्योपाधिव्यतिरेकनिश्चयः तावदभिप्रेतमित्यर्थः।

पञ्चप्रत्यक्षेति। प्रथमं धूमानुपलम्भः ततो वह्न्युपलम्भः ततो धूमोपलम्भः ततो वह्न्यनुपलम्भः ततो धूमोपलम्भः। तदेवमुपलम्भद्वयमनुपलम्भत्रयं चेति पञ्चप्रत्यक्षानुपलम्भा बौद्धोक्ता न कार्य्यकारणभावनियमहेतव इत्यर्थः। अत्र हेतुमाह। अन्यत इति।

मुपलम्भेऽपि ततोऽन्यस्मादनुत्पत्तेः भावमात्रेण निश्चेतुमशक्यत्वात्। काकतालीयन्यायेनापि सम्भवात्। भूयः प्रवृत्तौ तु यदि न व्यभिचारोपलम्भः उपाध्युपलम्भोऽपि न स्यात्। द्वयापगमे तु तन्नियतः सम्बन्ध इति।

स्यादेतत्। धूमादीनां मैत्रतनयत्वादीनां च भूयोदर्शनत्वाविशेषेऽपि कुतो विशेषादेकस्य गमकत्वमपरस्य नेत्यत आह। न चेति। [१११।१२]

यत्त्वेनोक्तं यथाऽऽद्र्नार्द्रेन्धने वह्नौ न धूम इति वह्नेस्तत्सम्बन्धे तथाविधमिन्धनमुपाधिः तथा यदि [(१)]मैत्राज्जातस्यापि कस्यचिद्विवक्षिताहारपरिणतिविरहेण श्यामतोपालप्स्यत स उपाधिर्निरचेष्यत। न त्वेतदस्ति।

---

भूयः प्रवृत्ताविति। पार्थिवत्वलौहलेख्यत्वयोरिव भूयो दर्शनेऽपि व्यभिचारोपलम्भो यदि तदा तद्वदेवोपाध्युपलम्भोऽपि स्यादिति योग्यानुपलम्भादुभयाभावो निश्चीयत इत्यर्थः। आपादनसम्भवार्थमाह। स्यादेतदिति। यदुक्तमिति। वह्निना धूमे साध्ये यथोपाधिव्यतिरेकेण वह्नौ सत्यपि धूमव्यतिरेकोपलम्भादुपाधिनिश्चयो न तथा स श्यामो मैत्री तनयत्वादित्यत्र शाकपाकजत्वस्योपाधेर्व्यतिरेकेण साध्यस्य श्यामत्वस्य व्यतिरेक उपलभ्यते येन येन शाकपाकजत्वस्योपाधित्वनिश्चयस्तथात्वे वा व्यभिचारादेव हेतोरगमकत्वे सिद्धे

---

(१) मैत्रतनयस्यापि इति १ पु० पा०।

तथा सत्यपि चोपाधिवादो व्यर्थः व्यभिचारादेव मैत्रतनयस्याऽहेतुत्वात् इति ।

तदिदमनवधारितोपाधिलक्षणस्य साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं न किंचिदेव ।

तथा हि । नोपहितस्य निश्चय एव साध्यव्यभिचार उपाधेर्लक्षणं, किं नाम? साधनाऽव्यापकत्वे सति साध्यव्यापकत्वं, तच्च साध्याभिमतधूमश्यामत्वं प्रति व्यापकत्वमार्द्रेन्धनान्नपानपरिणतिभेदयोरविशिष्टं, अविशिष्टं च साधनाभिमतदहनमैत्रतनयत्वे प्रति तयोरव्यापकत्वम् । इयाँस्तु विशेषः वह्नेर्धूमेनेवार्द्रेन्धनेनापि साक्षादेव विनाभाव उपलभ्यते, मैत्रतनयत्वस्य तु श्यामत्वेनेवान्नपानपरिणामेनाप्युपाधेरेवोन्नीयत इति ।

ननु वज्रे लोहलेख्यत्वं प्रति पार्थिवत्वहेतोः क

किमुपाध्यनुसरणेनेत्यर्थः । तदेतद्दूषयति । तदिदमिति । किन्नामेति । वैद्यकाच्छाकपाकजत्वस्य श्यामत्वं प्रति निश्चितव्यापकत्वस्य प्रत्यक्षादिना साधनाव्यापकत्वे निश्चिते तदुपाधित्वनिश्चयादेव तद्विरहेण श्यामत्वविरहवद्धेतुमत्त्वेपि तद्विरह उन्नीयत इत्यर्थः । नन्विति । वज्रं लोहलेख्यं पार्थिवत्वादिह क उपाधिरित्यर्थः । प्रशिथिलेति । प्रशिथिलत्वनिविडत्वे संयोगत्वावान्तरजातिभेदौ ।

उपाधिं - - - तर्हि तन्निवृत्तौ पवेरिव स्फटिकादावपि लोहलेख्यत्वनिवृत्तिप्रसंगः न खलु निबिडावयवत्वेनो-भयोः कश्चिद्विशेषः। नेनिबिडावयवत्वेऽपि मृदादिभ्यः स्फटिकस्य प्रशिथिलावयवत्वादेव। न ह्यश्मो मेदिनी निबिडेति न प्रशिथिलावयवा। इयांस्तु विशेषः। यथा-यथा शैथिल्यापकर्षस्तथा लेखितुः प्रयत्नप्रकर्षः। यदि तु शैथिल्यमप्रयोजकं मृत्काष्टपाषाणादिषु प्रयत्नप्रक-र्षोऽपि विफलः। पार्थिवत्वस्य सर्वत्राविशेषात्। स्फटिके कथमेषा प्रतिपत्तिरिति चेत्। लोहलेख्यत्वादेवा-लोहलेख्यत्वप्रशिथिलावयवत्वयोः समव्याप्तिकत्वादेव। अत एवानयोरेकतरप्रवृत्तिनिवृत्त्योरेवान्यतरप्रवृत्ति-निवृत्तौ, न तु पार्थिवत्वप्रवृत्तिनिवृत्त्योरेव लोहलेख्य-त्वप्रवृत्तिनिवृत्तौ, वज्रेऽदर्शनात्। जलादौ दर्शनाच्च। वह्नावनुष्णत्वसाधनस्य तु कृतकत्वस्य तज्जातीयेतरत्व-

तच्च बाधोन्नीतमशरीरकत्वमुपाधिरिति सम्प्रदायविदः। तर्हीति। तथा च साध्याव्यापकत्वादिदमनुपाधिरित्यर्थः। इयां स्त्विति। यथा यथा दृढत्वं तथा तथा पाटने प्रयत्नोत्कर्ष इत्यर्थः। एवेति। शिथिलावयवत्वप्रतीतिरित्यर्थः। वह्नावनुष्णत्वेति।

लक्षणमुपाधिः स च बाधैकनियतविषय इति नाति-प्रसङ्ग इत्युक्तम्।

तदेतत्सर्वं हृदि निधायाह। इत्यादय इति। [१११। २५

यद्यपि द्वितीयलिङ्गदर्शनस्य स्मृत्या सह विनश्यद्वस्थस्यैव परामर्शजनकत्वं क्वचित्, तथापि यत्र दृष्टमात्र एव वह्निनिवृत्तौ निवृत्तो धूमः कालान्तरे जिज्ञासावशात् परामृश्यते तत्र द्वयोरपि लिङ्गदर्शनयोरतीतत्वमित्याशयवतोक्तं। यद्यपीति। [११। १६

येन (च) परामर्शो निष्यते तेन वाक्यस्य चतुर्थावयव

---

तर्ह्यन्यत्रापि पक्षेतरत्वमुपाधिः स्यादित्यत आह। स चेति। अस्यार्थस्य टीकाकृदभिप्रेतत्वमाह। तदेतदिति। तथापीति। तथा च विशेषस्य धूमस्यासन्निकर्षान्न तदा प्रत्यक्षपरामर्शः स्यादित्यर्थः। परामृश्यते— परामर्शविषयो भवतीत्यर्थः। स च व्याप्तिस्मृतिसहितेन मनसा जन्यत इति भावः। स्वसाध्याविनाभूतमिति टीका। यद्यपि लिङ्गं स्वसाध्याविनाभूतमेव भवति तथापि स्वसाध्याविनाभूतत्वेन प्रकारेण पक्षस्य ज्ञानं वह्निव्याप्यधूमवानयमित्येवं रूपमित्यर्थः। ननु तथाभूतलिङ्गगोचरत्वमुपनयस्याप्रकृतं कुत उच्यत इत्यत आह। येन चेति। हेतुवाक्यस्य स्वार्थरूपोपस्थापकत्वाद्वादिवाक्यस्याभिद्धार्थत्वेनोपपत्त्यनाक्षेपकत्वात् परार्थानुमाने उपनयस्य पक्षधर्मताप्रतिपादनमेव व्यापारः स्वार्थानुमाने

उपनयोऽपि नेष्टव्यः । पक्षधर्मताप्रतिपादनेन तस्योपयोगः, परार्थानुमाने तु सा द्वितीयलिंगदर्शनादेवावगतेति किं परामर्शेनेति चेत् ? न । पक्षधर्मता हि व्याप्त्या सह प्रतिसंहितानुमानोपयोगिनी तादृशी चोपनयेन प्रदर्श्यते, न तु द्वितीयलिंगदर्शनेन । तस्य तु व्याप्त्यनुसंधानरहितं पक्षधर्मतामात्रमेव गोचरः । न च तदनुमानोपयोगि । तस्मादुपनयार्थो न द्वितीयलिङ्गदर्शनविषयः । ततः स्वार्थानुमाने यद्यस्ति तस्योपयोगः नूनं परामर्शोऽपि तृतीयः स्वीकर्त्तव्यः । नास्ति चेत्परार्थानुमानेऽपि लिङ्गपरामर्शकार्थमुपनयोऽपि नादरणीयः तुल्यविषयत्वादित्याशयेन संकलय्यानयोः समानविषयत्वमाह । सम्बन्धेति ।

ननु व्यापारानुबन्धितया विषयत्वं विषयत्वे च व्यापारानुबन्ध इति परस्पराश्रयत्वम् । अथ व्यापारा-

तु द्वितीयलिङ्गदर्शनादेव तल्लाभान्न परामर्शोपयोग इत्यत आह । पक्षधर्मतेति । यो धूमवांस्सोऽग्निमानिति केवलव्याप्तिज्ञानादनुत्पत्तेरनुमितेरित्याह । पक्षधर्मताहीति । उपनयार्थ इति । व्याप्तिविशिष्टस्य पक्षधर्मत्वमित्यर्थः । ननु नातिप्रसङ्गः, लिङ्गिविषयप्रतिपत्तिजनकत्वाल्लिङ्गज्ञानं भवति लिङ्गविषयमित्यत एव तन्निराकरणादित्यत आह । ननु व्यापारेति । लिङ्गज्ञानस्य लिङ्गि-

नुबन्धितयैव विषयत्वं ! तथाप्यसम्बन्धत्वाविशेषात्कथं तस्यैव व्यापारानुबन्धित्वमित्याशङ्क्य परिहरति। न चाति प्रसंग इति। (११२।२०)

न धूमज्ञानस्याग्निः स्वतन्त्रस्य व्यापारविषयोयेनासम्बन्धत्वाविशेषादतिप्रसङ्गः स्यात् किंतु ज्ञेयविशेषणस्य ! तस्य च ज्ञायमानस्य धूमस्याग्निना सह नियामकः स्वभावसम्बन्ध एवातो नातिप्रसङ्ग इत्यर्थः।

विषयत्वे तेन लिङ्गविषय प्रतिपत्तिर्जन्येत लिङ्गिविषयप्रतिपत्तिजनकत्वेन तस्यालिङ्गिविषयत्वमित्यन्योन्याश्रयः। यदि अतद्विषयप्रतिपत्तिजनकत्वमेव तद्विषयत्वमितिनान्योन्याश्रयः तर्हि ज्ञानजननात् प्रागविषयत्वमेव तस्येत्यविषयज्ञानजननेऽतिप्रसङ्ग इत्यर्थः।

ननु यदि स्वाभाविकसम्बन्धशालिनोलिङ्गस्य लिङ्गिज्ञानजनकत्वं तदा प्रमेयत्वादिज्ञानजनकत्वमपि तस्य स्यात् तेन प्रतिबद्धत्वादित्यत आह। धूमज्ञानस्येति। यद्यपि प्रमेयत्वादिना न लिङ्गप्रतिबद्धं तथापि यद्व्याप्यत्वेन लिङ्गपरामृश्यते तद्विषयामेवानुमितिं जनयति धूमस्तु वह्निविशेषणत्वेन परामृष्टो न तु प्रमेयत्वविशेषणत्वेनातो वह्निमेवानुमापयतीत्यर्थः। यद्वा स्वतन्त्रस्य वह्निविषयकस्येत्यर्थः। किन्त्विति। ज्ञेयोऽनुमेयो वह्निर्विषयो यस्य वह्निव्याप्यधूमवानिति परामर्शस्य वह्निविषयस्यैव ज्ञानजनकत्वं अन्यथा विशेषेऽपि वह्निविशेषणतया परामृश्यत इत्यत्र स्वाभाविकः

पूर्वं लक्ष्यपदार्थप्रश्नावसरे अनुमीयतेऽनेनेतिकरणार्थ इत्युत्तरं दत्तम् । इदानीमनुमितिः कस्यांचिदवस्थायामनुमानं प्रमाणं भवेन्नवेति जिज्ञासाप्रश्ने भावः करणं चेत्युत्तरमतो न विरोधोऽथतः पौनरुक्त्यं वा । अतष्टीकाकृदपि व्यापारत्वेनाप्रामाण्यं पूर्वपक्षयित्वा फलान्तरहेतुत्वेन प्रामाण्यं समर्थयतिस्म ।

इह यद्यपि विज्ञानप्रमाणयोरन्यतराधिकारेण

सम्बन्ध एव नियामक इत्यर्थः । ननु भावः कारणं नेत्युत्तरं करणांशे पुनरुक्तं पूर्वांशे च पूर्वव्युत्पादितकरणार्थत्वविरोध इत्यत आह । पूर्वमिति । करणव्युत्पत्तिमभ्युपगम्यैवानुमितिः करणं न वेति जिज्ञासायामेतदुक्तमिति नोक्तदोष इत्यर्थः । व्यापारत्वेनेति । फलत्वेन प्रमायां स कारणमित्यर्थः । प्रामाण्यं प्रमाकरणत्वमित्यर्थः । समर्थयतिस्म— न द्रव्यादीनामेव कारणत्वमित्यादिनेति शेषः अतत्पूर्वकत्वादिति टीका । अनुमितेर्न प्रत्यक्षद्वयपूर्वकत्वमपि त्वनुमितिहेतुपरामर्शस्येत्यर्थः । सिद्धस्य फलभावनायामिति टीका । व्यापारत्वेन साध्यतया निमित्ततया निमित्तत्वाभावेऽपि सिद्धत्वदशायां फलस्य स्वर्गस्य या भावनाप्राप्तिरुत्पत्तिस्तत्र निमित्तत्वमित्यर्थः । एतत्त्रयमिति टीका । एतत्पूर्वकमित्यत्र तच्छब्देन व्याप्तिज्ञानं लिङ्गज्ञानं व्याप्तिस्मृतिश्चेति त्रयं परामृश्यते । तच्चानुमितावप्यस्त्येवेत्यतत्पूर्वकत्वादिति युक्तं तत्परिहृतमित्यर्थः । प्रधानेति । परामर्शः साक्षादेवानुमितिकारणं व्याप्तिस्मृत्यादिस्तु

संस्कारनिर्णययोर्व्युदासः विज्ञानाधिकारे हि तत्पूर्वक-मनुभवकारणमनुमानमिति सूत्रसम्बन्धः। न चैवंभूतौ संस्कारनिर्णयविशेषौ। तयोरनुभवं प्रत्यहेतुत्वात्। प्रमाणाधिकारेपि फलतः स एवार्थः तत्पूर्वकं प्रमा-करणमनुमानमितिसूत्रसम्बन्धात्। तथापि विवक्षा-भेदाद्विकल्पेनोभयत्र सम्बद्धत इति विवक्षित्वैकैक-निषतयैकैकं दर्शितमिति तथैव व्याख्यातवान्। वस्तु-तस्तूभयमुभयत्र सम्बद्धमितिनिगर्वः। विपक्षावृत्ति-रितिवार्तिके बहुव्रीहिसमासस्थितो विशेषणतया व्यति-रेको निष्कृष्य प्रधानतया तत्पुरुषपदेन प्रदर्शितो विपक्षावृत्तिर्व्यतिरेक इति।

तद्वारेत्यर्थः। विज्ञानाधिकार इति। ज्ञानपदमिन्द्रियसन्निकर्ष-जन्यत्वेनानुभवपरं प्रत्यक्षसूत्र इत्यत्रापि यत इत्याध्याहारेणा-नुभवकरणत्वलाभ इति भावः। विकल्पेनेति। विज्ञानाधिकारेण प्रमाणाधिकारेण चोभयनिरास इत्यर्थः। एकैकमिति। एकैकनि-रासायैकैकं दर्शितं वार्त्तिककृतेति शेषः। ननु वार्त्तिककृता विपक्षावृत्तिरिति हेतुविशेषणमुक्तं, तद्विरुद्धं विपक्षावृत्तिर्व्यतिरेक इति व्याख्यानं कुत इत्यत आह। विपक्षावृत्तिरिति। अन्य-पदार्थविशेषणीभूतनञर्थस्य व्याख्यानान्न विरोध इत्यर्थः। ननु व्यतिरेकाभावेन विपक्षसत्त्वमेवोक्तं स्यादभावाभावस्य भावत्वादत आह। व्यतिरेकेति। अभावनिरूपणे अधिकरणज्ञानस्य हेतुत्वा-

अतो न वार्त्तिके हेतुसामानाधिकरण्यविरोधः । व्यतिरेकाभावं ११४।२२ व्यतिरेकनिरूपणाभावमित्यर्थः । इहावस्तुनो विधिनिषेधव्यवहारविषयत्वं लौकिकसमीहानुरोधाद्वा, शुक्तिरजतवद्रज्जुसर्पवच्च प्रमाणानुरोधाद्वा, गन्धम्प्रति पृथिवीवदुदकवद्वा, वचनमानानुरोधाद्वा प्रधानवत् शशविषाणवच्च, मूढप्रश्नानुरोधाद्वा धर्मान्तरं प्रति पूर्ववदेव स्ववचनविरोधभयाद्वेति ।

तत्र प्रथमस्तावदवस्तुन्यसंभवी लौकिकप्रवृत्तिनिवृत्त्योर्वस्तुमात्रविषयत्वात् द्वितीयादिष्वेव च परंपरया

टित्यर्थः । एवं चाग्रे सङ्ग्रामभावो निरूप्यत इत्यत्र निरूपणकारणदर्शनं सङ्गच्छत इति भावः । समीहाप्रवृत्तिर्निवृत्तिश्चात्र निवृत्तावुदाहरणं रज्जुसर्पवदिति । उदकवदिति गन्धव्यतिरेकोदाहरणम् । मूढप्रश्नेति । यदि शशविषाणे कस्यापि धर्मस्य कूर्मरोमादिरूपस्य वृत्तिं पृच्छति तदा तदनुरोधात् वृत्तिव्यवहारोऽथावृत्तिं पृच्छति तदा तदनुरोधात्र वृत्तिव्यवहार इत्यर्थः पूर्ववदिति । शशविषाणवदेवेत्यर्थः । स्ववचनेति । अलीके हि हेतोर्वृत्तिरवृत्तिर्वा प्रकारान्तराभावात् । आद्ये तत्र विधिव्यवहारोऽन्त्ये निषेधव्यवहारस्तत्राङ्गीकृत इत्युभयथाप्यलीके व्यवहारं नास्तीति वदतो व्याघात इत्यर्थः । द्वितीयादिष्वेवेति । समीहाय

प्रविशतीति न पृथक् निराक्रियते। द्वितीयनिराकरणाय प्रामाणिकनिषेधव्यवहाररीतिमाह। सद्भ्यामिति। [११४।२६] यदि तद्विविक्तेतरस्वभावो यदि चोभयातिरिक्तस्वभाव उभयथापि निषेध्यनिषेधाधिकरणाभ्यामेव निरूप्यते, न त्वेकेन सता निषेध्येन निषेधाधिकरणेन वेत्यर्थः।

ननु सत एव कुतश्चित्प्रमाणप्रतीतान्निवर्त्यतीत्यत आह। पश्चादन्यस्येति। [११४।२४]

तदनेनासत्यधिकरणे निवृत्तिनिरूपणं प्रतिषिद्धं, निवृत्तौ तु मूकतैवोचितेति हृदयम्।

प्रमाणानुरोधित्वादित्यर्थः। तद्विविक्तेतरेति। तस्मादभावाद्विविक्तो-भिन्नो भावः प्रतियोगी तदितरश्च तत्स्वभावः। तेन भावस्य भाव एव प्रतियोग्यात्मकः अधिकरणात्मकोवेत्यर्थः। यदि वेति। प्रतियोग्यधिकरणं चेत्युभयं तथा च प्रतियोग्यधिकरणातिरिक्तस्वभाव इत्यर्थः। निषेध्यनिषेधेति। निषेधाधिकरणं प्रतियोगि समवायिकारणं अन्यथा कालादि। तज्ज्ञाननिरूप्यत्वभावस्येति प्रकृते विपक्षावृत्तित्वं विपक्षे निरूप्यमाण एव निरूप्यत इत्यर्थः। सपक्षतावर्णनोपयोगार्थमाह। नन्विति। नन्वेवमपि निवृत्तिनिषेधे व्याघातप्रसङ्गस्तदवस्थ एवेत्यत आह। तदनेनेति। एवं

निवृत्तिरेव प्रतिषिद्धेति भ्रान्तो दूषयति । न निवर्त्तते चेदिति ।

निरूपणमादाय परिहरति । यस्येति । [११४।२३] यत्र खलु भावः सर्वथैव न निरूपितः तदधिकरणतया तस्यान्यत्रोपलब्धस्याभावो निरूप्यत इति दृष्टं, यथा गवि दृष्टस्य शृङ्गस्य शशे । यत्र तु शृङ्गाभावोपि गगनकमलादौ निरूपयितुं न शक्यते तत्र शृङ्गमेव निरूप्यत इत्यलौकिकमित्यर्थः ।

पुनर्भ्रान्तः शङ्कते । तत्किमिदानीमिति ।

स्ववचनविरोधभयमाशङ्कते । ननु चेति ।

यदुक्तं ज्ञानश्रिया—

'धर्मस्य कस्य चिदवस्तुनि मानसिद्धा
बाधाविधिर्व्यवहृतिः किमिहास्ति नो वा ।
क्वाप्यस्ति चेत् कथमियन्ति न दूषणानि
नास्त्येव चेत् स्ववचनप्रतिरोधसिद्धिः' ।

सत्यग्रिमशङ्का न युक्ता निवृत्तेरनिषधादित्यत आह । निवृत्तिरेवेति । अलीके कस्यापि धर्मस्य विधिनिषेधव्यवहारो न वा आद्यं दूषयति । कथमियन्तीति । अवस्तु कथं विधिनिषेधव्यवहारगोचरः कुतो वा न तत्र व्यतिरेकात् व्याप्तिसिद्धिरित्यादीनीत्यर्थः । अन्त्यं निराकरोति । स्ववचनेति । अवस्तु न विधि

यद्यपि स्ववचनविरोधभियापि सर्वथा विचारास-हीर्थः स्वीकर्त्तुं न शक्यते वचनाद्विचारो गरीयानिति-न्यायात्। अन्यथा विकल्पशब्दौ न वस्तुगोचराविति स्ववचनविरोधादेव परिहर्त्तव्यम्।

तथा हि। स्वलक्षणस्यासाधारण्येनाशक्यसमय[1]तया शब्दस्य च समयाधीनप्रवृत्तिकतया विकल्पस्य च[2] तदेकविषयतया न तयोर्वस्तुगोचरत्वमिति विचारे शब्दस्य कदाचिदपि वस्तुनि मानसिद्धा बाधाविधि-र्व्यवहृतिः किमिहास्ति नो वा। अस्त्येव चेत्? कथ-मियन्ति न दूषणानि, नास्त्येव चेत्स्ववचनप्रतिरोध-सिद्धिरिति तुल्या विभीषिका॥

तथापि तत्त्वं निरूपयन्परिहरति। न चैतत्त्वत इति। ...(१२५।५)

निषेधव्यवहारगोचर इत्यस्यैव व्यवहारस्य सत्त्वादित्यर्थः। अन्यथेति। शब्दविकल्पौ न पारमार्थिकविषयाविति स्वसिद्धान्तं सौगतः स्ववचनविरोधादेव त्यजेदित्यर्थः। विरोधमेवाह। तथाहीति। शब्दस्य सङ्केताधीनप्रवृत्तितया सङ्केतस्य साधारणधर्मपुरस्कारेण सम्भवात् स्वलक्षणस्य चासाधारणत्वेनासङ्केतविषयतया न तच्छब्द-विषयः। विकल्पस्याप्यभिलापसंसर्गयोग्यप्रतिभासत्वात् स्वलक्षणे

(१) गोचरतया इति १ पु० पा०। (२) शब्दसमान इति १ पु० पा०।

ननु यदि नैकतरनिषेधोविधिर्वा तत्किमुभयविधिः निषेधोवा तथासति अतितरां दुर्घट[1]मापद्येतेत्यत आह । नो खल्विति ।

ननु सर्वव्यवहारभाजनमित्यपि निषेधव्यवहार-भाजनत्वेनैव निर्वहेत् अन्यथा पुनरपि स्ववचनप्रति-रोध इत्यत आह । प्रयोगे वेति ।

स्ववचनविरोधभयाद्धि तदा निषेधव्यवहारगो-चरत्वस्वीकारः स्याद्यदि तथा सति भयं निवर्त्तेत, न त्वेतदस्ति । नो खलु सर्वव्यवहारभाजनं च,तन्निषेध-व्यवहारभाजनं चेति परस्परमविरोधि । विधिव्यव-हारमात्राभिप्रायेणाभाजनत्वव्यवहारे कुतोविरोध

च तदभावाद्व्यावृत्तिविषयकत्वात्र खलचणं विकल्पविषय इति, यदि विचारे शब्दस्य वस्तुनि विधिनिषेधव्यवहारगोचरत्वं स्वीकृतं तदा इयन्ति खलचणेन सङ्केतस्याशक्यतया कथं व्यवहार इत्या-दीनि दूषणानि कथं न स्युः । अथ तत्र तत्र स्वीकृतं तदा स्व-वचनविरोधः न कस्यापि व्यवहारस्य विषय इत्यस्यैव व्यवहारस्य तत्र स्वीकारादन्ततोऽवस्तुशब्देनैवाभिधानादित्यर्थः । नन्वलीके हेतुतद्व्यतिरेकयोरन्वयव्यतिरेकं न विद्मः इत्यनेन नोखल्वित्यच पौनरुक्त्यमित्यत आह । यदीति । उपयोगसम्भवार्थमाह । ननु

(१) दुर्घटमिति आह इति १ पु० पा० ।

इति चेत्। हन्त! सकलविधिनिषेधव्यवहाराभाजनत्वेन किंचिद्व्यवह्रियते न वा, उभयथापि स्ववचनविरोधः। उभयथाप्यवस्तुनैव तेन भवितव्यं, वस्तुनः सर्वव्यवहारविरहानुपपत्तेः। नेतिपक्षे सकलविधिनिषेधव्यवहार[1]विरहीत्यनेनैव व्यवहारेण विरोधात् अव्यवहृतस्य निषेद्धुमशक्यत्वात्।

व्यवह्रियत इति पक्षे तु विषयस्वरूपपर्यालोचनेनैव विरोधः। न हि सर्वव्यवहाराविषयः स व्यवह्रियते चेति च।

अपि च यद्यवस्तुनो निषेधव्यवहारगोचरत्वं विधि-

सकलेति। विधिव्यवहारमात्राभिप्रायेणाभाजनत्वबाधो विरोधविधूननाय वाच्यः। विरोधस्तु तत्रापि तदवस्थ एवेत्यर्थः। तेनेति। सकलविधिनिषेधव्यवहाराभाजनेनेत्यर्थः। सकलविधिनिषेधव्यवहाररहितं यदि प्रतीतं कथं तन्निषेधः अलीकप्रतियोगिकत्वात् प्रतीतं चेद्विरोध एवेत्यत आह। नेतिपक्षेति। विषयस्वरूपेति। सकलविधिनिषेधस्य व्यवहाराभाजनत्वात्व्यवहारेणैव विरोध इत्यर्थः। तमेवाह। नहीति। विधिव्यवहारवन्निषेधव्यवहारोपि प्रमाणाधीनोऽलीके न सम्भवति। अथ तत्र प्रमाणं विनापि निषेधव्यवहारस्तदा विधिव्यवहारोपि तत्र स्यादित्याह। अपि चेति।

(१) हाराभाजनमि १ पु० पा०।

व्यवहारविषयतापि किन्न स्यात्, प्रमाणाभावस्योभयत्रापि तुल्यत्वात् । वन्ध्यासुतस्यावक्तृत्वेऽचेतनत्वादिकमेव प्रमाणं वक्तृत्वे तु न किंचिदिति चेत् । न, तत्रापि सुतत्वस्य विद्यमानत्वात् । न हि वन्ध्यायाः सुतो न सुतः तथा सति स्ववचनविरोधात् । वचनमात्रमेतन्न तु परमार्थतः सुत एवाऽसाविति चेत् । अचेतनत्वस्याप्येवंरूपत्वात् । चेतनादन्यत्स्वभावान्तरमेवाचेतनमित्युच्यते । चैतन्यनिवृत्तिमात्रमेव विवक्षितमिह, तच्च संभवत्येवेति चेत्! न, तत्राप्यसुतत्वनिवृत्तिमात्रस्यैव विवक्षितत्वात् ।

अलीके निषेधव्यवहारः प्रामाणिक एवेति शङ्कते । तद्व्याघातस्येति । यद्यपि वन्ध्यासुतस्य वक्तृत्वाभावोऽप्यलीक एवालीकस्यानलीकधर्माभावादतः प्रामाणिकत्वे व्याघात एव तथापि बाधासिद्धिभ्यां नैतन्मानमिति प्रतिबन्द्यैव परिहरति । तत्रापीति । वचनमात्रमिति । वन्ध्यासुतोऽयोग्यतया नान्वयबोधकोऽतो हेतोरसिद्धिरित्यर्थः । अचेतनपदं किं पर्युदासनञा चेतनेतरस्वभावपरं प्रसज्यप्रतिषेधनञा चैतन्यनिषेधपरं वा । आद्यं दूषयति । चेतनादन्यदिति । द्वितीयं शङ्कते । चैतन्येति । निवृत्तेरलीकतयाऽलीके तच्च न विरोध इति भावः । तत्रापीति । असुतत्वनिवृत्तिरपि तत्राविरुद्धेत्यर्थः । वक्तृत्वं वचनं प्रति स्वतिशक्तिमत्व

असुतत्त्व[1]निवृत्तिमात्रस्य स्वरूपेण, कृतिद्वयोरसामर्थ्ये समर्थमर्थान्तरमवमेयमनन्तर्भाव्य कुतो हेतुत्वमिति चेत्। न, अचैतन्येऽप्यस्य न्यायस्य समानत्वात्। व्यावृत्तिरूपमपि च तदेव गमकं यदतस्मादेव, यथा शिंशपात्वम्।

वन्ध्यासुतत्त्वसुतादिव पटादेः सुतादपि देवदत्तादेः व्यावर्त्तते अतो न हेतुरिति चेत्। नन्वचैतन्यमप्यस्यैवं

तच्च निवृत्तावलोकायां न सम्भवतीति तत्समर्थं स्वलक्षणमन्तर्भाव्यैव हेतुत्वं न चालोके तथेति शङ्कते। असुतत्वेति। अवमेयमवमायविषयः। स्वविषयसविकल्पकजनकं निर्विकल्पकमवमायः।

अथावक्तृत्वमपि वचनेतरकर्तृत्वं तच्चाचैतन्ये तथैवेति परिहरति। अचैतन्येऽपीति। वक्तृत्वाभावस्तु यादृशो घटादौ प्रमाणसिद्धस्तस्य साध्यत्वे विरोध एव, अन्यत्र त्वसिद्धतया व्याप्तिग्रह एवेति भावः। अतस्मादेवेति। विपक्षादेव न तु सपक्षादपि यथा शिंशपात्वमशिंशपात एव व्यावर्त्तते न तु शिंशपातः वन्ध्यासुतत्वस्तु सुतादपि व्यावर्त्ततेऽतोऽसाधारणतया न गमकमित्यर्थः अलौकानलौकवृत्तेरेकस्य धर्मस्याभावादिति भावः। ननु पूर्वं सुतत्वमात्रं हेतूक्तं वन्ध्यासुतत्वस्तु न हेतुत्वेनोपात्तस्तत्कथं सुतादेवदत्तादेस्तस्य व्यावृत्तिः वन्ध्यासुतत्वेन हेतोरनुपादानात्।

(१) असुतनि १ पु० पा०।

रूपमेव । न हि वन्ध्यासुतश्चेतनादिव देवदत्तादेरचेतनादपि काष्ठादेर्न व्यावर्त्तते । वक्तृत्वं वस्त्वेकनियतो धर्मः स कथमवस्तुनि साध्यो विरोधादिति चेत् । स पुनरयं विरोधः कुतः प्रमाणात्सिद्धः, किं वक्तृत्वविविक्तस्यावस्तुनो नियमेनोपलंभनात् ? आहोस्वित् वस्तुविविक्तस्य वक्तृत्वस्यानुपलंभात् इति । न तावदवस्तु केन चित्प्रमाणेनोपलंभगोचरः । तथात्वे वा न वस्तु । नाप्यपरः समानत्वात् । न ह्यवक्तृत्वमपि वस्तुविविक्तं कस्यचित्प्रमाणस्य गोचरः । तद्विविक्तं विकल्पमात्रं तावदस्तीति चेत् । तत्संसृष्टविकल्पनेपि को वारयिता ।

अत्राहुः सुतादपीति भावप्रधानो निर्देशः देवदत्तादेरिति व्यधिकरणषष्ठी । तथाच देवदत्तादिनिष्ठसुतत्वादिधर्मशून्यत्वं वन्ध्यासुतस्येत्यर्थः । एवं रूपमेवेति । असाधारण्यनैकान्तिकमेवेत्यर्थः । तदेवाह । नहीति । काष्ठादिसाधारणस्याचैतन्यस्य प्रामाणिकस्यालौकवृत्त्यभावात्तन्मात्रवृत्त्यचैतन्यं हेतूकर्त्तव्यं तच्चासाधारणमेवेत्यर्थः । बाधं शङ्कते । वक्तृत्वमिति । वक्तृत्वविविक्तस्य वक्तृत्वरहितस्येत्यर्थः । वस्तुविविक्तस्य—वस्तुत्वमसम्बद्धस्येत्यर्थः । नहीति यथा वक्तृत्वं वस्तुविविक्तं न प्रमाणविषयः तथैवावक्तृत्वमपीति तत्कथमवस्तुनि साध्यं विरोधादित्यर्थः । तद्विविक्तेति । वस्तुविविक्तमेव वक्तृत्वमितिज्ञानमात्रमित्यर्थः । तत्संसृष्टेति । यदि प्रमा

ननु वक्तृत्वं वचनं प्रति कर्त्तृत्वं तत्कथमवस्तुनि, तस्य सामर्थ्यविरहलक्षणत्वादिति चेत्। अ(न्य)थाऽवक्तृत्वमपि कथं तत्र तस्य वचनेतरकर्त्तृत्वलक्षणत्वात्। सर्वसामर्थ्यविरहे वचनसामर्थ्यविरहो न विरुद्ध इति चेत्। अथ सर्वसामर्थ्यविरहो वन्ध्यासुतस्य कुतः प्रमाणात्सिद्धः। अवस्तुत्वादेवेति चेत्। नन्वेतदपि कथम्। सर्वसामर्थ्यविरहादेवेति चेत्। सोयं केवलैर्वचनैरितस्ततोनिर्धनाधमर्णिक इव माघ्नन् आमयन्परस्याश्रयदोषमपि न पश्यति।

क्रमयौगपद्यविरहादिति चेत्। न, तद्विरहसिद्धावपि प्रमाणानु[१]योगस्यानुवृत्तेः। सुतत्वे च परामृश्यमाणे तदविनाभूतसकलवक्तृत्वादिधर्मप्रसक्तौ कुतः क्रमयौगपद्यविरहसाधनस्यावकाशः कुतस्तरां चावस्तु-

विनैव तादृशं ज्ञानं तदा वक्तृत्वसंसृष्टावस्तुज्ञानमप्यस्त्येवेति न विरोधनिश्चय इत्यर्थः। पूर्वं वक्तृत्वस्य वस्तुव्याप्यत्वेनावस्तुनि विरोधः शङ्कित इदानीं अवस्तुनः साध्यरहितत्वात्स्वरूपविरोधं शङ्कते। नन्विति। अवक्तृपदे पर्युदासमाश्रित्य परिहरति। अथेति। प्रसज्यप्रतिषेधमाश्रित्याह। सर्व्वेति। केवलैर्निरर्थकैरित्यर्थः। क्रमयौगपद्यविरहासिद्धौ न तरामवस्तुत्वमित्याह। कुतस्तरामिति। अवस्तुत्वासिद्धौ न तत्साध्यमपीत्याह।

(१) नुपयोगस्य इति १ पु० पा०।

त्वसाधनस्य । कुतस्तमां चावक्तृत्वादिसाधनानाम् । ततश्च प्रमाणमेव सीमा व्यवहारनियमस्य, तदतिक्रमेत्वनियम एवेत्यभिप्रायेणेदमुक्तं । उपयोगे वा— निषेधव्यवहारोपयोगे वा । न निरूपाख्यो—विधिव्यवहाराविषयः यस्मिन्किंचिन्निषिध्यते प्रमाणेन तस्मिन् किंचिद्विधीयतेऽपीति नियमादित्यर्थः ।

तथापि प्रष्टुरुत्तरे वक्तव्ये न विरुद्धमनर्थकं वा वक्तुमुचितमित्याशयवानाह । कस्तर्हीति । [११५ । ७]

उत्तरं । अथेति । [११५ । ८] उत्तरा[1]विषये अहृद-यैर्यदेवोत्तरीक्रियते तदेव विरुद्धमित्यर्थः ॥

न च केवलमचोत्तरदः प्रष्टाप्यहृदय एव । न

कुतस्तमामिति । एवं परमतेन दूषयित्वा स्वमतमाश्रित्योपसंहरति । ततश्चेति । तथा चालीके मानाभावात् न वक्तृत्वादिसाधनमित्यर्थः । उपपादितमर्थं टीकायां निवेशयति । अनेनेति । प्रष्टुरिति । धर्मस्य कस्यचिद्वस्तुनीत्यादिप्रश्नकर्तुः कृते इत्यर्थः । न वै तत्त्वतोऽत्र किञ्चिद्विधीयते निषिध्यत इत्यादि विरुद्धं अलीकव्यवहाराविषयत्वे यत्किञ्चित्तद्विषयं वचनं तदनर्थकमित्यर्थः । उत्तराविषय इति । ननु परप्रश्नवाक्यार्थोऽवगतो न वा? न चेदज्ञानं, आद्ये तद्यदि नानूद्यते तदाऽननुभाषणं निग्रहस्थानं, अनूद्य यद्युत्तरं न दीयते तदानीमप्रतिभेति मूकत्वं, शरणं ।

[1] अनुत्तराविषये इति १ पु० पा० ।

त्यप्रतीते देवदत्तादौ गौरः कृष्णो वेति वैयात्यं विना प्रश्नः। तथापि यद्येकोऽप्रतीतपरमार्थविषय एवोत्तरं ददाति न गौर इति, अपरोऽपि किं न दद्यात् गौर इति। न चैवं सति काचिदर्थसिद्धिः। प्रमाणाभाव-विरोधयोरुभयत्रापि तुल्यत्वात्। तदिदमुक्तं अहृदय-वाचामिति। ११५।८

नन्वप्रतीते व्यवहाराभाव इति युक्तं कूर्मरोमा-दयस्तु प्रतीयन्त एव। नह्येते विकल्पाः किंचिदर्थभेद-मनुल्लिखन्त एव उत्पद्यन्ते। न च प्रमाणास्पदं एव

न चोत्तराह तदुपादानादप्रतिभा, न च प्रकृते तथेति वाच्यम्। उत्तरानर्हत्वस्यापि विभावने मूकत्वानुपपत्तेः।

अत्राहुः— वादकथामाश्रित्यैतदुक्तं। जल्पवितण्डयोस्त्वेवं प्रथमं प्रश्नविपर्ययो दृश्यते। शशविषाणपदेन यदि द्रव्यादिसप्तकमेवोच्यते तदा न ततोऽव्यतिरेकः। अथान्यत्तदा निरर्थकं निग्रहस्थानं द्रव्याद्यवाचकस्यावाचकत्वात्। न चैवं सकलप्रश्नानुपपत्तिः। उभयवादिस्वीकृतेऽर्थे विशेषज्ञानार्थं तदुपपत्तेः। अहृदया एव प्रतिवाच इति टीका। अहृदयत्वं प्रतिवाचो अपार्थकोद्भावकत्व-मित्यर्थः। वैयात्यमिति। स्वाज्ञानावरणं वैयात्यं। अनर्थपरस्यैव वस्तुतोऽर्थपरतया मया प्रयुक्तमिति वचनं वा। ज्ञानत्वेनैव व्यवहार-हेतुत्वं न तु प्रमात्वेन यथार्थत्वस्य व्यर्थत्वादतो यदज्ञातं तन्मा व्यवहारि, ज्ञाते तु कूर्मरोमादौ व्यवहारः स्यादित्याह। न चेति।

व्यवहारास्पदमित्यस्ति नियम, इत्यत आह । न चात्य-न्तेति । [११५।१०] यद्यपि सर्वथा प्रतीते व्यवहाराभाव इति वदतो बौद्धस्यापि स्ववचन[1]विरोध एव । तथाप्ययं विरोधः प्रागेवोद्भावितप्राय, इत्येनमुपेक्ष्य शङ्कामात्रं समर्थितम् ।

तथा हि— शशविषाणमिति ज्ञानमन्यथाख्यातिः स्यादसत्ख्यातिर्वा? न तावदाद्यस्ते रोचते तथासति किञ्चिदारोपविषयः स्यात् । तथा चारोपविषयस्तत्रै-वास्त्यारोपणीयं त्वन्यत्रेति जितं नैयायिकैः । नापि द्वितीयः कारणानुपपत्तेः । इन्द्रियस्य ज्ञानानां जनने स्वविषयाधिपत्येनैव व्यापारात् । लिङ्गशब्दाभासयोर-

यद्यपीति । अप्रतीत अधिकरणे व्यवहाराभाव इत्यस्यैव प्रत्येतु-मशक्यत्वादित्यर्थः । शङ्कामात्रमिति । ननु अप्रतीते व्यवहाराभाव इति शङ्का तन्मात्रमित्यर्थः । ख्यात्यन्तरमुभयत्राद्यसम्मतमतः ख्याति-द्वयमाह । तथाहीति । असत्ख्यातौ च विचारारम्भकः संशयो द्वितीयसूत्रे दर्शितोऽस्माभिः । अलीकस्य कूर्मरोमादेः प्रतीतिरेव नास्ति कारणाभावात् कुतस्ततो व्यवहार इत्यत आह । कारणेति । विषयाधिपत्येनेति । सन्निकृष्टविषयसहकारित्वेनेत्यर्थः । यद्यपि स्वप्नदर्शने इन्द्रियजन्ये तत्रास्ति जाग्रद्भ्रमस्यापि नेत्रनिमीलनेऽपि दर्शनात् न तत्राप्ययं नियमः । तथापि यदिन्द्रियं तत्केवलपदार्थ-

(१) प्रतिरोध एव इति २ पु० पा० ।

प्यन्यथाख्यातिमात्रजनकत्वात्। अपहस्तितस्वार्थयोश्चासत्ख्यातिजनकत्वे शशविषाणशब्दात्कूर्मरोमादिविकल्पानामप्युत्पत्तिप्रसंगः नियामकाभावात्।

स हि सङ्केतो वा स्याच्छब्दस्वाभाव्यं वा? न तावदाद्यः सङ्केतविषयाप्रतीते[1]र्निराकृतत्वात्। अतएव प्रतीतेरितरेतराश्रयत्वम्। पदसङ्केतबलेन तु प्रवृत्तौ स्वार्थापरित्यागात्। तथा चानन्विताः पदार्था एवान्विततया परिस्फुरन्तीति विपरीतख्यातिरेवाऽऽवर्त्तते।

गोचरप्रमाजनितसंस्कारसचिवं सत्प्रमाविषयसंसर्गज्ञानजनकं भवतीति नियमः। यद्वा स्वप्नादिभ्रमाणामप्यारोपविषयार्थसन्निकर्षजत्वमस्त्येवेति भावः। लिङ्गेति। तयोरुपस्थितपदार्थसंसर्गज्ञानजनकत्वादित्यर्थः। अपहस्तितेति। प्रत्येकपदार्थोपस्थित्यनुपजीवकयोरित्यर्थः। शशविषाणपदं यदि विकल्पजनकत्वे सति कूर्मरोमाद्यविकल्पविषयप्रयोजकरूपवन्न स्यात् तद्विषयविकल्पोत्पादकं स्यादित्यापादनार्थः। स हीति। स नियामकः। इतरेति। तत्र सङ्केतग्रहे शशविषाणपदात्तत्प्रतीतिः तत्पदादेव च तत्प्रतीतौ सङ्केतग्रह इत्यर्थः। ननु यथा स्वर्गादिपदानां प्रत्येकं गृहीतसङ्केतपदस्यार्थमुपजीव्य वाक्यार्थे सङ्केतग्रहस्तथा शशविषाणपदेऽपि स्यादित्यत आह। पदसङ्केतेति। पदानां प्रत्येकपदार्थमुपजीव्य संसर्गबोधकत्वमनुपजीव्य वा? आद्ये अन्यथाख्याति-

(१) प्रतीतेरेव पराहतः इति २ पु० पा०।

स्वार्थपरित्यागे तु पुनरप्यनियमः; असामयिकार्थ-प्रत्यायनात्। शब्दस्वाभाव्यात् तु नियमे व्युत्पन्न-स्यापि तथाविधविकल्पोदयप्रसङ्गः।

वासनाविशेषादिति चेत्। अथासदुल्लेखिनः प्रत्ययस्य वासनैव कारणमुत वासनापि? न तावदाद्यः शश-विषाणादि[1]प्रत्ययानां सदातनत्वप्रसङ्गात्। कदाचि-द्वासनायाः प्रबोधात्कदाचिदिति चेत। न। प्रबोधोऽपि सहकार्यन्तरं वा अतिशयपरम्परापरिपाको वा? आद्ये वासनैवेति नियमानुपपत्तिः। द्वितीयोऽपि यद्यर्थान्तर-प्रत्यासत्तेस्तदा पूर्ववत्। स्वसन्ततिमात्राधीनत्वे बाह्य-वादव्याघातः नीलादिबुद्धीनामपि वासनापरिपाकादे-वोत्पादात्। वासनापीति पक्षे तु तदन्योऽपि कश्चिद्धेतु-र्वक्तव्यः स च विचार्यमाणः पूर्वन्यायं नातिवर्त्तेत इति।

---

रेवेत्याह। स्वार्थेति। प्रत्येकपदार्थानुपजीवनं प्रत्येकपदार्थ-परित्यागे. सत्येवेति. पूर्वोक्तनियमप्रसङ्ग इत्यर्थः। शशेति। अनादिवासनासन्ततेः सदाऽनुवृत्तौ तन्मात्रप्रभवं सदोत्पद्येतेत्यर्थः। अतिशयेति। कुर्व्वद्रूपत्वविशिष्टोत्पत्तिरित्यर्थः। पूर्ववदिति। वासनैवेतिपक्षानुपपत्तिरित्यर्थः। स्वसन्ततिः वासनासन्ततिः। पूर्व-न्यायमिति। इन्द्रियादीनां ज्ञानजनकत्वानुपपत्तौ कारणत्वाभाव

(१) विकल्पानां इति २ पु० पा०।

न च शशविषाणादिशब्दानामसदर्थैः सह सम्बन्धावगमोऽपि। तथा हि परबुद्धीनामनुल्लेखात्तद्विषयस्याप्यनुल्लेख एव। न चार्थक्रियाविशेषोऽप्यस्ति। यतो विषयविशेषमुन्नीय तत्र सङ्केतो गृह्यताम्। न च सङ्केतयितुरेव वचनात्तदवगमः। तद्विषयाणां वचनानां सर्वेषामेवाप्रतीतविषयत्वेनाऽगृहीतसङ्केततया ऽप्रतिपादकत्वात्। न च शशविषाणमुच्चारयतः कश्चिदभिप्रायो वृत्तः तद्विषयोऽस्य वाच्य इति सुग्रहः समय इति वाच्यम्। न ह्येवमाकारः समयग्रहः। गां बधानेत्युक्ते ऽप्रतीतशब्दार्थस्याभिप्रायमात्रप्रतीतौ संसमयग्रहप्रसं-

इत्यर्थः। एतावता कारणाभावेनासत्ख्यात्यभावमुपपाद्य तत्त्वेपि नालीके तद्विषये सङ्केतग्रह इत्याह। न चेति। यद्यप्ययं पक्षः सङ्केतविषयाप्रतीतेरेवेत्यादिना निरस्त इति तेन पौनरुक्त्यं तथापि सङ्केतविषयाप्रतीतिरेव कथमिति शङ्कानिरासार्थमेतदुक्तम्। परबुद्धिविषयत्वेनैवोपस्थिते तत्र सङ्केतो ग्राह्योऽन्यथा वा? आद्ये परेति। उन्नीय परबुद्धिविषयतयेति शेषः। नह्येवमाकारः समयग्रहो विशेषव्यवहारोपयोगीति शेषः। तस्य विशेषसङ्केतग्रहाधीनतया तदभावेनाभावादित्यर्थः। तदेवोपपादयति। गां बधानेति। नापि व्यावर्त्तकधर्मरहिते भ्रमविषयत्वेनैवोपस्थिते

गात्। न च विशेषान्तर[1]विनाकृतः कल्पनामात्र-विषयोऽस्य वाच्य इति साम्प्रतम्। घटकूर्मरोमादीना-मपि तदर्थत्वप्रसङ्गात्। न च सर्वे प्रतिपत्तारः स्वस्ववा-सनयाऽसदर्थशब्दसम्बन्धप्रतिपत्तिभाज इति साम्प्रतम्। परस्परवार्तानभिज्ञतया अपरार्थत्वप्रसङ्गात्। न हि स्वयं कृतं [2]संकेतमग्राहयित्वा परो व्यवहारयितुं शक्यते, न च व्यवहारोपदेशावन्तरेण ग्राहयितुमपि। न च गां बधानेति वत्सश्रविषाणपदार्थे वृद्धव्यवहारः।

समयग्रहेऽति प्रसङ्गादित्याह। न चेति। अन्यथा वेत्याह। न च सर्व्व इति। परस्परेति। मया योऽर्थोऽवगतः स एवानेनापीति सवादाभाव इत्यर्थः। अपरार्थत्वेति। यद्यसाधारणसङ्केतवत्तया ज्ञानविषयो न स्यात् परार्थविषयो न स्यादित्यापादनार्थः। ईदृशङ्केतग्रहोऽपि व्यर्थ इत्याह। नहीति। सङ्केतग्रहोपायोगा-भावमाह। न चेति। सङ्केतग्रहे व्यवहारस्यैवोपायान्तरोपजीव्य-त्वात्तदभावमाह। न च गामिति। प्रयोजकवाक्योच्चारणानन्तरं प्रयोज्यप्रवृत्तिदर्शनात्तद्धेतुज्ञाने वानेन शक्तिर्गृह्यते, न चालीके प्रवृत्तिर्यद्दर्शनात्सङ्केतो गृह्येतेत्यर्थः। उपदेशस्तु साक्षात्परम्परया वा? आद्यस्याभावमाह। न चायमिति। नाच विषयत्वेन विशेष-सङ्केतग्राहकः शब्द इत्यर्थः। परस्परयोपदेशः शक्तिग्राहकमुपमानं

(१) निषेधान्तर इति २ पु० पा०। (२) समयं इति २ पु० पा०।

न चायमसावश्व इति वदुपदेशः। न च यथा गौस्तथा गवय इति [1]वदुपलक्षणातिदेशः। तदमूः शशविषाणादिकल्पना नासत्ख्यातिरूपाः तथात्वे कारणाभावात् मूकस्वप्नवदसांव्यवहारिकत्वप्रसङ्गात्, तस्मादन्यथाख्यातिरूपा एवेति नैतदनुरोधेनाप्यवस्तुनो निषेधव्यवहारगोचरत्वमित्यर्थः।

तथापि नासौ सिद्ध्युपालम्भोपयोगीत्याह। कल्पितगोचरश्चेति। ११५।११

तथाहि। कोऽयं व्यतिरेको नाम? यद्यतो व्यतिरिच्यते तस्य तत्राभावो वा तदभावस्वभावत्वं वा? तत्र तावत्क्रमयौगपद्ययोर्न शशविषाणेऽभावः प्रमाणं

वा दार्ष्टान्त्यानुमानं वा। तत्राद्यस्याभावमाह न च यथेति। गवयत्वस्य प्रवृत्तिनिमित्तस्योपलक्षणं गोसादृश्यं तस्यातिदेशः कथनं गवयत्वविशिष्टोधर्मी गवयशब्दवाच्य इति प्रवृत्तिनिमित्तविशिष्टबुद्धेरुपमानफलत्वात् सादृश्यस्याप्रवृत्तिनिमित्तत्वादित्यर्थः। अन्त्यस्याभावमाह। न चेहेति। तेन त्वयाऽभावं प्रतिज्ञाय चतुष्टयाभावकथने विरोधाभाव इति भावः। तथाच सर्व्वत्रोपमानमेव प्रवृत्तिनिमित्तविशिष्टबुद्धेः परिच्छेदकं तच्च तत्रैव वक्ष्यामः। नैतदिति। न केवलं प्रमाणाभावादपि तु शशविषाणादिविक-

(१) दुग्धलक्षणा .... वृ० ८।१२ .... नि मधुकरः पिबतीतिवत् प्रसिद्धपद सामानाधिकरण्यं, तदमूः—इत्यादि अधिकं २ पु० पा०।

गोचरः। वृक्षरहितभूभृत्कटकवत्क्रमयौगपद्यरहितस्य शशविषाणस्य प्रमाणाविषयत्वात्। नापि क्रमयौगपद्याभावरूपत्वं शशविषाणस्य प्रामाणिकं। घटाभाववच्छशविषाणस्य प्रमाणेनानुपलम्भात्।

घटाभावोऽपि न प्रमाणगोचर इति चेत्। न। तस्य तद्विविक्तेतरस्वभावस्यापि प्रमाणत एव सिद्धेः, असिद्धौ वा तत्राप्यव्यवहार एव।

घटस्तावत्स्वाभावविरहस्वभावः प्रमाणसिद्धः तद्रूप्येण कदाचिदप्यनुपलम्भात्। एतावतैव तदभावोऽपि घटविरहस्वभावःसिद्ध इति चेत्। न। घटाभावस्य

न्यानुरोधादपि तस्य शशविषाणरोपरूपत्वमित्यर्थः। भवतु वेति। उपलम्भोदूषणममत्ख्यात।वल्लौके हेतुसाध्यव्यतिरेकग्राहकमानाभाव इत्यर्थः। वृक्षेति व्यतिरेक दृष्टान्तः यथा वृक्षरहिते राजकटवे मानं नेवं क्रमादिरहिते शशविषाण इत्यर्थः। घटाभाववदिति व्यतिरेकदृष्टान्तः। घटाभावोपीति। व्यतिरेकदृष्टान्तस्यापि घटाभावस्याप्रामाणिकत्वात्। सर्वत्राप्रामाणिकेनैव व्यवहार इत्यर्थः तद्विविक्तेति। तस्मादभावाद्विविक्तो भिन्नः प्रतियोगी घटस्तदितरस्वभावस्येत्यर्थः। तेन यथा स्वाभावविविक्तो घटः प्रमाणसिद्धस्तथा घटविविक्तस्तदभावोऽपीत्यर्थः। एतावतैवेति। यः स्वाभावविरहस्वभावः प्रामाणिको भवति तदभावेनाप्रामाणिकेनापि व्यवहार इत्यतो नातिप्रसङ्गः। घटाभावस्येति। घटाभावो न घटविरह

तद्विरहस्वभावत्वानभ्युपगमात्। न चान्यस्य स्वभावे प्रमाणगोचरे तदन्योऽपि सिद्धः स्यात् अतिप्रसङ्गात्।

एवम्भूतावेव घटतदभावौ यदेकस्य परिच्छित्तिरेवान्यस्य व्यवस्थितिरिति चेत्। न। घटवद् घटाभावस्यापि प्रामाणिकत्वानभ्युपगमे स्वभाववादान[1]-भ्युपगमात्। प्रमाणसिद्धे हि वस्तुनि स्वभाववादालम्बनं, न तु स्वभाववादालम्बनेनैव वस्तुव्यवस्थितिरिति हि भवतामेव तत्र तत्र जयदुन्दुभिः। यदुक्तं वार्त्तिकालङ्कारे:—

यत्किञ्चिदात्माभिमतं विधाय
निरुत्तरस्तत्र कृतः परेण।
वस्तुस्वभावैरिति वाच्यमित्थं
तदोत्तरं स्याद्विजयो समस्तः।

स्वभाव: तस्यालोकत्वेन निःस्वभावत्वादित्यर्थः। क्वचिद्घटाभावस्येति पाठः। तत्र घटरूपाभावो घटाभावविरहरूपः विरहस्य लभ्यतेऽलोकतया घटस्यापि तद्रूपत्वेनालोकत्वप्रसङ्गः। किञ्चैवमेकस्यापि निरूपणं न स्यादन्योन्यनिरूपणनिरूप्यत्वादित्यर्थः। किञ्च घटस्य स्वाभावविरहस्वभावग्राहकं मानं घटाभावं विषयीकरोति न वा? अन्त्ये क्व तत्सिद्धिरित्याह। न चेति। आद्यं शङ्कते। एवंभूताविति।

(१) नवकाशात् इति २ पु० पा०।

तत्किमिदानीं स्वाभावविरहस्वभावो घटः प्रमाणान्नैव सिद्धः। तव दृष्ट्या एवमेतत्। घटो हि यादृक्तादृक्स्वभावस्तावत् प्रमाणपथमवतीर्णः तस्य यदि परमार्थतोऽभावोऽपि कश्चित् स्यात् परमार्थतः सोऽपि तद्विरहस्वभाव इति तथैव प्रमाणेनावेदितः स्यात्। न चैतदभ्युपगम्यते भवता। तस्माद्घटवत्तदभावस्यापि प्रामाणिकत्वेनैवानयोः परस्परविरहलक्षणव्यतिरेकसिद्धिः। अप्रामाणिकत्वे वाऽनयोरपि न तथाभाव इति शशविषाणादिष्वपीयमेव गतिः।

ननु काल्पनिकरूपसंपत्तिरेवानुमानाङ्गमस्त्वित्यत आह। तस्याः सर्वत्र सुलभत्वादिति। [११५।१३] इह-

एवं स्वभावावित्यर्थः। यद्वा अन्यगोचरप्रमाणादन्यत् मिथ्यतीत्यतिप्रसक्तिनियामकः स्वभावभेद एवेत्याह। एवंभूताविति। 'घटवदिति व्यतिरेके दृष्टान्तः। तत्किमिति। तथा सति घटः स्वाभावात्मकः स्यादिति भावः। तवदृष्ट्येति। अभावस्य प्रामाणिकत्वे घटस्य तद्विरहात्मकत्वं स्यान्न चाभावः तव मते प्रामाणिक इत्यर्थः याद्दृक्तादृगिति स्वभावनिरूपणानिरूप्यत्वमुक्तम्। इयमेवेति यदि शशविषाणादिकं स्यात्तदा तत्र क्रमयौगपद्यव्यतिरेकस्तद्रूपस्य प्रामाणिकत्वं स्यान्न चाभावः स्यादित्यर्थः। अप्रसक्तनिषेधमाशङ्क्याह। नन्विति। रूपं सपक्षसत्त्वादि। सौगतानां बाधसत्प्रतिपक्षयोरधिकहेत्वाभासत्वाभावादनैकान्तिकासिद्धविरुद्धेषु काल्पनिक

नवत्वादिसाधने प्रमेयत्वादौ शब्दानित्यत्वादिसाधने चाक्षुषत्वादौ नित्यत्वादिसाधने कृतकत्वादावित्यर्थः ।

ननु पक्षसपक्षविपक्षास्तावदस्तुवस्तुभेदेन द्विरूपाः तत्र ये कल्पनयोपनीताः तत्र काल्पनिका एव पक्षधर्मत्वान्वयव्यतिरेकाः प्रमाणोपनीतेषु तु प्रामाणिका एवेति विभागः । तदिह काल्पनिकाग्निरग्नेर्य्यद्यपि प्रमेयत्वादेर्व्याप्तिः काल्पनिकी सिद्धा तथापि प्रामाणिकाज्जलह्रदादेः प्रामाणिक्येवैषितव्या, सा च न सिद्धेति कुतस्तस्य हेतुत्वम् । एवं प्रामाणिके शब्देऽपि पक्षीकृते प्रामाणिक एव हेतुसद्भावो वक्तव्यः । न चासौ चाक्षुषत्वस्यास्तीति सोऽपि कथं हेतुरिति । एवं कृतकत्वस्यापि वस्त्वेकनियतस्य धर्मस्य वास्तव एवान्वयो वक्तव्यः । वस्तुन एव विपक्षाच्च वास्तव एव व्यतिरेको वक्तव्यः । न च तस्य तौ स्तः । तत्कथमसावपि हेतुरिति । प्रलपितमेतत् । न हि नियामकमन्तरेण सम्पदं प्रति कल्पना त्वरते विपदं प्रति तु विलम्बत इति शक्यं वक्तुं । तथा च निरग्निक-

रूपसम्पदा गमकत्वापत्तिमाह । दहनवच्चेति । एवमिति । सपक्षे साधनस्य सत्त्वमन्वयस्तदभावोविपक्षे व्यतिरेक इत्यर्थः । नहीति । यथा काल्पनिकरूपसंपत्तिर्गमिका तथा तादृश्येव लिङ्गरूपवि-

मपि कूर्मरोमं सधूममितिकल्पनामात्रेण विपक्षवृत्ति-
त्वाद्धूमोनाग्निं गमयेत्। वास्तव्यां रूपसम्पत्तौ किम-
नेन काल्पनिकदोषेणेति चेत्। तर्हि वास्तव्याम-
सम्पत्तौ किं काल्पनिक्या[(१)]तयेति समानम्। विरोधा-
विरोधौ विशेष इति चेत्। कुत एतत्। उभयोरेकत्र
वस्त्ववस्तुत्वादन्यत्रावस्तुवदिति चेत्। तत्किं काल्प-
निकोऽपि धूमो वस्तुभूतो येन कूर्मरोम्णास्तेन सह
विरोधः स्यात्।

क्वचिद्वस्तुभूत इति चेत्। निर्धूमत्वमपि क्वचिद्वस्तु-
भूतमिति तेनापि विरोध एव। तस्माद्यथा काल्प-
निको विपत्तिर्न दोषाय तथा काल्पनिको सम्पत्तिरपि

पत्तिर्गमिका स्यादविशेषादित्यर्थः। नियामकमाह। विरोधेति
धूमस्य वस्तुनः कूर्मरोम्णालीकेन विरोधो धूमस्याभावतयालीकस्य
तेनाविरोध इत्यर्थः। उभयोरिति। उभयोर्धूमकूर्मरोम्णोरेकत्र
धूमेनानुमाने धूमस्य वस्तुत्वं कूर्मरोम्णश्चावस्तुत्वमित्यतो धूमस्य
कूर्मरोम्णासम्बन्धोविरुद्धः, अन्यत्र धूमस्य व्यतिरेके उभयो
र्धूमाभावकूर्मरोम्णोरवस्तुत्वान्न स विरुद्ध इत्यर्थः। तत्किमिति
वस्तुभूतादलीकमन्यदेवेति न तस्यालीकेन सम्बन्धोविरुद्ध इत्यर्थः
निर्धूमत्वमपीति। निर्धूमत्वस्य जलह्रदादौ वस्तुत्वेऽपि यथा काल्प

(१) सम्पत्त्या।

न गुणायेति तस्याश्च सर्वत्र सुलभत्वादिति टीकार्थः । एतच्चाभ्युपेत्योक्तम् ।

वस्तुतस्तु न निरुपाख्यं कस्यचिद्व्यवहारस्य भाजनमिति ।

ननु यद्यावयोरकुशलतया स्ववचनविरोधः? अथ प्रष्टुः किमुत्तरं वक्तव्यमित्यवशिष्टमुपसंहरन् परिहरति । तस्मादिति । ११५।१४ यत्र वचने सर्वथैव विरोधः तत्रावचनमेव श्रेय इत्यर्थः ।

एतेन मूकताहेतुविकल्पाः परिहृता बोद्धव्या इति ।

नन्वेकरूपविकलमिदं कथं गमकं? गमकत्वे वा

---

निकेन तेन न विरोधस्तथा धूमस्यापि क्वचिदसत्त्वे काल्पनिकेन तेन न विरोध इति विपक्षे कूर्मरोमादौ वृत्तो धूमोपि नाग्निं गमयेत् । यदि च तत्रालीकोवह्निरप्यस्तीति न धूमस्य विपक्षवृत्तित्वं तदाऽविशेषेणात्रापि काल्पनिकः साध्यसद्भावोऽस्तीति न विपक्षवृत्तित्वमित्यर्थः । यत्र वचन इति । अपार्थकवचनोद्भावने यत्र विरोधस्तत्रावचनमेव श्रेय इत्यर्थः । एतेनेति । मूकीभावि यद्यज्ञानमेव हेतुस्तदा अज्ञानमेव निग्रहस्थानं, अथ ज्ञानमस्ति? तदा यद्यनुवादस्तदाऽननुभाषणं निग्रहस्थानं, यदि चानुद्याप्युत्तरास्फुरणं तदाऽप्रतिभेति यद्विकल्प्य दूषणमापादितं तत्परिहृतं उत्तरार्हे उत्तराप्रतिपत्तिरप्रतिभेति लक्षणादित्यर्थः । अगमकत्वे हेतुर्नोक्त इति तमाह । नन्विति । सपक्षान्वयविपक्षव्यतिरेकाभ्या-

व्यतिरेकविकलमेरूपान्तरविकलमपि तथा किं न स्याद्विशेषादित्याशङ्क्याह। न चैतावतेति। [११५। १५ रूपान्तरवैकल्यवन्न व्यतिरेकवैकल्यमविनाभावक्षतिमावहतीत्यर्थः।

एवं तर्हि सत्यपि विपक्षे व्यतिरेकी न [१]पर्येषणीय इत्यत आह। विपक्षसम्भवे त्विति [११५। १८ विपक्षे सति तत्र वृत्तिशङ्का ततश्च तन्निवृत्त्यर्थं तदुपयोगः, विपक्षाभावे तु शङ्कैव नास्ति, यथोक्तं प्राक्। तोयाभ्यवहरणेऽप्यसमर्थस्य मुमूर्षोर्न हि शष्कुलीभक्षणं शङ्कते चेतन इत्यर्थः।

स्वमते त्विति। [११५। २१ अस्य तु काल्पनिकोऽपि विपक्षः परेणाभिधातुं न शक्यते अभिधाने सपक्षत्वा-

मेव व्याप्तिग्रहात् केवलान्वयिनश्च विपक्षाभावात्तत्र व्यतिरेकाग्रहा-द्व्याप्त्यग्रहेण कथं गमकत्वं गमकत्वे चापक्षधर्मादेरपि गमकत्व-मित्यर्थः। नन्वेवमन्वयोपि सपक्षव्यतिरेकशङ्कानिराकरणेनोपयुक्त इत्यन्वयव्याप्तिरप्यप्रयोजिका स्यादित्यत आह। विपक्षेहीति। अन्वयव्यतिरेकव्याप्त्योः प्रत्येकमन्यत्र प्रयोजकत्वावगमाद्युगपदुभय-व्याप्त्युपस्थितौ विनिगमनाभावादुभयोरपि प्रयोजकत्वे सति व्यति-रेके विपक्षवृत्तिशङ्कानिवृत्त्या व्यतिरेकव्याप्तिः सिध्यतीति शङ्का-निवृत्तिरुक्तेत्यर्थः। अभिधान इति।

(१) गवेषणीयः इति १ पु० पा०।

पत्तेः । असपक्षत्वेऽनभिधानप्रसङ्गात् ।' तत्राभिधेयत्वे साध्ये यः कश्चिद्धेतुरुपादीयते तस्य किं विपक्षे वृत्ति-रवृत्तिर्वेतिप्रश्ने अनेनोत्तरं कोविदेन किं वक्तव्यम् । मूकीभूय तिष्ठामोऽस्तु न कश्चित्प्रतिमल्ल इति स्वयमेवोल्लपितमनेन । 'नन्वेवम्भूतोऽहेतुरेव दोषाभावात् । अरुचिमात्रस्य सर्वत्र सुलभत्वादिति ।' भागासिद्धि-निराकरणाय व्याप्येति वदतः ।

ननु यथाऽऽकाशपदात्संस्कारसाचिव्येन 'शब्दाश्रयत्वमनभिधेय-मप्युपतिष्ठते" तथाऽभिधेयविपक्षस्यानभिधेयत्वेऽपि पदादुपस्थितिः स्यात् एवं चाभिधेयत्वं कुतोऽपि व्यावर्त्तते धर्मत्वाद्गोत्ववत् । न च व्यावृत्तत्वस्याव्यावृत्तत्वे तदेव केवलान्वयि, व्यावृत्तत्वे यत एव व्यावृत्तत्वं व्यावृत्तं तदेव केवलान्वयीति धर्मत्वस्यानैकान्तिक-त्वादेवमत्यन्ताभावप्रतियोगित्वस्यात्यन्ताभावाप्रतियोगित्वे ऽत्यन्ता-भावप्रतियोगित्वमेव केवलान्वयि, अत्यन्ताभावप्रतियोगित्वे च यन्निष्ठात्यन्ताभावप्रतियोग्यत्यन्ताभावप्रतियोगित्वं तदेव केवला-न्वयि । न च व्यावृतत्वमत्यन्ताभावत्वं च नानेति वाच्यम् । अनु-गतप्रतीतिबलेन गोत्ववत्तयोः सिद्धेः तत्र तावद्व्याप्यवृत्तिसंयोगा-त्यन्ताभावः केवलान्वयी तस्य प्रतियोग्यवच्छेदेऽत्यन्ताभावात् । अत्यन्ताभावाप्रतियोगिनः केवलान्वयित्वात् । नापि स्वाश्रयनाश-जन्यगुणादिनाशात्यन्ताभावः तस्य नाशस्य सर्वत्रात्यन्ताभावादिति वाच्यम् । यत्र हि प्रतियोगिप्रागभावो वर्त्तते तत्र न तदत्यन्ता-

भावो वर्त्तते। तत्र च नाशस्य प्रागभावो यत्र नाशप्रतियोगिसमवायिदेशे वर्त्तते तत्र कथं नाशात्यन्ताभावो वर्त्तते इति। तर्हि तत्र नाशस्य वृत्तिः स्यादिति चेन्न। पूर्व्वं तत्र नाशस्य प्रागभावस्यैव सत्वात्। तदुत्तरकाले चाश्रयस्यैव भावात्। नाप्याकाशात्यन्ताभाव एव केवलान्वयी तस्यापि प्रतियोगिरूपात्यन्ताभावप्रतियोगित्वात्। अथाभावात्यन्ताभावो न प्रतियोगिरूपः। तथासत्यन्योन्याभावात्यन्ताभावः प्रतियोगिरूप इति प्रतियोगिसमानदेशोऽन्योन्याभावो न स्यादिति चेत्। न। प्रतियोग्यत्यन्ताभावात्यन्ताभावः प्रतियोग्येव अन्योन्याभावात्यन्ताभावस्य प्रतियोगिवृत्तिरसाधारणो धर्म्म इति वैषम्यात्।

अत्राहुः। वृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वं आकाशात्यन्ताभावो यद्यपि प्रतियोगिरूपात्यन्ताभावप्रतियोगी तथापि स न वृत्तिमानित्यत्यन्ताभाव एव केवलान्वयी। तथा प्रमेयत्वाद्यपि केवलान्वयि आकाशात्यन्ताभावाप्रतीतावपि तत्प्रतीतेः। न च प्रमेयत्वं तथा प्रमाविषयत्वस्य चाननुगमादिति चेत्। न। प्रमात्वस्यैव परम्परासम्बन्धेन प्रमाविषयत्वेनानुगमादिति संक्षेपः।

नन्वेवमपि केवलान्वयिनि संशयाभावात् कथमनुमितिः? प्रमेयत्वमत्र वर्त्तते न वेति संशय इति चेत्। न। तस्य प्रमेयत्वविशेष्यकत्वात्। न चेदं प्रमेयं प्रमेयत्वमत्रास्तीति एक एवार्थः। विशेषणविशेष्यभावभेदेनार्थभेदात्।

अत्राहुः य एव पक्षे संशयः साध्यसिद्धिविरोधी स एवाङ्गं न

पूर्ववदित्यतिशायने मतुपो विधानम्, अतिशयश्च व्याप्तिरेवेत्याशयः। तदिदमुक्तं टीकाकृता अस्ति गंधवत्वस्य साध्यं न तु व्याप्त्येति। [११६। ३]

ननु साध्यसजातीये शेषशब्दस्य न काचिद्वृत्तिरित्यत आह। साध्यस्योपयुक्तत्वादिति। [११६। ४]

पौनरुक्त्यभ्रममपाकरोति। पदानि विभज्येति। [११६। ६] नञमन्तर्भाव्य व्याख्याने सामान्यतो दृष्टपदमेवं

---

तु पक्षविशेषणत्वमपि तन्नं गौरवात्। प्रमेयत्वं न वेति संशयो विरोधी न भवत्येव। यद्वा प्रमेयत्वमत्यन्ताभावप्रतियोगीतिभ्राम्यतोऽत्र संशयः। अथवा संशयो नानुमानाङ्गमपि तु तद्योग्यता। न च साऽपि साधकबाधकप्रमाणाभावः प्रमेयत्वाभावस्य चाप्रसिद्ध्या तत्र प्रमाणाप्रसिद्धौ बाधकाप्रसिद्धिरिति वाच्यम्। पक्षनिष्ठात्यन्ताभावप्रतियोगित्वस्यैव साध्ये बाधकत्वात्। तदभावस्यैव योग्यत्वात्।

पूर्ववदित्यत्र यथा पक्षव्याप्तेर्लाभः तदाह। अतिशायन इति।

'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।

संसर्गेऽस्ति विवक्षायां भवन्ति मतुबादय"

इति वृत्तिकारः। न चैकपक्षकलिङ्गाव्याप्तिः। पक्षतावच्छेदकधर्मसमानाधिकरणात्यन्ताभावाप्रतियोगित्वस्य तदर्थत्वात्। गन्धवत्त्वस्य च पक्षतावच्छेदकपरमाणुत्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वात्।

योजनीयम्। उक्तविशेषरहितत्वेन विपक्ष एव सामान्य इत्युच्यते, तत्राहष्टं, सप्तम्यास्तसिः, योग्यदर्शननिवृत्त्या च दृश्यनिवृत्तिर्विवक्षिता। तेन विपक्षे असदित्यर्थः।

अतः ------ त्तिमभ्युपेत्य रूपद्वयसंपदे चकारमवतारयति। तथाचेति। [११३।८]

तदेवं तत्पूर्वकमित्यनेन लिङ्गपरामर्षोनुमानमिति लक्षणार्थे व्याख्याते अथ किं लिङ्गं कतिविधं चेति जिज्ञासायां त्रिविधमित्यवच्छेदेन व्याख्याय किं लक्षण-

---

उक्तविशेषेति। पक्षधर्म्मराहित्येन च तयोर्विपक्षः सभोनः साधारणो भवतीत्यर्थः। ननु विपक्षवृत्तोप्यदृष्टत्वसंभवान्न तावता विपक्षासत्वं लभ्यत इत्यत आह। योग्येति। भुवं ह्यत्वेतिटीका - - - - अनुमानत्रयेऽप्यन्वितं ह्यत्वेत्यर्थः। यद्यपि यत्र क्वचिद्बाधकाभावोऽसिद्धः प्रकृतपक्षकप्रकृतसाध्याभावस्य सिद्ध्यसिद्धिव्याहतः तथापि साध्यधर्म्मे पक्षनिष्ठात्यंताभावप्रतियोगित्वग्राहकमानाभाव एवाबाधितविषयत्वात्स्ततः सिद्धवदिति न तु केवलव्यतिरेक्यपि सपक्षे वर्त्तते साध्यवन्मात्रस्यैव सपक्षत्वेन पक्षस्यापि सपक्षत्वात्। तत्र तस्य वृत्तेः। न तु पक्षभिन्नत्वमपि तन्त्रं गौरवात्। अभेदानुमाने पक्षस्यैव सपक्षत्वात्सर्व्वमभिधेयं प्रमेयत्वादित्यादीनां विधात्रयबहिर्भावोपपत्तेः। न च निश्चितसाध्यवान्सपक्षः पक्षस्तु न तथेति वाच्यम्। यत्किंचिन्निश्चयस्य सपक्षेप्यभावात् वादिप्रतिवादिनिश्चयस्य च क्वचित्सपक्षेप्यभावात्। अत्राहुः। पक्षत्वावच्छेदकादन्येन

मिति जिज्ञासायां 'पूर्ववदित्याद्येकवाक्यतया व्याख्याने परामर्षविषयः संज्ञितो विभक्तो लक्षितश्च। विषयविषयिणोर भेदविवक्षया च सामानाधिकरण्यमिति मन्तव्यम्।

एवमन्यान्यपीति। तद्यथा। मनोज्ञमत्तकाशिनीसंदर्शनेन संसारिणां रागानुमानं, भ्रूचुदर्शनेन क्रोधानुमानं, श्रद्धावतां यथाविधि यागाद्यनुष्ठानेन

प्रकारेण निश्चितमाध्यवत्वस्यैव सपक्षत्वादिभागो युक्तः। यद्वा अन्यत्र साध्यवन्मात्रस्य सपक्षत्वेप्यत्र पक्षातिरिक्तत्वं विवक्षित्वा तद्विभागः कृतः। ननु पूर्ववदादिना लिङ्गस्यानुमानत्वमुक्तमतो लिंगपरामर्शानुमानमिति सामानाधिकरण्यं न युक्तमित्यत आह। विषयेति। अत्र कारणात्कार्यानुमानोदाहरणमंत्यतन्तुसंयोगात्पटस्य कार्य्यस्यानुमानं न युक्तं पटोत्पत्तेः प्रागिन्द्रियसन्निकर्षे सति अंत्यतन्तुसंयोगोत्तरमेव तत्प्रत्यक्षता पटोत्पत्तिश्चेत्येकः कालस्ततो व्याप्तिस्मृतिकाले पटे रूपाद्युत्पत्तेः यदैव लिंगपरामर्शः तदैव पटस्य प्रत्यक्षता 'ज्ञानगोचरत्वादित्यत आह टीकाकारः अपि चेति। यदि त्विति टीका। पूर्व्वमेव स्मृतव्याप्तिरन्त्ये ततो यदुत्पन्नं कर्म तदिन्द्रियार्थसन्निकर्षात् यदा प्रथममेवालोचयति तदैव क्रियातो विभागः। ततो विभागात् पूर्व्वसंयोगनिवृत्तिः। तथाचेयं क्रियेति तृतीयलिंगपरामर्शस्योत्पादश्चेत्येकः कालः पटारम्भकान्त्योपान्त्यतन्तुसंयोगकाले तृतीयलिंगपरामर्शादनुमितिः। ततस्तृतीयक्षणे पटः प्रत्यक्ष इत्यर्थः। भ्रूचुदर्शनेति। भ्रूत्वप्रकारकदर्शनेनेत्यर्थः। अत्रापि

धर्मानुमानं, विषयभोगेन सुखानुमानं, अविकलेन्द्रियस्य योग्यविषयावधानेन ज्ञानानुमानं, निषिद्धाचरणेनाधर्मानुमानं, पञ्चभ्यामादरप्रत्ययैः संस्कारानुमानं; मिथ्याज्ञानेन भविष्यत्संसारप्रवाहानुमानमित्याध्यात्मम्। बाह्ये ज्वलन्तं तृणराशिमुपलभ्य भविष्यद्भस्मानुमानं, तथाविधवृष्ट्या भविष्यन्नदीपूरादिज्ञानं, प्रकारान्तरागतेन वायुना त्वरावता वृक्षादिक्षोभानुमानमित्यादि नेयम्।

दुरवबोधमिति। सामान्यतोदृष्टस्वरूपस्यैवाविवेचनादित्यर्थः। उदाहरणद्वारेण तद्विवेचनं भविष्यतीत्यत आह। शेषवदुदाहरणान्तर्गतं चेति।

शेषवल्लक्षणयोगेऽपि तदुदाहरणान्तरवैलक्षण्येनेदमेव सामान्यतोदृष्टपदार्थो भविष्यतीत्यत आह। न चैतावतेति।

न तावदश्वकर्णादिशब्दवदयं सूर्यव्रज्यानुमाने वर्तते। अन्यत्रापि वृद्धप्रयोगात्। नापि सूत्रकारस्यैव परि-

संसारिणीतियोज्यमतो न हीनक्लेशेन व्यभिचारः। विषयभोगेति। भोग्यविषयसन्निकर्षेणेत्यर्थः। योग्येनेत्युक्तान्यकारणोपलक्षणमतो नालोकादिविरहे व्यभिचारः। अविवेचनादिति। विवेचनोपायस्य

भाषेयं निःप्रयोजनत्वात्। तस्मादुदाहरणवैलक्षण्य-मात्रविवक्षयेदमुच्यते तथा चातिप्रसङ्ग इत्यर्थः। तस्माद्भाष्यकारव्याख्यानविरुद्धोदाहरणमाचाख्यानमरोचयमानः सामान्यतो दृष्टपदं व्याख्यायान्यथोदाहरणमाहेति योजना।

क्षयवृद्धिप्रत्ययाविषयत्वे सतीति ११८।१३ स्पष्टार्थम्। प्राङ्मुखोपलभ्यत्वे परिदृच्यतत्प्रत्ययविषयत्वादिति पर्यालोचनयैवाविनाशस्य प्राप्तत्वात्। न ह्युपलब्ध-विनाशे उपलब्धं प्रत्यभिज्ञायते भ्रान्तावप्यनुपलब्धमुपलब्धंतयेति। प्राङ्मुखोपलभ्यत्वे चेत्यस्य टीकया स्फोरितस्य प्राङ्मुखोपलब्धस्य प्राङ्मुखेनानुपलम्भे सतीत्यर्थः। नगान्तरस्य ११८।१६ तत्समानदेशस्थस्येति मन्तव्यम्। अन्यथा मार्त्तण्डमण्डलस्यापि लोकान्तरवर्त्तिपुरुषापेक्षया प्राङ्मुखोपलभ्यता दर्विनेत्यमिद्धं विशेषणं

लक्षणस्याज्ञानादित्यर्थः। उदाहरणेति। सूर्य्यगत्यानुमानद्वारा सामान्यतोदृष्टस्यैव विवेचनं स्यादित्यर्थः। ननु भाष्यकारव्याख्यात-मित्ययुक्तं तेनाव्याख्यातत्वादित्यत आह। विरुद्धेति। तेन व्याख्यानपदं विरुद्धोदाहरणाख्यानपरमित्यर्थः। तथापि भाष्यकार-व्याख्यानापेक्षयाऽन्यथा व्याख्यायेत्ययुक्तं तेनाव्याख्यातत्वादित्यत आह। अन्यथोदाहरणमिति। अनुपलम्भमेवेति। इन्द्रियसन्नि-

स्यात्, तदेतन्नापदेन सूचितम्। तदभिमुखदेश-सम्बन्धादिति।[११८।२०] शिष्यहिततया व्यभिचारौपयिक-पादविहरणज्ञापनाय। नहि यथातथा पादविहरण-मात्रमस्य हेतोः क्षतिमावहतीति। सत्यविनाश इति च द्रष्टव्यम्। [११८।२३] द्रव्यत्वे सतीति शेषः।

इह यद्यपि दिशः प्रत्यक्षत्वे सांध्येऽङ्गुल्या[1] निर्देशो व्यधिकरणस्तरुनगरादिष्वेवाङ्गुल्या व्यपदेशात्। दिशः सामानाधिकरण्यं त्वङ्गुलीव्यपदेशस्य न तदधि-करणतासाधनमन्यथासिद्धत्वात्। ----ते तरवः सा प्राचीति तर्वादिभेदेनाप्यङ्गुल्या व्यपदेशोऽस्तीति न व्यधिकरणत्वमाहत्याभिधातुं शक्यतं इत्यनेनाभिप्राये-णान्यथासिद्धिमेव वार्तिकार्थ इत्याह। अन्यथा सिद्धत-येति। [११८।२५]

दृष्टत्वादुपलभ्यमानमेव पूर्वोपलब्धतया प्रत्यभिज्ञायत इत्यविनाश तत्रापि लभ्यत एवेत्यर्थः। शिष्यहिततयेति। अनुत्पन्नपादविहारस्य प्राङ्मुखोपलभ्यस्य प्राङ्मुखेनानुपलम्भादित्यनेनैव तुहिनाचलतुल्यतया प्रासादस्यापि व्यावर्तितत्वात्तदभिमुखसम्बन्धादितिव्यर्थमिति व्यभि-चारज्ञापकपादविहारबोधनायैवेदमित्यर्थः। द्रव्यत्वे सतीति तथा च गुणादिभिर्न व्यभिचार इत्यर्थः। आहत्येति। याव-दन्यथासिद्धिर्नोच्यते तावदित्यर्थः। अतेनेत्यस्य विशेषणस्योपयोगात्

(1) व्यपदेशादिति पाठः २ पु०।

उपलक्षणं चैतत्। चलन्तीं पताकामुपलभ्यायं वायुर्वातीति. अङ्गुलीनिर्देशस्याचाक्षुषे वायावपि गतत्वेन व्यभिचारस्यापि सम्भवात्। रूपेण स्पर्शानुमानमित्यादावादिग्रहणेन रसेन रूपानुमानं गन्धेन रसानुमानमित्यादि। वृक्षादर्शने सन्देहे वा शिंशपादर्शनं निश्चयो वा ततोऽनवसरपराहतमेवानुमानम्। वृक्षशब्दप्रयोगलक्षणव्यवहारानुमानं तु न स्वार्थमविदितसमयेनाशक्यत्वात्। विदितसमयस्य च व्यर्थत्वात्। परोऽपि यदि व्युत्पन्नो यदि विदितशब्द-

दृष्टेन शिंशपात्वेन वृक्षत्वानुमानेऽनुपपत्तिमाह। वृक्षेति। सामान्यज्ञानदशायां विशेषाज्ञानादितिभावः। अयं वृक्षशब्देन व्यवहर्त्तव्यः शिंशपात्वादितिव्यवहारानुमानं स्यादित्यत आह। वृक्षशब्देनेति। तद्धि स्वार्थं परार्थं वा? आद्ये प्रमाता किमगृहीतसङ्केतः तद्विपरीतो वा? नाद्यः साध्याप्रसिद्धिरित्यत आह। अविदितसमयेनेति। न द्वितीयस्तादृशेन व्यवहारस्य ज्ञातत्वान्निःप्रयोजनमनुमानमित्याह। विदितेति। परार्थमिति दूषयति। परोपीति। व्युत्पन्न इति। वृक्षपदे गृहीतसङ्केत इत्यर्थः।

विदितप्रवृत्तिनिमित्त इति। पुरोवर्त्तिनि प्रत्यक्षीकृतवृक्षपदप्रवृत्तिनिमित्त इत्यर्थः। तादृशं प्रति व्यर्थमनुमानमिति[१]।

(१) इत्यादेरित्यर्थः।

प्रवृत्तिनिमित्तं यदा स्वयमेव व्यवहरेत विपरीतस्तु[1] शिंशपात्वमपि न प्रतीयात। अव्युत्पन्नश्चेत्समयमग्राहयित्वा व्यवहारयितुमशक्य एव। न चायं समयग्रहप्रकारः तथा सति शिंशपात्वादयं वृक्षो व्यवहर्तव्य इति शिंशपात्वमेव वृक्षशब्दप्रवृत्तिनिमित्तमाकलयेत। न शिंशपात्वादयं वृक्षशब्दप्रवृत्तिनिमित्तवानिति वाक्यार्थः विदिततन्निमित्तं प्रति व्यर्थत्वात। विपरीतं प्रत्यप्रसिद्धविशेषणत्वप्रसङ्गात। सामान्योपक्रमे समयग्रहानुपपत्तेः। पुरुषेच्छामात्राधीनत्वाच्च समयस्य पक्षधर्मतया नियन्तुमशक्यत्वात। अविदितसमयं प्रति

तद्वेति। विपरीत इति पुरोवर्त्तिन्यप्रत्यक्षीकृतवृक्षपदप्रवृत्तिनिमित्त इत्यर्थः। शिंशपात्वमपि न प्रतीयात्। न प्रत्यक्षयेदित्यर्थः। सामान्यस्याप्रत्यक्षीकरणे विशेषस्याप्रत्यक्षीकरणादितिभावः। अव्युत्पन्नश्चेदिति। वृक्षपदे अगृहीतसङ्केत इत्यर्थः। नन्वयं किञ्चिद्वृक्षशब्दप्रवृत्तिनिमित्तवान् शिंशपात्वादित्यनुमानं स्यादित्यत आह। सामान्योपक्रम इति। तावतापि प्रवृत्तिनिमित्तविशेषानिश्चयादित्यर्थः। ननु वृक्षे पक्षे वृक्षपदप्रवृत्तिनिमित्तं सिध्यत् पक्षधर्मताबलाद्वृक्षत्वे प्रवृत्तिनिमित्तविशेषे पर्य्यवसास्यतीत्यत आह। पुरुषेति। पक्षधर्मताबलादपि न विशेषः सिध्येत्सङ्केतस्य पुरुषेच्छाधीनतयाऽन्यथापि तत्सङ्केतसम्भवे द्रव्यत्वादिप्रवृत्तिनिमित्तसंशयस्य तदवस्थत्वादित्यर्थः। अविदितसमयं इति। अविदितवृक्षशब्द-

(१) अविदितशब्दप्रवृत्तिनिमित्तः इत्यधिकं २ पु०।

चान्वयोपक्रमस्याऽयुक्तत्वादित्यत आह। अतेनेति। ११९।१० तदनेन ये चान्ये साध्यसमानकालास्ते सर्वे सामान्यतोदृष्टानुमानसंग्राह्यत्वेनोपलक्षिता इति।

स्वमतेन व्याख्यानान्तरं न तु तात्पर्यान्तरमित्यर्थः। पूर्वं साध्यं तद्यस्य व्याख्येत्यनेनैकतात्पर्यत्वात्। अनेनैवाभिप्रायेणाह। अथापि यथासम्भवमिति। ११९।१६ नञनन्तर्भावचकारनिरपेक्षते चास्मिन् व्याख्याने पूर्वस्माद्विशेषः। सामान्येन कार्यं वा कारणं वाऽनुभयात्मकं वा अविनाभावितया दृष्टं निश्चितं सामान्यतोदृष्टमेवं च योजना। तदिदमुक्तं असंदिग्धता माहेति। तच्च तत्पूर्वकमिति। स्वरूपविप्रतिपत्ति-

प्रवृत्तिनिमित्तं प्रति साध्याप्रसिद्ध्याऽन्वयिनोनुपपत्तिरित्यर्थः। अतेनेतीति। तथा चाप्रत्यक्षे शिंशपात्वे शब्दादिना तज्ज्ञानाद्वृक्षत्वानुमानं भवेदितिभावः। साध्यसमानेति। अकार्य्यकारणभूता इत्यर्थः। नन्वत्रापि व्याख्याने पूर्व्ववच्छेषवत्पदयोः पक्षव्यापकत्वसपक्षवृत्तित्वाभ्यां व्याख्यानान्तरत्वमित्यत आह। केचिदिति। पूर्वव्याख्याने नञन्तर्भावेन विपक्षावृत्तित्वमसत्प्रतिपक्षत्वमबाधितत्वं च लब्धमत्र तन्निरपेक्षेणैव तल्लाभ एतावता च व्याख्यानान्तरत्वमुक्तमित्यर्थः। यथा नञर्थनिरपेक्ष्येण तल्लाभस्तथा व्याचष्टे। सामान्येनेति। ननु तत्पूर्व्वकमित्यतः कथं स्वरूपविप्रतिपत्तिनिराकरणमित्यत आह।

निवृत्तिः स्वलक्षणसामर्थ्येन न्यूनाधिकसंख्यत्वाशङ्का-निवृत्तिः प्रथमं तात्पर्यं, नियमज्ञापने त्वशक्यलक्षणत्व-शङ्कानिवृत्तिस्तात्पर्यमिति न पौनरुक्त्यमिति वृत्त-वर्त्तिष्यमाणानुकीर्तनफलम् ।

यद्यपि प्रतिपन्नं प्रत्यनुमानस्य न संशयविपर्यय-निवृत्तिरज्ञातज्ञानं वोपयोगस्तथाप्यध्यवसिताभ्यनुज्ञानं वस्तुबलायातमपेक्षिते विषये ऽनुपेक्षणीयमेवेति तस्याप्यनुमानप्रतिपाद्येषु गणना । तेनादिवाक्ये[1] प्रतिपन्नः प्रतिपादयितेति प्रतिपन्न एव प्रतिपादयिता न तु प्रतिपन्नः प्रतिपादयितैवेति बोद्धव्यम् ।

पुनः पौनरुक्त्यपरिहाराय वृत्तवर्तिष्यमाणे ऽनुकीर्तयति । पूर्वं सिद्धवदिति ।

साक्षात्कृत्यनुमित्योः क्रिययोस्तुल्यता विषयगता

लक्षणसामार्थ्येनेति । धर्म्मिस्वरूप एव न तद्विप्रतिपत्तिः सिद्धासिद्धि-व्याघातादितिभावः । व्यावृत्ते धर्मिणि सा स्यात्सा च तल्लक्षणादेव निराक्रियत इत्यर्थः । वृत्तवर्त्तिष्यमाणेति । टीकायां न्यूनाधिकसंख्या-व्यवच्छेदेनेत्यादिः वृत्ता, संप्रतीत्यादिवर्त्तिष्यमाणम् । यद्यपीति । पूर्व्वोत्पन्नसंशयस्य पूर्व्वविप्रतिपत्त्यैव निवृत्तेर्न तन्निवृत्तिरूपोपयोग इत्यर्थः । तथापीति । न च प्रतिपन्नस्य संशयाभावेन सिद्धसाधनात्

(१), प्रमाणेत इत्यादि वाक्य व्याख्यान इत्यर्थः ।

द्रष्टव्या। तेनायमर्थः। व्याप्तिग्राहकप्रमाणयोर्ययोर्धर्मो यत्रानुमीयते तत्पूर्ववदनुमानं, तदयोग्यस्तु सामान्य-

कथमनुमितिरिति वाच्यम्। निश्चितस्यार्थस्यान्तरा विस्मरणे सत्युत्तरकालं तस्यापि संशयात्। व्याप्तिग्राहकेति। येनैव धर्मेण सह व्याप्तिग्रहस्तस्यैव व्यक्त्यन्तरेऽनुमानं पूर्ववत्; यथा सास्नावत्त्वेन गोत्वानुमानम्। यत्तु दृष्टान्तजातीयमात्रस्य व्यक्त्यन्तरेऽनुमानन्तत्सामान्यतो दृष्टं यथा धूमेनाग्निरित्यर्थः। यदिन्द्रियजातीन्द्रियधर्मानुमानत्वाद्द्वयोर्भेद इत्यर्थः।

टीकायां लिङ्गागवार्त्तिकस्यायमर्थः। केचिद्धर्मान्तरमग्निमत्त्वरूपमनुमेयमिच्छन्ति। अत्र युक्तिमाह लिङ्गस्येति। लिङ्गस्य धूमस्याग्निना सहाव्यभिचारेऽव्याप्तिग्रहतः। पक्षान्तरमाह। सम्बन्धमिति। अग्निधूमयोरिति शेषः कृतः। सिद्धत्वादिति। सम्बन्धिनोः सिद्धत्वेन सन्देहाभावादित्यर्थः। तत्राद्यं दूषयति। लिङ्गमिति। धर्मोऽग्नौ लिङ्गं धूमरूपं यदि सिद्धं पक्षधर्मतया ज्ञातं तदा तेन धूमेन किमन्यदनुमेयमग्नेर्ज्ञातत्वात्। अथेति। धर्मिणि पर्वते यदि ज्ञातं लिङ्गमनुमापकं वह्नेस्तथा तस्यैव पर्वतस्यैव किमनुमेयता पर्वत एव तर्ह्यग्निमत्तयाऽनुमेयोऽस्तु, न तु स्वातन्त्र्येणाग्निरित्यर्थः। सम्बन्धं साध्यं दूषयति। सम्बन्धोऽपीति। इयं वक्ष्यमाणम्। तत्राद्यमाह। षष्ठीति। यदि सम्बन्धोऽनुमेयः स्यात् तदाग्निधूमयोः सम्बन्धोऽस्तीति षष्ठीश्रवणं प्रतिज्ञावाक्ये स्यादित्यर्थः। दूषणान्तरमाह। अवाच्य इति। अप्रतिज्ञेयः

तोदृष्टमिति, । ,धूमत्वैकार्थसमवायिभिरिति

सताप्त्यर्थं विशेषणं. नहि संततमूर्ध्वगमनमात्रेणाग्नि-
रनुमातुं शक्यते । धूमोपरमादौ व्यभिचारात् । एक-
द्रव्यत्वादित्यस्य सपक्षैकदेशवृत्तित्वादावन्वयस्य स्पष्टत्वात्
विपक्षव्यतिरेक एवोक्तः ।

द्विविधमेव ह्येति । ...नत्वत्रान्वयाभिधानमात्रेण

सम्बन्ध इत्यर्थः । कुतः धूमत्वादग्निरत्रास्तीत्यत एवास्मादभि-
मताग्निविशिष्टदेशसाध्यादर्थतोऽग्निधूमयोः सम्बन्धस्यावगतेरित्यर्थः ।
दूषणान्तरमाह । न चेति । असौ सम्बन्धो न लिङ्गेन धूमेन सह
सङ्गतः सम्बद्धः लिङ्गधर्म्मीन पत्तधर्म्म इत्यर्थः । एवं पराभिमतं
साध्यं दूषयित्वा स्वाभिमतं साध्यमाह लिङ्गस्येति । धर्म्मिणाग्निना ।
अन्यत्र महानसादौ । तत्र पक्षे, सिद्धं लिङ्गं तद्युक्तमग्नियुक्तं धर्म्मिणं
पर्व्वतं साधयिष्यतीत्यर्थः । अनुच्छिन्नसन्तत्यूर्द्ध्वगमनादीनामेव
गमकत्वसम्भवे विशेषणोपयोगार्थमाह । सताप्त्यर्थमिति ।

ननु शब्दो न द्रव्यमेकद्रव्यत्वादित्यत्रैकद्रव्यत्वस्यान्वयव्यति-
रेकित्वाद्व्याप्तिग्रहार्थं व्यतिरेकसहचार एव दर्शितः स न युक्तः
अस्य केवलव्यतिरेकित्वाभावादत आह । एकद्रव्यत्वादिति
एकमात्रसमवायिकारणकत्वादित्यर्थः । अत्र शब्दान्तरहेतुत्वादित्यत्र
भाष्यकारोक्तहेतावन्तरशब्दो विशेषवचनः स च विशेषोऽनाद्यत
तथा चानाद्यशब्दासमवायिकारणकत्वादित्यत्र वार्त्तिककारेणा

केवलव्यतिरेकिशङ्का कर्तव्या। समानजातीयारम्भकत्वं शब्दस्यासिद्धमतः साधयति। कार्यत्वादिति। १२२।१०

कार्यत्वं पुनरस्यानुपलब्धिकारणाभावे सत्यनुपलब्धस्योपलभ्यमानत्वाद् वा प्रत्यक्षादिति। सर्वचोपलब्धिप्रसङ्गादित्यस्य विपर्ययेण हेतुः। प्रयोगस्त्वेवं अव्याप्यवृत्तिः शब्दः आश्रयाप्राप्तावपि क्वचिदनुपलभ्यमानत्वे सति क्वचिदुपलभ्यमानत्वात् संयोगवदिति।

साधारणत्वमुक्तमिति द्रष्टव्यम्। अर्थान्तरत्वनिरासायाह। समानेति। नन्वनुपलम्भमात्रान्न साध्यसिद्धिः उपलब्धिकारणान्तराभावादपि तदुपपत्तेरित्यत आह। अनुपलब्धिकारणेति। तथा चानुपलम्भकारणान्तराभावान्न तेनान्यथासिद्धिरित्यर्थः। नन्वनुपलम्भेरुपलब्धिप्रागभावरूपायाः कारणमेव नास्ति सकारणत्वे चाऽनुपलब्धिकारणाभावेऽनुपलब्धिरिति भावः। अथवा नोपलब्धिप्रागभावग्राहकोयोग्यानुपलम्भो विवक्षितः। तर्हि तादृशानुपलब्धिविषयत्वेनैव कार्य्यत्वे सिद्धे उपलभ्यमानत्वादित्यर्थः। (?)

अत्राहुः। अनुपलब्धिकारणाभावे सत्यनुपलब्धस्येत्यनेन योग्यानुपलम्भमात्रं विवक्षितं स च कादाचित्काभावग्राहकस्तदा यदि यत्रोपलम्भस्तदानुपलम्भः स्यात्। तथा च कादाचित्काभावग्राहकानुपलम्भविषयत्वादिति हेत्वर्थो विवक्षितः। प्रत्यक्षत्वादिति। जातिमत्वे सति बहिरिन्द्रियग्राह्यत्वाच्चेत्यर्थः। प्रसङ्गमात्रस्यासाधकत्वादाह। विपर्ययेणेति। आश्रयाप्राप्ताविति। गुणत्वेन हेतुविशेषणमात्रार्थ-

यद्यपि चैतावन्मात्रेणैव गुणत्वं सिध्यति तथापि भाष्यकारीयो हेतुरुपेक्षितः स्यादित्यतोऽव्यापकतामात्रं प्रसाध्यैव प्रकृते लगयति। कर्णेति। [११२।१०]

अत्रापि प्रयोगः। शब्दो वीचीतरङ्गन्यायेन कर्णशष्कुलीमन्तमाकाशदेशमासादयति प्रकारान्तरासम्भवे सत्युपलभ्यमानत्वादिति व्यतिरेकी।

उदाहरणार्थं विवेचयति। इदंत्विति। [११२।१३]

सदाद्यभेदः सत्तायोगः। अनित्यत्वकारणवत्त्वम्। सामान्यविशेषवत्त्वमिति।

साध्यधर्मिण्यसदादिभिः कदाचित्प्रत्यक्षेणानुप-

लभ्यमानतया व्यभिचारः (?)। यद्वा। अनीश्वरविभुविशेषगुणत्वात् वह्निबुद्धिरितिविवचितं। (?) सर्व्वत्रोपलम्भप्रसङ्गस्य विपक्षे बाधकः। कर्णशष्कुलीमन्तमिति। यद्यपि कर्णशष्कुलीमदाकाशं न भिद्यते इति सर्व्वशब्दोपलम्भप्रसङ्गस्तदवस्थः तथापि कर्णशष्कुल्या समसमाकाशस्य प्रत्यासत्तिः कापि वाच्या यथा कश्चिच्छब्दो गृह्यते कश्चिन्नेति स एवास्यार्थ इत्येके। शब्दत्वं गुणत्वावान्तरजातीयासमवायिकारणवृत्ति बहिरिन्द्रियग्राह्यविशेषगुणवृत्तिजातित्वाद्रूपवदित्यत्र तात्पर्य्यमित्यन्ये। सामान्यविशेषवत्त्वमिति। न चात्र विशेषपदवैयर्थ्यं समानानां हि भावः सामान्यं जातिरूप उपाधिश्च। तद्विशेषो जातिस्तेन जातिमत्त्वादित्यर्थः। ननु यत्र 'व्याप्तिग्राहकप्रमाणायोग्योऽर्थोऽनुमीयते तत्सामान्यतोदृष्टमिति पूर्व्वमुक्तमिदानीं तूभयत्र

लम्भात्। (२३।०) व्याप्तिग्राहकेण प्रमाणेनानुपलम्भादित्यर्थः।

आभिप्रायिकोऽर्थः पक्षधर्मताया विषयः। स एवाभिप्रायेण व्याप्यते येन विना प्रतिज्ञार्थो नोपपद्यते। उभयथा सम्भावनायामेकतरांच बाधकोपपत्तावन्यतरः प्रमाणान्तरविषयः(१) तत्र विधायकप्रमाणाभावे केवलव्यतिरेकिणोऽवतारः।

प्रत्यक्षेणानुपलभ्यमानोऽर्थोऽनुमीयते तत्सामान्यतोदृष्टमित्युच्यते इति विरोध इत्यत आह। व्याप्तिग्राहकेणेति। ननु द्व्यणुकं सकर्तृकमित्यनुमाने यथा पक्षधर्मताबलात्सर्वज्ञकर्तृसिद्धिः तथेच्छादयो द्रव्याश्रिता इत्यत्रापि पक्षधर्मताबलादेवाष्टद्रव्यातिरिक्तद्रव्यसिद्धिरस्तु विनिगमकविशेषाभावादित्यत आह। आभिप्रायिक इति। येन विनेति। पक्ष(धर्म)तावच्छेदकधर्मसामानाधिकरण्यं साध्यमानस्य येन विना न निर्वहतीत्यर्थः।

नन्वष्टद्रव्यानाश्रितत्वं हि पक्षविशेषणं कृत्वा यदेच्छादयो द्रव्याश्रिता इति साध्यते तदाष्टद्रव्यातिरिक्तद्रव्याश्रितत्वादिना प्रतिज्ञार्थ एव नोपपद्यत इति पक्षधर्मताबलादेव विशेषसिद्धिरिति किं व्यतिरेकिणा। मैवं। अनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमाद्द्रव्याश्रितत्वेन प्रकारेण वस्तुतोऽष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वसिद्धावप्यष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वप्रकारकप्रतीतेर्व्यतिरेकिणा साध्यत्वात्।

(१) गोचरः इति पा० १ पु०।

तथाहि । क्षित्यादिकं सकर्तृकं कार्यत्वादित्यत्र सर्वज्ञत्वमन्तरेण क्षित्यादीनां सकर्तृकत्व[1]मेव नोपपद्यते परमाण्वदृष्टादीनामज्ञाने तदधिष्ठानानुपपत्तेः । तदधिष्ठाने वाऽसर्वज्ञत्वानुपपत्तेः । तस्मात्सर्वज्ञत्वमन्तरेण प्रतिज्ञातार्थानुपपत्तौ तदभिप्रायव्याप्तं, आभिप्रायिकत्वाच्च पक्षधर्मतागोचरः । इच्छादयस्तु परतन्त्रा गुणत्वादित्यत्र पुनरात्मा नाभिप्रायव्याप्तः । न हीच्छादीनां क्षित्यादि[2]पारतन्त्र्यमसंभावितं, अपि तु

अन्ये त्वेवं पक्षविशेषणमष्टद्रव्यानाश्रितेष्विच्छादिषु द्रव्याश्रितत्वं सिद्ध्यतु तस्य द्रव्यस्याष्टद्रव्यातिरिक्तत्वं कुतः सिद्ध्यतीत्याहुः ।

यत्र नैवं पक्षविशेषणं तत्र केवलव्यतिरेकिणोऽवकाश इत्यपरे ।

तथाप्यसर्व्वज्ञकर्तृबाधसहकृतकार्य्यत्वं यथा द्व्यणुके सर्व्वज्ञजन्यत्वं साधयति तथाष्टद्रव्यवृत्तित्वबाधसहायं गुणत्वमपि विशेषं साधयिष्यति विशेषाभावात् । सैवं । अत्र सकर्तृकत्वविवादविषयाणां सर्गाद्यकालीनकार्याणामेव पक्षीकरणात्तावत्कारणाभिज्ञत्वस्यैव सर्व्वज्ञत्वरूपत्वात् । कल्पादिमारभ्य कल्पान्तपर्यन्तं यावत्कार्य्यप्राक्कालीनत्वस्यैव ज्ञानादिनित्यत्वात्तयोः पक्षधर्मताबलादेव सिद्धिः । पूर्व्वं बाधाप्रतिसन्धानेऽपि सामान्यतो(स)दृष्टपर्य्यवसानाच्च ।

(१) कर्तृत्वेति पा० २ पु० ।

(२) पृथिव्यादि इति पा० २ पु०

मानमप्रत्यक्षवेद्यत्वादि[1]भिर्बाधितं, धूमगतनीलत्वेनैव धूमस्यापालालत्वं[2]। तस्मादुभयथा सम्भवादात्मा नाभिप्रायव्याप्तः तदव्याप्तत्वाच्च न पक्षधर्मता तमङ्गमारोपयि[3]तुमर्हति. अपि . त्विच्छादिमम्बद्धपरं मात्रमादायैव निवर्त्तते। एतदुत्तरकालं क्षित्यादौ बाधिते तदन्यासिद्धौ विधायकप्रमाणाभावान्निषेधमुखेन व्यतिरेकी प्रवर्तते।

तमिमं विशेषं हृदि निधायोक्तं। बाधकैरपनीते

अथ यथा सुरभिचन्दनमित्यत्र ज्ञानान्तरोपस्थापितविशेषणविशिष्टप्रतीतिः तथा सामान्यव्यभिचारमादाय मानान्तरोपनीतं तत्तदन्यत्वाद्युपजीव्याष्टद्रव्यान्यवृत्तित्वं परिच्छिद्यताम्। मैवम्। संस्कारानियमेनानुपस्थितेः। तथापीच्छाद्याश्रयस्य निर्गन्धतया पृथिवीभिन्नत्वेन पक्षं विशिष्य तत्तद्बाधकबलात् प्रत्येकजलादिभिन्नत्वंभिद्वावेकैकभिन्नत्वेन पक्षविशेषणादेशिष्य सेत्स्यति। मैवम्। इच्छाद्याश्रय तद्भिन्नमजानत इच्छादेः पृथिव्याद्यनाश्रितत्वज्ञानादनुमित्युदयात्।

नन्विच्छादिकं पक्षीकृत्य द्रव्याश्रितत्वं साध्यते न त्वाश्रितत्वम्

(१) प्रत्यक्षत्वादि इति पा० २ पु०।

(२) धूमगतनीलत्वेनैव पलालत्वमिति पा० २ पु०।

(३) मारोपयितुमिति पा० २ पु०।

द्रव्याष्टकगुणत्व इति। [१२३।१४] ननु सामान्यतोदृष्टाद्यद्रूपं सिद्धं न तत्केवलव्यतिरेकिणः साध्यं यादृशञ्च तेन[१] साध्यं तादृशञ्च क्वचिन्न सिद्धं तथा चाप्रसिद्धविशेषणः पक्षः न च तथाभूते सन्देहोऽपि कारणाभावात। समानासमानधर्मविप्रतिपत्तीनामनुपलब्धेश्चरत्वा[२]दित्यत आह। यद्यपि चार्थमिति। स्वरूपेण असाधारणरूपेणेत्यर्थः।

न हि वाक्यार्थस्यापूर्वतया पदार्थानां विशेषण-

तत्सद्प्रसिद्धावपि न दोषः साध्याप्रसिद्धा वा आऽनुमानाङ्गत्वमिति रित्यत आह। नन्विति। यद्रूपं व्याश्रितत्वमित्यर्थः। यादृशमिति। अष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वमित्यर्थः। साध्याप्रसिद्धौ दोषमाह। तथा चेति। तथा च साध्याप्रसिद्धा तत्सन्देहाभावात् पक्षत्वाभावे लिङ्गस्य पक्षधर्मताज्ञानं नास्तीत्यनुमितिसामग्र्येव नास्तीत्यर्थः। उपलक्षणञ्चैतत् साध्याप्रसिद्धौ तत्प्रवृत्तेरेवाज्ञानान्न तत्सहचारज्ञानं व्याप्तिग्राहकमप्यस्तीति द्रष्टव्यम्। ननु स्वरूपमात्मनः प्रमेयत्वं तेनात्मा प्रसिद्ध एवेत्यत आह। असाधारणेनेति। ननु द्रव्याष्टकव्यतिरेकादिशब्दानामसंकेतितसङ्केततया स्वार्थानुपस्थापनात् न ततः साध्यप्रसिद्धिरित्यत आह। न हीति।

(१) व्यतिरेकिणोति पा० २ पु०।

(२) चरात्मत्वादिति पा० २ पु० चराविषयत्वादिति पु० पा०।

विशेष्यभावो विरुध्यते, तस्मात्सत्यन्वयिनोऽप्यनुत्थान-मितिप्रलीनमनुमानेन। न च द्रव्याद्यतिरिक्तादि-पदार्था एवापूर्वा येनाप्रसिद्धविशेषणता स्यात्पक्षस्य। न चैवं सति शशशृङ्गधनुर्द्धरादावपि प्रसङ्गः तत्रापि पदार्थमात्रप्रसिद्धेः सर्वत्र सुलभत्वादिति वाच्यम्। सामान्यतोदृष्टपूर्वकत्वनियमसीमाया दुर्लङ्घ्यत्वात्। अन्यथा सामान्यतोऽप्यसिद्धः कथं निःप्रमाणकशब्द-सामर्थ्यमात्रमाश्रित्य परामृश्येत। अपरामृष्टस्य कथं

अत्र न पदार्थः साध्यः किन्तु वाक्यार्थः स च सर्व्वत्राप्रतीत एव प्रतीयत इत्यर्थः।

तथा सतीति। पर्वतोऽग्निमानितिवाक्यार्थस्याप्रसिद्धत्वादि-त्यर्थः। न च पदार्था एवाप्रसिद्धा येन तत्पदानां सङ्केताग्रहान्न ततः तदुपस्थितिः स्यादित्याह। न चेति। सामान्यतोदृष्टेति। न च पदार्थज्ञानं साध्यप्रसिद्धिरित्युच्यते किन्तु वाक्यार्थज्ञानं, तच्च शशशृङ्गधनुर्द्धर इत्यादावयोग्यताज्ञानान्नास्ति तदसत्वकाले तत्रान्वयज्ञाने सामान्यतोऽपि न प्रमाणसिद्धं तु धर्मिणि सामान्यतो-दृष्टप्रवृत्तौ मानमस्त्येवेति विशेष इत्यर्थः। न च वाक्यार्थाप्रसिद्धा वाक्यप्रयोगकारणज्ञानाभावाद्वाक्यप्रयोग एव न स्यादितिवाच्यम्। प्रत्येकपदार्थज्ञानेनैव तद्वाचकतत्प्रत्येकप्रयोगेनाकाङ्क्षादिसाहित्या-त्तत एव व्युत्पन्नस्य वाक्यार्थज्ञानोदयात् तस्य च व्यतिरेकिमान-

प्रमाणव्यवहारं संवतारयेत। तदिदमुक्तं अदूरवि-
प्रकर्षेण परामृष्ट इति।

विशेषसिद्धेः सामान्यसिद्धिरदूरविप्रकर्षस्तदसिद्धि-
स्तद्विपर्यय इत्यर्थः॥

एवञ्च संशयोप्यत्र वादिविप्रतिपत्तेरेव सुगमः
इच्छादीनामुभयवादिसिद्धे सामान्यतोधिकरणे द्रव्या-
ष्टकातिरिक्तानतिरेककोट्योरुभाभ्यां समुत्थापनात्।
अथवा प्रत्येकोत्थितः संशयः समुदाये विश्राम्यतीति
न्यायः।

विषयत्वाद्बाधकाभावाच्च प्रमाणत्वात्। विशेषसिद्धेरिति। अत्र सतीति
इत्यध्याहार्यं। अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं विशेषः तत्सिद्ध्यर्थं
सामान्यस्य द्रव्याश्रितत्वस्य सिद्धिरदूरविप्रकर्ष इत्यर्थः। तदसिद्धि-
रिति। शशशृङ्गादौ सामान्यतोऽपि सिद्धिर्नास्तीत्यर्थः। एवं चेति।
इच्छाश्रयो द्रव्यमष्टद्रव्यातिरिक्तं न वेति विप्रतिपत्तिरूपवाक्यस्या-
काङ्क्षादिमतोऽपवार्थप्रतिपादकत्वात्साध्यप्रसिद्धौ तत्कोटिकः संशय-
स्तद्व्यतिरेकनिरूपणं च उपपद्यत इत्यर्थः। अथ वेति।

ननु कोऽस्यार्थः अथ वेति। किमिच्छा जलवृत्तिर्न वेत्ययमेव
प्रत्येकविषयः संशयः अष्टद्रव्यातिरिक्तद्रव्यवृत्तिर्न वेति समुदायविषयः
यद्वा समुदायविषयसंशयान्तरजनकः? द्वयमप्यष्टद्रव्यातिरिक्त-
द्रव्यासिद्धेर्न युक्तं। तत्राहुः। इच्छाया गुणत्वेन द्रव्यवृत्तित्वसिद्धौ

तथाहि गुणत्वं पृथिव्याश्रिते गन्धादौ तदतिरिक्ताश्रिते शब्दादौ च दृष्टमिच्छादिषु च दृश्यते तत्किमिच्छादयः पृथिव्याश्रिता उत तदतिरिक्ताश्रिता इत्यनेनाकारेण सर्वद्रव्येषु भवन्संदेहः समानधर्मदर्शनादेव

तद्द्रव्यं जलभिन्नं न वेति जलभेदोपस्थितौ क्रमेण विशिष्टवैशिष्ट्यज्ञानसामग्रीसत्त्वादन्तिमकोटौ साध्यप्रसिद्धिः। यदा इच्छा पृथिव्यामाश्रिता तदतिरिक्ते वा, तदतिरिक्तेऽपि जले अन्यत्र वेत्यादिक्रमेण प्रत्येकसंशये सत्येकैकाश्रितत्वस्य तदन्यत्वक्रमेण विशिष्टत्वस्य चोपस्थितौ समूहालम्बनादिच्छा एतद्द्रव्याश्रिता तदतिरिक्ताश्रिता वेति संशयः। न चैवं पृथिव्यादिवृत्तिताकोटेरपि संशयादेवोपस्थितौ बाधसत्प्रतिपक्षान्यतरप्रसङ्गः, संशयोपस्थितकोट्या बाधाद्यभिधाने सकलानुमानोच्छेदप्रसङ्गात्। अथवा इच्छा अष्टद्रव्याश्रितातिरिक्ता न वेति संशयादिच्छायामष्टद्रव्यातिरिक्ताश्रयोपस्थितौ पश्चादिच्छाश्रयोऽष्टद्रव्यातिरिक्तं द्रव्यं न वेति संशयादष्टद्रव्यातिरिक्तद्रव्योपस्थितिः। तद्द्रव्यवतीच्छेति साध्यते। न चैवं संशयादेव साध्यप्रसिद्धौ किं व्यतिरेकिणेति वाच्यं, निश्चयार्थं तत्प्रवृत्तेः। नन्वेतावता संशयेन साध्यप्रसिद्धावपि न तत्कोटिकः संशयः तस्य कोटिनिश्चयपूर्वकत्वात् न वा तादृशी प्रसिद्धिर्व्यतिरेकनिश्चयहेतुः तस्य साध्यनिश्चयजन्यत्वात् साध्यसन्देहे तद्व्यतिरेके संशयस्यावश्यकत्वात्। अपि च संशयोपस्थितसाध्यव्यतिरेकनिरूपणं न योग्यानुपलम्भात् साध्यनिश्चयं विना योग्यानुपलम्भाभावात्।

**द्रव्याष्टकतदतिरिक्तकोट्योरेव पर्यवसितो भवति। तदिदमुक्तं धर्मिणि चेत्यादि।**

**विभागवचनादेवेत्यादिभाष्यपङ्क्तिव्याख्यायाः शङ्कापोषणे तात्पर्यम्।**

नापि तज्ज्ञापकत्वाभावात्, साध्यनिश्चयं विना तज्ज्ञापकत्वानिश्चयात्। अतएव वादिवाक्यादेव साध्यप्रसिद्धिरित्यपास्तम्। वादिनोऽनाप्तत्वेन तद्वाक्यस्य मप्रायकत्वात। अन्यथा तत एव साध्यसिद्धौ हेत्वादि वैयर्थ्यात्। स्वार्थानुमाने वाक्याभावाच्च।

अत्रास्मत्पितृचरणाः। इच्छाश्रयद्रव्यसिद्धौ पृथिव्यादाविच्छाधारताया अभावे तद्द्रव्य पृथिव्याद्यष्टद्रव्यभिन्नमष्टावृत्तिधर्मवत्वात्, पृथिव्यादित्वे बाधकवत्वादित्यष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वं साध्यते। द्रव्यत्वे च साध्यप्रसिद्धिः। न चैवमन्वयापत्तिः, अन्वयव्याप्तिप्रतिसन्धानदशायां व्यतिरेकसामग्र्यैवैकल्यात्। नापि द्रव्यत्वात् सपक्षाद्धेतुव्यावृत्त्यावसाधारण्यं, तद्धि साध्यतदभावोभयसाधकत्वेन सत्प्रतिपक्षतया दूषणं, प्रकृते च हेतोः साध्याभावसाधकत्वं न, विपक्षे बाधकाभावात्। अतएव सर्व्वत्र व्यतिरेकिणि ज्ञानप्रमेयत्वादिना सत्प्रतिपक्षः, विपक्षबाधकेन व्यतिरेकिणो बलीयस्त्वात्। व्यतिरेकिणि तृतीयलिङ्गपरामर्शोपपत्तिं व्यतिरेक्यन्तरे च साध्यप्रसिद्धिं लक्षणे वक्ष्यामः।

ननु पूर्ववदादिविभागवचनादेव त्रिविधे लक्ष्ये त्रिविधमिति किमर्थमित्यर्थक' ऋजुभाष्यं कुतो वक्रगत्या व्याख्यायत इत्यत आह। शङ्कापोषणं इति। पूर्ववदादित्वपदव्याख्यानमेव शङ्का-

ननु सदसती तत्त्वमित्यत्र सदसच्छब्दाभ्यां भावाभावावुक्तौ तदिह वर्त्तमानार्थत्वव्याख्यानं तद्विरुद्धमपि कुत उपादीयत इत्यत आह। प्रत्यक्षं हीति। १२३।२१

अथ तथैव किं न स्यादित्यत आह। यद्यपीति। न विशेषणत्वं स्वातन्त्र्येण. १२३।८ स्वातन्त्र्याभिधानेनेत्यर्थः।

आहो न्यायोऽप्यस्तीत्यस्याक्षरार्थेन नञः सम्बन्धानुपपत्तेः तात्पर्यार्थेन सम्बन्धमाह। न सन्देह इति।

न्यायाभावेन" तर्कस्य निश्चयापर्याप्तौ सन्देहस्तदवस्थ इत्याशङ्कितमतस्तन्निषेध एवोत्तरं युक्तमिति।

पुष्टिः। ननु प्रत्यक्षस्य वर्त्तमानार्थत्वमुक्तमेव. कुतः पुनरुच्यत इत्यत आह। नन्विति। ननु स्वातन्त्र्यमवृत्तित्वमेवेति साध्यविशेषणत्वमत आह। स्वातन्त्र्याभिधानेनेति। तथा च स्वातन्त्र्यपदेनावृत्तित्वमुक्तं न तु तत्साध्यमित्यर्थः। ननूपस्थितेन न्यायोपस्थित्यनेन निषेधान्वये सम्भवत्यनुपस्थितेन सन्देहेन तदन्वयः किमर्थमुक्त इत्यत आह। आहो इति। अयं न्यायाभिधानादुपस्थितेन न्यायेन निषेधान्वयोऽनुपपन्न इत्यर्थः। निषेध्यसन्देहोपस्थित्यर्थमाह। न्यायाभावेनेति। यत्किञ्चिन्न्यायस्य सन्देहाविरो-

न्यायरूपमस्ति पा० २ पु०।

ऽस्त्येव त्योरः अन्तेऽविरोधिनिश्चयसमर्थो यत इति शेषः । निमित्तत्वं यदि विषयत्वं तन्नात्मनि दृष्टान्तो यथोपादानत्वं न तत्साध्ये समवाय इत्यत आह । निमित्तत्वं कारणत्वमिति ।

ननु व्यापकत्वं परममहत्परिमाणयोगः सर्वसंयोगिसमानदेशता वा । तदुभयमपि समवाये न सम्भवतीत्यत आह । सत्युपलब्धौति

उपलभ्यतेत्युच्यमाने घटादेरपि व्यापकत्वप्रसंगोऽत[1] उक्तं सर्वत्रेति । देशस्यावच्छेदकतामात्रेण सप्तम्या निर्देशो वने सिंहनाद इतिवत् । तथाप्यसिद्धं लक्षणं न ह्यात्मादयः सर्वत्रोपलभ्यन्ते इत्यत उक्तं सत्युपलब्धिकारण इति । तथापि विषयस्याप्युपलब्धि-

धित्वादध्याहरति । सन्देहेति । सन्देहोऽपि प्रकरणात् प्रकृत एव द्रष्टव्यः । विशेषवाचकस्य सामान्यपरत्वे हेतुमाह । निमित्तत्वमिति । अन्यत्र कृतव्यापकलक्षणपरित्यागे हेतुमाह । नन्विति । महत्त्वे परमत्वं नित्यत्वम् । सर्व्वसंयोगीति । सकलमूर्त्तसंयोगीत्यर्थः । देशस्य चेति । संयोगीति शेषः । तथापीति । यद्यपि कारणान्तरसमवधाने सर्व्वत्रोपलम्भ सर्व्वत्रोपलभ्यता नासिद्धा नहि सर्व्वदेत्युक्तं । नापि यत्र देशे न कदापि कारणान्तरसमवधानन्तत्रोपलम्भः

(1) प्रसङ्गात् इति पा० २ पु० ।

कारणत्वाद्यत्र घटादि परमाणवन्ताः स्वोपलब्धिसामग्री-सहितास्तत्र तत्रोपलभ्यन्त एवेति नैव व्यभिचार इत्यत उक्तं अन्तरेति। एतच्च द्रव्यरूपकारणान्तराभिप्रायेण द्रष्टव्यम्। अन्यथा यत्र घटादयो न सन्ति तत्र ततोऽन्यस्य तदुपलब्धिकारणस्य तादिन्द्रियसंयोगस्याभावादेव तेषामनुपलम्भः तद्भावे तु सर्वत्रोपलम्भ इत्येतदपि आशंकेत। तथापि परमाण्वादिगुणैरेव यावद्द्रव्यभाविभिराश्रयाधीननिरूपणैर्व्यभिचारस्तन्निवृत्त्यर्थमनेकसम्बन्धे सतीति द्रष्टव्यम्।

एतच्च सर्वत्रेत्यनेन टीकाकृता सूचितम्।

यद्यपि च सर्वत्रास्तित्वं व्यापकत्वं तथापि लक्षणमन्तरेण तद्गुरवबोधमिति तदेवोक्तमिति। न्यायेति-

मानससिद्धविशेषणोपादानेऽप्यसिद्धलक्ष्य दुर्निवारत्वात् तथापि यत्र यत्र दृष्टं कारणान्तरसमवधानं तत्र तत्रोपलभ्यमानत्वमेव विवक्षितम्। अन्तरेणेति। घटादयस्तु स्वोपलब्धिसामग्रीसहिताः सन्त एव सर्वत्रोपलभ्यन्त इति न तत्रातिव्याप्तिरिति भावः। अनेकसम्बन्ध इति। नन्वनेकसम्बन्धो न संयोगः सामान्यसमवाय-योस्तदभावात्। नापि समवायो व्योमादावभावात्। नापि यथा-कथञ्चित् परमाणुगुणेष्वपि सम्भवात्। किंचात्मन्यव्याप्तिः सुषुप्तौ द्रव्यान्तरमनःसंयोगादिसमवधानेऽनुपलम्भात्। आकाशादौ च तादृशद्रव्यान्तरस्यासम्भवः। अपिच परमाणुगुणेषु परमाणूपलब्धि

कर्तव्यताभूतं तर्कं पृच्छति। [१२४।१८] कर्त्ता अव्यापार्यमाणकरणस्य स्वयं व्यापारायोगादित्याशयवानिति भावः।

अथोक्तमनवस्थाप्रसङ्गमवतारयितुं किमित्यनाधारत्वप्रसङ्ग उच्यते यावता स्वतन्त्र एवायं प्रसङ्गः किं न स्यात्। न हि कार्यस्यानाधारत्वमस्पष्टमेवेत्यत आह। स्यादेतदिति। पश्चात्तु यो [१२४।२३] संयुक्त इति शेषः।

कारणमपि तु परमाणुनिरूपणं। नापि सर्वचारित्वं व्याप्यव्यापकत्वं वा तद्धि न सर्वाधेय व्योमादाविनाधेये तत्सम्भवात्। नापि सर्वसम्बन्धित्वं यथाकथंचित्सर्वसम्बन्धस्य रूपादावपि सत्त्वात् विशेषस्य दुर्वचत्वात्। प्रसाङ्ग:। विशेष्यान्यत्वे सति विभुभिन्नसामान्यवदन्यभावत्वं व्यापकत्वं। सामान्यसमवायभिन्नाविभुभावभिन्नत्वं वा व्यापकत्वं वा। पद्यप्येतत्सामान्येन व्यभिचरति तथाप्यनाश्रितः समवायो द्रव्यादिपञ्चान्यत्वात् अभाववदित्यत्र तात्पर्य्यं। अनवस्थैव विपक्षबाधकस्तर्कः। इतिकर्त्तव्यतापेक्षायां हेतुमाह। कर्त्तेति। कर्त्तृव्यापारस्य विषयस्यैव करणत्वादित्यर्थः। उत्पद्य पटः पश्चात्तु य्येत्यत्र क्रियाकांक्षायां समवेतस्य हौमिक्रियान्वयविरोधः स्यादिति क्रियामध्याहरति। संयुक्त इतीति। ननु समवेतं कार्य्यं कदाचिन्न दृश्यते इति शङ्कमानं आह।

न ह्युत्पन्नोप्य[1]संयुक्त एव तुर्या प्रथमे क्षणे पट इति कस्यचिन्निश्चयः अथ च प्रमाणबलादिष्ट एवायमर्थः, तथोत्पन्नोपि प्रथमे क्षणे तन्तुषु समवेत एवेति प्रमाणबलादेवेष्यत इति परदो प्रमायं निष्ठतो नेद-मुत्तरमित्यर्थः। तस्मादनवस्थाप्रसङ्गावतारणायैवेद-मुक्तमित्याह। समवायश्चेतीति

यद्युपाधिकथनेनैव वृत्तिमत्त्वस्य प्राप्तिधर्मत्वं निरा-कृतं तथापि प्राप्तित्वस्यानैकान्तिकत्वसूचनाय पुनरप्य-नवस्थाप्रसङ्गमवतारयति। अथेति। अनवस्थाभि-याऽवश्यमन्ततः क्वचित्प्राप्तिश्च न च वृत्तिमती[2]ति स्वीकर्तव्यं ततस्तयैव प्राप्तिमत्त्वमनैकान्तिकमित्यर्थः।

उत्पन्नोपीति। यथा तुर्य्यामह पटस्य संयोगादर्शनेप्यौपपत्तिकी तथा कल्पना तथा प्रकृतेपीत्यर्थः। नेदमिति। अनाधारत्व-प्रसङ्ग नोत्तरमिष्टापादनत्वादित्यर्थः। ननु समवायश्चेत्यादि-वार्त्तिकस्य नानवस्थार्थ इत्यपदार्थव्याख्यानं कुत इत्यत आह। तस्मादिति। गोत्वादौ वृत्तिमति साध्यव्यापकत्वात् साध-नाव्यापकत्वाच्च कार्य्यत्वमुपाधिरिति भावः। ननु हेतु-हीनदृष्टान्तमात्रादनवस्था न युक्तेत्यत आह। अथेति।

(१) न ह्युत्पन्नोऽप्यंयुक्त इति पा० २ पु०।

(२) प्राप्तिर्न वृत्तिमतीति पा० २ पु०।

अथानवस्थास्वीकारे को दोष इत्याशङ्क्य निराकरोति। नन्विथमिति। [१३४।२८] अनादितायां ह्यङ्कुरोत्पादानुगुणसमयसम्भविना बीजेन जनितेऽङ्कुरे वर्त्तमानमङ्कुरत्वं तस्य बीजपूर्वकत्वं बीजोत्पादानुगुणसमयसम्भविना चाङ्कुरेण जनिते बीजे वर्त्तमानं बीजत्वं तस्याङ्कुरपूर्वकतां चावगमयती[१]ति युज्यते, अविकलस्य हेतोः प्रमाणस्य विद्यमानत्वात्। इदम्प्रथमतायां तु कार्योत्पादानुगुणसमये भविष्यत्प्रवाहस्यासत्वात्

अनवस्थात्वमेव नाङ्गीकारे तत्त्वं बीजाङ्कुरादौ तस्याः स्वीकारात् अतः शङ्कामात्रं निरस्यतीत्यर्थः। अनादितायामिति। यद्येवं द्वितीयादिबीजादौ सिद्ध्यति नानवस्था तथापि योऽङ्कुरः सबीजपूर्वको यद्बीजन्तदङ्कुरपूर्वकमिति व्याप्तिग्राहकमानेन सामान्यतोऽनवस्थाग्रहात् समवाये च तथा समानमस्ति। आद्यसमवायपक्षीकरणे साधनावच्छिन्नसाध्यव्यापकस्य कार्य्यत्वस्योपाधिकत्वात्। द्वितीयसमवायपक्षे चाश्रयासिद्धत्वात्। अतएव समवाये न तावदुत्पत्त्यावनवस्था तस्याजनकत्वात्। नापि ज्ञप्तावनन्तानां समवायानां परस्परानपेक्षज्ञानत्वेनैकदा ज्ञानादिति दूषणमपास्तम्। सम्बन्धानां सम्बन्धिनिरूपणनिरूप्यत्वेनैकदा ज्ञानाभावात्। समवायो यदि सामान्यविशेषान्यत्वे सति समवेतः स्यात् द्रव्याद्यन्यतमः स्यादिति

(१) तां गमयतीति पा० २ पु०।

प्रथमस्यानुत्पादे तदाश्रयस्य हेतोरसिद्धत्वस्याश्रया-सिद्धतया सर्व्वस्यागमकत्वे प्रमाणाभाव इत्यर्थः।

अभ्युपेतकणादासत्त्वस्य शास्त्रविरोधश्चेत्यादि।

[१२५।२]

कार्य्यमकृतकसम्बन्धवदिति प्रतिज्ञायां घटादेर्भूतत्वादिनाप्यकृतक एव सम्बन्धः स्यात् स चानिष्ट इति प्रतिज्ञां विशिनष्टि। स्वोपादानेनेति। [१२५।१०] स्वसमवायिनेत्यर्थः। कार्य्यमिति च समवेतमात्रोपलक्षणपरं। अन्यथा जात्यादिषु विपक्षेषु सम्भवे हेतोर्विरोधः स्यात अथवा[1] प्रतिज्ञा यथाश्रुतैव। आधारवत्त्वादित्यत्रा-

समवायाव्यवच्छेदानवस्थेत्यन्ये। अभ्युपेतेति अन्यस्य शास्त्रविरोधस्यादोषत्वादित्यर्थः। भूतत्वादिनापीति निर्विशेषिताद्धेतुकसम्बन्धे साध्ये भूतत्वादिनाप्यकृतकः सम्बन्धः स्यादित्यर्थः। नन्वाधारत्वस्य हेतोर्जात्यादावपि सत्वात् समवायिकारणेनाकृतकसम्बन्धस्य च साध्यस्य तत्राभावाद्व्यभिचार इत्यत आह। समवायिनेति। ननु कार्य्यत्वेन ध्वंसस्यापि पक्षान्तर्भावात्तस्य चासमवेतत्वेन भागे बाधः स्यात्, जातिसाधारण्यञ्च न सिध्येदित्यत आह। कार्य्यमितीति। तेन ध्वंसस्यापक्षत्वाज्जात्यादेरपि पक्षत्वाच्च नोक्तदोष इत्यर्थः। अन्यथेति। उपादानपदस्य यदि समवायिकारणपरत्व इत्यर्थः। मस्तु वेति। भावकार्य्यमात्रं वा पक्षः उपादानपदं समवायिकारण-

(१) अस्तु वेति प्रकाशसम्मतः पाठः।

धारशब्देन नाश्रयमात्रं विवक्षितं, किं त्वधिकरणं कारकं[1]। तेनाधिकरणकारकत्वादित्यर्थः। न च वाच्यं कारकत्वधर्ममात्रेणैव पर्याप्तौ किमधिकरणग्रहणेनेति। प्रध्वंसेन विरोधप्रसङ्गात्। न कार्यस्य ।१२५।१७ कार्यः सम्बन्ध इत्यर्थः। मिथः सम्बन्धेन आधाराधारभावेनावतिष्ठेते[2] इत्यर्थः। सोपि नास्ति ।१२५।१७ समवाये समवायान्तराभावादित्यर्थः। सत्यप्यसौ न कार्यमाधारवत्कारोति, स्वसमवायेनैव तस्याधारवत्त्वमेवेत्यर्थः। तेनेति। यस्यैवाधिकरणत्वादेव प्रत्यधिकरणस्य कारकत्वमात्रं विवक्षितं, जात्यादि तु साधिकरणमपि न तत्प्रत्यधिकरणं कारकमपि, न तेन विरोध इत्यर्थः। प्रध्वंसेनेति। यद्यपि ध्वंसस्याधिकरणमस्ति तथापि तं प्रति तन्न कारणमाश्रयनाशजन्यध्वंसप्रत्यधिकरणस्य व्यभिचारादित्यर्थः। न चाकृतकसम्बन्धत्वमप्रसिद्धमिति वाच्यं। समवायो नित्यो निःसामान्यभावत्वात् साभाव्यादित्यतोऽनवस्थाप्रसङ्गसहकृतादकृतकसम्बन्धत्वस्य कार्यलिङ्गानुमानादितिभावः। ननु कार्य्यस्य कारणेन समवाय इति स्वतोऽसिद्धं इत्यत आह। कार्य्य इति। ननु सहोत्पन्नयोरपि रूपस्पर्शयोर्मिथः सम्बन्धोऽस्त्येव। एकार्थसमवायस्य तयोः सिद्धत्वादित्यत आह। आधारेति। सोपीति। एकार्थसमवायोऽपीत्यर्थः। अत्र हेतुमाह। समवायान्तरेति। अनवस्थाप्रसङ्गादित्यर्थः। सत्यप्यसाविति। असावीति। एकार्थसमवायः। स्वसमवायेनैवेति। तस्य कार्य्यस्य सम-

(१) कारकमिति २ पु० नास्ति।

(२) आधाराधेयभावेन व्यवतिष्ठेते इति पा० २ पु०। अयमेव प्रकारः सम्मतः।

त्वात्। तदभावे त्वेकार्थसमवायोपि न स्यादित्यर्थः। महोत्पादे कार्यमनाधारं स्यात्सर्वेति शेषः।

समवायिकारणाभावेऽसमवायिकारणशङ्कापि नास्ति, तत्प्रत्यासत्त्यभावत्वा[1]त्तस्येत्यभिप्रायवत्ता तदपेक्ष्य निमित्तमात्रादुत्पत्तिराशङ्का निराकृता।

ननु विधीयमाननिषिध्यमानव्यतिरेकेण जगति न स्वतन्त्रा नाम, तत् कथं धर्मचैविध्यमित्यत आह। अत्र चेति। ... विधीयमानो वर्त्तमान इत्यर्थः। प्रतिषिध्यमानः अवर्त्तमान इत्यर्थः। तत्र ये वर्त्तमानास्तेषां कश्चित्परतन्त्रः वृत्तिमानित्यर्थः। कश्चित् स्वतन्त्रो

तायेनेव, ननु समवायान्तरेणासाधारणत्वादित्यर्थः। तदभावेत्विति। कार्यस्याधारे समवायादित्यर्थः। एकार्थसमवायस्तदा स्याद्यदि कार्यस्य समवायः स्यात् स च कार्येण सहोत्पन्नो न वेति कार्यस्येत्युक्तमितिभावः। नन्वाश्रयनाशानाश्यकार्याणामेकस्मिन् लक्षणेऽनाधारत्वमिष्यत एवेत्यत आह। सर्व्वेति। चैविध्यक्रमदर्शनोपयोगार्थमाह। नन्विति। ननु यद्वस्तु न विधीयते नापि प्रतिषिध्यते तद्विधीयमानप्रतिषिध्यमानाभ्यामतिरिक्तमस्तीति विभागो न युक्त इत्यत आह। विधीयमान इति। तथा च वर्तमानावर्तमानाभ्यां तृतीयकोटिरस्तीत्यर्थः। वृत्तिमान् समवेत इत्यर्थः।

(१) तत्प्रत्यासत्त्वादिति पा० २ पु०।

# LIST OF SANSKRIT WORKS ON NYĀYA

PUBLISHED IN

## THE BIBLIOTHECA INDICA.

---

### Work No. 199.

*(In progress.)*

ANUMĀNA-DĪDHITI-PRASĀRIṆĪ.
Author: Kṛṣṇadāsa Sārvabhauma.
Editor: Paṇḍita Prasanna Kumāra Tarkanidhi.
3 fascicles issued (1911-1912).
Price, Re. 0-12-0 per fasc. Total, Rs 2-4-0.

*(Fascicles all available.)*

*N.B.* The work is technically "in progress," that is, discontinuation has not been decided on. Practically, progress has been in suspense since 1912.

### Work No. 8.

*(Completed.)*

2. BHĀṢĀ-PARICCHEDA.
Author: Viśvanātha Tarkapañcānana.
Editor: Dr E. Roer.
2 fascicles issued (1850)

*(Completely sold out.)*

### Work No. 200.

*(In progress.)*

3. KIRAṆĀVALĪ.
Author: Udayanācārya.
Editor: M. M. Śiva Candra Sarvva-bhauma.
3 fascicles issued (1911-1912).
Price: Re. 0-12-0 per fasc. Total Rs. 2-4-0.

*(Fascicles all available.)*

*N.B.*—The work is technically "in progress," that is, discontinuation has not been decided on. Practically, progress has been in suspense since 1912.

### Work No. 171.

*(In progress.)*

NYĀYA-BINDU, by Dharmakīrti.
With commentary by Vinīta-deva. (Tibetan translation of original Sanskrit text.)
Editor: L. de la Vallée Poussin.

2 fascicles issued (1908–1913).
Price: Re. 1-0-0 per fasc. Total, Rs. 2-0-0.

*(Fascicles all available.)*

*N.B.*—The work is technically "in progress," that is, discontinuation has not been decided on. Practically, progress has been in suspense since 1913. The text however is complete in the two fascicles published. The work needs completion by appendices announced on the title page.

### Work No. 230.

*(Completed.)*

5. NYĀYABINDU INDEX.
Compiler: M. M. Satīśa Candra Vidyābhūṣaṇa.
1 fasciculus issued (1917).
Price: Rs. 2-0-0.

*(Fascicle available.)*

This is a bilingual index in Sanskrit and Tibetan, giving a concordance of the terms occurring in the original text and in the Tibetan translation.

### Work No. 128.

*(Completed.)*

6. NYĀYA-BINDU-ṬĪKĀ.
Author: Dharmottara Ācārya.
Editor: Peter Peterson.
1 fasciculus issued (1890).

*(Completely sold out.)*

### Work No. 123.

*(Completed.)*

7. NYĀYA-KUSUM-ĀÑJALI.
Author: Udayanācārya.
Editor: Candra Kānta Tarkālaṅkāra.
9 fascicles, Vol I, fascs. I–VI and Vol. II fascs. I–III, issued (1888–1895).
Price: Vol. II, fasc. III, Rs. 1-8-0; remaining fascs. Re. 0-12-0 each. (Volume I, fasc. I–VI sold out.)

*(Fascicles not all available.)*

### Work No. 50.

*(Completed.)*

8. NYĀYA-SŪTRA.
Author: Gautama.
Editor: Paṇḍita Jayanārāyaṇa Tarkapañcānana.
3 fascicles issued (1864–1865).

*(Completely sold out.)*

